

विजयभद्रसूरिस्याद्वादसिद्धान्तश्रेणिग्रन्थाङ्क ४

सूरिपुरन्दरमुनिसुन्दरसूरिविरचितम् पद्यबद्धम्

# जयानंदकेवलिचरित्रम्

वयोवृद्ध-तपोमूर्त्ति-आगमाद्यनेकग्रन्थसंशोधक-परमपूज्य आचार्यदेवविजयसिद्धिसूरीश्वरा-
न्तेवासि-त्यागमूर्त्ति-मुनिवर्य-विनयविजयजी शिष्यप्रकाण्ड-परमतपस्वी-शांतमूर्त्ति
चारित्रचूडामणिविजयभद्रसूरीश्वरप्रथमशिष्यपंन्यासप्रवरसुन्दरविजयजीगणिशिष्य
मुनिवर्यचरणविजयसत्प्रेरणया

प्रकाशकः संशोधकश्च मफतलाल झवेरचंद.

जयानन्द
॥२॥

वीर संवत २४६३
विक्रम सं १९९३

प्राप्तिस्थान—
म फ त ला ल झ वे र चं द
नागजीभूदरनीपोळ-अमदावाद

प्रतयः ५००
[पण्यं रुप्यकम् त्रयम्]

मुद्रकः
गोविन्दलाल मोहनलाल जानी
श्री कौशा प्रिन्टरी
रतनपोळ-अहमदावाद.

## —: आभार प्रदर्शन :—

परमपूज्य शांतमूर्त्ति आचार्य श्रीमद् विजय भद्रसूरीश्वरजी महाराजना प्रशिष्य मुनिराज श्रीमद् चरणविजयजी महाराजना सदुपदेशथी आ पुस्तक प्रकाशनमां आर्थिक सहाय करनार सद्गृहस्थोनी नामावली

५००) स्वर्गस्थ झवेरी प्रेमचंद कल्याणचंदनां धर्मपत्नी रतनबेन सूरत–गोपीपुरा

१२५) स्वर्गस्थ झवेरी केशरीचंद खेमचंदनां धर्मपत्नी कवळीबेननीवती झवेरी नवलचंद खीमचंद सूरत–गोपीपुरा

१०२॥ शेठ खेमचंद कल्याणचंद जरीवाळा सूरत–गोपीपुरा

५१) शेठ हीराभाइ नगीनदास सूरत–गोपीपुरा

———

७७८॥

आ ग्रन्थ प्रकाशनमां उपर्युक्त गृहस्थोनी मदद माटे तेओनो अने मुनिराज श्रीमद् चरणविजयजी महाराज साहेबनो आभार मानीए छीए, अने आ ग्रन्थना वेचाणमां जो कांइ वधारो पडशे तो ते नवा प्रकाशनमां योजाशे

प्रकाशक–

## पद्यबद्ध-श्रीजयानन्दकेवलिचरित्रस्य संक्षिप्तरहस्यगर्भिताविषयानुक्रमणिका

विषयाः पत्राङ्काः



सप्तमः सर्गः



विषयाः पत्राङ्काः

अष्टमः सर्गः

## प्रस्तावना

आश्चर्यंकरं हृदयंगमं भव्यजनप्रसत्तिसंपादनपुरस्सरेण सम्यक्त्वादिधर्मप्रतिपादनप्रवणं सुप्रसिद्धमेवेदं जयश्र्यङ्कितं जयानंदचरित्रं, एतत्कर्त्तारश्च मुनिसुन्दरसूरिवराः जन्म–जरा–मरणाद्यनेकदुःखदग्धजगज्जन्तूपकारपरायणजीवातुसदृशानेकग्रन्थसन्दर्भेण तथा च जनाश्चर्यकरसहस्रावधान–मन्त्र–तन्त्राद्यनेकशक्तिप्रभावेण जैनधर्मप्रासादस्तम्भसदृशाः प्रसिद्धा एव अपि च ग्रन्थकारेणैव प्रत्येकसर्गान्ते स्वगुर्वादिनामनिर्देशपुरस्सरं स्वनामनिर्देशं श्लोकमानं च दर्शितं.

स्वकृतप्रसिद्धपट्टावल्यां एते ग्रन्थकर्तारः सूरिवराः द्विपञ्चाशत्तमे पट्टे प्रतिष्ठिताः तद्यथा–पञ्चाशत्तमे पट्टे देवसुन्दरसूरिवराः अभुवन् तेषां वि. १३९६ वर्षे जन्म १४०४ वर्षे व्रतं १४२० वर्षे सूरिपदं, श्रीदेवसुन्दरसूरीणां च ज्ञानसागरसूरयः, श्रीकुलमंडनसूरयः, श्रीगुणरत्नसूरयः शिष्यास्तेषां मध्ये ज्ञानसागरसूरीणां शिष्याः सोमसुन्दरसूरयः जातास्ते एकपञ्चाशत्तमे पट्टे प्रतिष्ठिताः तेषां वि० १४३० वर्षे जन्म वि० १४३७ वर्षे व्रतं, वि० १४५० वर्षे वाचकपदं १४५७ वर्षे सूरिपदं। तेषां च श्रीमुनिसुन्दरसूरिवराः १ श्रीजयसुन्दरसूरिवराः २ श्रीभुवनसुन्दरसूरिवराः ३ श्रीजिनसुन्दरसूरिवराः ४ एते चत्वारः शिष्याः आसन् तेषां मध्ये द्विपञ्चाशत्तमे पट्टे मुनिसुन्दरसूरिवराः प्रतिष्ठिताः, मुनिसुन्दरसूरेर्विक्रम० षट्त्रिंशदधिके चतुर्दशशत १४३६ वर्षे जन्म, त्रिचत्वारिंशदधिके चतुर्दशशत १४४३वर्षे व्रतं. षट्षष्ठ्यधिके चतुर्दशशत १४६६वर्षे वाचकपदं, अष्टसप्तत्यधिके चतुर्दशशत १४७८ वर्षे व्रतं, ३२००० टंकव्ययेन वृद्धनगरीयदेवराजेन तेषां सूरिपदं कारितं, १५०३वर्षे का०शुक्ल प्रतिपत् दिने स्वर्गभाक्। अष्टोत्तरशतहस्तामितलेखं प्रेषणप्रसिद्धाः अष्टोत्तरशतवर्चुलिकानादोपलक्षकाः बाल्येऽपि सहस्रावधानधारकाः, सप्रभावं संतिकरमितिस्तवकरणेन योगिनीकृतमार्युपद्रवनिवारकाः मुनिसुन्दरसूरिवराः अस्य

ग्रन्थस्य कर्त्तारः प्रसिद्धा एव, एतेषां च एतत्कृतिः न समान्या नातिकाठिन्या नाऽतिसरला यतोऽद्भूताविषयस्थापनरचनया वैराग्य–पराक्रम–शृङ्गाराद्यनेकरससंदर्भितकथानकप्राचूर्यतया श्रोतॄणां तादात्म्यभावजनकत्वेन सम्यक्त्वमूलद्वादशव्रताराधनविराधनफलप्रकट-करणेनाराधनायां भव्यजनशक्तिप्रदा

एतत् ग्रन्थमुद्रणे तिस्रः प्रतयः उपयुक्ता एका पं. हीरालाल हंसराजसत्का मुद्रिता, अन्या पं. वीरविजयोपाश्रयसत्का अमुद्रिता अपरा च पूज्यपादशान्तमूर्त्तिसिद्धिसूरीश्वराणां सत्का अमुद्रिता नवीना, आद्या मुद्रिताऽप्यशुद्धा क्वचिच्च द्वादशपद्यादिरहिता क्वचि–च्चासंगतश्लोककदर्थिता च, द्वितीया पूर्णाप्यशुद्धप्राया किन्तु कठिनशब्दटिप्पणोपेता, तृतीया अशुद्धा संदिग्धा च किन्तु पूर्णप्राया एतन्मुद्रणे तिस्रोऽपि प्रतयो योजिताः, पाठान्तराणि टिप्पणानि विषमशब्दपर्यायस्थापनानि च यथास्थले नियुक्तानि, किन्तु यत्र स्थले सन्दिग्ध–विरोध–न्यूनभावः तत्र मुद्रितगद्यजयानंदकेवलिग्रन्थानुसारेण [ ] एतच्चिन्हेन पूरितोऽपि विद्वद्भिर्विचार्य स्फुटीकरणीयः ।

अस्य ग्रन्थप्रकाशने चारित्रचूडामणि–शांतमूर्त्ति विजयभद्रसूरीश्वरप्रशिष्य मुनिवर्यचरणविजयाः आर्थिकसाहाय्यार्पणोपदेशतः यथावसरे समीचीनसूचनद्वारेण च उपकृतवन्तस्ते न विस्मरणीयाः

एतन्मुद्रणे अस्माभिर्विहितप्रचुरपरिश्रमेऽपि यन्त्रदोष–भ्रमाऽल्पज्ञानादिप्रचुरकारणेन जनितत्रुटयः परोपकारपरायणैर्विबुधवांचकैः क्षन्तव्याः ।

१९९३ श्रावण कृष्णैकादशी
अमदावाद

विदुषां वशंवदः
मफतलाल झवेरचंद गांधी

परमपूज्य प्रातःस्मरणीय विजयभद्रसूरीश्वराणां स्तुतिः

शार्दूलविक्रीडितम्

श्रीमज्जैनसुशास्त्रशास्तृगदिताचारप्रवीणोत्तरः ।
मोघद्भक्तिभरान्वितैर्भविजनैः संसेव्यमानक्रमः ॥
सच्चारित्र्यसमुद्भवोज्ज्वलयशोदीपितदिङ्मण्डलम् ।
जीयाद्भद्रसूरीश्वरो जगति यो भव्यप्रसत्तिप्रदः ॥ १ ॥





चारित्रचूडामणि प्रातःस्मरणीय परमपूज्य आचार्य

## विजयभद्रसूरीश्वरजी महाराज.

जन्म—१९३०

दीक्षा—१९५८ वैशाखशुक्लपूर्णिमा

गणिपद– १९७० मार्गशीर्षशुक्लत्रयोदशी

पंन्यासपद—१९७० मार्गशीर्षशुक्लपूर्णिमा

आचार्यपद—१९८९ पोषकृष्णसप्तमी



॥ श्रीपार्श्वनाथाय नमः ॥



## सूरिपुरन्दरश्रीमन्मुनिसुन्दरसूरिविरचितम्

# श्रीजयानन्दकेवलिचरित्रम्.



---

जयश्रीर्द्विविधारीणां । यदाज्ञानुष्ठितेर्भवेत् ॥ सर्वज्ञाय नमस्तस्मै । सर्वतत्त्वोपदेशिने ॥ १ ॥ येनैवाऽष्टादशाम्भोधि-कोटिकोटीस्तिरोहितः ॥ धर्मः प्रादुरकारि श्री–ऋषभोऽर्हन्मुदेस्तु सः ॥ २ ॥ तं श्रीशान्तिजिनं वंदे । यन्नामोच्चारितं सतां ॥ आवेदयति शब्दार्थ–तादात्म्यं शान्तिदानतः ॥ ३ ॥ स श्रीनेमिर्जिनो जीया–द्योऽजैपीत्तं मनोभवं ॥ सर्वेऽपि सेवका यस्य । सुरासुरनरेश्वराः ॥ ४ ॥ श्रीपार्श्वः श्रेयसे सोऽस्तु । नागेन्द्रो यं निषेवते ॥ सप्तभीतिच्छिदे सप्त–मूर्त्तिः सप्तस्फटाछलात् ॥ ५ ॥ अजिह्मगश्रियं धर्मे । भजन् यस्य जयत्यरीन् ॥ द्विविधानपि धीरस्तं । श्रीवीरस्वामिनं भजे ॥ ६ ॥ येषां कल्याणकाहेषु । मासैर्देवाप्सरोगणैः ॥ भिद्यते स्वर्भुवोर्भेदः । सर्वेऽर्हन्तो जयंतु ते ॥ ७ ॥ मातेव पदविन्यासं । कवीन् बालानिवाऽऽश्रितान् ॥ या शास्त्राध्वगतौ शास्ति । सा ब्राह्मी रातु मेऽर्थितम् ॥ ८ ॥

अहो यत्सार्ववैद्याब्धिं । गाहमानाः सतां धियः ॥ अजडाः स्युः स्तुवे तान् श्री--देवसुन्दरसद्गुरून् ॥ ९ ॥ यैर्वाङ्म-यरसासारा--स्सुधांभोदैरिवोन्नतैः ॥ चक्रेऽश्माभेऽपि गर्जद्भि-र्मयि विद्यालतोद्भवः ॥ १० ॥ जगत्तापहरान् स्फुर्ज--द्विद्युतः सुघनागमान् ॥ श्रीज्ञानसागराह्वांस्तान् । स्तुवे सूरीन् जगद्गुरून् ॥ ११ ॥ युग्मं॥ ज्ञानार्काणां पुरो येषा--मुल्मूकंति प्रवादिनः॥ विश्वार्च्यास्ते जयंतु श्री--सोमसुन्दरसूरयः ॥ १२ ॥ इति स्तुत्यगणं स्तुत्वा । मुनिसुंदरसूरिणा ॥ जैनधर्मोपदेशेन । क्रियते वाक् फलेग्रहिः ॥ १३ ॥ यतः—भवदुःखोद्विजां कुर्या--द्यः सत्वानामनुग्रहं ॥ शिवोपायोपदेशेन । नोपकारीह तत्समः ॥ १४ ॥ नोपकारात् परो धर्मो । धर्मदानात्परो न सः ॥ उपदेशात्त्विदं तत्त् । कर्तृश्रोत्रोः शिवं क्रमात् ॥ १५ ॥ जीवाः पुनस्त्रिधा भव्या १ । दूरभव्या २ अभव्यकाः ३ ॥ भव्या दुःखोद्विजो मोक्षं । कांक्षन्ति यदि जानते ॥ १६ ॥ ज्ञानादौ तदुपाये ते । प्रवर्त्तन्ते गुरोर्गिरा ॥ कर्मक्षयोपशमत--स्तत्त्वानि श्रद्दधत्यपि ॥ १७ ॥ शिवार्थं दूरभव्यास्तु । नोत्सहन्ते क्रियादिषु ॥ मिथ्यात्वा-रम्भभग्नाश्च । सम्यक्तत्त्वेष्वनादृताः ॥ १८ ॥ येऽर्हद्धर्मद्विषो मिथ्या--क्रियाभिः स्वपरारयः॥ भ्राम्यन्त्यभव्यास्तेऽनंता--नंतकालं भवाध्वगाः ॥ १९ ॥ त्रिधेति स्थूलभेदैः स्यु--र्भवस्थाः सर्वजन्तवः ॥ तत्राऽभव्यास्तु नाऽदृष्टं । श्रद्दध्युर्वै शिवादिकम् ॥ २० ॥ प्रायः क्रूरा इमे सर्व--धर्मद्विष्टा गुणोज्झिताः ॥ सम्यग्दर्शनमोक्षाप्ति--र्न त्वेषां स्यात्कदाचन ॥ २१ ॥ नृसुरादिसुखे दृष्टे । तदुपायं कथंचन ॥ अधिगत्य प्रवर्त्तंते । केचित्सम्यक्क्रियास्वपि ॥ २२ ॥ तद्वलाच्च लभन्ते ते । यावद् ग्रैवेयकं गतिं ॥ लब्धीः काश्चिद्चक्राद्याद्या । आमौषध्यादिका अपि ॥ २३ ॥ सर्वेऽप्येतेऽप्यनाद्यंते । भवे गोचरवच्चिरं ॥ चेरुस्तथा चरिष्यंति । चरंति च गवौघवत् ॥ २४ ॥ अनंतान् पुद्गलपरा--वर्त्तांश्च कृतदुष्कृतैः ॥ सदा सहन्ते दुःखानि । नृतिर्यङ्नारकेष्वमी ॥ २५ ॥

क्रियाऽनृताप्यथो धर्म--धियैवाह्नैः क्रियेत यैः ॥ ते पुद्गलपरावर्त्ता--तर्भव्याः शिवगाः स्मृताः ॥ २६ ॥ तथा चोक्तं—

' जो अकिरियावाई सो भविओ अभविओ वा नियमा कण्हपक्खिओ, किरियावाई नियमा भविओ नियमा सुक्कपक्खिओ अतो पुग्गल-परिअट्टस्य नियमा सिज्झइ सम्मदिट्ठी वा मिच्छादिट्ठी वा हुज्जा ' [ इति श्रीदशाचूर्णौ उपासकप्रतिमाधिकारे ॥ ] मुहूर्त्तमपि ये सम्यग्--दर्शनं तु स्पृशन्त्यपि ॥ ते पुद्गलपरावर्त्ता--द्रान्तर्निर्वृतिमाप्नुयुः ॥ २७ ॥ दृष्टादृष्टसुखेष्वेते । सर्वेऽपि स्पृहयालवः ॥ तदुपायार्थिनो धर्मो--पदेशार्हा यथाविधि ॥ २८ ॥ यतः--भव्या अपि न सिद्ध्यंति । सामग्र्याः केऽप्यनाश्रितः ॥ ये तु सिद्ध्यंति तेऽप्येतां । माप्यैव निखिलामपि ॥२९॥ सा तु मानुष्यसद्देश--श्रुतिश्रद्धादिलक्षणा ॥ अस्यामपि सुदुष्प्रापा । धर्मश्रद्धा विशेषतः ॥ ३० ॥ विना गुरुवचः प्रायः । कश्चिद्धर्मं न वेत्ति यत् ॥ न श्रद्धास्मिन्नबुद्धेऽन्ने । नालिकेरभुजामिव ॥ ३१ ॥ सम्यक्त्व-स्यानघं बीजं । श्रद्धेव प्रथिता श्रुते ॥ चतुर्ष्वपि हि मुख्येषु । धर्माङ्गेष्वियमुत्तमा ॥ ३२ ॥ श्रद्धयैव ततः सिद्धय । जायते धर्मनिर्मितिः ॥ न हि न्यूनेऽपि कस्मिंश्चि--दङ्गे कार्योद्भवः क्वचित् ॥ ३३ ॥ धर्मश्च बहुधा लोके । ख्यातस्तत्रापि दुःखदः ॥ सर्वोऽप्यसर्वविन्मूलः । कामं हिंसादिदूषितः ॥ ३४ ॥ सम्यक्तत्त्वाननुगत--स्त्याज्यः सद्भिर्हितैषिभिः ॥ उपादेयश्चतुःशुद्धि-शुद्धः कनकवत्त्वयम् ॥ ३५ ॥ युग्मं ॥ तदुक्तं—

यथा चतुर्भिः कनकं परीक्ष्यते । निघर्षणच्छेदनतापताडनैः ॥ तथैव धर्मो विदुषा परीक्ष्यते । श्रुतेन शीलेन तपोदयागुणैः ॥ ३६ ॥ ततः परिक्षाशुद्धोऽर्ह--द्धर्म एव जिनोदितः ॥ हिंसादिदूषणैर्मुक्तः । सेव्यो मुक्त्यै तदर्थिभिः ॥ ३७ ॥ दानशीलतपो

भाव--भेदात्स च चतुर्विधः ॥ द्विधा वा गृहियत्यर्ह--भेदाभ्यां भाषितो जिनैः ॥ ३८ ॥ आद्यः सम्यक्त्वसंयुक्त--व्रतद्वादशकात्मकः ॥ आद्वादशदिवं दत्ते । सौख्यं मोक्षमपि क्रमात् ॥ ३९ ॥ परः क्षांत्यादिभेदैस्तु । दशधा परिशीलितः ॥ तद्भवेऽपि शिवं दत्ते । शुद्धः पञ्चमहाव्रतैः ॥४०॥ श्रद्धां स्वस्मिन् समग्रोऽयं । जनयेत्फलदर्शनात् ॥ तच्च दृष्टान्ततः प्रायः। प्रतिभाति हृदि स्फुटम् ॥ ४१ ॥ श्रीजयानन्दराजर्षेः केवलज्ञानिनस्ततः ॥ भव्यानां प्रतिबोधाय । चरित्रं किञ्चिदुच्यते ॥ ४२ ॥ यथा पूर्वभवे श्राद्ध--धर्ममेष प्रियान्वितः ॥ दानशीलादिसंयुक्तं । सिषेवे दर्शनादिकम् ॥ ४३ ॥ स्वर्गश्रीप्रौढराज्यादि । देवसाहायकादि च ॥ अविपत्संपदश्चास्मा--द्यथा प्राप तथोच्यते ॥ ४४ ॥

अस्ति विस्तारशस्तश्री--र्जम्बूद्वीपः सुपुण्यभूः ॥ सुवृत्तः श्राद्धवत्सप्त--क्षेत्रीं पुष्णाति यः श्रिया ॥ ४५ ॥ यस्य द्वीपेषु मुख्यस्य । तारामौक्तिकमण्डितम् ॥ मेरुदण्डं विधिर्धत्ते । गगनातपवारणम् ॥४३॥ द्वीपान् यः स्वश्रियाऽजैषी--च्छेषान् पडिति विश्वकृत् ॥ यत्र रेखा व्यधाद्वर्ष--धराचलमयीर्नु षट् ॥ ४६ ॥ यस्य प्रशस्यपुण्यश्री--मतः किल विधिर्व्यधात् ॥ रक्षायै जगतीदुर्गं । लवणार्णवखातिकम् ॥ ४८ ॥ न यो द्वीपो भवेत्किन्तु । ध्रुवं लवणवारिधौ ॥ बिम्बितः स्वर्ग एवेह । श्रीरीदृक्कथमन्यथा ॥ ४९ ॥ तत्राऽस्ति भरतक्षेत्रं । पवित्रं पुण्यसंपदा ॥ धत्ते वैताढ्यदण्डं य--न्निषेधार्थमिवापदाम् ॥५०॥ यत्खण्डानां कलिर्माभू--न्मिथः श्रीमिश्रणादिति ॥ जाह्नवीसिन्धुवैताढ्य--भित्तीर्धाताऽन्तरेष्वधात् ॥५१॥ यस्मिन्मध्यम एव स्यात् । खण्डे जन्मार्हतामपि ॥ चैत्यालीपुष्पमालाभि--स्तदेव विधिनार्चितम् ॥ ५२ ॥ पुण्यश्रीसंविभक्त्यै य-न्मिथः प्रीत्या गतागते ॥ विदेहैरावतेष्विन्दु-सूर्यदूतैर्नु कारयेत् ॥ ५३ ॥ तस्य मध्यमखण्डं य--त्पुनन्ति स्वोद्भवादिभिः ॥ त्रिषष्टिर्जिनराजाद्याः । शलाकापुरुषाः खलु ॥ ५४ ॥

तत्रास्ति नगरं रम्यं । रतिवर्द्धननामकं ॥ श्रीभिर्धर्मार्थकामानां । धत्ते यत्सान्वयाहतांम् ॥ ५५ ॥ यत्र चैत्यशिरःसंस्थैः । कुम्भैः स्फटिकरत्नजैः ॥ लक्ष्यतेऽतीन्दुभिर्भाभि–र्न भिज्ज्योत्स्नातमिस्रयोः ॥५६ ॥ केदारेष्विव राजन्ते । शस्यश्रीणां वदावदाः॥ यत्रेभ्यगृहशीर्षेषु । सुवर्णकलशालयः ॥ ५७ ॥ उप्तं शतगुणं क्षेत्रे । भस्मसादनले हुतं ॥ बीजं स्यादिति लोकानां । प्रवादं श्रद्दधीत कः ॥५८॥ रुद्राक्षिहुतभुक्कुण्डे । यत्कामस्य हुतं वपुः ॥ जज्ञे कोटिगुणं यत्र । खेलद्युववपुच्छलात् ॥५९॥ युग्मं ॥ नरवीरो नृपस्तत्र । भूत्रांमप्रतिमोऽभवत् ॥ तैस्तैरैश्वर्यसौन्दर्य–धैर्यवीर्यादिभिर्गुणैः ॥ ६० ॥ यात्रासु कटकोद्भूत-रजोभिस्थगिते रवौ ॥ यस्य प्रताप एवाति–भानुरुद्योतमातनोत् ॥ ६१ ॥ वने यदरिभूपाना–मातिथ्यात्सुकृताप्तितः ॥ ददिरे तापसाः प्रीता । यस्मै सततमाशिषः' ॥ ६२ ॥ कपिलोऽङ्गीचकारैकां । प्रकृतिं त्रिगुणाश्रयां ॥ यस्त्वधात्प्रकृतीर्बह्वी–रसंख्यगुणसंश्रयाः ॥ ६३ ॥ विश्वे यत्कीर्त्तितेजोभि–र्धोतिते यदुदीपते ॥ चन्द्रार्कैस्तद् ध्रुवं ज्योतिः–शास्त्रसंबोधहेतवे ॥ ६४ ॥ बह्व्यः सौभाग्यशालिन्यो । वरेण्यगुणसंपदः ॥ प्रियास्तस्याभवत् कीर्त्ति–सुन्दर्याद्या मनःप्रियाः ॥ ६५ ॥

मंत्री मंत्रविदां धुर्यो । वर्यचातुर्यमन्दिरं ॥ विदुरः सर्वशास्त्राणां । बभूव मतिसागरः ॥ ६६ ॥ वीक्ष्य यस्यांगसौन्दर्यं । कामोऽकामो निजाङ्गके ॥ तस्यत्वानङ्ग एवाभू–द्रुद्राक्ष्यग्निहुतच्छलात् ॥ ६७ ॥ विद्यासौन्दर्यतो येन गुरुर्जित्वा लघूकृतः ॥ यत्तस्थौ जीवमात्रः किं । तेन जीव इति स्मृतः ॥ ६८ ॥ क्षमी दाता गुणग्राही । शक्तो भक्तो नृपेऽभवत् ॥ ज्ञाता यो व्यवहाराणा–मुपायी विनयी नयी ॥ ६९ ॥ राजव्यापारभारं स्वं । यस्मिन्न्यस्याऽखिलं नृपः ॥ निश्चिन्तो निर्भयः स्वैरं । रेमे भोगेष्वहर्निशम् ॥ ७० ॥ कामस्येव रतिप्रीती । तस्याभूतामुभे प्रिये ॥ प्रीतिसुन्दर्यभिख्याद्या । द्वितीया गुणसुन्दरी ॥ ७१ ॥ देवीनां

रूपसर्वस्व–माच्छिद्येमे व्यधाद्विधिः। देवास्तद्दुःखतोऽस्वापा–दस्वप्नास्तत्किलाऽभवन् ॥ ७२ ॥ जरसा स्वस्य वैक्लव्य–मवादापग-मेच्छया ॥ तयोः सृष्ट्यात्मविज्ञान–शक्तिं धाता त्वदीदृशत् ॥ ७३ ॥ सौभाग्यान्न परं पत्यु–रहार्षी चित्तमेव ते ॥ किन्तु देवाङ्गनानाम–प्यङ्गसुन्दरतामदम् ॥ ७४ ॥ तद्रूपं श्लाघ्यतां निन्यु–र्दानशीलादयो गुणाः ॥ भास्वराणीव माणिक्या–न्यलङ्कारं हिरण्मयम् ॥ ७५ ॥ पुरोधा वसुसारोऽभू–त्तस्य राज्ञः प्रसादभूः ॥ निमित्तादिबलैः किंचि–दतीतानागतादिवित् ॥ ७६ ॥ राजमन्त्र्यादयः सर्वे। धर्मार्हा अपि सद्गुणैः ॥ बोधिसामग्र्यभावेन। पूर्वं मिथ्यादृशोऽभवन् ॥ ७७ ॥ गुणमुक्तः पुरोधास्तु। कौलाचारानुगोऽभवत् ॥ भोगसौख्यमयस्तेषां। समयश्च कियानगात् ॥ ७८ ॥ अन्यदा मन्त्रिणो गेहे। ज्ञानत्रितयभासुरः ॥ अटन् गोचरचर्यायां। सुभगो नवयौवनः ॥ ७९ ॥ राजर्षिस्तपसा दीप्तः। पुण्यराशिरिवाङ्गवान् ॥ भिक्षार्थमागमत् कश्चि–न्मासक्षप-णपारणे ॥ ८० ॥ युग्मं ॥ मन्त्री मुनिं तमालोक्य। सुरूपं शुभलक्षणं ॥ अतिथिं समये भाग्याद्। ज्ञात्वा प्राप्तममोदत ॥ ८१ ॥ यदाहुर्लौकिकाः—

कोविदो वाऽथवा मूर्खो। मित्रं वा यदि वा रिपुः ॥ मध्याह्नसमये प्राप्तो। वैश्वदेवसमो मतः ॥ ८२ ॥ मुनये सोऽथ दानार्थ–मादिदेशादिमां प्रियां ॥ दानं ह्यतिप्रियं तस्य। विशिष्याऽतिथये पुनः ॥ ८३ ॥ सापि दानप्रिया हृष्टा। परमान्नं महर्षये ॥ महाभाजनतो दातुं। डुढौके सनिमन्त्रणम् ॥८४॥ लीलया छर्दयन्तीं तत्किञ्चित्किञ्चिन्निरीक्ष्य तां॥ मुनिरूचे व्रतस्थस्य भगिनीदं न शुध्यति ॥ ८५ ॥ तद्विमुच्य ततो दातुं। कूरमग्निस्थभाजनं ॥ यावत्सोपस्थिता ताव–त्स स्माहैष न शुध्यति ॥ ८६ ॥ सचित्तस्थगितां दालिं। ततः सा दातुमुद्यता ॥ मुनितः शुध्यतीत्युक्त्वा। निषिषेध च तामपि ॥ ८७ ॥ ततः कणस्थितं सर्पिः।

कणमिश्रां च शर्करां ॥ दधि चाहर्द्धयातीतं । स न्यषेधीत्तथा गिरा ॥ ८८ ॥ आनिनाय ततो दातुं । मोदकान् ह्यःकृतानियं ॥ एतेऽपि न हि शुद्ध्यंती-त्यूचे साधुः सहेतुकम् ॥ ८९ ॥

अथामात्येन भार्याभ्यां । त्रिभिः संभूय भक्तितः ॥ तदाशयमविज्ञाय । निर्बन्धेऽपि कृतग्रहो ॥ ९० ॥ अनाददानं किमपि । मन्त्री खिन्नो निरीक्ष्य तं ॥ विचिन्त्याऽमङ्गलं रोषा-ज्जगादैवं महामुनिम् ॥ ९१ ॥ युग्मं ॥ एते शुद्ध्यंति नाहारा-स्तत्र यद्यमृतोपमाः ॥ विषं शुध्यति तत्किं ते । किं वा नेत्रे गते तव ॥९२ ॥ रोषाद्वे प्रियाप्याख्या । निर्दाक्षिण्या जिनर्षयः॥ दाक्षिण्यं हि कुले शुद्धे । तत्त्वेषां नैव बुध्यते ॥ ९३ ॥ द्वितीयापि प्रियाऽऽचख्यौ । स्फुटालोकेऽपि साम्प्रतं ॥ वदन् न शुध्यतीत्यन्धो । भिक्षुभ्यो दीयतामयम् ॥९४॥ पुरेऽस्मिन् सन्ति पात्राणि पराण्यपि बहून्यपि ॥ तेभ्यो दानं प्रदास्यामः। करिष्यामश्च मङ्गलम् ॥९५॥ यत्र तत्रापि यद्दत्तं । दानं स्यात्तन्न निष्फलम् ॥ मङ्गलं च भवेत्तस्मा-त्पात्रे पुण्यं च पुष्कलम् ॥ ९६ ॥ दुर्वाक्यैरिति दुष्कर्म । तैरबन्धि दृढं त्रिभिः ॥ तोपरोपावसंभ्रान्तो । निरगात्तद्गृहान्मुनिः ॥९७ ॥

मन्त्रिणोऽथ गृहे मित्रं । श्राद्धो धर्मरुचिस्तदा ॥ आगात्कार्यविशेषेण ।दृष्ट्वा चैनं जहर्ष सः ॥९८॥ मन्त्र्युवाचाऽऽसनासीनं । तमर्हालापतोषितं ॥ भ्रातर्गृहेऽद्यमे कश्चि-द्भिक्षुर्भिक्षार्थमागमत् ॥९९॥ जैनायाऽतिथये तस्मै । प्रियवाग्भिः प्रियाथ मे॥ भक्त्या निमन्त्रणापूर्वं । दानार्थमुपचक्रमे ॥१००॥ तदा च दीयमानेषु। सनिर्बन्धं बहुष्वपि॥ परमान्नादिभोज्येषु। न किञ्चिदपि सोऽग्रहीत् ॥१॥ स एव प्रथमं दान-पात्रमागाद् गृहेऽद्य मे ॥ विधायाऽमङ्गलं तन्मे-ऽधुनैव त्वद्गुरुर्गतः ॥ २ ॥ निर्दाक्षिण्यस्ततः कोऽयं । त्वया

मित्रोपलक्ष्यते ॥ जगाद श्रावको मन्त्रिन् । संमुखो मिलितः स मे ॥ ३ ॥ प्रणतश्च मया भक्त्या । स वाढमुपलक्षितः ॥ आकर्णय सकर्णोऽस्य । चरित्रं चातिचित्रकृत् ॥४॥ तथाहि सिंधुदेशेऽभू-त्सौवीराद्वपुरे नृपः ॥ महानतिवलो नाम्ना । सुत्रामेव महर्द्धिभिः ॥५॥ सपक्षः प्रतिपक्षोऽथ । सदृक्षोऽस्य न कोऽप्यभूत् ॥ महाग्रहस्तदन्यो वा । किं कोऽप्यर्कस्य सन्निभः ॥ ६ ॥ सोऽन्यदा स्वसभासीनो । नटैर्देशान्तरागतैः ॥ नाट्ये विधीयमानेऽभि-नये सगरचक्रिणः ॥ ७ ॥ दृष्ट्वा पुत्रवियोगार्त्तचक्रिणोऽपि तथाविधां ॥ भवं दुःखमयं ध्यायन् । प्राबुद्धाऽऽसन्नसिद्धिकः ॥ ८॥ युग्मं ॥ बालं न्यस्य सुतं राज्ये । सद्यः साहसिकाग्रणीः ॥ धर्माकरगुरुपान्ते प्राव्राजीत्सोऽद्भुतैककृत् ॥ ९ ॥ सोऽभ्यसन् द्विविधां शिक्षा-मधीयानः श्रुतं बहु ॥ जगदद्भूतवैराग्य-स्तप्यते द्विविधं तपः ॥ १० ॥ महातपःप्रभावाच । सो ऽप्रमत्ततया सदा ॥ अवाप विविधा लब्धीः । किं दुरापं हि तादृशाम् ॥ ११ ॥ तं विभाव्यान्यदा योग्यं । तादृग्ध्यानश्रुतादिभिः ॥ एकाकित्वविहाराय । दुःसाध्यायाऽऽदिशद्गुरुः ॥ १२॥ परिषहोपसर्गादि-मृगेभ्यो निर्भयोऽथ सः ॥ सिंहवद्विहरन् वीरो-ऽगमद्गजपुरेऽन्यदा ॥ १३ ॥ तपोध्यानपरस्तस्थौ । तत्रोद्यानेऽर्चितः सुरैः ॥ विविधातिशयैः सर्वान् । सुखाकुर्वंस्तनूभृतः ॥ १४ ॥ भीमस्तत्रास्ति भूजानिर्भीमः काल इवारिषु ॥ सर्वराजगुणाधारः । सर्वधर्मेषु साम्यदृक् ॥ १५ ॥ समस्ति मतिसारोऽस्य । सचिवः शुचिधीनिधिः ॥ राज्यभारैकधौरेयो । राज्ञो मूर्त्तिरिवापरा ॥ १६ ॥

तत्र स्वल्पागसं कंचि-द्राजा चौरमघातयत् ॥ अकामनिर्जरायोगात् । प्राप व्यन्तरतां च सः ॥ १७ ॥ विभङ्गज्ञानतो मत्वा । प्राग्भवं स महीभुजे ॥ चुकोपाऽप्रभवंस्तस्मिन् गजमारिं ततो व्यधात् ॥ १८ ॥ नृपः खिन्नोऽथ तच्छान्त्यै । गजवैद्यादिभिर्भृशं ॥ अचीकरद्बहूपायां-स्तैर्बभूव न सा पुनः ॥ १९ ॥ आदिदेश ततो राजा । मन्त्रिणं चातुरीचणं ॥ तदुपायाववोधाय ।

सोऽपि चिन्तातुरोऽभवत् ॥ २० ॥ उद्याने सोऽन्यदा प्राप्तो । गीतातोद्यध्वनिश्रुतेः ॥ विस्मितोऽगान्मुनेरग्रे । देवीनां नाट्यमैक्षत ॥२१॥ ततो महाप्रभावं तं । मत्वा नत्वा स मौनिनं ॥ गृहीत्वावसरेऽस्यांघ्रि–स्पृष्टां धूलिं गृहेऽगमत् ॥२२॥ तिलकं स तयाकार्षी–त्सर्वेषामपि दन्तिनां ॥ जाताश्च नीरुजः सद्यो । विशिष्य पटवश्च ते ॥२३॥ तं वृत्तान्तं ततो मन्त्री । द्रुतं राज्ञे न्यवेदयत् ॥ अस्तवी–त्सोऽपि तं हर्ष–विस्मयद्वयवान्मुनिम् ॥ २४ ॥ कारयित्वोत्सवान् भूप–मन्त्रिणौ स्वपुरे ततः ॥ उद्याने सपरीवारौ । गत्वा प्राणमतां मुनिम् ॥२५॥ पारयित्वाथ स ध्यानं । धर्मलाभाशिषा मुनिः ॥ अमोदयत्तौ यथास्थानं । सर्वे चोपाविशन्मुदा ॥ २६ ॥ आदिदेश ततो धर्मं । तदनुग्रहकाम्यया ॥ यतीनां गृहिणां चेति । द्विविधं विस्तरान्मुनिः ॥ २७ ॥ संजातप्रत्ययौ धर्मे । मुनेर्माहात्म्यदर्शनात् ॥ श्राद्धधर्मं प्रपेदाते । प्रबुद्धौ भूपमन्त्रिणौ ॥ २८ ॥ तौ चान्येऽपि जनाः सर्वे । यथाशक्ति यथारुचि ॥ धर्मान् प्रपद्य नत्वा तं । स्तुवन्तः . स्वगृहान् . ययौ ॥ २९ ॥ सर्वत्राऽप्रतिबद्धोऽथ । विहरन्नन्यदा मुनिः ॥ अगाद्वीरपुरे तत्र । नरमारिस्तदाऽस्ति च ॥ ३० ॥ बलसारो नृपो दृष्ट्वा । प्रजाः प्रपीडितास्तया ॥ चक्रे तच्छांत्युपायौघां–स्तद्विदुक्तान् न सा त्वगात् ॥ ३१ ॥ अन्यदा भीमभूपस्य । दूतस्तत्रागतः पुरे ॥ उद्यानस्थं मुनिं दृष्ट्वो–पलक्ष्य प्राणमन्मुदा ॥ ३२ ॥ प्राप्तो राजसभायां स । नत्वा भूमौ निविष्टवान् ॥ कार्यं स्वस्वामिनादिष्टं । पृष्टो राज्ञे न्यवेदयत् ॥ ३३ ॥ सोऽथ वार्ताप्रसंगेऽवक् । गजमारिनिवर्त्तनं ॥ माहात्म्यं च मुनेस्तादृक् । तत्र चाऽऽगमनं तदा ॥ ३४ ॥ वृत्तान्तमिममाकर्ण्य । विस्मयानंदमेदुरः ॥ दत्वार्हमुत्तरं दूतं । सत्कृत्य व्यसृजन्नृपः ॥ ३५ ॥ मुनेरुद्घोष्य माहात्म्यं । सर्वं लोकैरचीकरत् ॥ भालेषु तिलकान् भूप–स्तत्पदस्पृष्टधूलिभिः ॥ ३६ ॥ सर्वैस्तथा कृते सद्यो–मारिर्व्यपगताऽखिला ॥ अचिन्त्यमहिमा कोऽपि । विशुद्धतपसां यतः ॥३७ ॥ मुनयश्चक्रिणः सैन्य–मपि क्रुद्धा दहन्त्यहो ॥

तपः प्रभावतस्तस्य । समृद्धिं दर्शयन्ति च ॥ ३८ ॥ गत्वोद्याने च भूपाद्या । मुनिं नत्वा विनुत्य च ॥ गृहिधर्मं तदादिष्टं । यथा-
शक्ति प्रपेदिरे ॥ ३९ ॥ मुनिरप्रतिवद्धात्मा । क्षेमपुर्यां स्थितोऽन्यदा ॥ तदंतः प्रविवेशायं । मासक्षपणपारणे ॥ ४० ॥ भ्राम्यन्
गोचरचर्यायां । सूनुनाथ पुरोधसः ॥ गवाक्षस्थेन सोऽदर्शि । तत्राऽसत्तिमुपागतः ॥ ४१ ॥ तेन मिथ्यादृगग्रण्या । जिनधर्मद्विषा
रुषा ॥ धनयौवनमत्तेन । शीर्षे सोऽघात्युपानहा ॥ ४२ ॥ तथापि न चुकोपाऽऽयं । भगवान्मेरुधीरिमा ॥ तस्मिन्नपि कृपां विभ्र-
न्मौनेनैवाग्रतोऽगमत् ॥ ४३ ॥ तत्तपोमहिमाकृष्टा । सद्यः शासनदेवता ॥ अदृश्याऽप्यच्छिदत्पाणी । क्रुधा सूनोः पुरोधसः
॥ ४४ ॥ आक्रंदन् स ततस्तीव्र–व्यथया क्रन्दयन् दिशः ॥ मातापित्रादयः सद्यः । संभ्रान्तास्तत्र चागमन् ॥ ४५ ॥
अनुतापी स तेभ्योऽवक् । स्ववृत्तान्तं यथातथं ॥ खिन्नास्तेऽपि ततस्तं । धिक्चक्रिरे वहुधा क्रुधा ॥ ४६ ॥ उपायान्त-
रमप्राप्य । ते चानर्थोपशान्तये ॥ आगत्याशु मुनिं नत्वा । तं कृताञ्जलयोऽब्रुवन् ॥४७॥ मुने ! महाप्रभावोऽसि । भगवन् ! जगदर्चितः॥
तेजोमयोऽपि दुर्लक्ष्यो । वालैर्घूकैरिवांशुमान् ॥ ४८ ॥ ततो वालेन मूढेन । यदज्ञानान्धचेतसा ॥ पूजार्होऽप्यपराद्धोऽसि । तत्क्षमस्व
कृपानिधे ! ॥ ४९ ॥ महतां न चिरं रोषो । विशिष्य प्रणतेषु यत् ॥ उपैम शरणं तत्त्वा–मेवातो नोऽनुकम्पय ॥ ५० ॥ वाल-
स्याऽस्य करौ सज्जौ । कुरूपायेन केनचित् ॥ यतः प्रभुस्त्वमेवात्र । नान्यस्य महिमा ह्ययम् ॥ ५१ ॥ मुनिरूचे न मे रोषो । भूतो
भवति भाव्यपि । अस्य शिक्षामिमां चक्रे । किन्तु शासनदेवता ॥ ५२ ॥ आकाशे प्रकटीभूय । तदा शासनदेव्यवक् ॥ पापं न
सज्जयाम्येनं । जगत्पूज्यावहीलकम् ॥५३ ॥ ततः पूजोपचाराद्यै–स्तोषिता तैरुवाच सा ॥ यद्यसौ प्रव्रजत्येत–त्पार्श्वे तत्सज्जया-
म्यमुम् ॥ ५४ ॥ इत्यपि प्रतिपन्ने तै–रनाप्यौपायिकान्तरं ॥ देवी नव्रीचकारास्या–ऽचिन्त्यशक्तिरियं करौ ॥ ५५ ॥ ततः

प्रमुदिताः सर्वे । पुष्पवृष्टिरभून्मुनौ ॥ अत्यन्तानुशयात्सोऽपि । मुनिं क्षमयतिस्म तम् ॥ ५६ ॥ मुनिना बोधितश्चायं । पित्राद्यनुमतो द्रुतं ॥ मात्राजीदर्पितः शिक्षा–हेतोः स्थविरकल्पिनाम् ॥ ५७ ॥ तौ नत्वा च प्रशंसन्तः । सर्वेऽगुः स्वस्वधामसु ॥ चमत्कृताश्च भूपाद्या । जैनधर्ममुपागमन् ॥ ५८ ॥

तत्र पारणकं कृत्वा । सोऽन्यदा विहरन् भुवि ॥ रतिवर्द्धननाम्नीह । नगरे मुनिरागमत् ॥ ५९ ॥ प्रतिमां प्रतिपद्यात्रो–द्याने निश्चलधीः स्थितः ॥ प्राप ध्यानतपोगे–रवधिज्ञानमन्यदा ॥ ६० ॥ मन्त्रिन्मुनिः स एवाऽयं । भाग्यात्त्वद्गृहमागतः ॥ उपोष्यानन्तरं मासं । शुद्धाहारं गवेषयन् ॥ ६१ ॥ साक्षात्कल्पद्रुमश्चायं महामहिमवारिधिः ॥ कुर्वतेऽस्य गुणप्रीताः। प्रातिहार्यं सुरा यतः ॥६२॥ सर्वसाम्यानुष्टस्यायं । न तुष्यति न रुष्यति ॥ पूजा निन्दा फले दत्ते । तथापीह परत्र च ॥ ६३ ॥ इति श्राद्धमुखात् श्रुत्वाऽ–नुतापभयविह्वलः ॥ प्रिये अपि तथा पश्यन् । विस्मितः सचिवो जगौ ॥ ६४ ॥ हहा ! मित्र मुनीन्द्रोऽय–मज्ञानान्धितमानसैः ॥ रोषान्मया प्रियाभ्याम–प्याक्रोशाद्यैर्विराधितः ॥ ६५ ॥ आचारादि जिनर्षीणां । विशिष्याऽस्य च नो वयं ॥ विद्मः किमप्यनभ्यासाद् । बिभीमः शापतोऽधुना ॥ ६६ ॥ जगौ धर्मरुचिः कश्चि–त्कृपालुर्न शपत्ययं ॥ एतत्सेवाकृतो देवा । अपि भाग्यान्न वोऽशपन् ॥ ६७ ॥ परमस्यावहेला स्याद् । दुःखदात्र परत्र च ॥ तदयं क्षम्यतां गत्वा । पापाऽमङ्गलशान्तये ॥ ६८ ॥ मंत्र्यवादीत्करिष्यामः । सर्वं मित्र ! त्वयोदितं ॥ स तु किं दीयमानानि । क्षैरेय्यादीनि नाऽग्रहीत् ॥ ६९ ॥ श्राद्धोऽवदद्यथावन्मे । तानि दर्शयताऽधुना ॥ तैस्तथा विहिते सोऽथ । क्षैरेय्याः पतितान् लवान् ॥ ७० ॥ आगताः कीटिका वह्वी–रागच्छन्तीश्च तेषु तु ॥ मर्द्यमाना जनैर्वीक्ष्य–दर्शयंस्तानभाषत ॥ ७१ ॥ युग्मं ॥ छर्दनं

तद्दनादान-हेतुर्हिंसाद्यनर्थकृत् ॥ क्रूरादेरग्रहेत्वग्नि-कायादीनां विराधना ॥ ७२ ॥ आतपेऽथ धृते दध्नि । मुक्त्वाऽलक्तकपोतिकां ॥ कुंथून् सोऽद्रीदशतत्र । श्वेतान् हेतुं तदग्रहे ॥ ७३ ॥ द्विचत्वारिंशतादोषै-र्मुक्तान वीक्ष्य स मोदकान् ॥ स्माहैषामग्रहे हेतुं । न जाने प्रेक्षते मुनिः ॥ ७४ ॥

एतत् श्रुत्वा च दृष्ट्वा च । दध्यौ मंत्री सविस्मयः ॥ सुसूक्ष्मतार्हद्धर्मस्या-ऽनीहता च मुनेरहो ॥ ७५ ॥ पात्रेभ्योऽहं विचित्रेभ्यो । दानानि बहुधाऽप्यदां ॥ अध्यैषि नैकशास्त्राणि । नाद्राक्षं त्वीदृशं क्वचित् ॥ ७६ ॥ श्राद्धो-ऽवादीन्मुनिं नन्तुं । यामो दध्मः कृतार्थतां ॥ मन्त्र्युवाचाऽपराद्धस्य । दर्शयामोऽस्य किं मुखम् ॥ ७७ ॥ बभाषे श्रावको नैष । दोषदर्शीह का त्रपा ॥ गत्वोद्यानेऽथ ते सर्वे । भक्त्या तं प्राणमन्मुनिम् ॥७८॥ धर्मलाभाऽऽशिषं सोऽदा-न्मंत्र्यूचेऽथ कृताञ्जलिः ॥ भगवन्नपराद्धोऽसि । यदज्ञानैः क्षमस्व तत् ॥ ७९ ॥ तेजसा मुनयः क्रुद्धा । नरकोटीर्दहन्ति हि ॥ मूढेष्वस्मासु दीनेषु । कृपां कुरु कृपानिधे ! ॥८०॥ तत्प्रिये अपि तं नत्वा-ऽत्यनुतापभयाकुले ॥ क्षमयामासतुर्भक्त्या । स्वस्वगर्हापरे मुनिम् ॥८१॥ मुनिरूचे न मे कोपो-ऽस्तीति मन्न हि वो भयं ॥ स्वरूपं तु न जानीथ । दृशोः शुद्धेश्च तात्त्विकम् ॥८२॥ मन्त्र्युवाचाऽऽदिशैतन्नः । साधुः प्राह दृशौ द्विधा ॥ बाह्ये चर्मात्मिके स्थूलाऽऽ-सन्नाल्पार्थप्रकाशिके ॥ ८३ ॥ आभ्यंतर्यौ च सर्वार्थ--दृश्वर्यौ ज्ञानदर्शने ॥ शुद्धि-र्बाह्या पदार्थानां । चोक्षताभ्यन्तरी पुनः ॥ ८४ ॥ द्विचत्वारिंशता दोषै-र्दैयार्थानां विमुक्तता ॥ ततोऽस्माभिर्द्विधा दृग्भ्यां । द्विधा शुद्धिर्विलोक्यते ॥ ८५ ॥ द्विचत्वारिंशद्दोषाश्चैवं—

"आहाकम्मु १ देसिअ २ । पूइकम्मे ३ ॥ अमीसजाए अ ४ । ठवणा ५ पाहुडिआए ६ । पाउअर ७ कीय ८ पामिच्चे ९ ॥ ८६ ॥ परिअट्टिए १० अभिहडु ११ । भिन्ने १२ मालाहडे अ १३ अच्छिज्जे १४ ॥ अणिसिठ १५ ज्झोअरए १६ । सोलस पिंडुग्गमे दोसा ॥ ८७ ॥ धाई १ दूइ २ निमित्ते ३ । आजीव ४ वणीमगे ५ तिगिच्छा य ६ ॥ कोहे ७ माणे ८ माया ९ । लोभे अ १० हवंति दस एए ॥ ८८ ॥ पुव्विं पच्छा संथव ११ १२ । विज्जा १३ मंते अ १४ चुन्न १५ जोगे अ १६ ॥ उप्पायणाइदोसा । सोलसमे मूलकम्मे अ ॥ ८९ ॥ संकिअ १ मक्खिअ २ निक्खिन्न ३ । पिहिअ ४ साहरिअ ५ दायगु ६ म्मासे ७ ॥ अपरिणय ८ लित्त ९ छड्डिअ १० । एसणदोसा दस हवंति ॥ ९० ॥ एवं ४२. संजोअणा १ पमाणे २ इंगाले ३ ३ धूम ४ कारणे ५ इति पंच ग्रासैषणादोषाश्च ॥

युष्माभिस्तत्स्वरूपाज्ञैः। क्रोधाक्रोशौ मुधा कृतौ ॥ तच्च क्षान्तं मया सर्वं । सर्वत्र समदर्शिना ॥९१॥ अथोचे श्राद्धमंत्रिभ्यां । ज्ञातं सर्वमिदं मुने ॥ मोदकानामनादाने । परं हेतुमुदाहर ॥९२॥ मुनिर्जगाद दासीभि-र्निशायां द्रविणैर्व रैः॥ तेषु निर्मीयमाणेषु । चुल्लीस्थे घृततापके ॥९३॥ धूमव्याकुलितस्याऽस्या-दुपरिस्थस्य भोगिनः॥ पपात गरलं तीव्र-मुल्लोचादेरभावतः॥९४॥ ततो विषमया जाता न ज्ञाताः केनचिच्च ते ॥ स्वसंयमोपघातित्वा-न्नाग्रहीषमिमानिति ॥९५॥ मंत्रीत्याकर्ण्य दास्याऽस्मि-स्तत्रैवाऽऽनायिते द्रुतं॥ एकस्मिन् मक्षिका वीक्ष्य । म्रियमाणा व्यचिन्तयत् ॥ ९६ ॥ अहो ज्ञानं मुनेरस्य । विषमोदकजग्धिजात् ॥ अनेन सकुटुम्बोऽद्य । रक्षितो मरणादहम् ॥ ९७ ॥ अनृणः कथमस्य स्या-मुपकारशतैरपि ॥ को वा स्यादुपकारोऽस्य । स्वयं विश्वोपकारिणः ॥ ९८॥

मित्रवाचा यथा जीव–घाताभावमुपायतः ॥ दासीभिर्मोदकान् सोऽथ । तथा तान् व्युदसीसृजत् ॥ ९९ ॥ भक्त्या नत्वा मुनिं चाख्यद् । भगवन् ! प्राणदोऽसि यत् ॥ त्वमेव शरणं तन्नः । सर्वेषामपि चांगिनाम् ॥ १०० ॥ उपकारः कृतोऽस्माक–मेको यः परमस्त्वया ॥ सम्यग्धर्ममथाऽऽदिश्य । मोहान्धतमसं हर ॥ १ ॥ बभाषेऽथ मुनिर्मंत्रिन् ! सर्वधर्मेष्वनुत्तरः ॥ जैन एवेष्टदो धर्मः । श्रुतशीलदयागुणैः ॥ २ ॥ तस्य मूलं च सम्यक्त्वं । तत्त्वश्रद्धानलक्षणं ॥ तत्त्वं च त्रिविधं देव–गुरुधर्मात्मकं मतम् ॥३॥ सम्यक्त्वे सति भाग्यात्स्या–द्विरतिः सा पुनर्द्विधा ॥ सर्वतो देशतश्चाद्या । क्षान्त्यादिर्दशधा मता ॥ ४ ॥ स्थूलाऽहिंसादिका प्रोक्ता–ऽपरा द्वादशधा जिनैः ॥ आदिमा यतिनां योग्या । द्वितीया गृहिणां तथा ॥ ५ ॥ इत्यादि मुनिना प्रोक्तं । स्वरूपफलसाधनैः ॥ विस्त-राद्धर्ममाकर्ण्य । प्रबुद्धः सचिवोऽब्रवीत् ॥ ६ ॥ धीरसाध्यं मुनेर्धर्मं । धर्त्तुं नैवादिमं क्षमः ॥ देहि मे गृहिधर्मं त–द्भगवन् ! मोक्षसाधनम् ॥ ७ ॥

सम्यक्त्वं द्वादशाऽथाऽस्य । व्रतानि च मुनिर्ददौ ॥ आवश्यकानि दानादीन् । गुणांश्च तमशिक्षयत् ॥ ८ ॥ स कल्पद्रुमिवाऽवाप्य ! साङ्गं धर्मं महर्धुलः ॥ मन्वानः कृतकृत्यं स्वं । मुनिं नत्वा गृहं ययौ ॥ ९ ॥ तथैव प्रतिबुद्धे ते । संवेगात्तत्प्रिये अपि ॥ गृहिधर्मं प्रपद्यर्षिं । नत्वा स्वं सद्म जग्मतुः ॥ १० ॥ मुन्यवज्ञोद्भवं निंदा–गर्हणाऽऽलोचनादिभिः ॥ प्रायस्ते चिक्षिपुः पाप–मत्यल्पं त्ववशिष्यते ॥ ११ ॥ तथा धर्मरुचिश्राद्धोऽप्यऽन्येऽप्यानम्य तं मुनिं ॥ यथाशक्त्याऽऽत्तधर्माणो । मुदिताः स्वगृहान् ययुः ॥ १२ ॥ मन्त्री तत्र स्थितस्योप–वासैर्मासं मुनेरभूत् ॥ उपास्त्या श्राद्धसङ्गाच्च । सप्रियः श्रावकाग्रणीः ॥ १३ ॥ जीवादितत्त्वानि विदन् क्रमेणा–भ्यस्तागमः प्रागपि शास्त्रवेदी ॥ क्रियासु सर्वास्वपि जैनधर्मा–नुगासु सोऽभूत्कुशलः सभार्यः ॥ १४ ॥ अर्थेषु सूक्ष्मेष्वपि

गोऽजस्रमन्मतिः । मपन्नधर्मादचलः सुरैरपि ॥ अदीदिपच्छासनमर्हतः परं । मत्रादिनां मंत्रिवरो जयश्रिया ॥ १५ ॥ अथ मन्त्री मुनेर्मासं । पर्युपास्त्या निबुध्य सः ॥ पारणाहे स्वयं गत्वा । न्यमन्त्रयत तं गृहे ॥ १६ ॥

कृपयाय मुनींद्रोऽपि । विधिना तद्गृहागतः ॥ मंत्रिणा तत्प्रियाभ्यां च । शुद्धभावोल्लसन्मुदा ॥ १७ ॥ दीयमानं महाभक्त्या । सर्वदोषविवर्जितं ॥ सोऽग्रहीत्परमान्नादि । पंचदिव्यानि चाभवन् ॥ १८ ॥ युग्मं ॥ गन्धाम्बुपुष्पहेमानि । वर्षितो मरुतोऽम्बरे ॥ दुंदुभीन् वादयंतो द्रा–गहो दानं मुदाऽघुषन् ॥१९॥ दानस्याऽस्य प्रभावात्ते । त्रयोऽपि समुपार्जितम् ॥ महाभोगफलं कर्म । को हि धर्मस्ततः परः ॥ २० ॥ स मुनिः पारणं कृत्वो–द्याने विश्वैकसाम्यदृक् ॥ तथैवास्थात्तपोलीनो । महाध्यानासनादिभिः ॥ २१ ॥ नृपोऽथ दुन्दुभिध्वानं । निशम्य सचिवौकसि ॥ किमेतदिति संभ्रांतः । पप्रच्छ स्वानुगांस्तदा ॥ २२ ॥ मुनिदानादिवृत्तांतं । ज्ञात्वास्मिस्तैर्निवेदिते ॥ स दध्यौ धिङ्मया ज्ञातो–ऽप्येष नेदृग्गुणो मुनिः ॥ २३ ॥ तद्गत्वा सपरीवारः । प्रातर्नस्यामि तं मुनिं ॥ इति चिन्तापवित्रात्मा । व्यतीयाय दिनं नृपः ॥ २४ ॥ अथ रात्रौ मुनिर्ध्यायन् । सर्वाङ्गिभ्यो हितं परं ॥ शुक्लध्यानानुभावेन । केवलज्ञानमासदत् ॥ २५ ॥ स घातिकर्मद्विपतां जयश्रिया । समस्तवेदी सकलार्थदर्शनः ॥ दधत्पुराऽप्यद्भुतनिधिसंपदा । पद्मश्च शुद्धाचरणात्सुसेवितात् ॥ २६ ॥ चारित्रधर्मस्तदयं सुरद्रुमा–दिभिः कथं यात्युपमां मितप्रदैः ॥ यथावदेकाग्रमपीह सेवितः । शिवाय यः कर्मजयश्रिया भवेत् ॥ २७ ॥

इति तपाबृहद्गच्छाधिराजपूज्यश्रीदेवसुंदरसूरिशिष्यश्रीज्ञानसागरसूरिशिष्यश्रीसोमसुंदरसूरिपट्टभृद्भिर्गच्छाधिराजश्रीमुनिसुंदरसूरिभिर्विरचिते श्रीजयानंदराजर्षिकेवलिचरित्रे जयश्यूंके तत्प्राग्भवमंत्रिजीवबोधिवीजलाभातिबलराजर्षिकेवलिदृष्टांतसूचितयतिधर्मफलवर्णननामा ।

॥ प्रथमः सर्गः समाप्तः॥

## ॥ अथ द्वितीयः सर्गः प्रारभ्यते ॥

देयाज्जयश्रियं मे श्री–पार्श्वः प्रह्लादपूजितः ॥ दत्ते मूर्त्त्या महिम्ना च । प्रह्लादं यो जगन्नृणाम् ॥ १ ॥ जायमाने प्रभातेऽथ ॥ नेदुर्दुन्दुभयो दिवि ॥ तत्राऽऽजग्मुश्च सुत्रामादयो देवाश्चतुर्विधाः ॥ २ ॥ नृत्यगर्जितगीतादि–पुष्पवृष्टीश्च ते व्यधुः ॥ कृते स्वर्णमये तैश्च । पद्म मुनिरुपाविशत् ॥ ३ ॥ श्रुत्वा दुन्दुभिनादादि । दृष्ट्वोद्योतं च दैवतं ॥ यावन्नृपोऽथ संभ्रान्तः। किमेतदिति पृच्छति ॥ ४ ॥ तावन्मंत्री नरेशं ज्ञात्वा । तं वृत्तांतं मुदाकुलः ॥ द्रुतमागत्य भूपालं । प्रणम्यैवं व्यजिज्ञपत् ॥ ५ ॥ देव ! ज्ञानं समुत्पेदे । मुनेः सर्वज्ञतास्पदं ॥ गत्वा वन्दामहे तं च । कृतार्थाश्च भवामहे ॥ ६ ॥ निशम्यैतत्कृतप्रातः–कृत्यो भूपोऽथ तत्क्षणं ॥ अज्ञातजिनधर्मोऽपि । भक्त्याऽऽश्चर्यादिनोदितः ॥ ७ ॥ गजारूढः सितच्छत्र–चामराद्युपशोभितः ॥ सामंतमंत्रिसेनान्या–द्यशेषपरि-

वारयुक् ॥ ८ ॥ वंधुदूघुष्टजयारावो । वाद्यौघध्वनिताम्बरः ॥ गत्वोद्याने मुनिं नत्वा । विधिनाऽध्यास्त तत्पुरः ॥ ९ ॥ त्रिभिर्विशेषकं ॥

धर्मलाभाऽऽशिषं दत्वा । मुनिर्धर्ममुपादिशत् ॥ आसीनेषु यथास्थानं । सुरासुरनरादिषु ॥ १० ॥ संसारेऽस्मिन्नहो भव्या दुःखैरेकार्णवे सदा ॥ उपायो धर्म एवाऽस्ति । दुःखहान्या सुखाप्तये ॥११॥ सम्यक्त्वमूलः स द्वेधा । गृहियत्यर्हभेदतः ॥ सम्यक्त्वं दुर्लभं चाऽत्र । चिन्तारत्नमिवेष्टदम् ॥१२॥ तदुक्तं–मूलं १ दारं २ पईट्ठाण ३ । आहारो ४ भायणं ५ निही ६॥ दुच्छक्कस्स वि धम्मस्स । सम्मत्तं तं विआहिअं ॥१३॥ अस्याः किंचिद्गमनिका–तदेवगुरुधर्माणां ज्ञानश्रद्धोनलक्षणं ॥देवोऽष्टादशदोषैश्च । मुक्तः स्यान्मुक्तये यतः ॥१४॥ हास्यादिषट्कं चतुरः कषायान् । पंचाश्रवान् प्रेममदौ च केलिं ॥ तत्याज यस्त्याजयते च दोषान् । देवः स सेव्यः कृतिभिः शिवाय ॥ १५ ॥ स चार्हन्नेव संसार–दुःखामयभिषग्वरः ॥ ज्ञानदर्शनचारित्र–पवित्रात्मा गुरुर्मतः ॥ १६ ॥ अथवा–शय्यापात्रांशुकाहारा–नकल्प्याऽन्नाऽऽददीत यः ॥ गृह्णानस्तांश्च निर्दोषान् । महाव्रतधरो मुनिः ॥१७॥ तपःश्रुतमनःशुद्धः । सम्यग्धर्मोपदेशकः ॥ तरन् भवाब्धिं भव्यांश्च । तारयंस्तत्त्वविद्गुरुः ॥१८॥ धर्मस्तु यतिनां पंच–महाव्रतमयो भवेत् ॥ सर्वहिंसानृतस्तेयाऽ–ब्रह्ममूर्छाविवर्जनात् ॥१९॥ गृहिधर्मः स्थूलहिंसाऽ–नृतस्तेयाऽन्ययोषितां ॥ त्यागो मितिर्धनादीना–मित्यणुव्रतपञ्चकम् ॥२०॥ परिमाणं गतेर्दिक्षु । तथा भोगोपभोगयोः ॥ त्यागश्चानर्थदण्डानां । स्यादिति त्रिगुणव्रती ॥२१॥ पौषधः पर्वयस्तेऽस्याऽ–तिथिभ्यो दानमुत्तमं ॥ चतुःशिक्षाव्रती चैवं । सर्वा स्याद् द्वादशव्रती ॥ २३॥ चतुर्भिः कलापकं ॥ व्रतानि द्वादशाऽमूनि । षड्विधाऽऽवश्यकं तथा ॥ दानशीलतपोभावात् । गृहिधर्मोऽयमुत्तमः ॥२४॥ अयं चाराधितोऽत्राऽपि । दत्तेऽभीष्टसुखश्रियः ॥ परत्र नृपचक्रित्वः–

शिवशर्माणि च क्रमात् ॥२५॥ स्यादुत्कृष्टा गतिः साधु-धर्मस्याराधनाच्चिऽवे ॥ द्वादशे स्वर्द्वितीयस्य। जघन्या चादिमे द्वयोः॥२६॥ यथाशक्ति तदाराध्यो-ऽन्यतरोऽयं प्रयत्नतः ॥ मनुजत्वादिसामग्री । दुर्लभा ह्यस्य साधिका ॥ २७ ॥ इत्यादिविस्तरादुक्ते । धर्मतत्त्वे महर्षिणा ॥ श्राद्धधर्ममथादत्त । राजा तत्त्वदृशा तदा ॥ २८ ॥ बहवोऽपि भवोद्विग्नाः । कुलजाः प्राव्रजन् परे ॥ केऽपि श्रावकधर्मं चाऽऽ-ददिरे केऽपि दर्शनम् ॥२९॥ प्रागप्यात्तमहाश्राद्ध-धर्ममंत्र्यादिसंयुतः ॥ नृपोऽन्येऽपि मुनिं नत्वा। मुदिताः स्वान् गृहान् ययुः ॥ ३० ॥

विजह्रेऽथाऽन्यतो ज्ञानी । जातभूरिपरिच्छदः ॥ न विश्वोपचिकीः कुर्यात् । स्थितिं ह्येकत्र भानुवत् ॥ ३१ ॥ वसुसारः पुरोधास्तु । प्राप्तोऽप्यत्र नृपाज्ञया ॥ जहौ नास्तिकतां नैवा-ऽसाध्ये रोगे हि किं भिषग् ॥ ३२ ॥ जैनशास्त्रेष्वधोती स । स्वान्य-दर्शनतत्त्ववित् ॥ भूपतिर्मन्त्रिणः संगाद् । दृढधर्मः क्रमादभूत् ॥ ३३ ॥ अन्येद्युर्मन्त्रिसामन्त-श्रेष्ठिसेनेश्वरादियुक् ॥ श्रिया जित-सुधर्मायां । सभायां धरणीधवः ॥ ३४ ॥ मणिसिंहासने तारा-लंकारः शक्रजित्प्रभः ॥ अध्यास्त विशदच्छत्र-चलच्चामरशोभितः ॥३५॥ युग्मं। प्रसृतासु विचित्रासु । तत वार्त्ताकथास्वथ॥ प्रशशंस नराधीशः। साधुश्राद्धगुणान् यथा ॥३६॥ अहो धन्या मुनीन्द्राद्या। स्वदेहेऽपि निर्ममाः ॥ परलोकहितायैव । कुर्युर्द्वादशधा तपः ॥ ३७ ॥ इत्यादिनृपगीरुग्र-दुर्व्यथो वृश्चिकदष्टवत् ॥ मन्वानोऽवसरं स्माह । वसुसारः पुरोहितः ॥ ३८ ॥ स्वामिन् श्वेताम्बरैर्धूर्तैरिन्द्रजालकलादिभिः ॥ मुग्धोऽयं वञ्च्यते लोकः। कुशास्त्रैर्वञ्चितैः स्वयम् ॥ ३९ ॥ त्याज्यन्ते संगता भोगाः । कार्यन्ते विविधं तपः ॥ मुधाऽभिमानमात्रेण । लोकात्पूजादिवाञ्छया ॥ ४० ॥

यतो न जीव एवाऽस्ति । पुण्यपापे पुनः कथं ॥ अभावात्परलोकस्य । तत्फलं क्व शुभाशुभम् ॥ ४१ ॥ तद्बिभेति मुधा

लोकः । पापजातमेत्यदुःखतः ॥ क्रियते पुण्यतोऽमुत्र। शर्म गे च वृकांघ्रिवत् ॥ ४२ ॥ तथा चाहुर्नास्तिकाः–एतावानेव लोकोऽयं । यावानिन्द्रियगोचरः ॥ भद्रे ! वृकपदं पश्य । यद्वदन्ति बहुश्रुताः ॥ ४३ ॥ पिब खाद च चारुलोचने ! । यदतीतं वरगात्रि ! तन्न ते ॥ न हि भीरु ! गतं निवर्त्तते । समुदयमात्रमिदं कलेवरम् ॥ ४४ ॥ इति तदैहिकसुखं हित्वा । पारत्रिकसुखाशया ॥ स्याज्जनस्तपसः कर्त्ता–भयभ्रष्टः शृगालवत् ॥ ४५ ॥ यदुक्तं–मांसं तटांते परित्यज्य जंबुको । मीनोपलम्भाय लघु प्रधावितः ॥ मीनो जलान्तः प्रविवेश सत्वरं । मांसं च गृध्रो हरतिस्म तद्यथा ॥ ४६ ॥ हित्वैहिकं वैषयिकं सुखं तथा । येऽमुत्रसौख्यप्रसराय धाविताः ॥ ते वञ्चयन्ते स्वमहो सदोभय–भ्रष्टा नरास्तीव्रतपोव्रतादिभिः ॥ ४९ ॥

कर्णशूचिं निशम्यैवं । नृपो वचः पुरोधसः । गांभीर्यादुगोपयन् रोषम् । मन्त्रिणो मुखमैक्षत ॥४८ ॥ ततो मंत्री बभाषेऽमुं । सर्वविद्याविदग्रणीः॥ स्वसंवेदनसिद्धं किं । जीवं रे मूढ ! निह्नुषे ॥४९॥ को भुङ्क्ते दुःखितेऽप्यंगे । पुत्रजन्मादिना सुखं ॥ दुःखं च सुखितेऽप्यस्मिन् । पुत्रमृत्व्वादिना हि कः ॥५०॥ स्थूलं मेऽङ्गं कृशं वाऽपी–त्यादि स्वस्वामिता मतिः ॥ जीवांगयोर्यनक्त्येव । भेदं भूपभुवोरिव ॥ ५१ ॥ सिद्ध एव परलोकः । सिद्धे जीवे च शाश्वते ॥ सिध्यतः पुण्यपापे च । सुखदुःखफलेक्षणात् ॥ ५२ ॥ ततः स्वर्गापवर्गादि–दानात् स्यात्सफलं तपः ॥ हिंसादिपद्भोगादि । नरकादेश्च दानतः ॥ ५३ ॥ इत्यादिशास्त्रवचनै–र्मन्त्रिणा हेतुगर्भितैः ॥ मद्धतमतिभश्चक्रे । वसुसारो निरुत्तरः ॥ ५४ ॥ सदस्यैर्धिक्कृतः सद्यो । राज्ञाऽप्येषोऽपमानितः ॥ निर्गतो व्रीडया भूप–सदस्येति न तद्दिनात् ॥ ५५ ॥ सचिवः सत्कृतो राज्ञा । सभ्याद्यैश्च सुसंस्तुतः ॥ जगाम मुदितो धाम । परेऽपि स्वगृहाण्ययुः ॥ ५६ ॥ एवं विसृज्य भूपोऽपि । सभां कालनिवेदिना ॥ विज्ञप्तेऽवसरे चक्रे । स्नानाऽर्चाभोजनादिकम् ॥ ४७ ॥

गुर्वादिभ्योऽथ विज्ञाय । मन्त्री धर्मानुगान् सदा ॥ यथावसरमाऽऽख्याति । विचारान् भूभुजे बहून् ॥ ५८ ॥ शर्मधर्ममये काले । तेषामित्यतिगच्छति ॥ अन्यदा नृपतेरासीत् । प्रगाढा शीर्षवेदना ॥ ५९ ॥ औषधादिबहूपायैः । सद्यो वैद्यादिभिः कृतैः ॥ तस्यामनुपशान्तायां । भूपोऽस्मार्षीत्पुरोधसः ॥ ६० ॥ स हि जानाति तं मन्त्रं । येन सा शाम्यति द्रुतं॥ एवं विदितपूर्वी तं । नरैराजूहवन्नृपः ॥ ६१ ॥ आगत्य वसुसारस्तां । सद्यो मन्त्रादपानयत् ॥ मणिमन्त्रमहौषध्यो । अचिंत्यमहिमश्रियः ॥ ६२ ॥ सच्चकार नरेन्द्रस्तं । विविधैर्भूषणादिभिः ॥ महान्तो हि कृतज्ञाः स्युः । सफलाश्चोपकारिणाम् ॥ ६३ ॥ तदादि नृपतेरेष । सभामेति पुनर्मुदा ॥ प्रतिष्ठां च जनेष्वाप । ते हि प्रायो नृपानुगाः ॥ ६४ ॥ नीतिकामार्थनाटयादि–शास्त्रैर्धर्मोक्तिमिश्रितैः ॥ विनोदयत्ययं भूप–चित्तं विश्वासहेतवे ॥ ६५ ॥ नृपस्याग्रेऽन्यदा मान्यं । तं वीक्ष्य सचिवो जगौ ॥ स्वामिंश्चार्वाकचांडाल–स्याऽस्य नो संगमर्हसि ॥ ६६ ॥

इति मन्त्रिगिरं श्रुत्वा । नृपे मौनेन तस्थुषि ॥ पुरोधा दुर्द्धरक्रोधा–दध्यौ दुर्धीधुरंधरः ॥ ६७ ॥ शुद्धविप्रकुलोद्भूतो–ऽप्यहमेतेन मन्त्रिणा ॥ राजमानोन्मदेनाऽस्मि । नीतश्चाण्डालतां हहा ! ॥ ६८ ॥ पराभूतोऽस्मि भूपादि–समक्षं रंकवत्पुरा ॥ गरीयान् प्राक्कृतो मेऽभि–भवश्चोज्जीवितोऽधुना ॥६९ ॥ तदेवं सहमानोऽहं । पुरुषाऽधमतां लभे ॥ मानिनो जहति प्राणान् । सहंतेऽभिभवं न तु ॥ ७० ॥ यतः–वरं प्राणपरित्यागो । न मानपरिखंडनं ॥ प्राणनाशात्क्षणं दुःखं । मानभंगाद्दिने दिने ॥ ७१ ॥ यदुक्तं–पादाहतं यदुत्थाय । मूर्द्धानमधिरोहति ॥ समानादपमानेऽपि । देहिनस्तद्वरं रजः ॥ ७२ ॥ अवंध्यकोपस्य निहंतुरापदां । भवंति वश्याः स्वयमेव देहिनः ॥ अमर्शशून्येव जनस्य जंतुना । न जातहार्दे न च विद्विषादरः ॥ ७१ ॥ इति ॥ दर्शनीयं ततस्तेजो ।

न सद्योऽभिभवः पुनः ॥ पङ्को हि मर्द्यते पादै-स्तेजस्वी नाऽनलः पुनः ॥ ७२ ॥ तेजस्विनोऽपराधेऽपि । सर्वैर्हि मुखमीक्ष्यते ॥
गृहदाहे कृतेऽपि स्या-दादेयः कस्य नोऽनलः ॥७३ ॥ तस्माद्यान्तु सुखं यांतु । श्रियः प्राणा अपि स्फुटं ॥ करिष्ये मन्त्रिणोऽनर्थं
त्वस्योपायेन केनचित् ॥७४ ॥ उपायात्तीर्यते वार्द्धि-र्बध्यते च हरिद्विपो ॥ उपायादृगिरिरुल्लंघ्यः । किमुपायान्न सिध्यति ॥७५॥
इति ध्यायन्नयं धाम । धात्रीशानुमतोऽगमत् ॥ तदादि तु छलं नित्य-मन्वेषयति मन्त्रिणः॥७६॥ दुरापाऽवनिभृत्सेवा । नास्ति-
कत्वे मया ध्रुवं ॥ तां विना न क्षमे त्वस्याऽ-नर्थायेति विचिन्त्य सः ॥ ७७ ॥ शिशिक्षे कस्यचित्पार्श्वे । गुरोर्जैनीः क्रियास्ततः ॥
कपटश्रावकीभूय । निःशङ्कं सेवते नृपम् ॥ ७८ ॥ युग्मं ॥ मन्त्रिवत् श्रावकाचारान् । दर्शयन् कपटादयं ॥ अपीमिणन्नृपं को हि ।
धर्मदम्भान्न वञ्च्यते ॥७९॥ जानन्नपि धिया मन्त्री । मायिनं तमुपेक्षते ॥ नाऽपाकर्त्तुं विनोपायं । शक्यो हि नृपसंमतः ॥८० ॥
धर्मवार्त्तं पुरोधास्तू-पदिशन्नंतरांतरा ॥ कामशास्त्रोपदेशेन । रमयेन्नृपतेर्मनः॥ ८१ ॥ धर्मरागो दुराधानः । पापरागस्तु नाङ्गिनि ॥
सुरज्ज्यां हि यथा नीली । मञ्जिष्ठा न तथांशुके ॥ ८२ ॥ कामरागं क्रमात्सोऽथ । तथा चित्ते न्यवीविशत् ॥ यथाऽहीयत भूपस्य ।
धर्मरागः शनैः शनैः ॥८३॥ विनश्यति हि माञ्जिष्ठो । रागः कज्जलसंगतः ॥ लशुनादिकदुर्गंधा-दुर्गन्धश्चाऽगुरुसंभवः ॥ ८४ ॥ पापो-
पदेशमप्यस्य । स सेहे धर्ममिश्रितं ॥ न जीर्यति विषं कस्य । यत्तांबूलादिमिश्रितम् ॥८५ ॥ अन्येद्युर्मन्त्रिणो गेहे । पुरोधाः काय-
तोऽगमत् ॥ आसनाऽऽलापदानाद्यै-स्तेनापि बहुमानितः ॥ ८६ ॥ कुतीर्थ्येऽपि यदौचित्यं । श्राद्धः कुर्याद्गृहागते ॥ किं पुनर्नृप-
पूज्येऽस्मिन् । श्रुते श्राद्धतया जने ॥ ८७ ॥ यदुक्तं—गेहागयाण उचियं । वसणपडिआण तह समुद्धरणं ॥ दुहिआण दया एसो ।
सव्वेसिं संमओ धम्मो ॥ ८८ ॥ स तत्रेतस्ततः पश्य-न्नद्राक्षीन्मंत्रिणः प्रिये ॥ रूपेणातिरतिप्रीती । स्त्रैणचूडामणी गुणैः ॥ ८९ ॥

सोऽचिन्तयदहो रूप-मनयोर्जगदुत्तरं ॥ ध्रुवं रूपानुमानेन । संभवन्ति गुणा अपि ॥ ९० ॥ तदहो मन्त्र्ययं धन्यो । यस्ये-
दृग्भोगसंगमः ॥ अथवेप्सितकार्यस्य । सिद्ध्युपायमवाप्नवम् ॥९१॥ यत्तत्कार्यं निवेद्यासौ । मंत्रिणाऽथोत्तरेऽर्पिते ॥ जगाम स्वगृहं
सिद्ध-मिव कार्यं निजं विदन् ॥९२॥ स लग्नादिबलात्किञ्चि-न्निवेद्याऽनागतादिकं ॥ सदा रंजयति क्ष्मापं । शुद्धा विद्या हि कामधुक्
॥ ९३ ॥ पृष्टो भूपेन सोऽन्येद्यु-र्विश्वासाद्रहसि स्थितः ॥ किंचिन्न्यूनं ममाऽप्यस्ति राज्ये । वद विदांवर ! ॥९४॥ उवाच मन्त्रिणि
द्वेषा-त्पुरोधाः स्वेष्टसिद्धये ॥ अस्ति स्वामिन्! गजाश्वादि । सर्वमन्यनृपाधिकम् ॥९५ ॥ परं सारं पुमर्थेषु । काम एवात्मशर्मकृत् ॥
धर्मार्थयोर्हि यत्नस्य । कामः फलमनन्तरम् ॥ ९६ ॥ साधनेषु च कामस्य । मुख्यं भार्यैव साधनं ॥ सा च ते नास्त्यतो मन्ये ।
सर्वं राज्यादि निष्फलम् ॥९७॥ विस्मितोऽथाऽब्रवीद्राजा । विप्र ! किं भाषसेऽनृतं ॥ संति बह्व्योऽपि मे भार्याः ।सुरूपा गुणबन्धुराः
॥ ९८ ॥ विप्रोऽवक संति बह्व्योऽपि । परमेकाऽपि तासु न ॥ तव रूपानुरूपाऽस्ति । सत्तामात्रेण किं ततः ॥ ९९ ॥ कोद्रवाद्यैर्हि
भुक्तिः स्यात् । काचाद्यैरप्यलंकृतिः ॥ तृट्च्छेदः क्षारनीराद्यै-र्वल्काद्यैर्वपुरावृतिः ॥ १०० ॥ परं घृतवरस्वर्ण-द्राक्षाम्बुसुरवाससां ॥
कुर्युः कार्याणि नो तानि । न स्त्रीकार्यं च तेऽङ्गनाः ॥१॥ राजोचे मत्प्रियाभ्योऽपि । काऽपि क्वाऽपि किमङ्गना ॥ अधिका रूपसौभा-
ग्य-गुणैर्दृष्टा श्रुताऽथवा ॥२॥ विप्रोऽवादीन्मया स्वामिन् !। दृष्टे साक्षादुभे स्त्रियौ ॥ यद्रूपं चिन्तयन्मन्ये । न तृणायाऽपि ते प्रियाः
॥ ३ ॥ याभ्यामुग्रयौवनाभ्यां हि । रूपेण विजितां रमां ॥ हरिर्न बहुमन्येता-ऽरत्या साऽभूत्ततोऽस्थिरा ॥ ४ ॥ अनर्हे स्वस्य
मन्वाते । अतिरूपे सुलोचने ॥ विरूपाक्षो रतिकल्पां चक्रे यौचित्यवित्सुधीः ॥ ५ ॥
निशम्यैवं नृपोऽवादीत् । कस्याऽऽयत्ते क्व ते द्विज !॥ कन्ये वा परिणीते वा । वर्त्तेते इति मे वद ॥६॥ सोऽप्यभाषिष्टदुष्टात्मा ।

पृष्टेनानेन किं तव ॥ अज्ञातं हि वरं तेऽदो–ऽशक्तस्याऽनुद्यमस्य च ॥७॥ भुंक्ते कदन्नमात्रं य–स्तस्यैवोपार्जने क्षमः ॥ मोदकादिगुणज्ञानं । तस्य शल्यायते हृदि ॥ ८ ॥ किमेवं भाषसे विप्र ! । काऽप्यशक्तिं ममेक्षथाः ॥ स्वेष्टेऽर्थेऽनुद्यमं चेति । राज्ञोक्ते स मुदाऽवदत् ॥ ९ ॥ यद्येवं शृणु तत्ते स्तः । स्वायत्ते एव ते स्त्रियौ ॥ यतस्त्वत्सचिवस्यैव । वल्लभे वल्लभे इमे ॥ १० ॥ तवैव किङ्करश्चाऽयं । तत्कस्तत्र पराक्रमः ॥ उद्यमं तु विधायैते । स्वामिन् ! स्वांतःपुरे नय ॥ ११ ॥ स्त्रैणेऽनुपमरूपे ते । पौंस्नेऽनुपमरूपिणः ॥ तवैवार्हे परं भ्रांतो । धत्रयुक्तौ विधिर्जेरी ॥ १२ ॥ यतः—स्त्रीरत्नं भाति नाऽस्थाने । स्थाने भाति च योजितं ॥ ऐभे कण्ठे मणिघण्टा । भ्राजते न तु गार्दभे ॥१३॥ तवेदं परमं रूप–मैश्वर्यं सपराक्रमं ॥ राज्यादि निष्फलं सर्वं । यदि स्यातां न ते प्रिये ॥ १४ ॥ नाऽधिक्यं सहते शूरः । पृथ्व्यामप्यधिकश्रिया ॥ किङ्करेऽपि प्रियाऽधिक्यं । सहन् किं त्वं न लज्जसे ! ॥१४॥

स्वामितः सातिशायिन्ौ–भोगं नार्हन्ति सेवकाः ॥ करोति स्वामितो न्यूनं ॥ स हि वेषगृहाद्यपि ॥ १६ ॥ न चेदं वेत्ति चेन्मन्त्री । स्वामिभक्तिनयोज्झितः ॥ तत्प्रियोद्दालनात्तस्य । शिक्षां त्वं दातुमर्हसि ॥ १७ ॥ इति विप्रगिरं श्रुत्वो–द्दीप्तकामोऽपि भूपतिः ॥ परस्त्रीपरिहाराख्यं । व्रतं लोप्स्यामि नो निजम् ॥ १८ ॥ ते तु द्रक्ष्याम्युपायेन । येन केनेति चिन्तयन् ॥ सर्वं साधु करिष्यामी–त्युदित्वा विससर्ज तम् ॥ १९ ॥ युग्मं ॥ अथ मंत्री नृपस्यानु–मत्या चैत्यमचीकरत् ॥ तत्रोत्सवैश्च बिम्बानि । जैनानि न्यवीविशत् ॥ २० ॥ साधर्मिकाणां वात्सल्यं । कुर्वंस्तस्मिन् महोत्सवे ॥ सचिवः स्वगृहे भूपं । न्यमन्त्रयत भुक्तये ॥ २१ ॥ ततः प्रागपि तत्पत्न्यौ । द्रष्टुमुत्कण्ठुलो नृपः ॥ इष्टं चैवोपविष्टं च । मन्वानस्तद्गृहेऽगमत् ॥ २२ ॥ तस्मै सपरिवाराय । सचिवः सभि-

यस्तदा ॥ आरभ्याऽऽचमनात्सर्व–मातिथ्यमुचितं व्यधात् ॥ २३ ॥ कृतस्नानादिमांगल्यो–ऽध्यास्त स्वर्णासनं नृपः ॥ पृथावथ मणिस्थाले । रत्नकच्चोलकान्विते ॥ २४ ॥

विश्वासान्मंत्रिपत्न्याद्या । द्वितीयाऽप्यंतरान्तरा ॥ नानाखाद्यादिभोज्यानि । व्यंजनानि घृतादि च ॥ २४॥ स्वादून्यमृतवत्मीता । क्रमतः पर्यवीविषत् ॥ मन्त्री वीजयितुं ताल–वृन्तेनाऽढौकत स्वयं ॥ २६ ॥ त्रिभिर्विशेषकं ॥ अथ भूपः समीक्ष्यैते । रूपेणाप्रतिमे उभे ॥ अभूत्कामवशो वाचं । श्रद्दधानः पुरोधसः ॥२७ ॥ तथाऽपि संवृताकार–स्तदेकगतमानसः ॥ अभुक्त भोजनस्वादं । धात्रीशोऽसंविदन्नपि ॥ २८ ॥ ततः सुरभितांबूलं । स्वादु चास्वादयन्नयं ॥ चंदनागुरुकर्पूरा–द्यंगरागोपशोभितः ॥ २९ ॥ मन्त्रिणा सत्कृतो दिव्य–दुकूलाभरणादिभिः ॥ आजगाम निजं धाम । जातकामस्तयोः स्त्रियोः ॥ ३० ॥ युग्मं ॥

सोऽन्यदावसरेऽवादी–द्रहः प्राप्तं पुरोधसं ॥ बंधो ! मन्त्रिप्रियारूपं । त्वदुक्तं सत्यमैक्षिषम् ॥३१॥ द्विजोऽवक् किं प्रभुं भक्ता । वञ्चयन्तेऽनुजीविनः॥ते तु स्वांतःपुरे नीत्वा । स्वं मां ते च कृतार्थय ॥३२॥ जगाद मेदिनीनाथः । कुर्वे कथमिदं यतः ॥ परस्त्रीपरिहाराख्य–व्रतभंगे हि दुर्गतिः ॥३३॥ अयशः परमं च स्या--न्मालिन्यं स्वकुलस्य च ॥ स्फुटं तद्ग्रहणे लोका--पवादश्च प्रवर्द्धते ॥३४॥ रहस्तद्ग्रहणे शुद्धो । नैवोपायोऽस्ति कश्चन ॥ मन्त्री तु स्वामिभक्तो मे । मित्रं सुश्रावकाग्रणीः ॥३५॥ धर्मसाहाय्यदानेनोपकारी विनयी नयी ॥ पराक्रमी च सर्वत्रा--लंकर्मीणश्च बुद्धिभिः ॥ ३६ ॥ युग्मं ॥ कथमीदृश्यऽदोषेऽपि । दोषारोपादि युज्यते ॥ विश्वस्ते चात्र विश्वास--घातपापं करोति कः ॥ ३७ ॥ तदलं पापमूलेन । परस्त्रीग्रहणेन मे ॥ इहाऽन्यत्र विरुद्धं हि । शुद्धबुद्धिः करोति कः ॥ ३८ ॥

इत्थमाकर्ण्य भूपोक्तं । पुरोधा धाम दुर्धियां ॥ अंतर्दुष्टो वहिः शिष्टः ॥ खिन्नः पुनरयं जगौ ॥ ३९ ॥ अवादीर्युक्तियुक् स्वामिन् ! । नीतिशास्त्रं तु नेक्षसे ॥ स्वसेवकैकवात्सल्या-दंतर्हितविचारदृक् ॥ ४० ॥ नीतिशास्त्रानुसारीदं । सकर्णाकर्ण्यतां ततः ॥ हितवादी हि भक्तः स्यात् । हितश्रावी सुधीः पुनः ॥ ४१ ॥ जायंते यत्र तत्राऽपि । यानि रत्नानि ते भुवि ॥ तरुधान्यादि-यत्तेषां । त्वमेव धनिकः प्रभो ! ॥ ४२॥ आचारः सर्वभूपानां । मतोऽयं नीतिशास्त्रगः ॥ ततस्त्वद्भूभवानां स्त्री--रत्नानां त्वमसि प्रभुः ॥ ४३ ॥ तवैवेति स्त्रियः सर्वाः । परस्त्री कापि नास्ति ते ॥ मन्त्रिपत्नीग्रहे तेन । व्रतभंगः कथं भवेत् ॥ ४४ ॥ मन्त्री तु स्वामिभक्तो मे । इत्यादि श्रद्दधे न हि ॥ स चेत्स्यात्स्वामिभक्तस्तत् । स्वप्रिये किं न तेऽर्पयेत् ॥ ४५ ॥ किञ्चावेदं कुतोऽपीदं । वैरिगृह्योऽस्ति मन्यसौ ॥ काले त्वमपि वोद्धासे । स्वामिभक्तः कथं ततः ॥४६ ॥ तन्मैत्री मायिनाऽनेन । ऋजोस्तव न युज्यते ॥ ध्यायंस्त्वयि प्रभो ! द्रोहं । कथं सुश्रावकाग्रणीः ॥ ४७ ॥ धर्मसाहायकाद्येष । विश्वासायैव ते सृजेत् ॥ बुद्ध्यादिशक्तिरप्यस्य । जाने तत्ते गुणाय न ॥४८॥सदोषोऽयं न विश्वस्तो । विश्वस्तोऽस्मिंस्त्वमेव तु ॥ एतत्प्रादुःकरिष्यामि सर्वं तेऽवसरे प्रभो !॥४९॥

इति श्रुत्वा नृपो दध्यौ । विस्मयानंदखेदभृत् ॥ इत्येतत्किमु सत्यं स्यात् । काले वा ज्ञास्यतेऽखिलम् ॥ ५०॥ त्वदुक्तं मित्र! कर्त्ताऽस्मि। काले ज्ञात्वा यथायथं॥ इत्युदित्वा नृपः प्रीतं। विससर्ज पुरोहितं ॥५१॥ तदादि सचिवे भूपो । भक्ताऽभक्तत्वसंशयात्॥ तत्प्रियाकाम्यया चाधा-द्वहिर्वृत्त्यैव सौहृदम् ॥ ५२ यतो युधि न येषां हृद् । भिद्यतेऽरिभटायुधैः ॥ शूराणामपि तेषां द्राग् । खलवाक्यैः प्रभिद्यते ॥५३॥ मैत्रीं विनाशयत्येव । प्रविष्टोऽन्तः खलः सतां ॥ हंसचञ्चुर्न किं भेदं । विधत्ते क्षीरनीरयोः ॥ ५४ ॥ दुष्टः कष्टाय शिष्टानां । सर्वः किं नु नृपोन्मदः ॥ केवलोऽपि दहत्यग्निः । किं पुनर्वायुसंगतः ॥ ५५ ॥ सतामपि मनः सद्यो ।

विनाशयति दुर्जनः ॥ दुग्धं नकुलसंचारा–द्विनाशं नोपयाति किम् ! ॥ ५६ ॥

अथो समरवीरोऽस्ति । नगरे गिरिसंगमे ॥ भूपः प्रचंडदोर्दण्ड–खंडितोद्दण्डशात्रवः ॥ ५७॥ तेनाऽन्यदा सहैतस्य । नरवीरस्य भूपतेः ॥ विरोधोऽभूद्भृशं देश–सीमग्रामनिमित्तकः ॥५८॥ शोध्यन्ते तन्नृपादेशा–त्प्रतोल्यादौ स्थितैर्नरैः ॥ गतागतकृतो लेख–हारकाः प्रायशस्तदा ॥५९॥शाकिनीवच्छलान्वेषी । मन्त्रिणोऽपचिकीस्तदा ॥ लिलेखाऽवसरं ज्ञात्वा । कूटलेखं पुरोहितः ॥ ६०॥ प्रलोभ्य बहुद्रव्येण । निःस्वं कश्चिद् द्विजं ततः ॥ शिक्षयित्वा मृपामाये । तस्मै तं स समर्पयत् ॥ ६१ ॥ हेम्नः पलचतुष्कं च । सोऽदात्तस्मै प्रपञ्चवित् ॥ आदाय स्वर्णलेखौ तौ । सोऽपि ग्रामान्तरेऽगमत् ॥६२॥ तत्र स्थित्वा कियत्काल–मागात्सोऽस्मिन् पुरे पुनः ॥ दूरदेशांतरागामि–वेषभृद्धूलिधूसरः ॥ ६३ ॥ स विशन् गोपुरे रुद्धो । नियुक्तैः राजपुरुषैः ॥ शोधने ददृशे तस्य । पार्श्वे लेखः सकाञ्चनः ॥ ६४ ॥ तत्स्वरूपं च पृष्टस्तै–र्नैव किञ्चित्स भाषते ॥ ततस्तैर्नृपतेरार्पि । लेखो विप्रश्च हेमयुक् ॥ ६५ ॥ राज्ञा कोऽसीति पृष्टोऽसौ । जगौ विप्रोऽस्मि निर्धनः ॥ क्लिश्यन् द्रव्यार्जनोपाये–रत्रैव नगरे वसन् ॥ ६६ ॥ लोकादन्येद्युरश्रौषं । पुरेऽस्ति गिरिसंगमे ॥ राजा समरवीराह्वो । दानी विप्रेषु भक्तिभृत् ॥ ६७ ॥ दत्ते सोऽपूर्वविप्राय । हेम्नः पलचतुष्टयं ॥ ततोऽहं स्वर्णलोभेन । तत्राऽगां कतिभिर्दिनैः॥६८॥ आशिषं च नृपायाऽदां। पृष्टस्तेनाऽऽगतः कुतः॥अवोचं नगरादागां। रतिवर्द्धननामकात् ॥६९॥ ततः स राजा स्वर्णं मे। दत्वैतल्लेखमर्पयत् ॥ उवाच च पुरे तत्र । मतिसागरमन्त्रिणः ॥७० ॥ बंधो ! लेखस्त्वयाऽर्प्योऽयं । दर्श्यो नाऽन्यस्य कस्यचित् ॥ ततस्तं लेखमादाय । समागामत्र हेमयुक् ॥७१॥ युग्मं ॥ न वेद्मि लेखमध्यस्थं। स्वरूपमिति वादिनं॥ तं विसृज्य नृपो लेख–मुन्मुद्र्याऽवाचयद्यथा ॥ ७२ ॥

स्वस्ति श्रीगिरिसंगमनगराद्राजाधिराजः श्रीसमरवीरनामा श्रीमति रतिवर्द्धननगरे निजमांतरमित्रं महामन्त्रिणं श्रीमन्तं मतिसागरनामकं सस्नेहमालिङ्ग्य सप्रीतिरसमसरं समादिशति यथा—वयं सर्वदा कुशलकमलासमालिङ्गनसुभगा विजेजीयामहे, शुभवता भवतापि सततं निजकल्याणोदन्तनिवेदनेन प्रमोदपदवीं प्रापणीया वयं, कार्यमथ यद्भवता ज्ञापितं तं. अहं त्रिभास्यमानं राजानमवसरं लब्ध्वा वध्वा तव राज्यं प्रदास्यामि, तदवसरे भवता सर्वसैन्यपरिवारेण बलसारेण समागम्यं, परिकरं भिन्दानोऽस्मीत्यादि, भवता च तत्कार्यविषये सर्वदाऽवहिततया वर्त्तितव्यं, तद्दिनं च ज्ञाप्यं, येन तद्दिनसंयोपर्यहं सर्वाभिसारेण समागच्छामि, कृतार्थश्च भवामि, पश्चाद्भवते भवते राज्यार्द्धं मानितं तन्नियमेन प्रदास्यामीति नाऽत्र संदेहः कार्यः, सर्वदा समाधानमत्रास्ति, स्वसमाधानं विशेषकार्यादिप्रधानं सर्वदा निवेदनीयमिति मंगलम् ॥

इति लेख्यार्थमाम्नाय । प्रस्फुरत्कोपविस्मयः ॥ ही किमेतदसंभाव्यं । यन्न दृष्टं श्रुतं क्वचित् ॥ ७३ ॥ संभवेदीदृशो श्राद्धे । मन्त्रिण्यपि किमीदृशं ॥ अकारणरिपोः कस्याऽ—प्यस्फुर्ड कपटं किमु ॥ ७४ ॥ किं वा मेऽत्र विचारेण । जिघृक्षोर्मन्त्रिणः प्रिये ॥ मया लब्धमिदं द्वारं । क्षुधितेनेव भोजनम् ॥ ७५ ॥ तस्मादुप्कृत्य लोकेऽमुं । मन्तुं गृह्णामि तत्प्रिये ॥ भवितैवं प्रमेत्राप्ति—र्नापवादश्च भाग्यतः ॥ ७६ ॥ विचिन्त्यैवं निरं लेखं । मन्त्रिणस्तमदर्शयत् ॥ पुरोधःकपटं सोऽपि । स्वधिया समभावयत् ॥ ७७ ॥ पंचभिः कुलकं ॥ न खलु च्छलबुद्धीनां । खलानां स्खलना क्वचित् ॥ यतः कपटपाण्डित्यं । सुघटं नाटयंति ये ॥७८ ॥ यदुक्तं—अतिमलिने कर्त्तव्ये । भवति खलानामतीव निपुणा धीः ॥ तिमिरे हि कौशिकानां । रूपं प्रतिपद्यते दृष्टिः ॥ ७९ ॥ नृपं स स्माह दुष्टस्य । नायेदं विद्धि चेष्टितं ॥ ततो भूपोऽप्यभाषिष्ट । क्रोधान्धोऽतीवनिष्ठुरम् ॥ ८० ॥ दृष्टागा

अप्यहो धृष्ट ! । किं रे दुष्टस्त्वमेव न ॥ य एवं चेष्टसे लुब्धो । विश्रब्धेऽपि मयि प्रभौ ॥ ८१ ॥ स्वमन्यस्मिन् क्षिपन् दोषं । रे मां वंचयसे किमु ? ॥ असभ्यं च ततो लेखं । नृपः सभ्यानदीदृशत् ॥ ८२ ॥

इदं मंत्रिण्यसंभाव्यं । मन्वानास्तेऽप्यमन्यव: ॥ गतिं कामप्यजानाना: । श्यामास्या मौनमादधुः ॥ ८३ ॥ राजा ततः स्मरक्रोध–विधुरो मंत्रिणं निजैः ॥ नरैर्निगडितं कृत्वा । चारकेऽचिक्षिपत्तदा ॥ ८४ ॥ आनाय्यांतःपुरेऽक्षेप्सीत् । प्रिये चाऽस्य मनःप्रिये ॥ नष्टे परिकरे चैष । गृहे मुद्रामदीदपत् ॥८४॥ कृतार्थं मन्यमानः स्वं । विसृज्याऽथ नृपः सभां ॥ उदस्थादर्हकृत्येभ्य–स्तत्कांतागतमानसः ॥ ८६ ॥ ततः खिन्नो महामंत्री । दध्यौ धिगधमं नृपं ॥ न गृह्यतेस्म यः कृते–रुपकारैः सहस्रशः ॥८७ ॥ सर्पः खलो नृपो वह्नि–रर्थी नारी यमो विधिः ॥ शस्त्रापथ्यांभोविषाश्च, कस्यापि स्वा भवन्ति न ॥ ८८॥ प्रपञ्चस्तु नृपस्याऽयं । सर्वो हन्तुं मम प्रिये ॥ भोजनावसरेऽप्येतद् । ज्ञातं तद्दृष्टिचेष्टितैः ॥ ८९ ॥ नीतिज्ञोऽपि कुलीनोऽपि । जैनधर्म्यपि भूपतिः ॥ निर्दोषेऽपि मयि स्निग्धे–ऽचेष्टतैवं हहा स्मरात् ॥ ॥ ९१ यदुक्तं—

विकलयति कलाकुशलं । हसति शुचिं पंडितं विडम्बयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देवः ॥ ९२ ॥ तावद्देवो वसति हृदये धर्मकर्मापि तावत्तावन्माना गुरुरपि कुलं बंधुवर्गोऽपि तावत् ॥ यावन्नांतः प्रतनितनयाः कामभाजामजस्रं । दुर्वारास्ते भुवनजयिनः कामबाणाः पतन्ति ॥ ९३ ॥ अहिल्यायां जारः सुरपतिभूदात्मतनयां । प्रजानाथोऽध्यासीदभजत गुरोरिन्दुरबला ॥ इति प्रायः को वा न पदमपदेऽकारि न मया । श्रमो मद्बाणानां क इव भुवनोन्मादविधिषु ॥ ९४ ॥ इति प्रबोधचंद्रोदये कामस्योक्तिः ॥ पुरोधसोऽथवा दोषः । सर्वोऽयं कौलधर्मिणः ॥ यो मुग्धं नृपतिं नाना–कुप्रपञ्चैरविभ्रमत् ॥ ९५ ॥ यत उक्तं

दुष्टः प्रविष्टमात्रोऽपि । विपाटयति शिष्टहत् ॥ सौवीरेऽन्तर्गते क्षीरं । विशीर्येत सहस्रशः ॥ ९६ ॥ दोषो रोषोऽथवाऽन्यस्मिन् ॥ युक्तो धर्मविदो न मे ॥ कर्मैव स्वकृतं येन । सर्वस्य सुखदुःखकृत् ॥ ९७ ॥ ततः—किं कषायकलुषं कुरुषे त्वं । केषुचिन्ननु मनोऽरिधिपात्मन्! ॥ कर्मतोऽधिकममी न ददते । तच मूढ ! विहितं भवतैव ॥९८॥ विपरीतेऽधुना भूपे । न त्राणं मम किञ्चन ॥ प्रियपोश्चापि शीलस्य । रक्षोपायोऽस्ति कोऽपि न ॥ ९९ ॥ आराद्धस्त्वचिरं जैनः । शरणं धर्म एव नः ॥ शरणं तं प्रपन्नानां । सुरा हि प्रार्थितप्रदाः ॥ २०० ॥ व्यराधयं न चेत्किञ्चित् । कदाप्यप्रतिपत्त्यहात् ॥ ह्यदापि शीलसम्पत्त्वे । तद् द्रागनश्यतु मे विपत् ॥१॥ इति ध्यात्वा स सत्त्वाढ्यः । कायोत्सर्गेण तस्थिवान् । तदाऽऽकृष्टाऽभवत्साक्षात् । सद्यः शासनदेवता ॥२॥ साऽवोचत्पारयोत्सर्गं । गतास्ते विपदः क्षयं ॥ मातर्ज्ञाताऽसि भूपेन । सत्कारे विहिते स्वयम् ॥३॥ इत्युदित्वा गता साऽपि । मन्त्र्युत्सर्गमपारयत् ॥ चिंतयन् धर्ममाहात्म्यं । विस्मयानन्दमेदुरः ॥ ४ ॥

इतश्च मन्त्रिणः पत्न्या—वप्यन्तःपुरसंस्थिते ॥ चक्रतुः शीलभंगस्या—शंकया परिदेवनम् ॥ ५ ॥ अनुनेतुं तयोः पार्श्वे दासीः प्रैषीन्महीपतिः॥ ताश्चाटूक्तिपटूः कोपा—टोपाद् धिक्कुरुतः स्म ते ॥६॥ स्वर्विमानोपमावास । चित्रशालामपि स्थिते॥ दुखात्ते स्वममन्येतां । कारागार इव स्थितम् ॥७॥ दध्यतुस्ते भवस्याऽऽपत् स्वजनादिवियोगिता ॥ तथा दुःखाय नौ नैव । शीलभ्रंशभयं यथा ॥ ८ ॥ विध्वंसयति यदि क्ष्मापः । शीलमालिन्यमावयोः ॥ मरिष्यावो द्रुतं नूनं । तदोपायेन केनचित् ॥९॥ वरं प्राणपरित्यागो । न तु शीलस्य खण्डनं ॥ प्राणत्यागे क्षणं दुखं। नरकः शीलखंडने ॥१०॥अनर्थः[अनार्यैः] परिभूतानां । सर्वेषां शरणं नृपः॥ स एव यद्यमर्यादः । किं त्राणं नौ ततोऽधुना ॥ ११ ॥ अथवा धर्म एवाऽस्ति । त्राणं नौ जगतामपि ॥ विकटे संकटे प्राप्ते । रक्षतात्तत्स

एव नौ ॥ १२ ॥ धर्मः सम्यक्त्वशीलादिर्मनसाऽप्यविराधितः । यत्राऽऽस्ते नौ तदा, रक्ष्याच्छीलं शासनदेवता ॥ १३ ॥ तावन्न पारयिष्यावः कायोत्सर्गं सुनिश्चलं । यावन्नौ भविता नैव। शीलभङ्गभयक्षयः ॥१४॥ ध्यात्वैवं कृतसंधे ते । कायोत्सर्गेण तस्थतुः॥ सैव देवी तदाऽऽकृष्टा । प्रत्यक्षाऽभूत्तयोरपि ॥ १५ ॥ करिष्येऽहं तथा शील-भंगो भावी यथा न वां ॥ उत्सर्गः पार्यतामित्थ-मुक्त्वा सा च तिरोदधौ ॥ १६ ॥ स्मरार्त्तोऽथ नृपो घस्र-मतिवाह्य कथञ्चन ॥ तयोः संगसुखं लिप्सु-र्निश्यंतःपुरमाययौ ॥ १७ ॥

शय्यास्थोऽथ नृपो दासी-स्ते आनेतुं समादिशत् ॥ आनीते पारितोत्सर्गे । ताभिरेते तदन्तिकम् ॥ १८ ॥ सोत्कण्ठं ते नृपः पश्य-न्नद्राक्षीदादिमां तयोः ॥ मुक्त्वा पादमुखं कुष्ट-ग्रस्तां देव्यनुभावतः ॥ १९ ॥ अपृच्छत्तां नृपो भद्रे ! । कुष्टोऽभूत्ते कदा कथं ॥ साऽप्यवादीचिरत्नोऽयं । वैद्याऽसाध्यः स्वकर्मणा ॥ २० ॥ द्वितीयां यावदासन्नो । करोत्यालिङ्गितुं नृपः॥ तावत्तद्देहदुर्गंधा-दुदुर्द्धराद्विधुरोऽभवत् ॥ २१ ॥ पप्रच्छ च नृपो भद्रे !। दुर्गंधस्ते किमङ्गके ॥ साऽत्रोचत्कर्मणा वैद्या-ऽसाध्यो जातश्चिरादयम् ॥ २२ ॥ विरक्तश्चित्रशालायां । प्रेष्येमे स व्यचिन्तयत् ॥ धिग् दैवं दूपितं येन । स्त्रीरत्नद्वयमीदृशम् ॥ २३ ॥ भोजनावसरे नैवं । ज्ञातो दोषो मयाऽनयोः ॥ दुकूलाच्छादितांगत्वा-द्दूरस्थत्वाच किं किल ॥ २४ ॥ ज्ञातः पुरोधसा नैपोऽनयोर्दोषो मुधा ततः, कारितोऽऽहमप्रं धिक् त-मपरीक्षितवादिनम् ॥ २५ ॥ एतदर्थं मया निन्ये । मन्त्री सर्वगुणोऽपि हि ॥ कष्टं तथा च मालिन्यं । धर्मः कीर्त्तिः कुलं यशः ॥ २६ ॥ सचिवे वैरिगृह्यत्वा-दिकं मन्येत कोऽपि न ॥ मन्येत निखिलो विज्ञः । कपटं तु पुरोधसः ॥२७॥ स ह्यधर्मा सदम्भश्च। मन्त्रिणा धिक्कृतः पुरा॥ पापे कर्मणि सर्वत्राऽपीदृशा हि स्खलंति न ॥ २८ ॥ प्रातर्निश्चित्य तत्सर्व-मुपायैर्बुद्धिसंभवैः ॥ निर्दोषत्वे न्यसिष्येऽहं । मन्त्रिणं प्राक्तने पदे ॥ २९ ॥ प्रिये

तस्याऽर्पयिष्यामि । शिक्षयिष्यामि दुर्जनान् ॥ विचिन्त्यैवं नृपोऽनैषीत् । खेदाश्चर्यमयीं निशाम् ॥ ३० ॥

अथो प्रातर्नृपोऽध्यास्त । सभां राजन्यमण्डितां ॥ नरैराहूय पप्रच्छ । तं नरं लेखहारकम् ॥३१ ॥ रे! सत्यं वद लेखोऽयं । कथं केन तवाऽर्पितः ॥ अवदन्तं भिया तं च । स नरैर्बहुताडयत् ॥ ३२ ॥ ताड्यमानोऽब्रवीद्विभो । रोरस्ताड्ये मुधा किमु ॥ बहुहेम्ना प्रलोभ्यैत-त्कारितोऽस्मि पुरोधसा ॥ ३३ ॥ पुरोधोऽक्षरसंवादं । लेखे दृष्ट्वा महीपतिः ॥ प्रसरत्प्रतिभः सर्वं । निश्चिक्ये तद्यथास्थितम् ॥ ३४ ॥ ततो निगडभंगेन । नरैराहूय मन्त्रिणं ॥ क्षमयित्वा नृपो गाढं । सच्चक्रे भूषणादिभिः ॥ ३५ ॥ सप्रियं तं गजारूढं । राजन्याऽऽवलिसंयुतं ॥ नृपः प्रैषीद्गृहे वाद्या-डम्बरेण पुरस्सरम् ॥ ३६ ॥ मन्त्रीप्रिये च वृत्तान्तं । देवताभापणादिकं ॥ मिथः पृष्ट्वा च बुध्वा च । धर्ममाहात्म्यमस्तुवन् ॥ ३७ ॥ धिक्कृत्य बहुधा क्रोधा-द्दंडयित्वा पुरोधसं ॥ स-लेखहारकं भूपः । स्वदेशान्निरवासयत् ॥ ३८ ॥ नृपस्त्यक्त्वा कुसंसर्गं । प्राग्वन्मंत्रिण्यवर्त्तत ॥ राजद्वयविरोधोऽपि । भग्नस्तेन स्वबुद्धितः ॥ ३९ ॥

अन्येद्युः सदसि क्ष्माभृत् । प्रीत्याऽभाषत धीसखं ॥ सदोषे ते प्रिये मन्त्रि-न्नन्यां किं नोपयच्छसे ॥४०॥ मन्त्र्यवादीन्महापापं। यस्य तस्याऽपि वञ्चने ॥ किं पुनः स्वामिनस्तेन । वच्मि राजन् ! यथास्थितम् ॥४१॥ सदोषे नैव ते किंतु । सर्वांगसुभगे परं ॥ तदा तच्छीलरक्षायै । देव्या ते दर्शिते तथा ॥४२॥ कथमेवमिति प्रोक्ते । राज्ञा मन्त्रीश्वरो जगौ ॥ कायोत्सर्गादिकं सर्वं । पूर्ववृत्ता-न्तमादितः ॥४३॥भूपो दध्यावहो देव्या । भाग्यादस्म्यनुकंपितः ॥ यदेवं बोधितो दुष्टो-ऽप्यहं भस्मीकृतो न तु ॥४४॥ प्रशशंस ततस्तेषां। धर्ममाहात्म्यमद्भुतं॥ अकृत्यकारिणं मन्त्रि-समक्षं स्वं जगर्ह च॥४६॥ ज्ञात्वा सम्यक्त्वशीलादि-माहात्म्यं तत्पुरेऽपि च॥

सर्वशक्त्याऽर्हतं धर्मं । सर्वे प्रायः प्रपेदिरे ॥ ४५ ॥ गुरुपार्श्वेऽन्यदाऽऽलोच्य । परस्त्रीकामनादिजं ॥ अक्षिपत्पातकं भूपः । प्रायश्चित्तादिभिर्बहु ॥४७॥ संजातदृढिमा धर्मे । पुण्यराशीनिवांगिनः ॥ नृपः प्रति पुरग्रामं । विहारान्निरमापयत् ॥ ४८ ॥ अपूपुजद्गुरून् भक्त्या । द्वेधा मुनिजनैः सह ॥ करमुक्तीष्टदानाद्यैः । सुखाचक्रे सधर्मिणः ॥४९॥ तीर्थयात्रादिपुण्यानि । दीनदानानि च व्यधात् ॥ प्रावीवृतदमारिं च । दयालुर्निजनीवृति ॥ ४९ ॥ नित्यमित्यखिलैः पुण्यै–र्यथोपात्तैर्यथोचितैः ॥ समयं गमयन् राजा–ऽपूरयद्यशसा जगत् ॥५०॥ चतुर्भिः कलापकम् ॥ सचिवोऽप्येवमेवैता–न्यखिलानि विशेषतः ॥ सर्वशक्त्या व्यधात्पुण्यान्युग्रभावः प्रियान्वितः ॥५१॥ आर्चतां त्रिःसमं भूपा–मात्यौ तौ प्रत्यहं जिनान् ॥ द्विः प्रत्यक्रामतां प्रत्या–ख्यानोत्सर्गादिकारिणौ ॥५२॥ अपुपोषधतां पर्व–स्वतिथ्यादिषु दायिनौ ॥ विदधाते बहुन्येवं । पुण्यान्येतौ पराण्यपि ॥ ५३ ॥ पुण्यान्येवमकार्ष्टां ते । भावान्मन्त्रिप्रिये अपि॥ ॥ कियतीस्तेऽनयन् वर्ष–कोटीर्धर्ममयीरिति ॥ ५४ ॥

अन्येद्युः केवली तत्रो–द्याने सोऽतिबलो गुरुः ॥ भगवान् समवासार्षीद् । भूयो भूरिपरिच्छदः ॥ ५५ ॥ ततो वर्द्धापितो राजा । सद्योऽप्युद्यानपालकैः॥ ददौ तेभ्यो महादानं । मुदितः पारितोषिकम् ॥४६॥ ततः सचिवसामन्त–सेनान्यादिवृतो नृपः ॥ आगात्केवलिनं नन्तुं । सर्वर्द्ध्या सह नागरैः ॥ ५७ ॥ स त्रिःप्रदक्षिणीकृत्य । नत्वा स्तुत्वा च तं गुरुं ॥ परिवारादिभिः साकं । यथास्थानमुपाविशत् ॥ ५८ ॥ धर्मलाभाशिषं दत्वा–ऽनुगृहणंस्तांस्ततो गुरुः ॥ भवांभोधितरीतुल्यां । प्रास्तावीद्धर्मदेशनाम् ॥ ५९ ॥ तथाहि–

स्पृहां सुखेष्वेव सृजंति देहिनो । ददाति तान्यार्हतधर्म एव तु ॥ तमेव सेवध्वमतो बुधा यतः । सुखश्रियः प्राप्नुत शाश्वतीरपि

॥६०॥ भोगा अनित्या वपुरप्यनित्यं । राज्यश्रियो गत्वरपंक्तिमुल्याः॥ अगत्वरं धर्ममतो भजध्व-मगत्वरानंदपदाय सम्यक् ॥६१॥ सम्यग्निशम्येति नृपादयस्ते । विशिष्य संविग्नहृदो बभूवुः ॥ अथो अपृच्छत्सचिवो मुनींद्रं ।। भवांतरे कीदृगहं बभूव ॥ ६२ ॥ ततः सदःप्रबोधाय । जिनार्चामहिमोक्तये ॥ उवाच केवली मन्त्रिप्राग्भवं भगवानिति ॥ ६३ ॥ तथाहि-

बभूव भरतेऽत्रैव । नगरे रत्नसंचये ॥ नृपतिर्नरदत्ताख्यः । ख्यातो वित्रस्तशात्रवः ॥ ६४ ॥ तस्यासीन्नृपतेर्मान्यो । नंदनो नाम मालिकः ॥ अभूतां च प्रिये तस्य । सुनंदासुभगाभिधे ॥६५॥ मालतीयूथिकाकुंद-चंपकादिद्रुमान्वितात् ॥ नृपदत्तान्महारामात् । महर्द्धि मापितात्स्वयम् ॥६६॥ नित्यमुच्चित्यपुष्पाणि । ग्रथिताग्रथितान्ययं ॥ देवपूजांगभोगादौ । पूरयत्यवनीशितुः ॥६७॥ युग्मं ॥ उत्तंसादीनलंकारान् । पौष्पान् पुष्पगृहाणि च ॥ कृत्वा च पुष्पशय्यादि । नृपतिं रञ्जयत्ययम् ॥६८॥ तत्रोद्याने महाचैत्य-मतनेऽभ्रंलिहेऽन्यदा ॥ पूज्यमानं युगादीशं । पौरैः प्रौढतमर्द्धिभिः ॥ ६९ ॥ स वीक्ष्याऽचिंतयत्कश्चि-दयं देवो महानहो ॥ य एवं पूज्यतेऽस्याऽर्चा । सफला भविता ततः ॥ ७० ॥ विचिन्त्येत्यर्हतोऽग्रेऽयं । बीजपूरमढौकयत् ॥ ढौक्यमानानि लोकैस्ता-न्यवेक्ष्यो-त्तमभावतः ॥ ७१ ॥ दिने तस्मिंश्च भूपोऽस्मै । पौष्पालंकाररञ्जितः ॥ प्रसादमधिकं चक्रे । मेने सोऽर्चाफलं ततः ॥ ७२ ॥ तदादि कुसुमैः पत्रैः । फलैश्चैव विशेषतः ॥ आनर्चान्वहमर्हन्तं । तद्गुणानविदन्नपि ॥ ७३ ॥ अधिकं राजमानादि । दृष्ट्वा तस्य प्रिये अपि ॥ जिनमानर्चतुर्दृष्टफले कार्येऽलसो हि कः ॥ ७४ ॥ तस्य चैको भुजिष्योऽभू-त्सुकण्ठः कठिनाशयः ॥ उद्वहत्ययमा-रामा-त्पुष्पभारं पुरागमे ॥ ७४ ॥ अन्यदाऽयं शिरोन्यस्त-पुष्पभारः पुरं व्रजन् ॥ अमिलन्मालिकेनोक्तः । पुरोगेणाऽनृजुः क्रुधा ॥ ७६ ॥ त्वरितं नैषि किं मूढ ! । किंवा निगडितोऽस्य रे ॥ अतिक्रामति भूपस्य-देवार्चाऽवसरो यतः ॥७७॥ अनेन वचसा क्रुद्धः।

पुष्पभारं विमुच्य सः ॥ गत्वा देशांतरे तादृक्-संसर्गात्तापसोऽभवत् ॥ ७८ ॥ मालिकोऽप्यतिकोपित्वा-त्तमुपेक्ष्य दुराशयं ॥ तमु-त्पाट्य स्वयं गत्वा । भूभुजे समढौकयत् ॥ ७९ ॥ प्रभावाज्जिनपूजाया-स्तस्य च श्रीरवर्द्धत ॥ इहाऽपि विहिता भावात् । सा हि कल्पलतायते ॥ ८० ॥ वृद्ध्या च श्रीसुखादीनां । विशिष्योत्पन्नभावनाः ॥ प्रत्यहं विदधुः पूजा-मार्हतीं तेऽधिकाधिकाम् ॥ ८१॥

मालिकः स प्रपूर्यायु-र्मन्त्रिस्त्वमुदपद्यत ॥ ते च प्राग्भवपत्न्यौ ते-ऽत्राऽपि पत्न्यौ बभूवतुः ॥ ८२ ॥ तापसः सोऽपि चाऽज्ञान-तपस्तप्त्वाऽऽयुषः क्षये ॥ पुरोधाः समभूत्ते प्राग्-भवसंस्कारतो द्विषन् ॥ ८३ ॥ त्वया निगडितोऽसीति-गिराऽयं धि-क्कृतः पुरा ॥ राज्ञा निगडयामास । तत्त्वां कूटप्रपञ्चतः ॥ ८४ ॥ यद्गिराऽप्यर्ज्यते कर्म । तत्साक्षादेव भुज्यते ॥ एवं विज्ञाय भो विज्ञाः । कुरुध्वं योगसंवृतिम् ॥८५॥ इति श्रुत्वा जगौ मन्त्री । मुने ! यद्गदितं त्वया ॥ जातजातिस्मृतिः सर्वं । पश्यन्नस्मि तथैव तत् ॥ ८६ ॥ अव्यक्ताया अपि श्रीम-ज्जिनार्चायाः फलं यदि ॥ एवं नृभवभोगादि । व्यक्ताया भावि तत्कियत् ॥ ८७॥ इत्यादि चिन्तयतः प्राग-भवं श्रुत्वा स्वमंत्रिणः ॥ नृपादयोऽधिकं प्रापुः । संवेगं भवभीरवः ॥ ८८ ॥ प्रतिपद्य यथाशक्ति । धर्मं शर्मकरं ततः॥ नत्वा केवलिनं जग्मु-र्नृपमंत्र्यादयो गृहान् ॥८९॥ जातजातिस्मृती वाचा । गुरोर्मंत्रिप्रिये अपि॥ संवेगं परमं प्राप्ते। नत्वा तं प्रापतुर्गृहम् ॥९०॥ बभूवुर्बहवः पुत्राः। क्रमान्नृपतिमन्त्रिणोः॥ कलायौवनरूपाढ्याः। कन्यास्ते परिणिन्यिरे ॥९१॥ अन्येद्युर्भववैराग्या-द्राजा मन्त्री च नंदने ॥ राज्यं व्यापारभारं च । न्यास्थद् ज्येष्ठे निजे निजे ॥ ९२ ॥ ब्रह्मचर्यं प्रपद्याऽथ । सचित्तपरिहारिणौ ॥ आरंभाद्विरतौ प्रायो। जज्ञाते नृपधीसखौ ॥९३॥नित्यमर्हद्गुरूपास्ति-सुसमाहितमानसौ ॥ तादृक्पुण्यपरीवारौ। स्वाध्यायध्यानतत्परौ ॥ ९४ ॥ समयं गमयंतौ ता-वन्येद्युः पौषधौकसि ॥ प्रपन्नपौषधौ रात्रौ । कायोत्सर्गेण तस्थतुः ॥ ९४ ॥ युग्मं ॥ तावत्तत्राग्निरु-

त्सधौ । प्रचंडपवनेरितः ॥ ज्वलयन् सर्वतो गेहान् । हाहाकारपरे पुरे ॥ ९६ ॥ बहु विधाप्यमानोऽपि । भटधूलिजलादिभिः ॥ वर्द्धिष्णुः पौषधागारं । सोऽभ्यायन् ददृशे जनैः ॥ ९७ ॥ ततो नृपपरीवारः । पौषधी पौषधस्थितः ॥ बभाषे भयसंभ्रान्त–मानसः प्राणसंशयी ॥ ९८ ॥ स्वामिन्नायात एवाग्नि–रभितः पौषधालयं ॥ इतो निर्याहि निर्याहि । सहसा सह मन्त्रिणा ॥९९ ॥

इति श्रुत्वापि दृष्ट्वाग्निं । दध्यतुर्भूपमन्त्रिणौ ॥ अथोत्सर्गः प्रतिज्ञात–स्तद्भङ्गः क्रियते कथम् ॥२००॥ मृत्युर्वा जीवितं वास्तु। न तु पौषधखंडनं ॥ युक्तं चंक्रमणाद्रात्रौ । धर्मो यज्जीविताधिकः ॥ १ ॥ सर्वत्र सुलभाः प्राणाः । शुद्धो धर्मस्तु दुर्लभः ॥ प्राणां-तेऽपि ततो रक्ष्यो । धर्मो यः शिवशर्मकृत् ॥ २ ॥ बहूक्तेऽप्यथ निर्यातौ । न यावन्नृपधीसखौ ॥ तावत्पौषधिकाः सर्वे । परेऽपि लघु निर्ययुः ॥ ३ ॥ ततोऽग्निं प्रसृतं वीक्ष्य । समं जनभयारवैः ॥ निश्चित्य मरणं यात्र–देतावनशनीयतः ॥४ ॥ तावन्नाऽग्नि क्व-चित्कोला–हलं न च जनोद्भवं ॥ सर्वं तौ परिवारादि । स्वभावस्थं त्वपश्यताम् ॥४ ॥ अस्मत्क्षोभाय देवेन । केनापीदं तु दर्शितं॥ इति तौ विस्मयापन्नौ । यावच्चिन्तयतः क्षणं ॥ ६ ॥ तावत्कश्चित्सुरः पुष्प–वृष्टिं तदुपरि व्यधात् ॥ प्रणम्य तौ बभाषे च । सर्वतो द्योतयन् दिशः ॥ ७ ॥ निश्चलव्रतयोरद्य । सौधर्माधिपतिः स्वयं ॥ पौषधव्रतदार्ढ्यं । वां प्राशंसत्सौद्यपर्षदि ॥ ८ ॥ एतदश्रद्दधानो-ऽत्राऽऽ–गत्य पर्यक्षिपीत्यहं ॥ परीक्षायां तु निर्व्यूढौ । युवामेवं नमोऽस्तु वाम् ॥ ९ ॥ इत्युक्त्वा दुंदुभिध्वान–रत्नस्वर्णादिवर्षणैः ॥ कृत्वा विश्वचमत्कारं । प्रणम्यैतावगात्सुरः ॥ १० ॥

उत्सर्गं पौषधं चैतौ । प्रपूर्यावसरे ततः ॥ शृण्वानौ धर्ममाहात्म्य–प्रशंसां जनतामुखात् ॥ ११ ॥ पारणं चक्रतुः पाप–वारणं मुनिदानतः ॥ व्यधत्तामन्यदा सर्वाः । श्रावकप्रतिमा अपि ॥ १२ ॥ युग्मं ॥ प्रतिमाश्चैवं–दंसण १ वय २ सामाइय ३ । पोसह ४

पडिमा ५ अबंभ ६ सचित्ते ७ ॥ आरंभ ८ पेस ९ उद्दिठ्ठ–वज्जए १० समणभूए अ ११ ॥ १३ ॥ [1]तपः कृत्वाऽतनुकाले । मत्वाऽऽयुः प्रांतमात्मनः ॥ विधायाराधनां शुद्धा–नशनं च समाहितौ ॥ १४ ॥ परमेष्ठिस्थिरध्यानौ । विहाय नृतनूमिमौ ॥ उत्पन्नौ त्रिदिवे शुक्रे । शक्रसामानिकौ सुरौ ॥ १५ ॥ तथैव मन्त्रिणः पत्न्या–वपि धर्मात्सुसेवितात् ॥ तत्रैव मन्त्रिदेवस्या–ऽजायेतां सुहृदौ सुरौ ॥ १६ ॥ ततो जयजयाराव–मुखरैः सेवकामरैः ॥ अप्सरोभिश्च सस्नेहं । स्तूयमानगुणा इमे ॥ १७ ॥ नवीनोत्पन्नकृत्यानि । पूर्वं कृत्वा यथाविधि ॥ भुञ्जते यानि सौख्यानि । तानि वाचामगोचरः ॥ १८ ॥ नंदीश्वरादितीर्थेषु । यात्रा पुण्यानि कुर्वते ॥ शृण्वन्ति तीर्थकृत्पार्श्वे । धर्मं ते शुद्धदर्शनाः ॥ १९ ॥ त्रिभिर्विशेषकं ॥ अमेयसुखलीनानामेवं तेषां क्षणादिवत् ॥ वर्षकोट्योऽप्यसंख्याता । यांति ते नो विदंत्यपि ॥२०॥ प्राग्भवे मुनिदानादौ । हार्दश्रद्धाविशेषतः ॥ मन्त्रिजीवोऽधिकं किंचि–त्सुरसौख्यमभुङ्क्त सः ॥२१॥

पुरोधा वसुसारोऽथ । राज्ञा निर्वासितस्तदा ॥ भ्राम्यंश्चित्रेषु देशेषु । न क्वापि स्थानमासदत् ॥२२॥ मुग्धान् दुर्वासनाभिः स । वासयन् दुष्टचेष्टितः ॥ रौद्रार्त्तध्यानयुग् मृत्वाऽऽ–दिमं नरकमासदत् ॥२३॥ क्षेत्रजं विविधं तत्र । परमाधार्मिकैः कृतं ॥ मिथश्च विहितं दुःखं । स सेहे प्राच्यकर्मणा ॥ २४ ॥ उध्धृत्य नरकात्तस्मा–द्भवांस्तिर्यक्ष्वसंख्यशः ॥ प्रपूर्य क्वाऽपि विप्रोऽभू–न्निःस्वो दुःखी स दुर्भगः ॥ २४ ॥ दौस्थ्यादिदुःखनिर्विण्णः । संगमात्तादृशो गुरोः ॥ पारिव्राज्यं प्रपेदेऽसौ । तपस्तेपे च दुस्तपम् ॥२६॥ ततो ज्योतिष्कदेवोऽभू–ध्धूमकेतुरिति श्रुतः ॥ भुङ्क्ते स बहुधा सौख्यं । मिथ्यादृष्टिर्महर्द्धिकः ॥ २७ ॥ अथ सोऽतिबलो नाम्ना । नृपमन्त्र्यादिबोधकृत् ॥ राजर्षिः केवलज्ञानी । विजहार चिरं भुवि ॥ २८ ॥ दानादिधर्मस्य फलं निशम्य । चारित्रधर्मस्य च तत्त-



---

१ तपःकृशतनू काले

देवं निशम्य । तत्राभियोगं भविनः कुरुध्वं । जयश्रियं कर्मरिपोर्भजध्वम् ॥ ३० ॥

इति तपागच्छनायकश्रीमुनिसुंदरसूरिविरचिते राजाधिराजश्रीजयानंदराजर्षिचरित्रे जयश्च्यूंके तत्प्राग्भवत्रयनरवीरनृपभवद्वय-वसुसारपुरोहितस्वरूपाऽतिबलराजर्षिदृष्टांतचारित्रधर्मप्रभावादिवर्णननामा **द्वितीयः सर्गः** समाप्तः ॥ श्रीरस्तु ॥

---

# ॥ अथ तृतीय सर्गः ॥

जयश्रीदोऽस्तु मेस श्री–नेमिर्नव्यांबुदप्रभः॥ श्रेयोवल्लीप्ररोहाय । यः स्मृतोऽपि सदा भवेत् ॥१॥ अथाऽस्ति जंबूद्वीपेऽस्मिन्। भरतक्षेत्रमध्यगः ॥ वैताढ्यः प्रौढशोभाढ्यः । शैलः पूर्वापरायतः ॥ २ ॥ नानाशस्यफलोपेत–क्षेत्रेऽस्मिन् भरते विधिः ॥ विपत्त्पशुनिषेधार्थं । धत्ते दण्डं तु यं सदा ॥३॥ पृथुः पंचाशतं मूले । योजनानि दशोपरि॥ पंचविंशतिमुच्चो यो ।·व्याप पूर्वापरांबुधी ॥ ४ ॥ क्रीडत्किन्नरयुग्माणां । यत्राऽर्हद्गुणगायिनां ॥ गीतैः कृतप्रतिश्रुद्धि–र्गायंतीव गुहा अपि ॥ ५॥ यत्रादिमे श्रेणियुग्मे । पंचाशत् षष्ठिरेव च ॥ पुराणि भांति खेचराणां । स्वर्णरत्नमयैर्गृहैः ॥ ६ ॥ सौधर्मेन्द्रलोकपालाऽ–भियोगिकसुरालयाः ॥ द्वितीये तु श्रेणियुग्मे । नानाविधमणीमयाः ॥ ७ ॥ सिद्धायतनयुक्सिद्ध–कूटादिनवकूटभृत्॥ शिरो विभ्राजते यस्य। क्रीडद्देवाप्सरोगणैः॥८॥

समस्त्यत्रोत्तरश्रेण्यां । मणिस्वर्णमयालयैः ॥ नित्योद्योतमयं रम्यं । पुरं गगनवल्लभम् ॥९॥ अतिभानुप्रभैर्यस्मि–न्नित्यालोके

मणीगृहैः ॥ विभागं जानते कोका । न तु लोका दिनोषयोः ॥ १० ॥ यस्मिन् मोल्लासिनोर्धमो–द्वीक्ष्यार्थस्मरसंपदः ॥ तेषां कारणकार्यत्वं । जनैः साक्षात्प्रतीयते ॥ ११ ॥ सहस्रायुधनामाऽभूत्तस्य विद्याधराग्रणीः ॥ अधीशः शश्वदानंद–मयीः कुर्वन्निजाः प्रजाः ॥ १२ ॥ यत्प्रतापस्य भानोश्च । विश्वे द्योतिद्युतोऽप्ययं ॥ भेदः सदोदितो ह्याद्यः । परस्त्वपरथा यतः ॥ १३ ॥ तस्याभून्मालिनी नाम्ना । शीलादिगुणमालिनी ॥ कांता कांतानुरक्तांतः–करणा करुणान्विता ॥ १४ ॥ साऽन्यदा चक्रिणं स्वप्ने–ऽद्राक्षीदाख्यच्च भूभुजे ॥ चक्रयाभं भाविनं पुत्रं । सोऽप्यूचेऽथ जहर्ष सा ॥१५ ॥ नरवीरनृपस्याऽथो । जीवः शुक्रदिवश्च्युतः ॥ सुरः कुक्षाववातारी–त्तस्याः पूर्णे सुरायुषि ॥ १६ ॥ सद्दिने सुमुहूर्ते च । तस्याः पुत्रस्ततोऽजनि ॥ सर्वलक्षणरम्यांग–तेजोभिर्भासयन् दिशः ॥ १७ ॥ पिता जन्मोत्सवं चक्रे । वर्द्धापनकसंकुलं ॥ वाद्यनादमयं दाना–द्यानंदितजनव्रजम् ॥ १८ ॥

पिताऽथ सुभगाकारं । तं नेत्रानंदिनं सुतं ॥ चक्रे चक्रायुधं नाम्ना । मातृस्वप्नानुसारतः ॥ १९ ॥ ववृधे पाल्यमानोऽयं । धात्रीभिः प्रियदर्शनः ॥ प्रजामनोरथैः सार्द्ध–मिव कल्पद्रुमाङ्कुरः ॥२०॥ उचिते समये कष्टं । विनैवाऽध्यैष्ट शिष्टधीः ॥ सकलाः स कलाचार्या–च्छास्त्रशस्त्रानुगाः कलाः ॥ २१ ॥ समयेऽथ पिता तस्मै । सौभाग्यनिधये ददौ ॥ प्रज्ञप्त्याद्या महाविद्या । विनीताय सहस्रशः ॥ २२ ॥ लीलयाऽसाधयत्सोऽपि । समग्रास्ता यथाविधि ॥ सिद्धाश्च भाग्यसत्वाभ्यां । तत्सिद्धिस्तद्वशा यतः ॥ २३ ॥ सिद्ध्यंति स्म ततश्चाऽस्य । दिव्यास्त्राण्यप्यनेकशः ॥ पूर्वपुण्यानुभावेन । किं दुःसाध्यं हि तादृशाम् ॥ २४ ॥ अप्सरोजित्वरीरूपैः । कनीर्विद्याभृतां क्रमात् ॥ स्वयंवराः पिता तेन । शतशः पर्यणाययत् ॥ २५ ॥ ताभिः स्नेहार्द्रचित्ताभिः । स्वर्वधूभिर्जयंतवत् ॥ सर्वांगीणमभुंक्तैष । चिरं भोगसुखाद्वयम् ॥ २६ ॥

अन्येयुरागमत्तत्र । चारणश्रमणो गुरुः॥ भुवनानंदनो नाम्ना । ज्ञानवान् सपरिच्छदः ॥ २७ ॥ सहस्रायुधभूपोऽथ । विद्याधरगणान्वितः ॥ सर्वद्धर्या तं गुरुं नत्वा–ऽश्रौषीद्धर्मं सुतादियुक् ॥ २८ ॥ प्रबुद्धो लघुकर्मत्वा–द्राज्ये चक्रायुधं सुतं ॥ विन्यस्य तद्गुरूपांते । स प्राव्राजीद्यथाविधि ॥ २९ ॥ चक्रायुधनरेंद्रोऽपि । सम्यक्त्वादि प्रपद्य सः ॥ गुरुं प्रणम्य पित्रादीन् । महर्षींश्च गृहेऽगमत् ॥ ३० ॥ प्रपद्यैवं यथाशक्ति । धर्मानन्येऽपि भूरिशः ॥ यथास्थानमगुः सर्वे । व्यहार्षीच्चाऽन्यतो गुरुः ॥ ३१॥ सहस्रायुधराजर्षि–र्विहरन् गुरुणा सह ॥ अभ्यस्य द्विविधां शिक्षां। संवेगरसवारिधिः ॥३२॥ अधीत्यांगान्ययं पूर्वा–ण्यपि नानातपोरतः॥ क्रमाद्गुरुपदं भेजे । कियत्तादृग्गुणे हि तत् ॥ ३३ ॥ युग्मं ॥

अथ चक्रायुधः क्ष्माभृ–न्महादोर्दंडविक्रमः ॥ विद्यादेव्याप्तचक्रेण । समभूत्सान्वयाभिधः ॥ ३४ ॥ कृत्वान्यान्यपि रत्नानि । कृत्रिमाणि स विद्यया ॥ चक्रित्वं ख्यापयामास । स्वस्य सर्वान् जयन्नृपान् ॥ ३५ ॥ अन्यदा सप्रियो नंदीश्वरे गत्वाऽर्चयज्जिनान् भक्त्यार्हतां पुरः सम्यक् । सोऽनर्त्तीत्सुमनोहरम् ॥३६॥ अवीवदन् विचित्राणि। सम्यग् वाद्यानि तत्प्रियाः॥ जगुश्च जिनगीतानि। तैर्नाट्यश्रीरवर्द्धत ॥ ३७ ॥ नाट्यभक्तिं च तां वीक्ष्य । कश्चित्तस्मै सुरोऽतुषत् ॥ स कामितकरीं विद्या–मर्हद्भक्तिवशाद्ददौ ॥३९॥ ससाधनविधिं चक्री । गृहित्वा विनयेन तां ॥ जिनान् देवं च तं नत्वा । सप्रियः स्वपुरे ययौ ॥ ४० ॥

अन्यदा सुरदत्तां तां । विद्यां साधयितुं क्वचित् ॥ स शाद्वलवने शैले। तपोध्यानैः प्रचक्रमे ॥ ४१ ॥ लंकेशः शतकंठोऽथ । मेरौ नत्वा जिनेश्वरान् ॥ आगमत्सप्रियस्तत्र । व्योम्ना लंकां प्रति व्रजन् ॥ ४२ ॥ विद्यां साधयतस्तस्य । सप्तमेऽहनि मूर्द्धनि ॥ खेंद्रशतकण्ठस्य । विमानं गच्छतोऽस्खलत ॥ ४३ ॥ विलोक्याऽधः स तं ज्ञात्वा । ध्यानस्थं तरुणा सह ॥ विद्यात्रिकुर्वितैर्नागै–र्बं-

रुन्धागादंधितः क्रुधा ॥४४॥ एवमप्यचलध्यान–स्याऽस्य खेटपतेस्तदा ॥ विद्या सिषेध सा नागान् । वित्रास्य विलसद्द्युतिः ॥२४॥ वत्स ! सत्वेन तेऽतुष्यं । मत्प्रसादाज्जगज्जय ॥ स्मर्त्तव्याऽहं त्वया कार्ये । मोच्येति च तिरोदधौ ॥४६॥ युग्मं ॥ प्रज्ञप्त्या खेटराजोऽपि । ज्ञातलंकेन्द्रचेष्टितः ॥ प्राविशत्स्वपुरे तुष्टो । वृद्धस्त्रीकृतमङ्गलः ॥ ४७ ॥

पत्तिखेटयुगं तस्य । तमन्येद्युर्व्यजिज्ञपत् ॥ संत्यनन्यसमाः कन्या । अष्टायोध्यापतेः प्रभो ! ॥४८ ॥ सप्तद्वीपीभुवां स्त्रीणां । समग्राऽप्सरसामपि ॥ आच्छिन्नै रूपसारैर्नु । विहिता या जगत्कृता ॥ ४९ ॥ स्त्रीषु सर्वोत्तमास्तास्त्वं । पुंसु सर्वोत्तमोऽर्हसि ॥ पाणौ कुर्विति यद्देवे । योज्यंते शतपत्रकाः ॥ ५० ॥ निशम्येति पुराप्येप । दिग्यात्रायाश्चिकीर्भृशं ॥ प्रत्ययोध्यापुरीं चक्रे । प्राचलत्प्रौढसेनया ॥ ५१ ॥ उद्यानं प्राप्तवांस्तत्र । पश्यंस्त्रासाकुलां पुरीं ॥ श्रीचंद्रस्य तदीशस्य । दूतेनेदमजिज्ञपत् ॥५२ ॥ कन्याष्टकयुतं दण्डं, देहि द्रागेहि वा युधे ॥ न्याय्ये पथि स्थिता भूपा–च्छलान्न प्रहरंति यत् ॥ ५३ ॥ तत् श्रुत्वा विक्रमाक्रान्त–दिक्चक्रः सोऽभिमानवान् ॥ कन्याप्रदानं दूरेऽस्तु । न दंडमपि दित्सति ॥ ५४ ॥ मेलयित्वा महानीकं । ततो युद्धाय निर्ययौ । भीष्मश्चानीकयोरासी–द्रणो यमकुलोत्सवः ॥ ५५ ॥ अभांक्षीद्वीरहीरोऽथ । श्रीचंद्रः खेटराड्बलं ॥ सह तेन ततश्चक्री । युयुधे दुर्धरक्रुधः ॥ ५६ ॥ धनुर्वर्मशिरस्त्राण–च्छेदाद्यैश्चक्रिणा नृपः ॥ भृशं व्याकुलितः पूर्वा–राद्धं सस्मार नाकिनम् ॥५७॥ श्रीचंद्रः स्माह तं प्राप्तं । बद्ध्वा खेटेन्द्रमर्पय ॥ सोऽवादीन्नात्र भाग्याढ्ये । प्रभवाम्यन्यदर्थ्यताम् ॥ ५८ ॥ नृपोऽवक् तद्गुरोः पार्श्वे । मुंच मां प्रव्रजामि यत् ॥ इहाऽमुत्र च पश्यमि । येन नाऽन्यपराभवम् ॥५९॥ स्वशक्त्या चक्रिणोऽस्त्राणि । स्तंभयित्वा ततः सुरः ॥ तमुत्पाट्य गुरोः पार्श्वे । तत्पुरोपवनेऽमुचत् ॥ ६० ॥ संविग्नः प्रागपि क्ष्माभृ–द्विशिष्य च गुरोर्गिरा ॥ प्राव्राजीत्सर्वनिस्संगो । धीरस्तद्भवसिद्धिकः ॥ ६१ ॥

स्खलितास्सततश्चक्री । तमदृष्ट्वा पुरः स्थितं ॥ प्राहिणोद्विस्मितः खेटां-स्तत्स्वरूपबुभुत्सया ॥६२॥ तैस्तथा तत्स्वरूपोक्तौ । विस्मितश्चक्री सैन्ययुक् ॥ गत्वा तत्र गुरुं तं च । स राजर्षिमवंदत ॥ ६३ ॥ वीक्ष्याथ भूभुजः सत्त्वं । मंत्र्याद्या भोगनिःस्पृहाः ॥ बोधिता गुरुणा पंच-शतानि प्राव्रजन्मुदा ॥ ६४ ॥ वृत्तं श्रुत्वेदमस्यांतः-पुर्यस्तत्र :समागताः ॥ गुरुप्रबोधिताः पंच-शतसंख्याः प्राव्रजुः ॥ ६५ ॥ राजर्षिं क्षमयित्वाऽथ । राज्ये न्यस्य च तत्सुतं ॥ तद्गिरोद्वाह्य ताः कन्या-श्चक्री निजपुरीमगात् ॥ ६६ ॥

भूचरेष्वयमेवाऽऽसीत् । श्रीचंद्रः प्रबलो नृपः ॥ जितेऽत्र ते जिताः सर्वे । मुधा किं कीटकुट्टनैः ॥ ६७ ॥ जेयास्तु प्रबलाः खेटा । नृपो ध्यात्वेति सोऽन्यदा ॥ स्मृत्वागः शतकंठस्याऽचलङ्कां प्रति क्रुधा ॥६८ ॥ तमायांतं चरैर्ज्ञात्वा । वह्निदुर्गं समंततः॥ स्वपुर्यां योजनैः षष्ट्या । लंकेशो विद्यया व्यधात् ॥६९ ॥ अथ विज्ञप्तमह्नाया-ऽदृश्येऽस्मिन्नग्रसैनिकैः॥ आस्फाल्य दह्यमानैस्तद् । वृत्तं व्याघुट्य चक्रिणे ॥ ७० ॥ ज्वालिनीविद्यया खेट-राजो विध्यापिताग्निपः ॥ मृत्तिकाभांडवद्वज्र-मुद्गरेण बभञ्ज तम् ॥७१॥ भंक्त्वा दुर्गं समायांतं । मत्वा चक्रायुधं नृपं ॥ शतकंठोऽतिदर्पिष्ठो । महासैन्योऽभिनिर्ययौ ॥ ७२ घोरस्ततसैन्ययोर्जज्ञे । रणो विश्वभयंकरः ॥ भृशं भुजबलोन्मत्त-भटानामुत्सवोपमः ॥ ७३ ॥ क्षणाच्च भटशस्त्रौघ-पातितेभाऽश्वपत्तिभिः ॥ क्रीडोर्वीव कृतांतस्य । रणभूमिरभूत्तदा ॥७४ ॥ एवं जाते रणे घोरे । भग्ने लंकापतेर्बले ॥ स एव स्वयमुत्तस्थौ । निजं संधीरयन् बलम् ॥७५॥ विदधाने शरासारं । वीरेऽस्मिन्नुन्नतेऽम्बुवत् ॥ भटानामगलन् जंबू-फलानीव मनोमदाः ॥ ७६ ॥ अभांक्षीत्स द्विपत्सैन्यं । रंभावन-मिवेभराट् ॥ ततः स्वयं समुत्तस्थे । क्रुधा चक्रायुधो युधि ॥ ७७ ॥ अन्वभावि तव स्थाम । ध्यानस्थेन मया पुरा ॥ द्वंद्वयुद्धेऽधुना वीर ! । पुनस्तत्प्रकटीकुरु ॥ ७८ ॥

इत्यादिवचनान्यस्य । मर्मवेधीनि जल्पतः ॥ सह श्रीशतकंठेन । घोरं रणमजायत ॥ ७९ ॥ तयोः सैन्यै च तद्युद्ध–चित्रेक्षाविस्मृताहवे ॥ तद्बाणमंडपच्छन्ना–क्रांतपे शर्मणा स्थिते ॥ ८० ॥ अथ लंकापतेश्चापं । शरैश्चक्रायुधोऽच्छिदत् ॥ युयुधे तं नवं लात्वा । सोऽच्छेत्सीच्च तमप्ययम् ॥८१ ॥ एवं सप्ताच्छिनचापान् । शतकंठस्य चक्रभृत् ॥ ततोऽसौ शरसंधाना–ऽक्षमोऽजनि विह्वलः ॥८२ ॥ ततश्चक्रायुधेऽमुञ्च–द्विद्यासर्पान् सहस्रशः ॥ स तानतित्रसत्सद्यो । भीष्मान् गरुडविद्यया ॥८३॥ आग्नेय्यादीनि विद्यास्त्राण्यमुंचत्स क्रुधा ततः॥ चक्री प्रतिजघानैता–न्यपि प्रत्यायुधैः रयात् ॥८४॥ लोहभारसहस्रात्म–मुद्गरेण ततः क्रुधा ॥ मौलावताडयच्चक्रा–युधं लंकापतिर्बली ॥ ८५ ॥ न तथा प्राभवत् सोऽपि । चक्रिणे किंतु तत्कृतां ॥ एष मूर्च्छां क्षणं भुक्त्वा–ऽमुंचन्नारीमिवाऽप्रियाम् ॥८६॥ स्ववज्रमुद्गरेणाऽयं । लंकानाथं जघान च ॥ तद्घातव्यथयाऽथाऽऽस्यात् । स्रवद्रक्तः स मूर्च्छितः ॥८७॥ तथाभूतमिमं विद्या–निगडैर्वटपादपे ॥ दीनं पशुमिवाऽबध्ना–च्चक्री शक्रपराक्रमः॥ ॥ ८८ ॥ मुक्त्वाऽत्राऽऽरक्षकान् रात्रौ । सैन्यमाश्वास्य तस्य च ॥ निःशंकः सोऽभजन्निद्रा–सुखमंतःस्ववाहिनीम् ॥ ८९ ॥

निदध्यौ शतकंठोऽथ । स्वकृतैरेव कर्मभिः ॥ अहो जीवाः सहंत्येवं । दुःखान्यत्र परत्र च ॥ ९० ॥ पराभविष्यं चेन्नेमं । मूढो ध्यानस्थितं तदा ॥ नाभविष्यत्तदेमं मे । दुःखं दोषो ममैव तत् ॥ ९१ ॥ यथैतदुष्कृतं कर्म । सद्यो जज्ञे फलेग्रहि । आरंभादीनि कर्माणि । भविष्यंति तथैव हि ॥ ९२ ॥ महारंभात्मकं राज्यं । त्यक्त्वा दीक्षामुपादे ॥ ध्यात्वेति धीरधीर्लोचं । पंचमुष्टि चकार सः ॥ ९३ ॥ ततो भावमुनेस्तस्य । सद्यः शासनदेवता ॥ बंधांच्छित्त्वा ददुर्वेषं । ततोऽयं यत्यभूद् द्विधा ॥९४ ॥ कायोत्सर्गेण तत्रैव । स तस्थौ सर्वसाम्यदृक् ॥ सत्त्ववृत्तिर्बभावेव । धीरेष्वासन्नसिद्धिषु ॥ ९५ ॥

आरक्षकेभ्यस्तदूवृत्तं । ज्ञात्वा चक्री सुविस्मितः ॥ सेनाद्वययुतः प्रात-स्तत्राऽऽगत्य ननाम तम् ॥९६॥ तं स्तुत्वा क्षमयित्वा च । लंकांतः स प्रविश्य च ॥ श्रीकंठं तत्सुतं राज्ये । प्रपन्नाङ्गं न्यवीविशत् ॥ ९७ ॥ परिणिन्ये स तद्दत्ताः । शतं सर्वगुणाः कनीः ॥ अन्यानपि ततो द्वीप-नायकान् लीलयाऽजयत् ॥ ९८ ॥ ततः सर्वा वधूर्लात्वा । वैताढ्ये चक्रभृद्ययौ ॥ स तत्र दक्षिणश्रेणौ । महासरसि तस्थिवान् ॥ ९९ ॥ सहस्रं खेचरेन्द्राणां । केल्यै तत्रागताः कनीः॥ सुरूपाः स्वानुरक्ताश्च । निबुध्योपजहार सः॥१००॥

तद्वृत्ते सौविदैश्चक्री । तत्पितॄणां निवेदिते ॥ तत्रैत्य युध्यमानांस्तान् । काकनाशमनाशयत् ॥ १ ॥ तदा च दक्षिणश्रेणेः । सैन्यो निखिलखेचरैः ॥ अधिपो वह्निवेगोऽस्ति । नगरे रथनूपुरे ॥ २ ॥ तैर्गत्वा स्वकनीवृत्तं । प्रभवेऽस्मै निवेदितं ॥ चक्रिणोऽज्ञापयत्क्रोधा-दिति दूतमुखेन सः ॥३॥ कनीर्हठहृता मुञ्च । सज्जो भव रणाय वा ॥ सोऽप्यदो ज्ञापनं मेने । क्षुधितस्य निमंत्रणम् ॥ ४ ॥ ततश्चाऽसौ ससैन्योऽगा-न्नगरे रथनूपुरे ॥ वह्निवेगोऽपि तं सद्यो-ऽभ्यपिषेणद्बलोन्मदः ॥ ५ ॥ तद्दिने दारुणो जातः । संग्रामस्तदनीकयोः ॥ वह्निवेगो ददर्शाऽत्र । पत्तीभादीन्मृतान् बहून् ॥ ६ ॥ कृपालुश्चक्रिणं सोऽवक् । किमावां परमार्हतौ ॥ पत्तीभादीन्मुधा हन्व-स्तदलं सैन्ययोधनैः ॥७॥ युध्यावहे द्वंद्वयुद्धे-नैवाऽवां वीरपुंगवौ ॥ संविभागं न कांक्षंति । जयस्य हि जिगीषवः ॥८॥ प्रपेदे चक्रभृत्तद्वा-ऽयुध्येतां तौ शराशरि ॥ खड्गाखड्गि चिरं वीरौ । दंडादंडि गदागदि॥९॥ नाऽजीयत परं कश्चि-त्केनापि समविक्रमः ॥ उभयोः सिंहयोर्युद्धे । सद्यः कः केन जीयते ॥ १० ॥ खिन्नश्चक्री ततोऽस्मार्षी-च्चक्रं तच्चागमज्ज्वलत् । तेन सर्वौजसा वह्नि-वेगं हृद्याऽऽजघान सः ॥११॥ ततोऽपतन्मूर्च्छितोऽयं । वातोद्धूतजरद्द्रुवत् ॥ साधर्मिकधिया चक्री । चेलेन तमवीजयत् ॥१२॥ वह्निवेगः समुत्तस्थौ । लब्धसंज्ञस्ततो बली ॥ वज्रकायश्चिरं मूर्च्छा । न भजेच्छुद्धश्राद्धवत् ॥ १३ ॥ चक्रिणं स

तथा वीक्ष्य। दध्यौ पित्रा समं यदि॥ प्राव्रजिष्यं ततोऽद्रक्ष्यं । नाभिभूतिमिमां रणे ॥१४॥ चक्राहतोऽमरिष्यं वा। यदि तद्दुर्गतौ ध्रुवं ॥ प्रायास्यं पुण्यहीनानां । राज्ञां स्यात्किमु सद्‌गतिः॥१५॥ चेष्टया चानया चक्री । कृपालुर्जैनवत्सलः ॥ संतोष्यैनं प्रणामाद्यै-स्तत्कुर्वेऽवसरोचितम् ॥ १६ ॥

ध्यात्वेति तमयं स्माह । राजंस्तव कृपाद्भुता ॥ स्फुटं कृतापराधेऽपि । याऽहीयत न मय्यपि ॥ १७ ॥ न युध्ये बंधुना सार्द्धं । ततो राज्यं गृहाण मे ॥ व्रतमेष चरिष्यामि । नमामि त्वां महाबलम् ॥ १८ ॥ चक्री स्माह न मे कार्यं । तव राज्येण भुंक्ष्व तत् ॥ प्रणाममेकमिच्छामि । स च राजन् ! कृतस्त्वया ॥१९ ॥ ततोऽसौ चक्रिणं नत्वा-भ्यर्थ्य च स्वपुरेऽनयत् ॥ स्वान्य-खेटकुलोद्भूताः । कन्याः पंचशतान्यदात् ॥ २० ॥ पूर्वं हठहृतास्ताश्च । मुदा तत्पितरो ददुः ॥ दक्षिणश्रेणिगाः सर्वे । तं प्रणेमुश्च खेचराः ॥ २१ ॥ हस्त्यश्वाद्युपदां प्रौढां । चक्रुश्चाज्ञावशंवदाः ॥ कन्याश्चादुः सहस्राणि । रूपयौवनशालिनीः ॥ २२ ॥ ददौ मुख्य-पुराण्यष्टौ । वह्निवेगाय चक्रभृत् ॥ शेपाणि शेषखेटेभ्यो । राजरीतिरियं यतः ॥ २३ ॥

अथ गत्वोत्तरश्रेण्यां । तत्खेटान् लीलयाऽजयत् ॥ उपयेमे च तैर्दत्ताः । सहस्रं सोपदाः कनीः ॥२४॥ पोडशास्य सहस्राणि। सर्वाः स्वयंवराश्च ताः ॥ नित्ययौवनरूपाद्यैः । पत्न्योऽभूवन् गुणैर्वराः॥ २५॥ या कामितकरी विद्या । पूर्वमाराधिताऽमुना ॥ तद्ब-लेन जिगायाऽसौ । विषमानपि वैरिणः ॥ २६ ॥ एवं सर्वनृपान् जित्वा । निजे गत्वोत्सवैः पुरे ॥ पूर्णां राज्यरमामेप । बुभुजे चक्रवर्त्तिवत् ॥ २७ ॥

तदादिवह्निवेगोऽथ । संविग्नो विरतो भवात् ॥ प्रव्रज्यार्थी प्रतीक्षेत । परं गुर्वागमं सुधीः ॥ २८ ॥ पितरं स्वं महावेगं ।

चतुर्ज्ञानधरं गुरुं ॥ आगतं स्वपुरोद्याने–ऽन्यदा श्रुत्वा जहर्ष सः ॥ २९ ॥ तत्र गत्वा मुदा नत्वा । तं पार्श्वे तस्य [1]धीनिधिः ॥ प्राव्रजत्सप्तशत्या स । पुंसां स्त्रीणां च संयुतः ॥ ३० ॥ श्रीचंद्रश्रीवह्निवेग–श्रीसहस्रायुधास्त्रयः ॥ राजर्षयः शिवं प्रापु–श्चारित्रात्त-द्भवेऽप्यहो ॥ ३१ ॥ लंकेशोऽपि शिवं यातः । संयमात्पंचभिर्भवैः ॥ एवं चारित्रधर्मस्य । महिमा बुध्यतां बुधाः॥ ३२ ॥ निष्कलं-कगृहिधर्मपालनात् । खेटराड् निरुपमाः प्रथीयसीः ॥ एवमत्र बुभुजे श्रियोऽथवा । शुद्धधर्ममहिमा प्रमातिगः॥ ३३ [2]मितप्रमाणाः खलु ते जलादयो । मितप्रभावाः सुरपादपादयः ॥ फलैर्मितैरेव फलंति च द्रुमास्त्रिधाऽपि नो धर्मजयश्रियो मितिः ॥ ३४ ॥

इति तपागच्छाधिराजश्रीमुनिसुंदरसूरिविरचिते श्रीजयानंदराजर्षिकेवलिचरित्रे जयश्रृंके सहस्रायुधादिराजर्षिचतुष्टयचरित्रेण चारित्रधर्ममहिमवर्णननामा श्राद्धधर्मकलितश्रीचक्रायुधचरित्रवर्णननामा च तृतीयः सर्गः समाप्तः ॥ ग्रं १५० ॥

---

## ॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥

देवकुलपाटकमणिः, श्रीऋषभः श्रेयसां ततिस्तन्यात् । मूर्तेरपि यस्यादेः महिमार्थैर्वेत्ति नो कश्चित् ॥ १ ॥

अथास्ति भरतेऽत्रैव । विजयादिपुरं पुरं ॥ श्रिया सर्वपुराणां य–द्विजयात्सान्वयाह्वयम् ॥१ ॥ वर्णिकामिव नाकस्य । विधि-र्यद्बुध्यदीदृशत् ॥ तदर्थिकानां दानादि–पुण्याद्यादरवृद्धये ॥ २ ॥ यत्र चैत्याट्टकोट्टौकः–केलिवापीवनश्रियः ॥ पश्यंतः प्रशशंसुः

१ दास्यपीः २ मितप्रमाणास्तनुभूजलादयो

स्वां । देवा नेत्राऽनिमेषताम् ॥३॥ यत्र प्रत्यक्षमीक्षित्वा । धर्माधर्मफलान्यपि ॥ नास्तिको नास्ति कोऽपि स्म । तत्त्वश्रद्धानतो ध्रुवम् ॥ ४ ॥ जयस्तत्राऽभवद्राजा । राजमानो जयश्रिया ॥ भ्राताऽस्य युवराजश्च । विजयो विजिताऽसुहृत् ॥ ५ ॥ सन्न्यायरुचिभिः पृथ्वीं । सूर्यचंद्रमसोरिव ॥ तयोर्द्योतयतो नैव । काप्यनीतितमोऽभवन् ॥ ६ ॥ सुहृदां द्विषतां चापि । ददतुः क्षितिमेव यौ ॥ तुष्टौ रुष्टौ च विख्यातौ । सविवेकौ तथाऽप्यहो ॥७ ॥ सर्वभीतिगदान् हर्तुं । भुवि षाड्गुण्यभेषजैः॥ आश्विनाविव यौ धातु-र्नियोगादव-तेरतुः ॥ ८ ॥ तयोर्बभूवतुः पत्न्यौ । विमलाकमलाभिधे ॥ भर्त्रोः सर्वार्थदृश्वर्यौ । राज्यलक्ष्मीदृशाविव ॥ ९ ॥ हरदग्धं स्मरं त्यक्त्वा । रतिप्रीती किल श्रिते॥ निःसपत्नसुखार्थं य-च्छलात्कांतं पृथक् पृथक् ॥१०॥ सुखसुप्ताऽन्यदा रात्रौ । विमला स्वप्नमैक्षत॥ तद्यथा शूकरः सिंह-युतः स्वांतिकमागमत् ॥११॥ उत्संगं शूकरोऽध्यास्ता-न्यत्र काऽपि हरिस्त्वगात् ॥ प्रबुद्धा भर्त्तुराचख्यौ । स्वप्नं तं सा यथातथम् ॥१२॥जयो राजाऽप्यवादीत्तां । शूकराभः सुतस्तव ॥ गुणैः कस्याश्चिदन्यस्या । भावी सिंहोपमः पुनः ॥ १३ ॥ तयोः पुनर्मिथः प्रीत्या । भविता सहचारिता ॥ इति स्वप्नार्थमाकर्ण्य । साप्यभूद्धर्षखेदभाक् ॥ १४ ॥ जीवोऽथ वसुसारस्य । धूमकेतुसुरस्तदा ॥ ज्योतिष्कायुः प्रपूर्याऽस्याः । कुक्षौ रात्रावावातरत् ॥१५॥ हिंसाद्रोहादिभावेषु । मातुरासंश्च दोहदाः। [1]क्रूरतानय-नैष्ठुर्या-दयो दोषाश्च गर्भजाः ॥ १६ ॥ समयेऽसूत पुत्रं सा । दास्या वर्द्धापितो नृपः ॥ तस्यै दत्वा महादानं । सुतजन्मोत्सवं व्यधात् ॥ १७ ॥ हरेर्दर्शनमात्रेण । मातुः स्वप्ने नृपो व्यधात् ॥ सिंहसारेति नामाऽस्य । सूनोः सिंहगुणाशया ॥ १८ ॥

कमलाप्यन्यदा रात्रौ । शयिता सुखसंगता ॥ सिंहकोलावुपेतौ प्राग् । कोलः काऽप्यन्यतोऽगमत् ॥ १९ ॥ सिंहस्तूत्संगम-ध्यास्त । सौम्यदृग् बलवानिति ॥ स्वप्नं वीक्ष्य [2]प्रबुद्धाऽवक् । पत्ये हर्षोच्छ्वसत्तनुः ॥२०॥ युग्मं ॥ युवराजोऽप्यवक् भावी ।



१ क्रौर्याविनयनै° ख । २ प्रबुद्धाऽख्यत् ख ।

पुत्रः सिंहसमस्तत्र ॥ अभूत्कस्याश्चिदन्यस्याः । कोलाभो भविताऽथवा ॥ २१ ॥ स्वप्नार्थमिति संश्रुत्य । मुमुदेऽतितरामियं ॥ अथ सप्त दशांभोधिः । प्रपूर्यायुर्महाशुक्रे ॥ २२ ॥ मतिसागरमंत्रीश–जीवः शुक्राच्च्युतः सुरः ॥ तस्यामेव तमस्विन्या–मस्याः कुक्षाववातरत् ॥ २३ ॥ युग्मं ॥ वर्द्धमाने च गर्भेऽस्या । येऽभूवन् दोहदाः शुभाः ॥ धर्मशौर्यानुगास्तेऽपि । युवराजेन पूरिताः ॥ २४ ॥ समये सा च सुलग्ने । पुत्रं प्रासूत भासुरं ॥ नंदनोर्वीव कल्पद्रुं । दिगैंद्रीव च भास्करम् ॥ २५ ॥

अथ शंखपुराधीशो । मानवीरोऽस्ति भूपतिः ॥ जयाय द्विषतस्तस्य । यांतं जयमहीपतिम् ॥२६॥ विनयाद्विनिवार्याशु । युवराजश्चमूवृतः ॥ गत्वा युद्धेन तं बध्ध्वा–ऽनैषीद् भूपांतिके भटः ॥ २७ ॥ तावद्वर्द्धापितौ भूप–युवराजौ भुजिष्यया ॥ मुदा तदा च संपन्न–कमलापुत्रजन्मना ॥ २८ ॥ तावदन्यागमद्दासी । तया वर्द्धापितौ नृपौ ॥ क्षेपार्थं नाभिनालस्य । सूनोर्जातस्य साम्प्रतम् ॥ २९ ॥ धरित्र्यां खन्यमानायां निधिकुम्भः स्फुटोऽभवत् ॥ श्रुत्वेति हृष्टौ तौ सौधे । तमनीनयतां नरैः ॥३०॥ युग्मं ॥ पितृनामांकितं रत्न–पूर्णं वीक्ष्य च तं नृपौ ॥ ऊचतुः सुतपुण्येन । निधिर्लब्धो गतोऽप्यहो ॥ ३१॥ ततोऽरिजयपुत्रश्री–प्राप्तिहेतुत्रयी मुदा ॥ दासीभ्यां प्रददाते तौ । यथेष्टं पारितोषिकम् ॥ ३२ ॥ समंतादमितागच्छद्वर्द्धापनकबन्धुरां ॥ वन्दिमोक्तजयारावां । गीतनाट्यमनोहराम् ॥ ३३ ॥ युगपद्वादितानेक–वाद्यनादध्वनद्दिशं ॥ दीयमानमहादान–नंद्यमानाऽखिलप्रजाम् ॥ ३४ ॥ यथेष्टार्थागमप्रीतो–द्गीयमाणसदाशिषं ॥ तौ व्यधत्तां मुदा पुत्र–जन्मोत्सवपरंपराम् ॥ ३५ ॥ त्रिभिर्विशेषकं ॥ दत्तदंडं प्रपन्नाज्ञा–सेवं मुमुचतुश्च तौ ॥ मानवीरं नृपं साकं । चारकस्थैः परैरपि ॥ ३६ ॥ अरेर्विजयकारित्वा–त्सर्वानंदस्य दानतः ॥ दानमानादिभिः प्रीत–सर्वस्वजनसंमतम् ॥ ३७ ॥ श्रीजयानंद इत्यस्य । सर्वलक्षणशालिनः ॥ सूनोस्तौ चक्रतुर्नाम । भाग्यसौभाग्यमालिनः

॥ ३८ ॥ युग्मं ॥ अवर्द्धतामथो भूप–युवराजतनूद्भवौ ॥ धात्रीभिः पाल्यमानौ तौ । सह पित्रोर्मनोरथैः ॥ ३९ ॥ क्रीडन्तौ पांशुभिश्चित्रैः । क्रमात्क्रीडनकैरपि ॥ प्रायः सहचरौ जातौ । तौ कलाग्रहणोचितौ ॥ ४० ॥ ततस्तावार्पयद्भूपः । कलाचार्याय धीमते ॥ शास्त्रशस्त्रानुगाः सोऽपि । क्रमादध्यापिपत्कलाः ॥ ४१ ॥ यथाचार्यं यथाभाग्यं । जातौ तौ च कलाविदौ ॥ सच्चकार कलाचार्यं । ततो भूपो धनादिभिः ॥ ४२ ॥

अथाप्तयौवनौ क्रीडा–सरोवापीवनादिषु ॥ चिक्रीडतुः समं मित्रै–स्तौ यथर्तु यथोचितम् ॥ ४३ ॥ एवं कलादिसामग्री–समत्वेऽपि तयोः पुनः ॥ भेदोऽभूत्प्रकृतेः सा हि । कर्मभेदेन भिद्यते ॥ ४४ ॥ तथाहि—आद्यः क्रौर्यरतो लोको--द्वेजको दुर्नयादिभिः ॥ निर्धर्मा दुर्भगः किंचि--दविनीतोऽप्रियंवदः ॥ ४५ ॥ युवराजसुतस्त्वासी--द्रूपन्यक्कृतमन्मथः ॥ लीलाललितलावण्य--सुभगः शुद्धधर्मधीः ॥ ४६ ॥ विनीतः सत्यगीः शूरो--ऽन्योपकारी प्रियंवदः ॥ उदारप्रकृतिः सौम्यः । कृतज्ञो जनताप्रियः ॥४७ ॥ युग्मं ॥ निशाम्यन् श्रीजयानंद--स्याऽथ लोकमुखाद्गुणान् ॥ सिंहोन्तः खिद्यमानोऽस्मिन् । प्रीतिं धत्तेस्म कृत्रिमाम् ॥४८॥ कुमार श्रीजयानंद । ऋजुप्रज्ञः स्वभावतः ॥ दधावकृत्रिमां प्रीतिं । तस्मिन्नपि गुणैकदृक् ॥ ४९ ॥ सर्वो हि स्वानुमानेन । गुणान् दोषांश्च पश्यति ॥ ईक्षते गुणिनं गुण्यः । सर्वं पापश्च पापकम् ॥ ५० ॥

अन्यदा तौ वसंततौं । क्रीडयोपवने स्थितौ ॥ निशि शुश्रुवतुर्दीव्य--गीतवाद्यध्वनिं क्वचित् ॥ ५१॥ ततः साहसिकावेतौ । तन्निनादानुसारतः ॥ प्रयांतौ कौतुकाद्दूरम् । प्राप्तौ केलिगिरेः शिरः ॥ ५२ ॥ तत्रोत्सर्गेण लीनस्य । ध्याने कस्याप्यृषेःपुरः ॥ अपश्यतां सुरं देवी--युतं तेजोऽस्तभास्करम् ॥ ५३॥ पटहं वादयत्येष । नृत्यत्येका सुरी पुनः ॥ तालं घोषवतीं वंशं । तिस्रोऽन्या

वादयंति च ॥ ५४ ॥ गायंति च गुणान् साधोः । सर्वेऽपि बहुभक्तितः ॥ इत्येतौ नाटकं तत्राऽ–पश्यतां विश्वमोहनम् ॥ ५५ ॥

अथास्य समतास्थस्य । शुक्लध्यानानुभावतः ॥ उत्पेदे केवलज्ञानं । सुराश्चाऽऽगुश्चतुर्विधाः ॥ ५६ ॥ कृत्वा ते केवलज्ञानो–त्सवांस्तूर्यरवाकुलान् ॥ नत्वा चोपाविशन् हेमां–बुजासीनमुनेः पुरः ॥ ५७ ॥ धर्मलाभाशिषं दत्वा । मुनिस्तेषां तयोरपि ॥ आचख्यौ विस्तराद्धर्मं । सम्यक्त्वाऽणुव्रतादिकम् ॥५८॥ प्रबुद्धः श्रीजयानंद–स्ततः सम्यक्त्वमग्रहीत् ॥ पप्रच्छ च सुरः कोऽयं । नाथ नाट्यं चकार यः ॥५९॥

मुनिराख्यज्जयंतोऽहं । वैताढ्ये खेचराग्रणी ॥ उपसर्गं खेदैर्दृष्ट्वा । प्रबुद्धः प्राव्रजं जवात् ॥६०॥ गुर्वादिष्टोऽन्यदैकाकी । विहरन् श्रुतपारगः ॥ चतुर्मास्यामुपोष्याऽस्थां । गुहायां विंध्यभूभृतः ॥६१॥ अस्ति तस्या गुहायास्तु । योजनद्वितयांतरे ॥ नगरं गिरिदुर्गाह्वं । सुनन्दस्तत्र भूपतिः ॥६२॥ अभूतां सेवकौ तस्य । भीमसोमाह्वयौ भटौ ॥ दर्याः क्रोशांतरे चाऽस्य । राज्ञस्तिष्ठति गोकुलम् ॥६३॥ तद्रक्षार्थं नृपादेशा–त्त्रायस्तौ तत्र तस्थतुः ॥ अन्यदा मृगयार्थं च । गुहासन्नमुपागतौ ॥ ६४ ॥ मृगयूथं च तौ दृष्ट्वा । बहून् बाणानमुञ्चतां ॥ बाणस्त्वेकोऽप्यदूरेऽपि । कस्याऽप्येणस्य नाऽलगत् ॥ ६५ ॥ विस्मितौ तौ तथा दृष्ट्वा । ततोऽस्मत्पार्श्वमागतं ॥ मृगयूथं शृणोतिस्म । प्रमदाद्धर्मदेशनाम् ॥६६॥ प्राप्तौ तावपि तत्पृष्ठा–नुगौ नः प्रेक्ष्य दध्यतुः ॥ महिम्नाऽस्य मुनेर्नूनं । मृगाणां नाऽलगन् शराः ॥ ६७ ॥ तपस्विनो हि विश्वेषां । निग्रहानुग्रहक्षमाः ॥ ततो विस्मितभीतांत–करणौ नः प्रणेमतुः ॥६८॥ ऊचतुश्च क्षमस्वाऽऽग–स्तपस्विन्निदमावयोः ॥ आवां मा भस्मसात्कार्षी–र्हनिष्यावो न ते मृगान् ॥ ६९ ॥ धर्मलाभाशिषाऽऽनंद्य । प्रोक्तौ तौ कृपया मया ॥ युवाभ्यामभयं किंतु । धर्मतत्त्वं निशम्यताम् ॥ ७० ॥

जीवाः सुखप्रिया नित्यं । सर्वेऽपीच्छन्ति जीवितं ॥ तेषां तदपहारेण तन्मास्तं नरकातिथी ॥७१॥ मांसाहारेण जीवानां । परस्त्रीगमनेन च ॥ पंचेन्द्रियवधेनापि । ध्रुवं स्यान्नरके गतिः ॥७२॥ तथा हिंसानिषेधेनाऽऽ–रोग्यमायुर्बलं यशः ॥ रूपं नित्यसुखं श्रेयः । परमं देहिनां भवेत् ॥ ७३ ॥ धर्मं श्रुत्वेति तौ बुद्धौ । सदर्शनमणुव्रतं ॥ प्रपद्याद्यं पलाहार–नियमं च विदांवरौ ॥७४॥ मुदाऽस्मान् भक्तितो नत्वा–ऽगच्छतामाश्रयं निजं ॥ प्रतिपन्नं च तं धर्मं । परिपालयतोऽनिशम् ॥ ७५ ॥

तयोर्वृत्तांतमन्येद्यु–र्विदित्वा च कुतश्चन ॥ मिथ्यादृग् हिंसकः क्ष्मापः । कोपात्तावेवमादिशत् ॥ ७६ ॥ मृगमांसादने वाञ्छा । ममाऽद्यास्तीति हे भटौ ॥ मृगान् मृगयया हत्वा । पृथगानयतं द्रुतम् ॥७७॥ प्रपद्येमं नृपादेशं । मृगा नैवाऽद्य लेभिरे ॥ इत्थमुत्तरयिष्यावो । ध्यात्वेत्येतौ गतौ वने ॥ ७८ ॥ दैवाद् दृष्ट्वा मृगान् भीमो–ऽचिंतयद्यदि हन्म्यमून् ॥ तदा व्रतक्षतिर्नो चेत् । प्रभोः कोपो दुरायतिः ॥ ७९ ॥ परतंत्रस्य वा दोषो । न मे कोऽपि व्रतक्षतौ ॥ व्रतं फलिष्यति प्रेत्य । कोपस्त्वद्यैव हि प्रभोः ॥ ८० ॥ ततो निषिध्यमानोऽपि । सोमेन बहुधाऽप्यसौ ॥ हत्वा बाणैर्गृहित्वा च । मृगान् राज्ञे समार्पयत् ॥ ८१ ॥

प्राणत्राणकृते स्वस्य । परप्राणान् कथं हरे ॥ ममेव हि प्रियाः प्राणाः । परेषामपि देहिनाम् ॥ ८२ ॥ कुप्यतु क्ष्मापतिर्मा वा । प्राणान् वा हरतां मम ॥ मृगव्यापादनेनाऽहं । भनज्मि न पुनर्व्रतम् ॥ ८३ ॥ तदुक्तं–निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु । लक्ष्मीः समाविशतु गच्छतु वा यथेष्टं॥ अद्यैव वा मरणमस्तु युगान्तरे वा । न्याय्यात्पथः प्रविचलंति पदं न धीराः ॥ ८४ ॥ निमित्तमासाद्य जवेन किंचन । स्वधर्ममार्गं विसृजंति बालिशाः ॥ तपःश्रुतज्ञानधनास्तु साधवो । न यांति कृच्छ्रे परमेऽपि विक्रियाम् ॥८५॥ इति ध्यात्वा मृगान्मुक्त्वा। सोमोऽप्यागत्य सत्त्ववान्॥ नरेशस्य मृगाऽलाभो–त्तरं कृत्वा

गृहं ययौ ॥ ८६ ॥ आकंठं बुभुजे राजा । भीमानीतं मृगामिषं ॥ अबूभुजच्च तं तुष्टः । सौवाज्ञापालनोद्यतम् ॥ ८७ ॥

अथाऽप्राक्षीत् क्षितीशस्तं । सोमः किं नाऽऽनयन्मृगान् ॥ ईर्ष्यया स यथाभूतं । जगौ रुष्टो नृपोऽप्यवक् ॥ ८८ ॥ याहि रे मद्भटान् लात्वा । मदाज्ञालोपिनं द्रुतं ॥ सोमं जघ्निहि दास्यामि । ग्राममेकं वरं तव ॥ ८९ ॥ ततस्तद्ग्रामलोभेन । राजादिष्टैर्भटैः सह ॥ सोमं हंतुं गृहं तस्य । यावदभ्येत्युदायुधः ॥ ९० ॥ तावत्प्रागपि शंकार्त्तो । मत्वाऽऽयांतं कुतोऽपि तं ॥ नंष्ट्वा सोमो गिरौ गंतु–मयासीन्नगराद्बहिः ॥ ९१ ॥ भीमोऽप्यनुपदं तस्य । धावमानो भटैर्वृतः ॥ ददर्शाऽनातिदूरे तं । नश्यंतं भयविह्वलम् ॥९२॥ रे दुष्ट ! तिष्ठ भूपाले । काले क्रुद्धे कियद्भुवं ॥ याताऽसि हत एवाऽसि । मीलिता एव यद्वयम् ॥ ९३ ॥ इत्यादि भटवृंदस्य । श्रुत्वा श्रुतिकटूगिरः ॥ विशिष्य त्वरया नश्यन् । साध्वसाऽऽकुलमानसः ॥९४॥ अकस्मात् पथि मंडूकीः । सर्वतोऽपि चलाचलाः॥ सुसूक्ष्मा लक्षशोऽद्राक्षी–त्सोमः स विगतांतराः ॥ ९५ ॥ त्रिभिर्विशेषकम् ॥ दयालुः स ततो दध्यौ । त्वरया यामि चेद्गिरौ ॥ तद्घ्नामि भटाऽग्राह्यः । स्वपुटो निकटे ह्ययम् ॥ ९६॥ परमेता विनश्यंति । भेक्यः पद्भिर्द्रुतं गतौ ॥ प्रपन्नं तु त्यजाम्येष । प्राण-त्यागेऽपि न व्रतम् ॥९७॥ इत्यादि सत्त्ववान् ध्यात्वा । साकारानशनं श्रितः॥ कायोत्सर्गेण तस्थौ स। ध्यानेन परमेष्ठिनाम्॥९८॥

ततो भीमादयः क्रूराः। शूरास्ते तमुपागताः॥ विदधुर्विविधान् शस्त्र–घातांस्तस्मिन् जिघांसवः ॥९९॥ परं नैकोऽपि तस्यांगे । शस्त्रघातोऽलगत्किल ॥ व्योम्नोऽभूत्पुष्पवृष्टिस्तु । प्रसरद्दुंदुभिध्वनिः ॥ १०० ॥ वृत्तांतमिममालोक्य । यावत्ते विस्मिता हृदि ॥ तावन्निपेतुः पाषाणा–स्तच्छीर्षेषु समंततः ॥१॥ ततस्तैर्हन्यमानास्ते । क्रंदंतो भयविह्वलाः ॥ पश्चाद्गत्वा जगू राज्ञे । वृत्तान्तं तं यथास्थितम् ॥ २ ॥

सोमपार्श्वेऽथ दीप्तांगी । देवी काचित्समागमत् ॥ मंडूकीरपहृत्यैषा । तुष्टा तद्धर्मतो जगौ ॥ ३ ॥ धीर ! हे पारयोत्सर्गं । मन्डूकीदर्शनान्मया ॥ प्रतिपन्नव्रतस्थैर्य–परीक्षा विहिता तव ॥४॥ प्रातस्ते भविता राज्यं । संप्रत्युपमुनिं व्रज ॥ निशि स्थेयं त्वया तत्रेत्युदित्वा सा तिरोदधौ ॥ ५ ॥ पारयित्वा ततः सोमः । कायोत्सर्गं मुदाकुलः ॥ ज्ञातोपसर्गवृत्तान्तो। ननमागत्य मामिह ॥६॥ निशायामथ जातायां । सोऽपृच्छन्मां सविस्मयः ॥ भगवन् ! देवता केयं । मम जीवितदायिनी ॥७॥ अवोचमहमेहेपैत–द्गुहाधिष्ठायिका सुरी ॥ मद्गिरा प्राप्तधर्मत्वा–द्भक्तिं धत्ते भृशं मयि ॥ ८ ॥ धर्मस्य प्रतिपत्तिं वां । मत्वा पप्रच्छ मामियं ॥ प्रपन्नं भगवन्नेतौ। व्रतं किं पालयिष्यतः॥९॥ मयाऽऽख्यायि विराद्धाऽऽद्य।आरद्धा त्वपरो व्रतं॥ ततोऽद्यावसरे देवी। परीक्ष्य त्वां तुतोष सा ॥ १० ॥ ततो हृष्टः स जीवादि–विचारान् विविधान् हृदि ॥ श्रुत्वा धरन्मयाख्यातां–स्त्रियामामत्यचिक्रमत् ॥११॥

अथ सोमस्य रक्षादि । विमृशन् देवताकृतं ॥ भीतो भूपः पलाजीर्ण–जातगूढविसूचिकः ॥ १२ ॥ तस्यामेव मृतस्तस्यां । द्वितीये नरकेऽगमत् ॥ अत्युग्रं हि झटित्येव । पापं फलति पुण्यवत् ॥ १३ ॥ भीमोऽपि स्वामिभक्त्येव । तथैव मृतवान्निशि ॥ तत्रैव चागमद्घोरं व्रतभंगादिपाप्मभिः॥ १४॥ प्रातस्तन्मृतिकृत्यानि । कृत्वाऽथ सचिवादयः ॥ अपुत्रत्वान्नृपस्याऽस्य । राजायोग्यं व्यलोकयन् ॥ १५ ॥ अविदन्तश्च तं पश्च । ते दिव्यान्यध्यवासयन् ॥ पुरान्निर्गत्य तान्यद्रिं–प्रति यावच्चलंत्यहो ॥१६॥ तावत्कुडुम्बसारार्थं । सोमोऽभ्यायान् पुरं प्रति ॥ निभाल्य गजराजेनाऽ–भिषिक्तः कुंभवारिणा ॥१७॥ आरोपितः स्वपृष्टेऽथ । चलच्चामरशोभितः । छत्रमस्य शिरस्यस्थाद् । हेषां च तुरगो व्यधात् ॥ १८ ॥ अथोचे व्योम्नि सा देवी । भो लोकाः शृणुताऽखिलाः ॥ राजाऽसौ वो मयाऽदायि । सोमः सर्वगुणान्वितः ॥१९॥ खंडयिष्यति योऽस्याऽऽज्ञां । करिष्ये तं यमाऽतिथिं ॥ इत्युक्त्वां–

तर्हिता देवी । हृष्टाः सर्वेऽनमंश्च तम् ॥ २० ॥

यंदूद्युघुष्टजयारावं । वाद्यध्वानध्वनन्नभः ॥ प्रविवेश पुरं सोऽथ । महर्द्धया नृपवेश्म च ॥२१॥ ततः सिंहासनासीनो–ऽभिषिक्तः सचिवादिभिः ॥ प्रशशास प्रजाः सोऽथ । नयधर्मसुखाकृताः ॥ २२ ॥ एवं सोमो दृढाराद्ध–दयाधर्मादिहाऽप्यभूत् ॥ राज्यभाग् भूपभीमौ च । हिंसया नरकातिथी ॥ २३ ॥ मां नत्वैव सदा भुङ्क्ते । गुहास्थं सोमभूपतिः ॥ देवीप्रभावतो युद्धं । विनाऽप्यवशयद्रिपून् ॥ २४ ॥ प्रावर्त्तयदमारिं स्वे । देशे दृष्टदयाफलः ॥ सिषेवे च यथायोगं । गुरून् सुश्राद्धधर्मकृत् ॥ २५ ॥ एवं धर्ममयं राज्यं । चिरं भुक्त्वायुषः क्षये ॥ सौधर्मे त्रिदशो जज्ञे । शक्रसामानिकः श्रिया ॥ २६ ॥ विहरन् सुचिरं देशे–ष्वह मत्रागमं पुनः ॥ देवः सोऽवधिना मत्वाऽऽ–गत्य मां प्राणमन्मुदा ॥ २७ ॥ स्मृत्वा पूर्वोपकारं च । चक्रे नाटयादि भक्तितः ॥ मत्वैवं गुरुसेवाया । दयायाश्च फलं बुधाः ॥ २८ ॥ नित्यं कुरुत ते धर्म–मूले श्रेष्टसुखप्रदे ॥ श्रुत्वैवं श्रीजयानंदो–ऽवादीदधिकधर्मधीः ॥२९॥ युग्मं ॥ सम्यक्त्वं भूषयिष्यामि । विना युद्धादिकारणं ॥ स्थूलहिंसानृतस्तेया–न्यस्त्रीत्यागादिभिः प्रभो ! ॥३०॥ ज्ञान्यूचे पालयेः सम्य–गिमं धर्मसुरद्रुमं ॥ यदसारे भविष्योऽत्राऽ–मुत्र चेष्टसुखाश्रियः ॥ ३१ ॥ तथेति श्रीजयानंदः । प्रतिपद्य गिरं मुनेः ॥ कृतार्थं मन्यमानः स्वं । तं नत्वाऽगाद् गृहे श्रगे ॥ ३२ ॥ गुरुकर्मा तु साधोस्त–त्प्रोक्तमश्रद्दधानकः ॥ सिंहसारः प्रणम्यामुं । भ्रात्रा सह गृहेऽगमत् ॥ ३३ ॥ सम्यक्त्वादिगुणान् प्राप्य । मुनिं नत्वा सुरादयः ॥ प्रापुर्निजं निजं स्थानं व्योम्नाऽन्यत्र च सोऽप्यगात् ॥ ३४ ॥ प्रपन्नधर्मानथ पालयन् परान् । गुणान् श्रयन् श्रीगुरुदेवभक्तिभृत् द्विपज्जयश्रीप्रदविक्रमोऽभव–ज्जगज्जनेष्टो युवराजनंदनः ॥ ३५ ॥

इति श्रीतपागच्छाधिराजश्रीमुनिसुंदरसूरिविरचिते श्रीजयानंदकेवलिचरित्रे प्रथमव्रतपालनापालनमहात्म्यसूचकभीमसोमदृष्टांतश्रीजयानंदप्रतिबोधादिवर्णननामा चतुर्थः सर्गः ॥ श्रीरस्तु ॥ ग्रंथाग्र १३८ ॥

# अथ पंचमः सर्गः प्रारभ्यते

त्रिभुवनविभवस्तीर्थ—प्रभवो वः संतु शाश्वतश्रीदाः ॥ यैर्धर्मतीर्थपोतैः । सुतरश्चक्रे भवांभोधिः ॥ १ ॥ अन्येद्युर्जयराजेन राज्ययोग्यं बुभुत्सुना ॥ कश्चित्सामुद्रिकोऽपृच्छि । लक्षणानि कुमारयोः ॥ २ ॥ तौ सर्वाङ्गं समालोक्य । सोऽपि भूपं रहोऽवदत् ॥ लक्षणानि नराधीश! । निरणैषं कुमारयोः ॥ ३ ॥ संति तादृंशि तान्यंगे । सिंहसारस्य सर्वतः॥ यैर्भावी लोकविद्वेष्यः । स्वजनाऽनर्थकारणम् ॥ कृतघ्नः क्रुरधीः स्थान—मापदां च पदे पदे ॥ प्रेत्यदुर्गतिगामी च । धर्मद्वेषात्स पाप्मभिः ॥ ५ ॥ युग्मं ॥ भावी च श्रीजयानंदः सर्वांगीणैः सुलक्षणैः ॥ विश्वस्याऽपि सुखाकर्त्ता । त्रिखंडपृथिवीपतिः ॥ ६ ॥ सेव्यः सर्वधराधीशै—र्बहूनामुपकारकृत् ॥ नयधर्मप्रतापश्री—यशोऽम्भोधिः शिवंगमी ॥७॥ युग्मं ॥ तदुक्तं हृदि कृत्वा तं । सत्कृत्य व्यसृज्जन्नृपः ॥ अन्यदा विजनं कृत्वा । विजयायाऽनुजन्मने ॥८॥ नैमित्तिकोक्तं तत्सर्वं । प्रेम्णाऽख्यद्गोप्यमप्यसौ ॥ तच्च तांबूलदासी च । विश्वासात्स्थापिताऽशृणोत् ॥९॥ यथावसरमुर्वीश—स्ततो नैमित्तिकोदितं ॥ नानापरीक्षणोपायै—र्निश्चित्य समवीवदत् ॥१०॥ अथ क्रीडन् पुरि सिंह—सारो निःशंकमुन्मदः॥ स्वैरं गृह्णाति हट्टादे–र्नृनारीभूषणादिकम् ॥११॥ घटान् स्फोटयति स्त्रीणां । नर्त्तयंस्तुरगान् पथि ॥

सुरूपा हरते नारीः शकटान् लुंटयत्यपि ॥१२॥ असेत्याधनयात्पौराः । क्रुद्धा भूपं व्यजिज्ञपन् ॥ स तानाऽऽश्वास्य सत्कृत्य । प्रैषीत्तं धिक्चकार च ॥ १३ ॥ एवं द्वित्रिःकृतेऽन्येद्यु–र्याती दातुं महीभुजे ॥ तांबूलदासी तांबूलं । मुषिता तेन तद्बलात् ॥ १४ ॥ कुपिता सावदद्रुष्टा । सत्यं नैमित्तिकोदितं ॥ धनैः प्रलोभ्य पृष्टाऽथ । तेन व्यक्त्या जगाद तत् ॥ १५ ॥ यतः— न तरुस्तटिनीतटे चिरं । न खले प्रीतिरघात्मनीन्दिरा ॥ न च धमरसोऽतिलोभके । न च गूढं हृदि तिष्ठाति स्त्रियाः ॥ १६ ॥ एतन्मनसि कृत्वैष । दास्युक्तं दुर्मना गतः ॥ साऽपि तस्य तमन्यायं । भूभृते प्राग् न्यवेदयत् ॥ १६ ॥

भूपोऽपि द्राक् तमाकार्य । गाढक्रोधादभाषत ॥ पाप रे दुर्नयैः पौरा–नुद्वेजयसि नित्यशः ॥ १८ ॥ निर्मलेऽपि कुले जातः। कलंकयसि दुष्ट ! तत् ॥ गृहेऽपि चेष्टसे दुष्टं । निषिद्धोऽपि न तिष्ठसि ॥ १९ ॥ दूरं निर्याहि चेत्क्वाऽपि । यदि स्थास्यस्यतः परं ॥ छेत्स्ये तत्ते श्रुती नासां । न पुत्रेऽप्यनयं सहे ॥ २० ॥ मय्येकाकीनि भूपादि–द्वेष्ये देशांतरे गते ॥ राजा स्यात् श्रीजयानंदो । भूपलोकाऽनुरागतः ॥ २१ ॥ नयामि सह यद्येनं । राज्यस्याऽवसरे तदा ॥ देशांतरेऽपि संतं मा–माकारयति भूपतिः ॥ २२ ॥ आवाभ्यां हि परो नास्ति । राज्ययोग्योऽस्य भूपतेः ॥ पूर्वजाचारतश्चाति–यौवनोऽयं तपस्यिता ॥ २३ ॥ ध्यात्वैवं श्रीजयानंदं । सोऽन्यदा स्माह मायया ॥ भ्रातर्देशांतरं यावः । स्वस्य व्युत्पत्तिहेतुना ॥ २४ ॥ तत्राऽद्भुतानि दृश्यंते । शिक्ष्यंते ह्यतुलाः कलाः ॥ परीक्ष्यंते च भाग्यानि । सुजना दुर्जनास्तथा ॥ २५ ॥ नानातीर्थानि वंद्यन्ते । भवेत्क्लेशसहं वपुः ॥ ज्ञात्वा धूर्तादिवृत्तांतान् । नैपुण्यं चाप्यतेऽद्भुतं ॥ २६ ॥ एवं देशांतरे प्राप्या । गुणा नैकत्र तु स्थितौ ॥ एकाकी न यियासामि । त्वद्वियोगाऽसहस्त्वहम् ॥ ॥ २७ ॥ भ्रातस्तदेहि सत्रैव । यावो देशांतरे क्वचित् ॥ भ्रातपित्राद्यनापृच्छय । तत्पृच्छा स्ख-

लयेद्यतः ॥ २८ ॥

अथ तस्य विदन् स्नेहं। स्वगोचरमकृत्रिमं ॥ सरलप्रकृतिः सौम्या–कृतिः सुकृतिनां वरः॥२९॥ प्रपेदे श्रीजयानंद–स्तद्गिरं तां ततोऽन्यदा ॥ सखड्गौ तौ विनिर्यातौ । निशि केनाऽप्यलक्षितौ ॥३० ॥ युग्मं ॥ कियत्यध्वन्यतिक्रांते। कथानुकथनागते ॥ धर्माधर्मविचारेऽथ। युवराजाऽङ्गजो जगौ॥३१॥ स्फुरंति वेश्मन्यभितः श्रियोऽर्थिता। मुखे गिरः श्लाघ्यतमा धियो हृदि॥ तनौ च सौभाग्यरमाऽसयोर्बलं । यशांसि दिक्ष्वार्हतधर्मतः सताम्॥३२॥ सुखानि दत्ते हरते विपत्तती–स्तनोति भद्राण्यशिवानि नाशयन्॥ सहाऽऽधिभिर्व्याधिगणान्निहंति यो । धर्मं भजंत्यार्हतमेव तं बुधाः ॥३३॥ वस्नूनि पृथ्व्यः खनयो मणीन् द्रुमाः । फलानि मुक्ताः किल ताम्रपर्णिकाः ॥ लताः प्रसूनानि गजांश्च विंध्यभूः । पुण्यात्मनां बिभ्रति भुक्तयेऽङ्गिनाम् ॥ ३४ ॥

सिंहसारो जजल्पाऽथ । भ्रातः सत्यं वचस्तव ॥ समीक्ष्यंते परं संप्र–त्यधर्मादेव संपदः ॥ ३५ ॥ यदन्यायपुषां लक्ष्म्या । वीक्ष्यंते क्रूरकर्मणां ॥ विपदो धर्मभाजां च । यौवराजस्ततोऽवदत् ॥ ३६ ॥ पुण्यं पापानुबंधि स्यात् । पापं पुण्यानुबंधि च ॥ तयोर्विद्धि क्रमादेत–त्फलं प्राग्भवसृष्टयोः ॥ ३७ ॥ एतद्भवकृते पुण्य–पापे भोग्ये भवांतरे ॥ आम्रव्रीह्यादिदृष्टांता–त्तत्फलं हि तदैव न ॥ ३८ ॥

अथाऽभाषिष्ट दुष्टात्मा । भूपभूः प्रेम दर्शयन् ॥ भ्रात्रोः किं नौ विवादेन । मिथः प्रेमहरो हि सः ॥३९॥ पृच्छ्यते कोऽपि विज्ञस्तत्तदुक्तं च प्रमाण्यते ॥ आर्जवात् श्रीजयानंदो–ऽप्येवमस्त्वित्यभाषत ॥४०॥ भूपप्रजानुरागाद्यै–स्तस्य राज्यार्हतां विदन् ॥ अपहर्तुं पणादेतां । तल्लोचनजिघृक्षकः ॥ ४१ ॥ पारिशेष्यात्तथा स्वस्य । राज्यप्राप्तिं विभावयन् ॥ ततोऽभाषिष्ट पापैक–निष्ठो

दुष्टो नृपात्ममजः ॥ ४२ ॥ युग्मं ॥ विना पणेन कः स्थेय–स्तज्जितेन निजाक्षिणी ॥ देये इत्येव नौ सोऽस्तु । प्रपेदे श्रीजयोऽपि तत् ॥ ४३ ॥

अथ ग्रामटके गत्वा । तद्ग्रामे ग्रामठक्कुरं ॥ निविष्टं ग्राम्यसंयुक्तं । दृष्ट्वा सिंहो ननाम तम् ॥ ४४ ॥ प्रोचे चाहं शुभं वच्मि । पापाद्धर्मोदयं पुनः ॥ तद्भोः सत्यवचाः कोऽत्र । संतो वदत धीधनाः ॥ ४५ ॥ तस्य सद्रूपवेषस्य । मायानत्यादिरञ्जितः ॥ अलपद्ठक्कुरो ग्राम्याऽ–नुमत्या सत्यवान् भवान् ॥ ४६ ॥ ततस्तं मुदितो नत्वा । सिंहो भ्रात्रा सहाऽचलत् ॥ कियद्दूरे गतो नेत्रे । ययाचे श्रीजयं कुधीः ॥ ४७ ॥ सोऽप्यजलपज्जडा ग्राम्या । निर्धर्माणो विदंति किं ॥ कूटससाक्ष्ये हि तेषां धी–र्गौर्वा न स्खलति क्वचित् ॥ ४८ ॥ ग्राम्योक्तौ विश्वसीस्तन्मा । हंसकाकनिदर्शनात् ॥ सिंहोऽवक् हंसकाकौ कौ । श्रीजयः स्माह तौ शृणु ॥ ४९ ॥ तथाहि—

ग्रामे धन्यपुरेऽस्त्येको । नित्यागाधजलो ह्रदः ॥ तत्राऽन्तश्चारिणं मीनं । दृष्ट्वा लातुं ध्विकोऽपतत् ॥५०॥ मीनोऽथांतर्निलिन्ये द्राक् । क्लिन्नपक्षस्ततो ध्विकः ॥ तरणोड्डयनाऽशक्तो । यावन्मज्जति वारिणि ॥ ५१ ॥ हंसो हंसीगिरा तावदागत्य तदधोम्बुनि ॥ निजपृष्टे तमारोप्य । बहिः करुणयाऽकृपत् ॥५२॥ स्वस्थीभूतस्ततो हंसं । सहंसीकं मुदाऽनयत् ॥ ध्विको वटे निजावासे प्रीत्या चावर्जयत्क्षणम् ॥५३ ॥ आम्राचञ्च्वा समानीय । फलान्युपचिकीर्ध्विकः ॥ अबूभुजत्सहंसीकं हंसं प्रीतेः फलं ह्यदः ॥५४॥ अथ हंस्या समं हंसो । यावदुड्डयते ततः ॥ प्रिये! यासि किमित्युक्त्वा । हंसीं तावद् ध्विकोऽरुणत् ॥ ५५ ॥ हंसोऽब्रवीत्प्रियेयं मे । न च ते त्वद्विलक्षणा॥ ध्विकोऽलपत्सरूपा स्यात्। स्वसा नाऽन्यकुला प्रिया॥५६॥ न चेत्प्रत्येपि तत्पृच्छा–ऽस्मत्करग्रहदध्वनः॥

ग्राम्यांस्ते हि प्रमाणं नौ । वादं धिगुपकारिणाः ॥५७॥ प्रपन्नैतद्गिरं हंसं । पित्राद्याज्ञाप्रदानतः ॥ द्विकोऽवरुध्य तत्रव । ग्रामान्तः
स्वयमागमत् ॥५८॥ ज्ञापयित्वा विवादं स्वं । स ग्राम्यान्नृगिराऽब्रवीत् ॥ कूटेनाऽप्यत्र साक्ष्येण । सत्यीकार्योऽहमेव भोः ॥५९॥ नो
चेदशुचयिष्यामि। घटान् स्त्रीणां शिरःस्थितान्॥ पशूंश्च व्यथयिष्यामि । व्रणक्षोदादिभिर्भृशम्॥६०॥ नृनारीणां शिरस्सूपाविश्य यास्यामि
च द्रूतं॥भक्षयिष्यामि धान्यादी–न्यातपादिगतानि च॥६१॥ बालादिभ्यो ग्रहीष्यामि । चञ्च्वाऽऽहत्याशनादिकं॥लोकानुद्वेजयिष्यामि
परैरप्यनयैर्भृशम् ॥६२॥ नृगिरा विस्मिता ग्राम्या–स्ततो भीतास्तदुक्तिभिः ॥ धर्माधर्माद्यवेदित्वा । कूटसाक्ष्यं प्रपेदिरे ॥६३॥ ततस्तौ
सममागत्य । तान्न्यायं समपृच्छतां ॥ ऊचुस्तेऽद्राक्ष्म काकस्या—ऽनया सह करग्रहम् ॥ ६४ ॥ काकोऽवग् दुःखिनं हंसं ।
गृहाण स्वां प्रियां सुहृत् ॥ न कुर्वे प्राणदे द्रोहं । ग्राम्या ह्येवं परीक्षिताः ॥ ६५ ॥ ग्राम्यानप्यथ स स्माह । भो भोः स्वल्पेऽपि
कारणे ॥ कूटसाक्ष्यभृतां भावि । दुःखं वोऽत्र परत्र च ॥ ६६ ॥ कूटसाक्ष्यसमं पापं । जगत्यपि न विद्यते ॥ हिंसादीनां हि
सर्वेपां । भवेत्तस्मात्समुद्भवः ॥ ६७ ॥ सहंसोऽथ द्विकः क्रोधात् । कुतोऽप्यानीय चञ्चुभिः ॥ वर्पित्वांगारराशिं तद् । ग्राम्यगेहान-
जिज्वलत् ॥ ६८ ॥ मृताश्च दुर्गतौ ग्राम्याः । कूटसाक्ष्येन तेऽगमन् ॥ इति ग्राम्यकथां श्रुत्वा । भ्रातर्मा तेषु विश्वसीः ॥ ६९ ॥
इति श्रुत्वोचिवान् सिंहः । किं मां कूटकथानकैः ॥ प्रतारयसि यन्नैव । चेष्टंते पशवो नृवत् ॥ ७० ॥ जगाद श्रीजयानंदः । सत्य-
मेतत्परं तथा ॥ हंसकाकावचेष्टेतां । यतस्तत्कारणं शृणु ॥ ७१ ॥ तथाहि—

ग्रामेऽस्मिन् श्रीमुखो यक्षोऽऽर्च्यते देवकुले जनैः ॥ नंदीयक्षश्च तस्याऽस्ति । मित्रं नंदिपुरे वसन् ॥७२॥ तद्गृहे श्रीमुखोऽ-
न्येद्युः । प्राप्तः प्रीत्या जगाद तं ॥ बंधो ! नैषि मे स्थाने । सोऽवग् ग्राम्यऽस्य दृग्भिया ॥ ७३ ॥ अदृष्ट्या ह्यमी धर्म-विवेक-

ज्ञानपभिुनः ॥ श्रीमुखः प्राह न प्रत्येम्येतद्विना परीक्षणम् ॥ ७४ ॥ ततस्तौ तत्परीक्षार्थं । ग्रामे गत्वाऽध्यतिष्ठतां ॥ हंसकाकौ स्थितौ वृक्षेऽन्वेष्टेतां च तथाऽखिलम् ॥ ७५ ॥ हंसकाककथामेवं । भ्रातस्ताद्विद्धि संगतां ॥ नोत्तमास्तु वदंत्येवाऽनृतमानंद-राजवत् ॥ ७६ ॥

कोऽयमानंदराट् सिंहे–नेत्युक्ते श्रीजयोऽवदत्॥ अभून्नंदिपुरे भूभृ–दानंदाह्वो यथार्थवाक् ॥ ७७ ॥ उत्तमोऽयं प्रकृत्याऽपि । निश्चिप्याईतधर्मभृत् ॥ पापभीरुरपि प्रौढो । चलभाग्यपराक्रमैः ॥ ७८ ॥ द्वात्रिंशल्लक्षणो भूरि–भूपैः सेव्यः सुखिप्रजः ॥ धत्ते नांगे महर्द्धित्वात् । कोटिमूल्यामलंकृतिम् ॥ ७९ ॥ सालंकारोऽन्यदा केल्यै । ससैन्योऽगात्पुराद्बहिः ॥ यावत्कारयते चैष । वाजिनां विविधा गतीः ॥ ८० ॥ तावदुत्पत्य खे वाजी । निन्येऽटव्यां तमेककं ॥ दुष्टं ज्ञात्वा तमुत्प्लुत्य । मुक्त्वा भूपोऽपतद्भुवि ॥ ८१ ॥ वाजिन्यंतर्हिते राजा । यावद्भ्राम्यति विस्मितः ॥ चत्वारो दस्यवस्ताव–त्तमभ्यगुरुदायुधाः ॥ ८२ ॥ तथाप्यक्षुभितो धैर्या–न्नरेन्द्रस्तैन्यगाद्यहो ॥ प्राप्तोऽस्यलंकृतो भाग्यात् । शृणु नश्चरितं पुनः ॥ ८३ ॥ वयं स्वरपुरेशस्य । सेवकाः क्षत्रपुंगवाः ॥ राज्ञा निर्वासिताः केना–प्यागसाऽस्थाम भूधरे ॥ ८४ ॥ ज्ञात्वाऽपि गुरुतो धर्ममन्यथा वृत्त्यभावतः ॥ सर्वस्तेयोज्झनाऽशक्त्या–गृह्णीम नियमाविति ॥८५॥ भूपादन्यस्य न ग्राह्यं । धनं स्तेयेन तद्ग्रहे ॥ अल्पर्द्धयो हि पीड्यंते । न भूपस्तु महर्द्धिकः ॥ ८६ ॥ सदा लघुलघुस्तेये–र्दुर्ध्यानं वृत्त्यभावतः ॥ चिरवृत्तीच्छया कार्या । लक्षस्याधश्चुरा न तत् ॥ ८७ ॥ ततः सुलक्षणः कस्त्वं । किंमूल्याऽलंकृतिश्च ते ॥ सत्यं वद महान्तो हि । न कदापि मृषा गिरः॥८८॥ मम गृह्णंत्वलंकार–मेते स्वाऽऽजीविकाकृते ॥ वक्ष्ये कोटिसमात्रार्थं । पापमूलं तु नाऽनृतम् ॥८९॥ गत्वरं हि धनं सर्वं । सत्यधर्मस्त्वगत्वरः॥ धनात्प्राप्यं मितं शर्म । सत्यधर्मादनंत-

कम् ॥ ९० इति ध्यात्वानृपोऽदी—न्नृपोऽहं हयकर्षणात् ॥ अटव्यामागमं कोटि—मूल्या चालंकृतिर्मम ॥ ९१ ॥ उक्त्वेत्येभ्यो जिघृक्षुभ्यो—ऽलंकृतिं स्वयमार्पयत् ॥ मुदितास्तेऽगमन् क्वाऽपि । भूपालोऽपि वनेऽभ्रमत् ॥ ९२ ॥

तापसाश्रममासाद्या—ऽनंसीत्कुलपतिं ततः ॥ सोऽवक् कस्त्वं किमत्रागाः, स्ववृत्तान्तं जगावयम् ॥ ९३ ॥ ततः कुलपतिः प्रोचे । वनेऽस्मिन्नस्ति राक्षसः ॥ तापसेभ्योऽपरं लब्धं । मनुष्यं भक्षयत्यसौ ॥ ९४ ॥ ततस्तापसवेषं त्वं । गृहाणेति नृपोऽग्रहीत् ॥ तद्दत्तं तं ततः कृत्वा । फलाहारं सरस्यगात् ॥ ९५ ॥ यावत्सज्जाति स स्नातुं । राक्षसस्तावदागमत् ॥ प्राह चागाः कुतो भिक्षो ! । नवोऽत्र शृणु मत्कथाम् ॥ ९६ ॥ एकैकं प्रत्यहं प्सामि । मानुषं दिनतृप्तये ॥ ॥ वर्षं तृप्यामि जग्ध्वा तु । द्वात्रिंशल्लक्षणं नृपम् ॥ ९७ ॥ ज्ञात्वेदृग्लक्षणं प्सातु—मीहे नंदिपुराधिपं ॥ पुरस्थे सपरीवारे । न तस्मिन् प्रभवामि तु ॥ ९८ ॥ कुतोऽप्यश्रावि स त्वद्याऽऽ—नीतोऽरण्येऽत्र वाजिना ॥ वद जानासि चेत्क्वाऽपि । तं मुनिर्हि यथास्थवाग् ॥ १०० ॥ इत्याकर्ण्य नृपो दध्यौ । यदि वच्मि यथातथं ॥ तदा मां भक्षयत्येष । नो चेत्पापं मृषोक्तिजम् ॥ १ ॥ अथवा प्राणमात्रार्थं । न वक्ष्याम्यनृतं वचः ॥ प्राणेभ्योऽपि गरीयान् य—द्धर्मः स्वर्गादिदानतः ॥ २ ॥ भक्षयित्वैष मामिष्टं न परान् भक्षयिष्यति ॥ पुण्यमेतद् द्वितीयं मे । भावि दिष्ट्या दयोद्भवम् ॥ ३ ॥ निश्चित्यैवं नृपोऽवोच—द्धर्मवीरशिरोमणिः ॥ अहमेव स भूपोऽस्मि । कुरु क्रव्याद्यथारुचि ॥ ४ ॥ प्रोचेऽसृक्पो मुनिं नाऽद्मि । ततः सत्वानिधे ! वद ॥ तवेदं कृत्रिमं मौनं । किं वा धीमन्नकृत्रिमम् ॥५॥ नृपोऽवादीन्मुनिर्नाऽस्मि ॥ भ्रांत्यैतद्वल्कलादि तु ॥ अथो मुनिगिरा संभ्र—त्येवाऽथोवाच कौणपः ॥ ६॥ क्षुधा तद्भक्षयिष्यामि । त्वामिष्टं स्मर दैवतं ॥ व्युत्सृज्यांगं नृपोप्यस्था—च्चिन्तयन् परमेष्ठिनः ॥ ७ ॥ रक्षो घोराट्टहासाद्यै—र्भीषणं स्फोटयन्नभः ॥ स्फुटीकृत्य रदान् स्थूलान् । जिघत्सुस्तमधावत ॥ ८ ॥

तथाप्यक्षोभवान् भूपः । पुरावत्स्वपुराद्वहिः ॥ क्रीडंतं वाजिनाऽद्राक्षीत्। स्वं ससैन्यं सभूषणम् ॥ ९ ॥ रक्षोऽरण्याद्यपश्यन् पश्यन् खात्पुष्पवर्षणम् ॥ किमेतदिन्द्रजालाभ–मित्यध्यायत्सविस्मयः ॥ १० ॥

ततो व्योमगतौ देवौ । ददर्शात्यंतभास्करौ ॥ एकोऽवादीत्सुरस्तत्र । नृपाकर्णय नौ कथाम् ॥ ११ ॥ उद्यानेऽत्रैव चैत्येऽर्व्यो । नंदीयक्षो जनैरहं ॥ ग्रामे श्रीमुखयक्षेण । मित्रेणाऽऽकारितोऽगमम् ॥ १२ ॥ परीक्षिताश्च तद्ग्राम्याः । कूटसाक्ष्याद्यथास्पदं ॥ ततोऽवादीदयं बंधो ! । त्वत्पुरे संति कीदृशाः ॥ १३ ॥ मयाऽख्याय्युत्तमाः संति ॥ नृपाद्याः सत्यवादिनः ॥ आख्यदेष कथं सत्यं । चिंताचक्राकुले नृपे ॥ १४॥ ततस्तव परीक्षार्थं । समित्रोऽत्राऽहमागमं ॥ आवामद्राक्ष्व चाऽश्वेन । क्रीडंतं त्वां नराधिप ! ॥१५॥ ततस्ते सत्यवादित्वं । पर्यैक्षिष्वहि सात्त्विक !॥ हयोत्पाताऽटवीचौर–मुनिकौणपदर्शनैः॥१६॥ततो धन्यस्त्वमेवाऽसि । प्राणांतेऽपीति सत्यवाक् ॥ इहाऽमुत्र च ते राजन् !। भवित्र्योऽभीष्टसंपदः ॥ १७ ॥ सर्वारिजयकृत्खड्गं । निःशेषामयहृन्मणिं ॥ नरद्रांयाऽर्पयित्वा तौ । मुदागातां निजं पदम् ॥१८॥ वृत्तांतं वीक्ष्य तं सर्वाः । प्रजा भूपं मुदाऽस्तुवन्॥ राजा चानुत्तरं राज्यं । भुङ्क्ते पुण्यानुभावतः ॥ १९ ॥ वशितैस्तेन खड्गेन । सेव्यमानः स राजकैः ॥ प्रवीणोऽन्योपकारेषु । मणिनोल्लाघयन् प्रजाः ॥ २० ॥ सम्यक्त्वाणुव्रतासक्तः । सप्तक्षेत्र्यां वपन् धनं ॥ धर्मकर्ममयं चायु–श्चिरं भुक्त्वाऽगमद्दिवम् ॥ २१ ॥

श्रीजयः पुनरप्याह । सत्तमाः सत्यवादिनः ॥ ततः क्वाऽपि पुरे गत्वा । प्रक्ष्यावो नरमुत्तमम्॥२२॥ भग्ने तेन विवादे नौ । प्रमाणीकृत्य तद्गिरम् ॥ पणं सत्यापयिष्यावः । सिंहोऽप्योमित्यमापत ॥ २३ ॥ चलंतौ तौ ततोऽगातां। श्रीविशालं पुरं क्रमात्॥ तत्रोद्याने निरैक्षेताम् । कलाचार्यं महाशम् ॥ २४ ॥ स च विद्याविलासाढ्यो । धनुर्वेदादिकाः कलाः ॥ पाठयेन्नृपपुत्रादीं–

श्छात्रान् पंचशतीमितान् ॥ २५ ॥ मत्वा तं श्रीजयानंदः । सर्वशास्त्रविशारदम् ॥ नत्वा सिंहसुतोऽपृच्छ-द्विवादविषयं नयम् ॥ २६ ॥ कलाचार्योऽब्रवीत्सर्व-शास्त्रलोकमतं ह्यदः ॥ शुभं धर्मादधर्माच्चा-ऽशुभमत्र परत्र च ॥ २७ ॥ श्रुत्वैवं श्रीजयानंदो-ऽतुष्यन्मम्लौ परः पुनः ॥ प्रावर्त्तेतां कलाचार्यान्तिकेऽध्येतुम् कलाश्च तौ ॥ २८ ॥ आवर्जयन् कलाचार्यं । छात्रांश्च विनयादिभिः ॥ श्रीजयो वासरैरल्पै-रप्यध्यैष्टाऽखिलाः कलाः ॥ २९ ॥ क्रमात्पाठयति छात्रान् । कलाचार्यनिदेशतः ॥ एवं जज्ञे च सर्वेषाम् । सोऽभीष्टः सुभगाग्रणीः ॥ ३० ॥ प्रास्पर्द्धत्तेन सिंहोऽथ । शिक्ष्यमाणोऽनिशं कलाः ॥ अल्पा अध्यैष्ट यद्विद्या । गुणभाग्यानुसारिणी ॥ ३१ ॥ विशालजयनामाऽत्र । धात्रीशस्त्रस्तशात्रवः ॥ छात्राणां कुरुते मासे । षष्ठे षष्ठे परीक्षणम् ॥ ३२ ॥

अन्यदावसरे प्राप्ते । तत्रोद्याने धराधिपः ॥ स्नेहात्पुत्रादिकांश्छात्रान् । परिचिक्षिपुरागमत् ॥ ३३ ॥ कलाचार्योऽपि भुपाऽग्रे । छात्रान् कृत्वा यथास्थिति ॥ न्यस्य तालतरोर्मूर्ध्नि । शिखिपिच्छं जगाविमान् ॥ ३४ ॥ किं किं पश्यत तेऽप्यूचू-स्तालपिच्छतरुव्रजान् ॥ पश्याम इति तत् श्रुत्वा । स च किंचिदाखिद्यत ॥ ३५ ॥ तन्निर्देशात्ततस्तेऽपि । शिखिपिच्छादि विव्यधुः ॥ न च केऽपि यथादिष्ट-पिच्छतंतून् धनुर्धराः ॥ ३६ ॥ ततोऽयं श्रीजयं साह । किं किं हे वत्स! वीक्षसे ॥ सोऽवादीत्पिच्छमेवैकं । वीक्षेऽमोदत तद्गुरुः ॥ ३७ ॥ अथ यावतिथं तन्तुं । विध्धुं पिच्छेऽदिशद्गुरुः ॥ इषुणा श्रीजयानंदो-ऽविध्यत्तावतिथं द्रुतम् ॥३९॥ असुक्तैः पाणिमुक्तैश्च । यंत्रमुक्तैस्तथाऽऽयुधैः॥ पर्यैक्षिष्ट नृपश्छात्रान् । पद्मपत्रच्छिदादिभिः ॥ ४० ॥ पद्मपत्रशते यावतिथं गुरुरविच्छिदत् ॥ चिच्छेद श्रीजयस्ताव-तिथं खड्गेन नाऽपरम् ॥ ४१ ॥ चक्रेण करमुक्तेन । सप्ततालांश्च सोऽच्छिदत् ॥ शक्त्या च गिरिशीर्षस्थां । शिलां दूरादचूर्णयत् ॥ ४२ ॥ ततस्तुरगयुद्धेन । योधयन्नजयद्भटान् ॥ नानाशस्त्रैर्महावीर्यो । युगपच्च

सहस्रशः ॥ ४३ ॥ ततोऽश्वं कारयन् धारा–गतिं पवनरंहसं ॥ विलग्य वटशाखायां । पद्भ्यां तमुदपाटयत् ॥ ४४ ॥ प्रपात्य गजयुद्धेन । वीरानाऽऽधोरणादिकान् ॥ लीलयोदक्षिपत्पद्भ्यां । श्रीजयः प्रतिदंतिनः ॥ ४५ ॥ ततो भूपादयः सर्वे । विस्मिता मुदिताश्च तं ॥ तुष्टुवुर्विविधं मौलीन् । धुन्वानाः सिंहमंतरा ॥ ४६ ॥ इत्यनन्यसमान् दृष्ट्वा । तस्य वर्यकलागुणान् ॥ कोऽयमित्यवनीनेता । चित्रात्पप्रच्छ पाठकम् ॥ ४७ ॥ स जगाद विदेशीयः । कोऽपि क्षत्रियपुंगवः ॥ सवन्धुर्मत्कलापाठं । कुरुते वेद्मि नाऽधिकम् ॥ ४८ ॥ ततः सर्वेषु तं ज्ञात्वा । निःसमानं कलागुणैः ॥ राज्यार्हं राजपुत्रं च । निश्चिक्ये लक्षणैर्नृपः ॥ ४९ ॥ सत्कृत्याऽऽदिश्य छात्राणा–मध्येतुं विविधाः कलाः ॥ प्रपूज्य च कलाचार्यं । नृपः प्राप स्वमंदिरम् ॥ ५० ॥

श्रीजयोऽथ गुरोस्तस्मा–द्गीतनाट्यादिका अपि ॥ द्वासप्ततिमपि प्राप । कला विश्वोत्तराः क्रमात् ॥ ५१ ॥ नैपुण्यात्पाठयंश्छात्रान् । प्रयासं दलयन् गुरोः ॥ प्रीतात्मा प्रीणयामास । समस्तं पुरमप्यसौ ॥ ५२ ॥ परीक्षायै धियोऽप्यस्य ॥ नृपोऽथेत्युदघोषयत् ॥ तस्मै ददेऽर्थितं देशं । यो मे तोलयति द्विपम् ॥ ५३ ॥ श्रीजयोऽथ नृपं स्माह । तोलयिष्याम्यहं गजं ॥ आरोपितगजां नावं । ततोऽमुञ्चत्सरोजले ॥५४॥ मज्जनावधिरेखाङ्कं । कृत्वैनामानयद्बहिः ॥ गजमुत्तार्य नीरे तां । पुनः प्रक्षिप्य तारकैः॥५५॥ रखावोध ब्रुडेयाव–त्तावल्लोष्ठैरवीभरत् ॥ बहिर्नीत्वा पुनस्तांस्तान् लोष्ठान् विज्ञैरतूतुलत् ॥ ५६ ॥ युग्मं ॥ तद्भारसंख्यया हस्तिभारं चाख्यत्स भूभुजे ॥ तं बुद्धिविस्मितो भूपो । बहुमानाद् गृहेऽनयत् ॥ ५७ ॥

स्नानादि कारयित्वाऽथ । भोजयित्वा महाशयं ॥ गुरुणा गौरवेणैनं । स्वसौधेऽतिष्ठिपन्नृपः ॥ ५८ ॥ अनिच्छंतमपि क्ष्माभृद्–ज्ञात्वा सर्वगुणोत्तरं ॥ साक्षाद्विशारदं दृष्ट्वा । कलासु निखिलास्विमम् ॥५९ ॥ रूपेणाऽतिश्रियोऽथाऽस्या—ऽनुरूपायाः कला-

गुणैः ॥ सुताया मणिमंजर्याः पाणिग्रहमकारयत् ॥ ६० ॥ देशमेकं ददौ युक्तं । पत्त्यश्वेभरथव्रजैः ॥ सभोगोपस्करप्रौढं । सौधं चास्मै नरेश्वरः ॥ ६१ ॥ सौधे तत्र लसन्नेष–स्तया पत्न्या नवोढया ॥ सर्वांगीणसुखान् भोगान् भुंजानः सेवते नृपम् ॥ ६२ ॥ जित्वाऽनेकनृपादेशान् । वशीकृत्य च भूपतीन ॥ स प्रापयन्नृपं स्वं च । प्रतिष्ठां परमां क्रमात् ॥ ६३ ॥

प्रयांतं नृपमन्येद्यु–र्जेतुं सूरनृपं द्विषं ॥ निषिध्य विनयेनैष । चचाल सह सेनया ॥६४॥ मत्वा सूरस्तमायांत–मभ्यागादभिमानतः॥ रणस्तत्सैन्ययोश्चाऽभू–ज्जगतीक्षोभकारकः॥६५॥भग्ने स्वकटके क्रुद्धः–स्वेनोत्तस्थे कुमारराट्॥ तथा च युयुधे वैरि–सेनाऽनेशद्यथाभितः ॥६६॥ युध्युत्तस्थे ततः सूर–[1]स्तयोश्चाभुद्रणो महान् ॥ वभूवुः शरमय्यश्च । भूव्योमहरितोऽखिलाः॥६७॥ चिच्छेदाऽथ कुमारेन्द्रः सप्तचापान् द्विषः क्रमात्॥ बभञ्ज च रथं वर्म–शीर्षाणि चाच्छिनच्छरैः॥६८॥ततोऽसौ खड्गमुद्यम्य । कुमारं प्रत्यधावत ॥ कुमारोऽपि स्वखड्गेन । तत्खड्गं खंडशो व्यधात् ॥ ६९ ॥ कुमारो मुद्गरेणैवं । मुद्गरं गदया गदां ॥ चूर्णीकृत्य द्विषं चक्रे । व्याकुलं विगताऽऽयुधम् ॥ ७० ॥ किमेभिरबलैः शस्त्रैः । प्रबलाः संति मे भुजाः ॥ इत्यागान्मल्लयुद्धेन । योद्धुं सूरोऽभिमानतः ॥ ७१ ॥ नीतिवेदी कुमारोऽपि । तथैव युयुधे चिरं ॥ तं मुष्ट्या हृदि चाहत्याऽ–पातयन्मूर्च्छितं भुवि ॥७२॥ बध्ध्वा निगडबंधेन । सज्जयित्वा च वारिणा ॥ तत्सैन्याऽभयदः पश्चा–द्गत्वा राज्ञे समार्पयत् ॥ ७३ ॥ दत्तदंडं च तं राजा । कुमारवचसाऽमुचत् ॥ रीतिर्ह्येषा कृपालूनां । प्रणतेषु हितैषिणाम् ॥ ७४ ॥ बालेनापि जितोऽस्मीति–वैराग्याद्गुरुसन्निधौ ॥ राजन्यस्तसुतः सूरः । प्राव्राजीच्छिवमाप च ॥ ७५ ॥ भ्रातृस्नेहवशात्तेन । दीयमाना अपि श्रियः ॥ सिंहस्त्वीर्ष्याभिमानाभ्या–मगृह्णंस्तं निषेवते ॥ ७६ ॥

[1] °श्चासीद् शराशरि

एवं नराः पुण्ययशाञ्चयन्त्यहो । अतर्कितोपस्थितभोगभाजनं ॥ भजंति च द्वेपिजयश्रिया समं । कलागुणानुत्तरभाग्यसंपदः ॥७७॥ इति श्रीतपागच्छाधिराजश्रीमुनिसुंदरसूरिविरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे जयश्रृङ्के हंसकाकनिदर्शनेन श्रीमदानंदराजदृष्टान्तेन द्वितीयव्रतपालनाऽपालनफलदर्शन—श्रीजयानन्दकुमारकलाग्रहणमणिमञ्जरीप्रथमपत्नीपरिणयनव्यावर्णननामा पञ्चमः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रन्थाग्रं १९५

## ॥ अथ षष्ठः सर्गः प्रारभ्यते ॥

श्रेयःश्रीवृषभस्तनोतु भगवान् गां प्राप्य यः केवला-वस्थायां समजीजनद् गुरुतरं तं कञ्चनैकं वृषम्॥ विश्वाधारकरः शिवाध्वपथिकान् संसारघोराऽटवी-पारं प्रापयतिस्म यश्चिरमहो भव्यानसंख्यानपि ॥१॥ अर्थोर्जितेन भाग्येन। गुणैर्वैरिजयैर्मुदं ॥ राज्यवृद्धिकरो भूपं। पौरांश्च श्रीजयोऽनयत्॥२॥ याति चैवं सुखात्काले। श्रीजयस्य समृद्धिभिः॥ खिद्यते सततं सिंहो। घूकवद्भानुभानुभिः॥३॥यतः-खलः खिद्यत एवान्य-ऋद्धिभिः सत्कृतोऽप्यलं ॥ पश्यन् शस्यश्रियः शुष्येत्। सिक्तोऽपि हि यवासकः॥४॥ततो देशांतरे नीत्वा। तं वियोजयितुं श्रिया ॥ इच्छन्मायामयोऽन्येद्यू-रहस्येवं जगाद सः ॥५॥ भ्रातः! स्मरसि भो देशे-ष्वाश्चर्यालोकहेतवे॥ [1]निर्गतौ स्वस्तदा नूनं। सहैवाऽऽवां निजात्पुरात् ॥६॥ तद्यावः कौतुकं यन्मे। विविधाश्चर्यदर्शने॥ विना देशांतरे भ्रान्ति। तन्नैकत्र न पूर्यते॥७॥प्राप्तौ तदाशयौ ह्यत्र। पितरश्चेद्विदन्ति नौ॥वालयंति तदा पश्चात्। कौतुकं

[1] दूरेषु निर्गमिष्यावः

तन्न पूर्यते॥८॥ नायासि सुखगृध्नुश्चे-द्यास्याम्येकाक्यहं तदा॥केवलं त्वद्वियोगेन। भावि दुःखमनुत्तरम्॥९॥प्राप्तं मदाशयैचैनं। प्रहिणोम्ये-कक्कं कथम्॥ध्यात्वैवं श्रीजयोऽवादीत्। प्रयास्यावः सहैव भोः ॥१०॥ ततः प्रस्थानसामग्रीं। रहसि श्रीजयोऽकरोत्॥ वासौकोद्वार-शाखायां। श्लोकमेकं लिलेख च॥११॥ तद्यथा-रत्वा जलाशयेष्वष्टौ। मासांश्चित्रेषु कौतुकात्॥ वर्षासु कुरुते हंसः। स्वपदे मानसे रतिम् ॥१२॥ वञ्चयित्वा परिवारं। पत्नीं च निशि सायुधः॥ निरगादथ सिंहेन। सहैव श्रीजयः पुरात्॥१३॥पुरग्रामा-करादींश्च। भ्राम्यन्तौ तौ यदृच्छया॥ विलोकेते महाबाहू। आश्चर्यादीन्यनेकशः ॥१४॥

इतश्च स्वपतिं प्रात-रदृष्ट्वा मणिमञ्जरी॥ विलक्षहृदयाऽप्राक्षी-द्दक्षा सा स्वपरिच्छदम्॥१५॥ सोऽप्यनाप्यैव तच्छुद्धिं। भूपायेदं न्यवेदयत्॥ अशुशुधन्नरैः सोऽपि। तं पुर्ग्रामवनादिषु॥ १६॥ अलाभेऽभूच्च शोकार्त्तः। तावत्तं मणिमञ्जरी॥ वीक्ष्य श्लोकं विभाव्याऽर्थं। भूपादीन्निपुणाऽभणत्॥ १७॥ देशेषु कौतुकाद् भ्रान्त्वा। वर्षास्वेष्यति मत्प्रियः॥ ततश्चित्ते धृतिं कृत्वा। तेऽस्थुः सर्वे यथास्थिति॥ १८॥

अथाऽरण्येऽन्यदा सिंह-श्रीजयौ प्रापतुः क्रमात्॥ सिंहश्चाऽऽख्यदधर्मेण। सहे कष्टमहं वने॥१९॥ त्वं तु धर्मपरः किं तत्सहसे श्रीजयोऽवदत्। पापिनस्ते सहे संगात्तत्संगो हि विपत्परः॥२०॥यतः-तेजोमयोऽपि पूज्योऽपि पापिना नीचधातुना अयसा संगतो वह्निः सहते घनताडनम् ॥२१॥ महतोऽपि कुसंसर्गा-न्महिमा हीयते किल॥कियन्नन्दति कर्पूर-गन्धो लशुनसङ्गतो॥२२॥ततः पापरतिः क्रोध-स्फुरदोष्ठपुटः स्फुटम्॥सिंहोऽवादीद्विवादो ना-वद्याप्येवं भृशायते॥२३॥अहं पापाच्छुभं वच्मि। त्वं तु धर्माद्दिशस्यदः॥ नाऽत्र स्थेयाः प्रमाणीस्युस्तेषां वाचो ह्यनेकधा॥२४॥किंतु द्रव्यं विना नौ यः। प्रदास्यत्यद्य भोजनं॥ प्रमाणं

तस्य पश्चोऽत्र पणस्तत्पूर्व एव तु ॥२५॥ आमेवं श्रीजयेनोक्ते। सिंहः प्रमुदितो जगौ ॥ अथ तावत्पुरो ग्रामे। यामि शक्तिं परीक्षितुम् ॥२६॥ त्वं तु किञ्चिद्विलम्बेन। भोक्तुं भ्रातरिहापतेः॥ मया सिद्ध्यति चेन्नैव। भोज्यं तच्चं प्रसाधयेः॥२७॥तस्मिन्मयाऽद्य सिद्धे तु। श्वः स्वां शक्तिं प्रदर्शयेः॥ इत्युक्त्वा श्रीजयं मुक्त्वा। द्रुतं सिंहः पुरोऽगमत् ॥२८॥ स [1]यान् भ्रान्त्या महारण्ये। पापीव नरकेऽपतत् ॥ नारकैरिव भिल्लैश्च। बद्धोऽलङ्कारलोभतः ॥२९॥

पल्लीशश्चंडसेनोऽथ। शतकूटगिरिप्रभुः ॥ अवस्कंदाय निर्यातो। नन्दिशालपुरं प्रति॥३०॥ भिल्लैः सिंहश्च तस्यार्पि। ते हि तत्कटकाग्रगाः ॥ ज्ञात्वा कोलाहलध्वन्या–युक्तिभिः श्रीजयोऽपि तत् ॥३१॥ सिंह स्नेहाद्दयालुत्वा–द्वीरो द्रुतमधावत ॥ मिलित्वाऽवक् भ्रातरं मे। लात्वा भिल्लाः क्व याथ रे ! ॥३२॥ तस्याप्यलङ्कृतौ लुब्धा। भिल्ला ववलिरे ततः॥ भटाग्रण्याः सहाऽनेन। युद्धेऽढौकन्त च द्रुतम् ॥३३॥ ते हतप्रहतास्तेन चक्रिरे बाणवर्षिणा ॥ दृष्ट्वैवं चण्डसेनोऽथ। क्रुधा योद्धुमढौकत ॥३४॥ तेन संधीरिता भिल्लाः शृंगनादैर्ददद्दिर ॥ उपास्थिपन्त युद्धाय। क्रुद्धाः सर्वेऽधिकं पुनः॥३५॥ दुर्वारैर्युगपद्घोरैः। समन्तात्प्रसरैः शरैः॥ ततोऽघ्नन् श्रीजयो। भिल्लान्। कालवत्तैर्व्यभाव्यत॥३६॥ [2]सभटैस्तमजय्यं द्राग्। मर्त्यं मत्वाऽद्भुतौजसं ॥ चण्डसेनः सभीरूचे। कस्त्वं किं हंसि मे भटान् ॥३७॥ सोऽप्यवादीद्भवद्भिर्यो। बद्धोऽस्त्यसाऽनुजोऽस्म्यहं ॥ मुक्त्वेमं यात निर्भीका। हतैः किं मे हवैरिभिः॥३८॥ व्याहार्षीचंडसेनोऽथ। गृहाण भ्रातरं निजं ॥ विमुञ्च रणसंरम्भं। प्रीतिरस्त्वावयोश्चिरम्॥३९॥ ओमित्युक्त्वा रणस्तेन। मुमुचे विपुलौजसा॥ पल्लीशेनाऽपि सिंहस्त–द्गुणविस्मितचेतसा ॥४०॥

---

[1] गच्छन्  [2] स्वनाम्ना°

पल्लीशोऽथ स्वकार्यायाऽ-भ्यर्थ्य तौ विनयाद्बहु ॥ निजपल्लीमनेनायी—द्ग्रामे कारितभोजनौ ॥४१॥ तत्र तस्योपरोधेन। तिष्ठतः सुखिनाविमौ ॥ श्रीजयाच्छिक्षते काश्चि-द्धनुर्विद्यां च भिल्लराट्॥४२॥ मृगयाचौर्यधाट्यादौ। सिंहो यात्यमुना सह॥ कुरुते नीचकर्माणि। श्रीजयस्तु कदापि न॥४३॥

अथ सहस्रकूटाद्रौ। महासेनोऽस्ति पल्लीराट् ॥ चण्डसेनस्य सह तेन। वैरमस्ति भृशं तदा॥४४॥ चंडसेनोऽन्यदा सिंह—युक्तस्तमभिषेणयन्॥ श्रीजयं व्याजहारैहि। सहायो भव मे युधि॥४५॥स्वार्थसिद्ध्यै स्थापितोऽसि। पल्ल्यामस्यां मयोत्तम!॥ प्रार्थना-भङ्गभीरुस्त—त्प्रपेदे श्रीजयो वचः॥४६॥ ततः सर्वाभिसारेण। सोऽभ्यमित्रीयतामगात्॥ गिरिं सहस्रकूटाख्यं शृङ्गध्वानैः प्रपूरयन् ॥४७॥ महासेनोऽथ तं ज्ञात्वा। प्राप्तं भिल्लचमूवृतः॥ सद्योऽपि निर्ययौ पल्ल्या भटंमन्यः समन्युधीः॥४८॥ वसानाश्चित्रकव्याघ्र—गजैणादिपशुत्वचः॥ नानाविधलताकेकि—पिच्छवेष्टितमौलयः॥४९॥ नाहलाः काहलानादै—र्मिलिताः कलिताः क्रुधा॥ वाढं डुढौ-किरे योद्धुं। सनद्धा विविधायुधैः॥५०॥ गर्वाद्गर्जारवैस्तेषां। भुजास्फोटैः कटूक्तिभिः॥ वाद्यनादैर्धनुर्ध्वानै—र्जगर्जुर्गिरयोऽभितः ॥५१॥स्वामिभक्ता मदोन्मत्ताः। प्लवमानाः प्लवङ्गवत्॥ क्रोधाद्युयुधिरे योधा। आहूयाऽऽहूय विद्विषः॥५२॥कुंतैः केचिच्छरैरन्ये। शस्त्रैः खड्गादिभिः परे॥ जेजीयांचक्रिरे शत्रू—नुत्प्लुत्योत्प्लुत्य सर्वतः॥५३॥ एवं घोरे रणे जाते। महासेनभटैः स्फुटं॥ चण्डसेनबले भग्ने। मदकोलाहलः कृतः॥५४॥ समीक्ष्य स्वचमूं भग्नां। सिंहो योद्धुमुपास्थित॥ धैर्यात्संधीरयन् भिल्लान्। ववर्ष च शिलीमुखान् ॥५५॥ तेन धीरेण भिल्लौघ—सहितेनेषुवर्षणैः॥उपद्रुता द्विपो नेशू—रजांसीव पयोमुचा॥५६॥दृष्ट्वा स्वकटकं भग्नं। महासेनो भटो-त्कटः॥ प्रचंडोद्दण्डदोर्दण्ड-खंडिताऽखण्डशात्रवः॥५७॥ सिंहं निहन्तुमुत्तस्थौ। द्रुतं शरभवद्युधि॥ वर्षन् शिलीमुखांस्तर्पा-दिवाऽसृक्

पिबतो द्विपाम् ॥५८॥ युग्मं ॥ सिंहस्य सोऽच्छिदद्बाणान् । काणान् भिल्लान् शरैर्व्यधात् ॥ हरन् वीरगणप्राणा—न्नत्रणांस्त्रासयन् रिपून् ॥ ५९ ॥ सिंहं स द्राग्धनुश्छित्वा । भित्त्वा च कवचं शरैः ॥ व्याकुलीकृत्य बध्ध्वा च । स्वसैन्येऽनीनयद्भटैः ॥ ६० ॥ चंडसेनस्तथा दृष्ट्वा । सन्नद्धो योद्धुमुद्यतः ॥ द्रागाह्वास्त महासेनं । योधाग्रण्यं क्रुधोद्धुरः ॥६१॥ उभावपि ततो धीरौ । सिंधुराविव दुर्धरौ ॥ स्पर्द्धायोध्धुं ढुढौकाते । दधानौ मदमत्तताम् ॥६२॥ गर्जन्तौ गर्जयन्तौ च । गर्वाद्गिरिगुहागणं ॥ शराणां घोरणीस्तिर्यग् । धीरौ धाराधराविव ॥६३॥ वर्षन्तौ भीषणं रोषा—द्विदधाते चिरं रणं ॥ घोरं युयुधिरे वीराः परेऽप्युभयपक्षगाः ॥६४॥ युग्मं ॥ महासेनो महौजस्वी । चंडसेनमथाऽकरोत् ॥ विधुरं तद्धनुश्छेद—मर्मभेदादिकृच्छरैः॥६५॥ अभञ्जि तस्य सेनाऽपि । महासेनस सैनिकैः ॥ शरकुन्तकृपाणादि—शस्त्रौघैर्दारुणे रणे ॥६६॥ आदायान्यद्धनुर्धैर्या—च्चण्डसेनोऽथ सायकैः॥ महासेनस्य चिच्छेद ॥ चापं पापमिव व्रती ॥ ६७ ॥ महासेनः शिलाखण्डे—नैतं हंतिस्म मूर्द्धनि ॥ तद्घातव्यथया चण्ड—सेनोऽपतच्च मूर्च्छितः ॥६८॥

महासेनश्च तं याव—द्बद्धुमेति मुदोन्मदः ॥ कुतोऽप्यापत्य तं ताव—दाह्वास्त श्रीजयो रयात् ॥६९॥ महासेनोऽप्यमर्षेण । चापमास्फाल्य कोपतः ॥ सह तेन महःशाली । योद्धुं क्रोधादधावत ॥७०॥ श्रीजयस्तमभाषिष्ट । नाहं हन्मि निरागसं ॥ भिल्लं विभिन्न च क्षत्रं । कुलं येवं कलङ्क्स्यते ॥७१॥ भ्रातृवन्धापराधेऽपि । कियत्कालमुपेक्षितं ॥ हनिष्याम्यधुना तु त्वां । नो चेत्कुरु ममोदितम् ॥७२॥ सन्धेहि चण्डसेनेन । सिंहं मुञ्च च मेऽग्रजं ॥ पल्लीराज्यं चिरं भुङ्क्ष्व । राजन् ! निःशंकमानसः॥७३॥ महासेनोऽप्यगग् मानी । क्षत्रत्वं ज्ञास्यते युधि ॥ को मृगेण हरेः सन्धिः। कः सिंहान्मोचयेन्मृगम् ॥७४॥ एवं नैवोद्विजे युद्धा—द्वीर ! युध्यस्व किं गिरा ॥ फलेन स्तुवते सन्तो । न गिरा हि निजान् गुणान् ॥७५॥ पादाक्रान्तैरिव व्यालः । फूत्कारादिव हव्यभुक् ॥

नीचाह्वानादिवैभारिः। श्रीजयोऽदीप्यत क्रुधा ॥७६ स्पर्द्धोद्धुरमयुध्येतां । ततो द्वावपि तौ भटौ ॥ महोत्साहौ महौजस्कौ । महामानौ
महायुधौ ॥७७॥ द्वयोरपि भटाग्रण्यो-स्तयोर्युद्धे शराशरि॥ भीरभूत्सर्ववीराणां । सुराणामपि पश्यताम् ॥७८॥तदा सन्नह्य सर्वेऽपि।
बलयोरुभयोरपि ॥ स्वामिप्रोत्साहिताः शूराः ।क्रूरा योद्धुं डुढौकिरे॥७९॥श्रीजयो बाणजालेन। सर्वदिक्षु प्रसारिणा सर्वतोऽपातयद्वीरान् ।
वज्रेणेव हरिर्गिरीन् ॥८०॥ न रोद्धुं वा न सोढुं वा। तद्बाणान् कोऽप्यशाशकीत् ॥ त्यक्त्वाऽऽहवं च हेतीश्च । केऽप्यस्थुर्निर्भयाः
परम् ॥८१॥ युध्यमानो न कोऽप्यासी-त्महासेनबले भटः ॥ अङ्कितो यो न तद्बाणै--र्न हतः कृपया यदि ॥ ८२ ॥ ततो भ-
ग्नं बलं सर्वं। स्वामालोक्याऽधिकक्रुधा ॥ सर्वशक्त्याऽमुचद्बाणान् । महासेनो निरन्तरान्॥८३॥ श्रीजयो लीलयाऽप्येतां-श्चिच्छेदा-
र्द्धपथे शरैः ॥ धनुर्वर्मादि च छित्वा । व्याकुलीकृतवानिमम्॥८४॥ धैर्यात्ततोऽसिमुद्यम्य। वीरस्तं सोऽभ्यधावत ॥ श्रीजयः स्वासि-
नाऽच्छेत्सी-त्तस्याऽसिमपि खंडशः॥८५॥ निरायुधं च तं दृष्ट्वा । मुक्त्वाऽसिं श्रीजयो हृदि॥ मुष्ट्याऽऽहत्य भ्रमन्नेत्रं। मूर्च्छालं भु-
व्यपातयत् ॥८६॥ बन्धयित्वा स्वभिल्लैस्तं । प्रगुणीकृत्य चांबुनः॥ पानेन बहुमान्याय । चण्डसेनाय चार्ऽपयत् ॥८७॥ महासेनस्य
सैन्यान् स ।नश्यतः समधीरयत् ॥ सिंहमानाय्य तैर्बन्धां-श्छित्वा प्रागुणयत्पुनः॥८८॥ अहो जागरितं भाग्यै-रहो तुष्टाश्च देवताः ॥
यन्नाथः प्रापिपेऽस्माभिः । प्राणा नः क्वाऽन्यथाऽधुना ॥८९॥ इत्यादि श्रीजयं स्तुत्वा । महासेनं प्रगृह्य च ॥ निजीकृत्य च तत्पल्लीं ।
तस्यां न्यस्य च कञ्चन॥९०॥श्रीजयं सेवमानोऽथ । सासिंहः सह सेनया॥चण्डसेनो निजां पल्ली-मागमत्सोत्सवं मुदा॥९१॥त्रिभिर्विशेषकं॥
चंडसेनस्य सेवां च । प्रपन्नं दण्डदायिनं ॥अमूमुचत्महासेनं । श्रीजयो नतवत्सलः ॥९२॥ तदादि चण्डसेनोऽथ । राज्यजीवितदायिनं॥
मन्यमानः कृतज्ञत्वात् । श्रीजयं स्वप्रभूयति ॥९३ ॥ दध्यौ सिंहस्तु धिग्मां यं । श्रीजयो द्विरमोचयत् ॥ बन्धतोऽपि प्रतिस्पर्द्धि-कृतो

मोक्षोऽतिदुःखकृत् ॥९४॥ मत्वैवं तस्य वैलक्ष्यं । हर्तुं तत् श्रीजयोऽवदत् ॥ मा विषादं कृथा बन्धो ! । स्वस्मिन् पराभवं स्मरन् ॥९५॥ यतः–जयः पराजयो वा । यद्रणे कालाद्यपेक्षया॥जयं पराजयं चाऽपि युद्धे योधै स्तु चाऽश्नुते॥९६॥गहने यद्यपि क्वाऽपि हरिः फालच्युतो भवेत् । तथापि दलयत्येव कुम्भानुन्मत्तहस्तिनाम्॥९७॥ इत्यादि श्रीजयेनोक्तं । तस्येर्ष्यामेव निर्ममे॥ असाध्ये ह्यामये जायुः । प्रायः स्याद्देपहेतवे ॥९८॥ श्रीजयो निभृतं तिष्ठ-त्येवमद्भुतकार्यपि॥ नाऽसाध्येऽपि कृते कार्ये । सतां हि स्मयविस्मयौ ॥ ९९ अथवानुध्धुरः कार्ये । महत्यपि कृते महान् ॥ पीताब्धिरपि पीताब्धिः । प्रयत्नाल्लक्ष्यतेऽपि खे ॥ १०० ॥ द्विषति प्राणदानोप–कारिणेऽपि खलाग्रणीः ॥ तस्मै द्रुह्यति सिंहस्तु । नात्मीयो हि खलोऽग्निवत् ॥१॥ यियासन्नपि स्वदेशे । क्वाऽपि म्लेच्छेष्वरक्तितः ॥ चण्डसेनस्य दाक्षिण्या–देवाऽस्थात् श्रीजयोऽत्र तु ॥ २ ॥

कियत्यथ गते काले–ऽन्यदाकस्मिकशूलतः ॥ परासुश्चण्डसेनोऽभू–दीदृशी हि भवे स्थितिः ॥३॥ ततस्तस्याऽनपत्यत्वान्मत्वार्हे विक्रमादिभिः ॥ भिल्लास्तं प्रार्थयन्ते स्म । पल्लीराज्योररीकृते॥४॥स तु नैषीत् कुराज्यं त–त्ततोऽन्यार्हाविभावनात् ॥ सिंहसारं तदिच्छन्तं । भिल्लराज्ये न्यवीविशत् ॥५॥ ततो गर्वं प्रमोदं च । धारयन् मनसि स्फुटं ॥ असावऽपालयत्पल्लीं । निःशंकः क्रूरकर्मकृत् ॥६॥ राज्याधारममुं मुञ्च–न्न दुष्यामीति चिन्तयन् ॥ देशान्तरे स्वयियासां । सोऽन्येद्युः प्राह तत्पुरः॥७॥नूनं देशांतरे यातो । ज्ञातः पित्रादिभिः क्वचित् ॥ आकार्योऽवसरे सौव–राज्येऽसौ स्थापयिष्यते॥८॥विमृश्येत्यलपत् सिंहो । दर्शयन् प्रेम मायया ॥ त्वत्स्नेहाच्यक्तपित्रादि–र्वियोगं ते कथं सहे ॥९॥ ततोऽस्थात् श्रीजयः स्निह्यन् । कियतो वासरानृजुः ॥ ऊचे सिंहोऽन्यदा गर्वा–दधर्माद्राज्यमाप्नुवम् ॥ १० ॥ हसित्वा श्रीजयोऽवादी–द्गर्वितोऽसीयताऽप्यहो ॥ अथवा खलखण्डेऽपि । लब्धे रङ्कः प्रमोदते ॥११॥

ततो जातोग्रकोपोऽपि । सिंहोऽभूत्संवृताकृतिः ॥ आकारं संवृणोत्योतु–र्जिघत्सुर्मूषकं न किम् ॥ १२ ॥

सिंहः कृत्वा सितं प्रेम–दर्शनात्तमरञ्जयत् ॥ कियद्घस्रानतिक्रम्या–न्येद्युश्च निजगाद तम् ॥१३॥ भ्रातरत्र गिरौ क्रोशां–तरे कूटेऽस्ति देवता ॥ पल्लीशैरर्चनीयोरु–प्रभावा गिरिमालिनी ॥ १४ ॥ अद्य कृष्णचतुर्दश्यां । सिसाधयिपुरस्म्यहं ॥ मन्त्रमेकं पुनस्तस्या–स्तद्भवोत्तरसाधकः ॥ १५ ॥ ओमेवं श्रीजयेनोक्ते । तेन खड्गभृता समं ॥ सपूजोपस्करः सिंहः । सायं देवीगृहेऽगमत् ॥ १६ ॥ देवीं सोऽभ्यर्च्य निश्चयस्या । दंभान्मंत्रं पुरोऽजपत् ॥ श्रीजयः खड्गमुद्यम्या–ऽभवत्तूत्तरसाधकः ॥ १७ ॥ निःशंकं सात्विको भ्राम्यन् । परितो देवतालयं ॥ त्रासयन् प्रेतभूतादीन्युपसर्गान्निवारयन् ॥१८॥ युग्मं ॥ निशीथानन्तरं सिंह–स्त्यक्त्वा ध्यानं जगाद तं ॥ मन्त्रो यामद्वयेनाऽपि । सिद्धो मे त्वत्प्रभावतः ॥ १९ ॥ अतः श्रान्तोऽधुनाऽशङ्कं । स्वापिह्येपोऽसि रक्षकः ॥ मंत्रजागरिकां जाग–र्म्यत्र मंत्रे ह्ययं विधिः ॥२०॥ तदाशयमजानानः । स्वसदृक्स्नेहचिन्तया ॥ आर्जवात् श्रीजयोऽस्वाप्सी–न्निदद्रौ च द्रुतं ततः ॥ २१ ॥ मन्वानोऽवसरं सिंहः । क्रूरः प्राप्य छलं ततः ॥ लब्धलक्षो द्रुतं शस्त्र्या । नेत्रे तस्योदपाटयत् ॥ २२ ॥ दुष्ट! निन्दसि मे पक्षं । राज्यं चाऽपि मदोद्धुरः॥ न दत्से हारिते नेत्रे । गृहीते तद्बलान्मया॥२३॥ अन्धो धर्मफलं भुङ्क्ष्व । धर्मादेव म्रियस्व वा ॥ इत्युक्त्वासावगात्पल्ल्यां । प्रस्थान इव दुर्गतेः ॥ २४ ॥

पुरा मंत्रिभवे साधो–र्नेत्रे किं ते गते इति ॥ तेनाऽऽक्रोशेन यत्पापं । कर्मार्ज्यज्ञानतः क्रुधा ॥२५॥ क्षपितं तत्तदा निंदा–गर्हणालोचनादिभिः ॥ लेशस्त्ववाशिषत्तस्य । स तस्याऽदात्तदा फलम् ॥ २६ ॥ ततस्तीव्रव्यथाक्रान्तः । श्रीजयो ध्यातवांस्तदा ॥ धिग्मां यद् व्यश्वसं ह्येवं । खलेऽस्मिन् शास्त्रवेद्यपि ॥ २७ ॥

जीर्णे भोजनमात्रेयः । कपिलः प्राणिनां दया ॥ बृहस्पतिरविश्वासः । पञ्चालः स्त्रीषु मार्दवम् ॥ २८ ॥
भोज्यमात्रप्रदानेऽपि । श्वानः स्निह्यति भर्त्तरि ॥ सिंहो जीवितदानेऽपि । मयि त्वेवमवर्त्तत ॥ २९ ॥ यद्वा ममैव दोषोऽयं ।
निजप्राक्कृतकर्मणः ॥ नाऽकृतं भुज्यते कर्म । कृतं भुज्यते एव हि ॥३०॥ क्षेत्रकालसहायादि-सामग्रीं हि शुभाशुभं ॥ कर्म स्वफलदानाय ।
संयोजयति देहिनम् ॥ ३१ ॥ क्षेत्रकालादिसामग्र्या । पक्वं कर्म शुभाशुभं ॥ भुञ्जानस्त्वं क्षणमपि । मा प्राणिन्नक्षमां कुरु
॥ ३२ ॥ उक्तं यतः—पुनरपि सहनीयो दुःखपाकस्त्वयाऽयं । न खलु भवति नाशः कर्मणां सञ्चितानां ॥ इति
सह गणयित्वा यद्यदायाति सम्यक् । सदसदिति विवेकोऽन्यत्र भूयः कुतस्ते ॥ ३३ ॥ आपद्यपि मया धार्यं । धैर्यं
चिन्हं हि तत्सतां ॥ कम्पन्ते वायुना वृक्षा । न तु शैला मनागपि ॥३४॥ क्षय्यं कर्म च धर्मेण । तृणकूटमिवाऽग्निना ॥ सद्ध्यानेनैव
साध्योऽयं । दधे हृदि तदेव तत् ॥ ३५ ॥ सम्यक्त्वं निश्चलं मेऽस्ति । मनोवाञ्छितदायकं ॥ तदेवास्त्वधुना त्राण[1]मापज्ज्वर
रसायनम् ॥ ३६ ॥ सोढव्या च व्यथा कर्म-द्विपज्जयचमूनिभा ॥ इति ध्यात्वाऽथ सत्त्वात्स । कायोत्सर्गमधारयत् ॥ ३७ ॥
परमेष्ठिमहामन्त्रं । ध्यायन्नेकाग्रमानसः ॥ शत्रौ मित्रेऽदधात्साम्यं । समयज्ञा हि कोविदाः ॥ ३८ ॥

तस्य सम्यक्त्वसद्ध्यान-प्रभावात्कंपितासना ॥ जगाद द्रुतमागत्य । देवी सा गिरिमालिनी ॥३९॥ दुरवस्थामिमां हर्त्तुं ।
भद्र ! सत्पुरुषस्य ते ॥ प्रादुरासमहं देवी । स्वस्य पूजां तु कामये ॥४०॥ [2]शुनैकेन च मे पूजां । त्वं प्रपद्यस्व यत्तव ॥ अक्षिणी
प्रगुणीकुर्वे । पूर्णोत्सर्गोऽथ सोऽवदत् ॥४१॥ अक्षियांतु मे प्राणा । जातु हन्मि तु नाङ्गिनं ॥ बलिभोज्यं प्रणामं च । सा ययाचे

१ मापद्वद २ पशुनैकेन

ततः क्रमात् ॥ ४२ ॥ सम्यक्त्वम्लानिभीरुस्त–त्कुर्वे मिथ्यादृशे न ते ॥ गदिते श्रीजयेनैवं । क्रोधाविष्टा जजल्प सा ॥४३॥ यदि प्रणाममात्रं मे । न कर्त्ताऽसि सुदुर्मते ! ॥ तदा मदीयावज्ञायाः । फलं पश्यदुराशय ! ॥४४॥

विकुर्वितवती साऽथ । वातमुद्धुरफूत्कृतिं ॥ पतच्छैलशिलाघोर–घोषभापितदैवतम् ॥४५॥ तेनोत्पाट्य नभस्येप । भ्रामितोऽपि महाव्यथः॥ अक्षुब्धहृदयः पाणि–पुटे दध्रे तया पतन् ॥४६॥ साथोऽवादीन्महाभाग ! । तुष्टाऽहं तव सत्त्वतः॥ गृहाण चौषधीमस्या रसात्प्रगुणयाऽक्षिणी ॥४७॥ तद्दत्तामौषधीं लात्वा । घर्षयित्वा च वारिणा ॥ नेत्रयुग्मे प्रचिक्षेप । क्षिप्रं मुदितमानसः ॥ ४८ ॥ दिव्यनेत्रो बभूवैषो–ऽपश्यद्दीप्रां सुरीं पुरः ॥ मणिमन्त्रौषधीनां हि । महिमा वचनातिगः ॥ ४९ ॥

देव्यथोवाच रक्षार्थं । यस्यैवं क्लिश्यसेऽनिशं ॥ सम्यक्त्वं किं नु तद्ब्रूहि । श्रीजयोऽथ मुदाऽवदत् ॥५०॥ तत्त्वरूपं तु सम्यक्त्वं । तत्त्वं देवादयस्त्रयः॥ इत्यादि गदिते तेन । श्राद्धधर्मे सविस्तरम्॥५१॥ श्रवणात् श्राद्धधर्मस्य । पटुसंस्कारजागरात् ॥ अवधिज्ञानविज्ञात-प्राग्भवा सा सुरी जगौ ॥५२॥ प्राग्भवे श्राविकाऽभूवं । सम्यक्त्वव्रतधारिणी ॥ पुत्रमान्द्येऽन्यदाऽप्राक्षं । लिङ्गिन तत्प्रतिक्रियाम् ॥ ५३ ॥ परिव्राट् सोऽपि भूतादि–दोषमुक्त्वा मदर्थितः ॥ मन्त्रचूर्णादिभिर्भाग्य–वशेन तमसज्जयत् ॥५४॥ ततः प्रीत्याऽर्थितां भिक्षां । तस्मै नित्यं ददाम्यहं ॥ सोऽपि स्वयं धर्ममाख्याति । शौचमूलं यदा तदा ॥५५॥ अस्य शौचमयो धर्मो । जैनो मलमयः पुनः ॥ सत्यः कोऽत्रेत्याभाग्येनाऽकार्षं संदेहमन्यदा ॥ ५६ ॥ एवं शंकातिचाराद्यै–स्तदाऽनालोचितैर्गुरोः ॥ चिरं विराध्य सम्यक्त्वं । देव्यहं गिरिमालिनी ॥५७॥ बहुदेवीपरीवारा । महर्द्धिर्गिरिनायिका ॥ जाता मिथ्यादृशां मौलिः । क्रूरकर्मविधायिनी ॥ ५८ ॥ त्वद्गिरा त्वधुना मेऽभू–त्सम्यक्त्वेन समं [1]स्मृतिः ॥ मतिश्रुतावधीनां द्राक् । तदज्ञाननिवृत्तितः ॥ ५९ ॥

१ लाभः

ततः सम्यग् निजप्राच्य–भववृत्तनिवेदनात् ॥ त्वदायत्तं विधामि स्वं। शिक्षया ते[1] कृतार्थितम् ॥६०॥ [2]त्वत्साक्ष्यं ते गुरोः पार्श्वे। बुद्धा [3]सम्यक्त्वमग्रतः ॥ अतः परं करिष्यामि। न हिंसादि कदाचन ॥६१॥ [4]तथा प्राक्कृतहिंसोत्थं । कथं पापं क्षिपाम्यहं ॥ कुमारो[5]ऽवग्थो देवि !। कुर्वेवं निजशुद्धिकृत् ॥६२॥ अर्हच्चैत्ये[6]ऽथो कुर्या। नानार्चादिप्रभावनाः ॥ संघे च धर्मसाहाय्यं। दुरंतदुरितापहम् ॥६३॥ ओमित्युक्त्वाऽवददेवी। क्व त्वां मुञ्चाम्ययं जगौ ॥ धन्याऽसि त्वं प्रबुद्धा य–न्मुञ्च हेमपुरे तु माम् ॥ ६४ ॥

साथ धर्मगुरोस्तस्यौ–पधीं विघ्नापहारिणीं ॥ सर्वांगीणमलंकारं। दिव्यनेपथ्यमप्यदात् ॥ ६५ ॥ औषधीद्वयसंयुक्तं। प्रातरुत्पाट्य साऽमुचत् ॥ इमं हेमपुरोद्याने। प्रणम्य च तिरोदधौ ॥ ६६ ॥ स प्राविक्षत्पुरस्यांत–र्दिव्यनेपथ्यमंडनः ॥ मोहयन् जनतां सर्वां। श्रियं तस्य विलोकयन् ॥६७॥ अद्राक्षीद् द्यूतपट्टं चो–पविष्टस्तत्र कौतुकात् ॥ भूषणं स पणं कृत्वा। रेमे राजसुतादिभिः ॥ ६८ ॥ अजैषीद्दशभिर्दायै–र्दशलक्षीमहारयन् ॥ सर्वस्वाऽपहृतेर्भीत्या। दिदिवुर्नाग्रतस्तु ते ॥ ६९ ॥ सोऽथार्हद्गुरुगीतानि। गान्धर्वेभ्योऽशृणोत्ततः ॥ लीलया दशलक्षीं तां। याचकेभ्योऽददात्पुनः ॥ ७० ॥

अथोदारचरित्रं तं। श्रुत्वा हेमप्रभो नृपः ॥ आकारयत्स्वपार्श्वे सो–ऽप्यागमत्तत्र साहसी ॥ ७१ ॥ अद्भुताकारलावण्यं। दिव्यालंकारवाससं ॥ युवप्रष्टमिमं सभ्याः। समीक्ष्या[7]ऽचिन्तयंश्च ते ॥७२॥ यद्येष दस्रः [8]किमथाऽद्वितीयो। यदि स्मरः किं न हि

१ यत्कृतार्थय २ त्वत्साक्षि ३ सम्यक्त्वमादिदि तथा हिंसानिषेधं च निरागस्त्रसदेहिनम्। ४ दिश ५°ऽवग् न देवानां तपो भवति शुद्धिकृत् ६°पु तत्कुर्यात् ७ स्यौहिपत्ताखिलाः ८ किमिहा.

मीनकेतुः ॥ सुधाकरश्चेत्किमलाञ्छनस्ततः। प्रभापतिश्चेत्किमतापकारी ॥७३॥ ऊर्व्येव मूर्वी यदि मानवोऽयं। वृंदारकश्चेत्प्रणुमस्ततो द्यां ॥ चेन्नागलोकं जनुषा पुनाति। बभूव नीचोऽपि तदा स उच्चः ॥७४॥ कुमारोऽथाऽनमद्भूपं। सोऽप्यालिङ्ग्य सविस्मयः ॥ अर्द्धासनोपवेशाय। न्यमन्त्रयत तं मुदा ॥७५॥ विनयेन कुमारोऽथ। भूपाऽग्रे नीचमासनं ॥ अध्यासीनो नृपेणोक्तः। कच्चित्कुशलवानसि ! ॥७६॥ सोऽप्यवादीन्महाराज ! । ममाऽद्य सफलं जनुः ॥ सफले लोचने चाऽपि। यत्त्वं नयनगोचरः ॥७७॥ यतः–
**तीर्थानां प्रथमं तीर्थं। भूपतिर्नयपावनः॥** [1]प्रणतो यश्च तत्कालं। दत्तेऽभीष्टाऽद्भुतश्रियः॥७८॥राजाऽवादीन्महाभाग! । दिव्या काचित्तवाकृतिः ॥ विनयाद्या गुणाश्चाऽपि। मिथः सुभगयन्त्यहो ॥७९॥ आदेया हि विनाकारं। सन्तोऽपि न तथा गुणाः ॥ पेयं शुच्यपि नो नीरं। विषमस्थानसंगतम् ॥८०॥ नवैव मूर्त्तिस्तव काऽपि धात्रा। लावण्यपीयूषसरस्यकारि॥ मज्जंति यस्यां जगदंबकानि। विराममिच्छन्ति न चैकदाऽपि॥८१॥ कुमारोऽवक् प्रभो! सौम्य-दृशा वः सुभगोऽभवं॥ चन्द्रश्चन्द्रिकया किं न। प्रापयेत्कुमुदश्रियम् ॥ ८२ ॥ एवं सप्रीतिवार्त्ताभिः। कियद्वेलाव्यतिक्रमे ॥ पपाठाऽवसरावेदी। तत्र मङ्गलपाठकः ॥ ८३ ॥

क्षमाभृतां मौलिविलासिपादः। सृजन् दिशः सौम्रमहःप्रदीप्राः ॥ धत्ते नृप द्वेपितमोऽपहारी। मध्याह्नभानुस्त्वामिव प्रतापम् ॥८४॥ ततो मध्याह्नकृत्याय। विसृज्य नृपतिः सभां ॥ चक्रे स्नानादिकं सत्रा। कुमारेण यथाविधि ॥ ८५॥ भुक्त्वा तल्पगतो राजा। विष्टरासीनमाह तं ॥ कारणेनाऽत्र येन त्व-माहूतो वत्स! तत् शृणु ॥८६॥ संति सौभाग्यशालिन्यो। राज्यः पंचशतानि मे॥ [1]ललिता [2]विमला [3]लीलावती [4]केलिकलादयः॥८७॥तासां पुत्राः शतं संति। भानु[1]र्भानुधर[2]स्तथा। भानुवीरः

१ दर्शनादपि योऽत्राऽपि

¹सुभानुश्च॰ । वरदत्त॰सदत्तकौ॰ ॥८८॥ सुषेणो॰ रवितेजाश्च॰ । सुभीम॰सुमुखादयः¹॰ ॥ तेषामुपरि चैकैव । पुत्री सौभाग्यमञ्जरी ॥८९॥ ललितापट्टराज्ञीभू–र्दिव्यरूपा धियो निधिः ॥ चतुःषष्ठिकलाभिज्ञा । सर्वाङ्गीणगुणोत्तरा ॥९०॥ लावण्यैकखनिर्विश्व–हृदयाह्लादिनी सदा ॥ चित्तविश्रामभूरस्ति । मदादीनां प्रियंवदा ॥९१॥ सा वाञ्छति वरं दान–युद्धवीरमथैदृशं ॥ प्राप्तुकामस्तमारात्स । ¹शुभदां कुलदेवताम् ॥ ९२ ॥ उपवासत्रयब्रह्म–ध्यानमौनजपादिभिः ॥ संतुष्टा सा तृतीयस्यां । निशि स्वप्ने जगाद माम् ॥९३॥ युग्मं॥ युवराजगृहद्वारा–सन्ने यो द्यूतपट्टके ॥ दिव्यालंकारनेपथ्यः । खड्गभृत्सुभगाकृतिः ॥९४॥ दशलक्षीं जयत्याशु । दत्तेऽर्थिभ्यश्च लीलया॥ पतिः सौभाग्यमञ्जर्याः । स भावी भुवनोत्तरः ॥९५॥ युग्मं ॥ मुदाऽथाऽहं प्रगेऽभ्यर्च्य । देवीं पारणकं व्यधां ॥ तदादि द्यूतपट्टेऽक्षैर्देव्ये चाङ्गजादिभिः ॥९६॥ पुमानीदृग् यदायाति । निवेद्यो मे द्रुतं तदा ॥ इत्युक्त्वा प्रत्यहं स्थास्नून् । पदातींस्तत्र चाऽमुचम् ॥ ९७ ॥ निवेदिते च तैरद्य । द्राक् त्वामाचीकरं मुदा ॥ उपयच्छस्व मे पुत्रीं । स्वानुरूपगुणां ततः ॥ ९८ ॥

व्याजहार कुमारोऽथ । राजन् ! दत्से कथं सुतां ॥ गुणान् वंशादि चाऽज्ञात्वा । मह्यं यच्छास्त्रवागियम् ॥९९॥ कुलं शीलं वपुर्विद्या ।वयो वित्तं सनाथता॥वरे सप्त गुणा मृग्या–स्ततो भाग्यवशा कनी॥२००॥ राजाऽजल्पत्तवाकार–विवेकाद्यैः सुरीगिरा ॥ ज्ञातमेव कुलादीति । प्रार्थनां मा कृथा वृथा ॥२०१॥ जोषं स्थिते कुमारेऽथ । नृपो ज्योतिषिकार्पिते ॥ सुलग्नेऽचीकरत्तेन । तस्याः पाणिग्रहोत्सवम् ॥२०२॥ अदात्तस्मै पुरग्राम–पत्त्यश्वरथदन्तिनः ॥ दासान् दासीस्तथा सर्व–भोगाङ्गोपस्करं मुदा ॥२०३॥ नृपदत्ते ततः सौधे । सार्द्धं पत्न्या नवोढया ॥ कुमारोऽपि यथाकामं । विलसन् भजते नृपम्॥२०४॥ तदादि तु नृपस्याऽस्य । सर्वांगश्रीरवर्द्धत ॥

---

१ रेवतीं

तेन श्रीवर्द्धनेत्याह्वं । तस्य चक्रे धराधवः ॥२०५॥

भूपोऽन्येद्युर्वभाषे तं । वत्साचारोऽस्ति नः कुले ॥ उद्वाहाऽनन्तरं वध्वा सह प्रौढोत्सवैर्वरः॥२०६॥अर्चेते पशुनैकेन । मासान्तः कुलदेवतां ॥ तद्युवां श्वश्रतुर्दश्यां । तामर्चेत मुदा निशि॥२०७॥कुमारो व्याहरद्भूपं । न कुर्वे नैव कारये ॥ जात्वहं नाऽनुमन्येऽपि । घातं जन्तोर्निरागसः॥२०८॥नास्ति हिंसासमं पापं । नरकादिप्रदानतः ॥ न चाऽहिंसासमं पुण्यं । दानात्स्वर्गापवर्गयोः॥२०९॥ अमृतं नो-रगाद्वक्त्रा-न्नैवापथ्याद्गदक्षयः ॥ साधुवादो विवादान्न । न शांतिः प्राणिनां वधात्॥२१०॥अभ्यधाच्च धवो धात्र्या । भोज्यखाद्या-दिभिस्तदा ॥ अर्चेतं विविधैस्तां सा-ऽनर्थं दत्ते ह्यनर्चिता ॥२११॥ अभ्यधत्त कुमारोऽपि । मिथ्यादृग्देवताय यः ॥ तत्त्वज्ञो नुतिमात्रं नो । कुर्वे सोऽर्चामि तां कथम् ॥२१२॥ देवोऽर्हन् यस्य तु त्राता । गुरुर्धर्मश्च तात्त्विकः ॥ तस्याऽनर्थाय नेन्द्रोऽपि । प्रभुः केयं व-राकिका॥२१३॥ग्रहाः प्रसन्ना वशवर्त्तिनः सुरा । न दुष्टभूपाः प्रभवन्ति नो खलाः ॥ नश्यन्ति विघ्ना विलसन्ति संपदो । हृदि स्थिते यत्र जिनः स पूज्यते ॥२१४॥

जामातुराधिकं वक्तु-मप्रभूष्णुर्नृपोऽथ तं ॥ गृहे प्रेष्य गतो देव्या । गेहे तामब्रवीन्नृपः॥२१५॥जामाता यस्त्वयाऽदायि । सैव त्वां देवि ! नाऽर्चेति ॥ ततः स त्वं च जानीथस्त्वद्भक्तोऽपि करोमि किम्॥२१६॥नत्वा देवीं गृहेऽयासी-द्भूपः स्वोचितकृत्यकृत् ॥ तमस्विन्यां कुमारोऽपि । देवीं सप्रत्ययां विदन् ॥२१७॥ शङ्कमानो मनाग्जैनी-मर्चां पट्टे निवेशितां ॥ अभ्यर्च्योत्तमपुष्पाद्यै-र्दहन् धूपं सुगन्धि च॥२१८॥जिनध्यानैकलीनात्मा । तस्थौ निष्कंपमानसः॥द्वितीये प्रहरेऽद्राक्षी-द्धूम्यां व्याप्नुवतीं दिशः॥२१९॥ तया व्या-कुलितः कोला-हली परिकरोऽनशत् ॥ संभाव्येमां कृतां देव्या । कुमारो दध्यिवान् सुधीः ॥२२०॥ न मे भीर्ध्यायतोऽर्हन्तं । सम्य-

क्त्वस्थिरचेतसः ॥ कायोत्सर्गे ततस्तस्थौ । ध्यायन् पञ्चनमस्क्रियाम्॥२२१॥धूम्यापगमे ज्वालाः। प्रसस्नुस्तत्र सर्वतः ॥ ततः प्रादुरभू-
द्देवी । रौद्रस्त्रीरूपधारिणी॥२२२॥मृटकाभशिरस्ताल-मानांघ्रिः कन्दरोदरी ॥ घोरा कीलनिर्भैर्दन्तै-रम्रिस्थानोपमेक्षणा॥२२३॥चक्र-
त्रिशूलनिस्त्रिंश-लसड्डमरुकान्वितैः ॥ उड्डामरभुजादण्डै-श्चतुर्भिर्भृशभीषणा॥२२४॥उद्यड्डमरुकोद्दंड-स्फुरड्डमडमारवैः ॥ विस्पष्टमट्टहा-
सैश्चाऽऽस्फोटयन्ती नभस्तटम्॥२२५॥साथ प्राह कटुध्वानं । रे रे दुष्ट ! परां श्रियं ॥ मयैव प्रापितोऽस्येतां । मामेव च विगर्हसे॥२२६॥
संप्रत्यपि परां पूजां । प्रणतिं च कुरुष्व मे ॥ न चेन्मरिष्यसि त्राता । न सुत्रामाऽपि मत्क्रुधि ॥२२७॥ तथाप्यक्षुभिते मौनि-न्यस्मिन्
सा प्रोन्मिषद्रुषा ॥ ववर्ष ज्वलनं मौला-वस्य ज्वालाकरालितम्॥२२८॥जिनध्यानानुसंधान-धाराधरपराहतः ॥ विलीनस्तत्क्षणादेष ।
हर्यक्षं साप्यचक्रतः ॥२२९॥घोरं गर्जन् धरित्रीं स । पुच्छाच्छोटैः प्रकंपयन् ॥ ससज्ज भक्षितुं याव-दाहत्य नखरायुधैः॥२३०॥तावत्त-
स्याऽपतन् दंष्ट्रा । भग्नाश्च नखराः खराः॥ जिनध्यानाऽनुभावेन । ततो द्राक् सोऽप्यपासरत्॥२३१॥दर्पात्साथाऽमुचत्सर्पान् । फूत्कारै-
र्भरितांबरान् ॥ प्रावृषेण्यनवांभोद-सोदराभवपुष्मतः॥२३२॥शतशो मणिभिर्दीप्रा । यमदोर्दण्डसोदराः ॥ तेऽपि स्फुटस्फटाटोपाः । को-
पाद् द्राक् तमवेष्टयन्॥२३३॥ अदशन् दशनैर्भोगै-र्वेष्टं वेष्टमपीडयन् ॥ स्फटाच्छटभिर्जघ्नुश्च । गदाभिरिव सर्वतः ॥२३४॥ दन्ताः
पेतुस्ततस्तेषां । स्फटाम्योमणयोऽत्रुटन् ॥ भग्नान्यस्थीनि निःशेषं । तस्य तु प्राभवन्न ते॥२३५॥ततो नष्टेषु तेष्वेषा । देवी दध्यौ सवि-
स्मया ॥ ध्यानस्यैवाऽनुभावेन । नैवाऽस्मिन् प्रभवाम्यहम्॥२३६॥बाधिष्ये ध्यानमेवास्या-ऽनुकूलाचरणैरहं ॥ ततोऽहं प्रभविष्यामि ।
ध्यात्वैवं दिव्यरूपभृत्॥२३७॥अङ्गालङ्कारतेजोभिस्तमोहृत्कमलेक्षणा ॥ कामक्रीडावनी चन्द्र-मुखी सर्वाङ्गसुंदरी ॥२३८॥ सलीलग-
तिरभ्येत्य । रणन्मञ्जीरचारिमा ॥ साऽवोचन्मधुरं स्वामिन् ! । क्षमस्वाऽगो ममाऽखिलम् ॥२३९॥ सुभगं सात्विकं त्वां[1] च । पती

[1] किंचित्

यंती स्मरातुरा ॥ सौभाग्यं वीक्ष्यसाक्षात्ते। सत्त्वं पर्यैक्षिषि त्विति ॥३८॥ प्रपद्य दयितां तन्मां। स्निग्धां मुग्धां [2]तवाऽनुगां ॥ नृभवेऽपि मुदा भुङ्क्ष्व । भोगान् दिव्यान् सुदुर्लभान् ॥३९॥ तव दास्यं विधास्यामि। लास्यं दिव्यं च नित्यशः॥ गास्याम्यग्रे च ते गीतं । यथा प्रीतं भवेन्मनः ॥४०॥ स एवं विविधैः काम—जागरुकैर्वचोभरैः ॥ चाल्यमानोऽपि न ध्याना—च्छेकं चालयितुं तया ॥ ४१ ॥ विस्मिता सा ततोऽभाणीत् । संवृत्त्याकारमात्मनः ॥ सम्यग् तुष्टाऽस्मि ते सत्त्वा—न्नोपसर्गं सृजाम्यतः ॥४२॥ वद ध्यायसि मन्त्रादि । किं न यत्प्रभवाम्यहं ॥ कस्ते धर्मोऽर्चसे येन । न मामप्युपकारिणीम् ॥ ४३ ॥

इति तद्वचनं श्रुत्वा । कायोत्सर्गं प्रपार्य च ॥ कुमारोऽवग् जगत्पूज्यान् । ध्यायामि परमेष्ठिनः ॥४४॥ ध्यानाद्विलीयते येषां । दुःखं त्रैधमपि ध्रुवं ॥ क्षणादाध्यात्मिकं चाऽधिदैविकम् चाधि[3]—दैहिकं ॥४५॥ धर्मश्चार्हत्प्रणीतो मे । दयामूलो जगद्धितः ॥ त्याज्यं मिथ्यादृगर्चादि । यस्मिन् सम्यक्त्वधारिभिः ॥ ४६ ॥ भद्रे ! कारय मा हिंसां । यदीच्छस्यात्मनो हितं ॥ अमरा अपि हिंसातः । प्राप्नुयुर्नरकं क्रमात् ॥ ४७ ॥ [4]पृच्छन्त्यै स ततस्तस्यै । शुद्धं श्रीधर्ममार्हतं ॥ आचचक्षे दया हिंसा—फलव्यक्तीविविच्य च ॥ ४८ ॥

प्रबुद्धा सा प्रपेदेऽथ । सम्यक्त्वं विरता वधात् ॥ कुमारवचनात्पूर्व—कृतहिंसोत्थपापहृत् ॥४९॥ अर्हत्पूजादि संघे च । धर्मसाहाय्यकादि च ॥ [5]प्रतिपद्य सुभावेन । जैनधर्मैकधीरभूत् ॥५०॥ युग्मं ॥ ददौ च गुरुभक्त्यास्मै । सा दिव्यामौषधीं यथा ॥

२ मनोनुगां ३ भौतिकं ४ विशिष्य ५ आश्रुवातां मिथो धर्मदानोरी कृतितश्च तौ

शिरसि न्यस्तया रूपं । यथेच्छं स्वान्ययोर्भवेत् ॥५३॥ दत्वाऽलंकारनेपथ्ये । वर्षित्वा पुष्परैमणीन् ॥ दुन्दुभिं वादयित्वा तं । नत्वा चान्तर्दधे [1]सुरी ॥५४॥ गत्वा राज्ञो गृहे तं सा । शेषे जागर्षि वेत्यवक् ॥ स स्माहौकसि जामातुः। पश्यन् धूम्यादि किं शये॥५५॥ साऽभणत्प्रातिकूलानु–कूलैः सात्त्विकसत्तमः ॥ उपसर्गैर्न सोऽक्षोभि । धर्मं मां प्रत्यपीपदत् ॥५६॥ राजन् ! जीवदयामूलं । तत्पार्श्वा-द्धर्ममार्हतं ॥ त्वमपि प्रतिपद्येथा । देवीत्युक्त्वा तिरोदधे ॥ ५७ ॥

प्रातर्भूपादयः सर्वे । निशावृत्तं शुश्रुत्सवः ॥ मुदिता दुंदुभेर्नादैः । कुमारागारमागमन् ॥५८॥ कुमारं वीक्ष्य ते नव्य–दिव्या-लङ्कारवाससं ॥ तत्र रत्नादिपुञ्जांश्चाऽऽश्चर्यानन्दाऽद्वयं ययुः॥५९॥अभ्युत्थानादिविनयी। पृच्छत्यथ महीभुजे॥ कुमारोऽपि निशावृत्तं । यथातथमवोचत ॥ ६० ॥ ततः सत्त्वं कुमारस्या–ऽस्ताविषुर्भूभृदादयः ॥ जिनधर्मानुभावं च । चमत्कृतहृदो भृशम् ॥ ६१ ॥ धर्मं यावत्प्रपित्सन्ते । कुमारोक्त्या नृपादयः॥व्यजिज्ञपद्धराधीशं। तावदुद्यानपालकः॥६२॥आगादेव ! तवोद्याने । नाम्ना धर्मयशा गुरुः॥ ज्ञानी बहुपरीवारः। श्रीधर्म इव मूर्त्तिमान् ॥६३॥ कुमारवचनात्तत्र । भूमिपालादयो मुदा ॥ गत्वा गुरुमवन्दता–ऽशृण्वन् धर्मं च त-न्मुखात् ॥ ६४ ॥ बुध्वा सविस्तरं धर्मं । तत्प्रभावं विभाव्य च ॥ सम्यक्त्वाद्यं प्रपद्याऽमी । अगमन् स्वस्वधामसु ॥६५॥ नृपोऽस्य पुत्रा अपि राजवर्याः । पौराश्च दूरात्कुमतानि मुक्त्वा ॥तदादि संवीक्ष्य कुमारवृत्तं । जिनैकधर्मप्रवणा बभूवुः ॥ ६६ ॥ एवमत्र गम-यन् समयं श्री–धर्मकर्ममयमिद्धजयश्रीः ॥ सर्वलोकमहितो विदितः श्रीवर्द्धनेति स कुमारवरोऽभूत ॥ ६७ ॥

इति तपागच्छाधिराज-श्रीमुनिसुंदरसूरिविरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे जयश्र्यङ्के श्रीजयानंदकुमारस्य महासेनपल्लीश-

[1] मुदा

विजय-गिरिमालिनीदेवीप्रतिबोध-तदर्पितमहौषधीद्वयलाभ-हेमपुराऽऽगमन-सौभाग्यमञ्जरीद्वितीयपत्नीपरिणयन-रेल्लणीदेवीप्रतिबोध-तदर्पितकामितरूपकारिमहौषधीप्राप्ति-हेमप्रभभूपादिबोधिलाभादिवर्णननामा षष्टः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रन्थाग्र० २७५ ॥

## ॥ अथ सप्तमः सर्गः ॥

**मा त्याक्षीर्जिन नस्त्वदेकशरणान् गीर्वाणसञ्चारित-स्वर्णाम्भोजमिषान्नवापि निधयो विज्ञप्तिमित्याहृताः मन्ये यस्य सुभक्तितश्चरणयोः सेवां वितन्वान्ति य-त्ते सेवाप्रवणाय॥वाञ्छितरमादत्तः स शान्तिः श्रिये ॥१ ॥**

अथाऽरिविजयादीनि । कुर्वन् कार्याणि नित्यशः । कुमारोऽपि प्रिणद्भूपं । गुणैश्चाऽशेषतः प्रजाः ॥२॥ नरेन्द्रोऽन्येद्युरास्थानीं । सुधर्माभामुपाविशत् ॥ युक्त्या पुत्रशतं चाऽग्रे । श्रीवर्द्धनकुमारयुक् ॥३॥ भूपमुद्यानपालोऽथाऽऽ-गत्यौत्सुक्याद्व्यजिज्ञपत् ॥ देव ! क्रीडावनं तेऽद्य । कोलेनैकेन भज्यते ॥४॥ स घोरैर्घुर्घुरारावै-स्त्रासयन्निर्जरानपि ॥ कालो रूपान्तरेणेव । भापयेत भटानपि ॥५॥ श्रुत्वैवं तं नृपः क्रुद्धो । हन्तुं यावद् यियासति ॥ तावन्निषेध्य तं पुत्राः । शतं विनययुक्तिभिः ॥ ६ ॥ सन्नह्य गजवाज्याद्यै-र्दधुस्त-स्याऽभ्यमैत्र्यतां ॥ कुमारस्तु पशुत्वेनौ-जस्व्यपि तमुपैक्षत ॥ ७ ॥ अयुयुत्सुरपि ह्येष । कौतुकायान्वगाच्च तान् ॥ पुत्रा राज्ञो वने दृष्ट्वा । कोलमाह्वंत दुर्द्धरम् ॥ ८ ॥ त्रिभिर्विशेषकमर्थतः ॥ अभ्यापतन्तं तं कोप-करालाक्षमपि स्फुटं ॥ ववृषुर्युगपद्बाण-श्रेणीर्भू-जानिसूनवः ॥९॥ दंष्ट्राभ्यां खण्डशश्चक्रे । सोऽपि ता उत्पतन् पतन् ॥ पश्यतामेव तेषां च । हस्त्यश्वादीनपातयत्॥१०॥गदामुद्गर[1]खड्

[1] खड्गौघा०

गादि–घातानप्यवधीरयन् ॥ आहत्य नखरैर्वीर–हृदयानि व्यदारयत् ॥११॥ क्षणं भुवि क्षणं व्योम्नि । कोलः फालाकुलो बली ॥ धुरि मध्ये तथाऽन्तेषु । वल्गंश्चाऽदर्शि योधृभिः ॥ १२ ॥

एवं व्याकुलीतान् राज–कुमारान् भयविह्वलान् ॥ श्रीजयः शूरकोटीर–स्त्रातुं तं प्रत्यधावत ॥ १३ ॥ दृष्ट्वा निरायुधं भूस्थं । कुमारो रणनीतिवित् ॥ मुक्त्वाऽश्वं खड्गमावध्य । कट्यां दंष्ट्रिणमाह्वत ॥ १४ ॥ दत्वा फालं कुमारस्यो–परि यावत्पतत्ययं ॥ स तावन्मुष्टिनाऽऽहत्य । तद्दंष्ट्रे खण्डशो व्यधात् ॥१५॥ तथाऽप्यूर्जस्वलत्वेन । कोलमात्मनि पापतिं ॥ कुमारश्चरणे धृत्वा । चक्रभ्रममविभ्रमत् ॥ १६ ॥ तथा चोत्क्षिप्य तं दूरा–दौज्झत्किरिवरं बली ॥ यथासौ सप्ततालान्ते क्रूराक्रन्दोऽपतद्भुवि ॥१७॥ भग्नास्थिनखरो [1]मंद–स्ततोऽसौ गहनेऽविशत् ॥ दूरात्त्रासयितुं तं च । कुमारोऽप्यन्वधावत ॥ १८ ॥ प्रविष्टो गहने[2]ऽसौ च । [3]कोल तं नेक्षते क्वचित् ॥ ऐक्षिष्टाऽभ्यापतन्तं च । गजं श्वेतं चतूरदं ॥१९॥ वीक्ष्य कैलासशैलाभं । कुमारस्तममोदत ॥ भ्रमिमुष्टि–प्रहाराद्यै–र्वशीकृत्याऽऽरुरोह च ॥ २० ॥

आरुह्याऽचालयत्तं स । मुष्ठ्या हेमपुरं प्रति ॥ अधावद्गजराजश्च । वलाद् दूरं वनं प्रति॥२१॥कियद् भुवमतिक्रम्य । वेगेन जितवायुना ॥ उत्पत्य गगनेऽचाली–त्स सपक्ष इवाचलः ॥२२॥ कुमारस्तस्य पृष्टस्थो । [4]वामलूरानिवाऽचलान् ॥ सरांसि गोष्पदानीव । सरितः सारिणीरिव ॥ २३ ॥ वालक्रीडापुराकारान् । पुरग्रामाकरादिकान् ॥ दूर्वास्तंबानिवाक्रीडान् । याति पश्यन् समंततः ॥ २४ ॥ युग्मं ॥ वैरी कोऽप्येष वाद्धर्यादौ । माक्षेप्सीदपहृत्य मां ॥ विचिन्त्यैवं जघानेभं । वज्रेणेव स मुष्टिना ॥ २५ ॥

१ नंष्ट्वा ततो २ ०नेप्येष ३ वराहं ४ राफडो

अप्रभूष्णुर्बलं तस्य । सोढुं घातार्त्तिविह्वलः ॥ गतः स क्वाऽप्यनाधारं । तं विहाय विहायसि ॥२६॥ कुमारस्तु पतन् विघ्न–वारिणीमौषधीं स्मरन् ॥ अपतत्सरसि क्वाऽपि । तीर्त्वा तच्च तटेऽगमत् ॥२७॥ मार्गग्रामादिवीक्षार्थ–मारुरोह महावटं ॥ अपश्यन्निकटे ग्राम–मेकं तन्मार्गमप्ययम् ॥ २८ ॥ यावद्धियासया तत्र । वटात्सोऽवरुरुक्षति ॥ उत्पत्य व्योम्न्यगात्ताव–न्न्यग्रोधोऽपि तदन्वितः ॥ २९ ॥ द्रुतं गत्वा महारण्ये । गिरेः कस्याऽपि निष्कुटे ॥ वटस्तस्थौ कुमारोऽस्मा–दवरुह्याऽभ्रमद्वने ॥३०॥ कृतालवालसेकादि–वृक्षाद्यङ्कैर्निबुध्य सः ॥ जगाम तापसैः पंच–शत्याकीर्णांस्तदाश्रमान् ॥ ३१ ॥

तत्राऽऽसीनं महातल्पे सेव्यमानं स तापसैः॥व्याघ्रमेकं समालोक्य । विस्मितस्तैरथोच्यत॥३२॥एह्येहि स्वागतं तेऽक्षि–सुधावृष्टे! नरर्षभ! ॥ एवं ससंभ्रमं तं चाऽ–भ्युत्थायाऽऽलिङ्ग्य तापसाः ॥३३॥ समुपावेशयन् प्रीत–हृदया उचितासने ॥ कोऽयं व्याघ्रः किमासेव्यः । इत्यप्राक्षीत्ततः स तान् ॥ ३४ ॥ युग्मं ॥ कथेयं महती तां तु । वक्ष्यामो भोजनं कुरु ॥ इत्युक्त्वा गौरवात् प्रीता । इममस्नपयन्निमे ॥ ३५ ॥ अबूभुजंस्ततो मिष्टैः । फलाद्यैः पायसेन ते ॥ नीवाराऽरण्यमाहिषी–पयोनिष्पादितेन तम् ॥३६॥ ततो वर्यासनासीनं । कुमारं तापसो युवा ॥ हरिवीराह्वयः सर्वं । व्याघ्रादिचरितं जगौ ॥ ३७ ॥

अभून्महापुरे भूपः । स्वर्गाधिकारिवैभवे ॥ रूपैश्वर्यादिभिः शक्र–विजयी नरसुन्दरः ॥ ३८ ॥ पुत्रादिभ्योऽप्यतिस्नेह–पात्रं क्षत्रियपुङ्गवः ॥ हरिवीराभिधो बाल–मित्रं सेनाधिपोऽस्य च ॥ ३९ ॥ इतश्च भूभुजः प्रीति–पात्र[1]मस्त्यस्य मातुलः ॥ भोगराजो नृपो भोग–पुरेशः स्वजनाऽग्रिमः ॥ ४० ॥ सोऽन्येद्युर्वैरिणा सूर–पालेन पृथिवीभुजा ॥ गत्वा भोगपुरे सूर–पुराधीशेन दो-

१ मस्याऽस्ति

प्मता ॥४१॥ मानी युद्धार्थमाहूतो-ऽभिगम्य युयुधे चिरं ॥ भग्नो न्यूनबलत्वेन । पुरस्यान्तस्ततोऽविशत् ॥४२॥ ततो गूढं प्रधानैः स। भागिनेयं बलोत्तरं ॥ त्राणायाऽजूहवत्तस्य । नृपेन्द्रं नरसुन्दरम् ॥४३॥ धीरवीराग्रणीरेप । धन्यंमन्यो व्यचिन्तयत् ॥ उपतस्थेऽद्य भाग्येन । स्वजनोपकृतिक्षणः ॥ ४४ ॥

**किं तद्राज्यं रमा सा किं । यतो नोपकृतिः परे ॥ सर्वेपूपचिकीर्पन्ति । महान्तः किं पुनर्निजे ॥ ४५ ॥**

ध्यात्वैवं मातुलं त्रातुं । यावद्भूपो यियासति ॥ सेनानीस्तावदूचे को । भेके तार्क्ष्यस्य विक्रमः ॥ ४६ ॥ अहं सूरपुरे गत्वा । सूरपालं विजित्य च ॥ भवतो मातुलं त्रास्ये । ददस्वाऽऽदेशमीश्वर ! ॥ ४७ ॥ अनुमत्य ततः प्रीत-स्तस्मै बलमदान्नृपः ॥ गजान् रथान् सहस्रे द्वे । पंचलक्षीं च वाजिनाम् ॥ ४८ ॥ कोटीः पञ्च च पत्तीना-मेवं सेनान्वितस्ततः ॥ हरिवीरो नृपं नत्वा-ऽचालीद् भोगपुरं प्रति॥४९॥ततो गत्वा महायोधी ॥ महामानी महाबलः ॥ वीरग्रामणीसुर्वीशं । सूरपालं स आह्वत॥५०॥ ज्ञात्वा तं भोगराजोऽपि । वृत्तान्तं पृतनायुतः ॥ अमिलत्तस्य सेनान्यः । सोत्कण्ठं संमुखं गतः ॥ ५१ ॥

सूरपालबलेनाऽथ । समगंस्त तयोर्बलं ॥ सौत्सुक्यमपराम्भोधि-रिव पूर्वाम्बुराशिना ॥५२॥ ढक्कानिस्वाननिःस्वानैः पटुभिः पटहस्वनैः॥ काहलाभेरिनादैश्च । जगर्जुः ककुभोऽखिलाः॥५३॥हास्तिकं हास्तिकेनाऽश्वे-नाऽश्वं रथ्या च रथ्यया॥ पादातेन च पादातं। डुढौके रणकर्मणि॥५४॥खड्गाखड्गि क्वचित्कुंता-कुंति क्वाऽपि शराशरि॥चिरं युयुधिरे योधा। विविधं सैन्ययोर्द्वयोः॥५५॥क्षीणेष्वस्त्रेपु केचिच्च । तेपामसारतो मिथः ॥ बाहुबाहव्ययुध्यन्त । मुष्टामुष्टि पदापदि ॥ ५६ ॥ दंतादंति तथा केशा-केशि केचिन्नखानखि ॥ शूरा विदधिरे युद्धं । शीर्पाशीर्पि च केचनं ॥ ५७ ॥ अभाङ्क्षुर्मुद्गरैः केचि-द्रथान् द्राक् पर्पटानिव॥ अपीपतन् गदाघातैः । शृ-

ङ्गाणीव गिरेर्गजान् ॥ ५७ ॥ हयानुत्पाट्य पादैः खे । प्रौज्झन् क्षुद्रोपलानिव ॥ केऽपि चक्रभ्रमं धृत्वा । पदोर्योधाननिभ्रमन् ॥ ५८ ॥ मूर्च्छिताः पतिताः केचि-द्गृध्रपक्षानिलैर्भटाः ॥ सज्जिताः पुनरप्युच्चै-र्युध्यन्ते स नवा इव ॥५९॥ पतितैः पत्तिहस्त्यश्व-गणैर्भग्नै रथायुधः ॥ रणभूर्दुश्चरा जज्ञे । नृत्यत्प्रेतव्रजैश्च खम् ॥ ६० ॥ एवं घोरे रणे जाते । सूरपालस्य सैनिकैः ॥ भग्नं रिपुबलं वीरै-र्भीरु किञ्चिदपासरत् ॥ ६१ ॥ गजद्वर्वोद्धुरं सूर-पालसैन्यं त्वमोदत ॥ दृष्ट्वैवं भोगराजोऽपि । धीरयन् सुभटान्निजान् ॥ ६२ ॥ दुर्द्धरं रथमारूढः । क्रुद्धो योद्धुमधावत ॥ अभिमानधनो धीरान् । गणयंस्तृणवद् द्विपः ॥ ॥ ६३ ॥ युग्मं ॥ तस्य तत्सुभटानां च । सततापातिभिर्घनैः ॥ मर्माविद्भिः स्वैरचारै-र्दुर्मुखैर्निष्ठुरेरितैः ॥६४॥ युगपन्मार्गणैः स्फूर्ज-त्प्रधाना धर्मधारिणः ॥ अभज्यन्त परोन्माद-दानवीरा अपि द्रुतम् ॥६५॥ युग्मं ॥ भज्यमानान्निरीक्ष्याऽथ। सूरपालो निजान् भटान्॥ अढौकत रथारूढः । प्रौढमानः क्रुधा युधे ॥ ६६ ॥ नंष्ट्वा सकृदगा दुर्गं-मधुना तु क्व यासि रे ॥ परादासादितोष्मा हि । कियत्तपति वालुका ॥ ६७ ॥ भोगराजं निगद्यैवं । समाह्वास्ताऽऽहवाय सः ॥ तदवज्ञागिरा सोऽथ । कोपेनाऽग्निरिवाऽज्वलत्॥६८॥सकृत्फालच्युतोऽप्याऽऽशु । द्वीपी हन्ति कपीन्न किं ॥ परतोऽपि प्रतप्तं किं । तृणौघं न दहत्ययः ॥६९॥ उदित्वैवं समं तेन । युद्धेऽढौकत भोगराट् ॥ तेजस्वी ननु तेजस्वि-कृतावज्ञां सहेत कः ॥ ७० ॥ एकसंख्योऽप्यसंख्यानां । तयोरासीद्भयावहः ॥ तदा भीतेव शूराणां । तन्द्राऽनेशद्रणार्थिनाम् ॥७१॥ शूरेण सूरपालेन । चिच्छेदेऽथ धनुः शरैः ॥ श्रान्तस्य भोगराजस्य। रथोऽभञ्जि च भाण्डवत् ॥ ७२ ॥ बिभिदे च शिरस्त्राणं । नर्म निर्माय वर्म च ॥ भोगराजो भयाभोग-व्याकुलो यावदित्यभूत् ॥ ७३ ॥ स्वं रथं तावदक्षेप्सी-द्वरिवीरस्तदंतरा ॥ डुढौके सूरपालेन । सह योद्धुं च दुर्धरः ॥७४॥ म्रियसे परकार्ये किं । मूढ ! सूरो जगाद तं ॥

सेनानीरूचिवान् स्वाऽन्य–कार्याणां न भिदा सताम् ॥७५॥ मृतिस्तु न तवेच्छातः । किन्तु दैवाद्भवत्यतः॥ युध्यतामावयोर्येन । ज्ञायते तत् शुभाशुभम् ॥ ७६ ॥ डुढौकाते ततो योध्धुं । सस्पर्द्ध तावमर्षणौ ॥ बाणैस्तयोः समन्ताच्च । चक्रे गगनमण्डपः॥७७॥ तदा भटभुजास्फोटै–र्गजगर्जाऽश्वहेषितैः ॥ घोराजितूर्यनिर्घोषैः पुस्फोटे च नभोऽभितः ॥ ७८ ॥ सेनान्या युगपन्मुक्तैः । परितः प्रसरैः शरैः ॥ सूरस्य चतुरङ्गापि । व्यङ्गा प्रायोऽभवच्चमूः ॥ ७९ ॥ सरथा विरथास्त्रेसुः । सादिनः क्लीववादिनः॥ तदश्वैः पत्तयश्चाऽपि । संभावितविपत्तयः ॥ ८० ॥ एवं सैन्येन सेनान्यः । सूरपालपताकिनी ॥ तथाऽभज्यत सङ्ग्रामाद्यरज्यत यथाभवम् ॥ ८१ ॥

अथैवं सूरसेनान्योः । सुचिरं युध्यमानयोः ॥ जयश्रीरन्तरेऽथाऽस्थाद् । वरणार्थमजानती॥८२॥ मिथश्चिच्छेदतुर्हेती– स्तौ हेतूनिव वादिनौ ॥ गृह्णन्तावपि मुञ्चतौ । न तौ कैरपि लक्षितौ ॥ ८३ ॥ चापान् सप्त क्रमेणाचान् सेनानीस्तस्य चिच्छिदे ॥ ततः सविधुरो दध्यौ । वेपमानवपुर्भिया ॥८४॥ यद्यद्गृह्णाम्यहं शस्त्रं । द्रुतं तत्तच्छिनत्त्ययं ॥ श्रान्तोऽहं भाति चाऽद्याऽपि । नव्योत्थित इव त्वयम् ॥ ८५ ॥ चमूर्भग्ना च मे भावी । मृत्युस्तत्तिष्ठतो ध्रुवं ॥ जयभद्राणि चाऽऽप्नोति । जीवन्नेव पुनः पुमान् ॥ ८६ ॥ शौर्यस्यैवं संप्रयोगो–ऽस्थाने श्वापदचेष्टितं ॥ न चातुलबलादस्मा–ल्लज्जापसरतोऽपि मे ॥ ८७ ॥ विमृश्यैवं भटान् कांश्चि–द्रक्तान् क्षिप्त्वाऽन्तरे नृपः ॥ वालयित्वा रथं पश्चा–त्सुरपालोऽनशद् द्रुतम् ॥ ८८ ॥ चमूरप्यन्वगादेनं । सा हि राजानुयायिनी ॥ अन्वेत्य भोगराजोऽपि । ससैन्यस्तामलुण्टयत् ॥ ८९ ॥ अमूमुचद्गजानश्वान् । वर्मास्त्रालङ्कृतीरपि ॥ अयोद्धॄन् जीवतोऽमुञ्च–न्नश्यतां सुकरं ह्यदः ॥ ९० ॥ ततो जयजयाराव–मुखरैर्वन्दिभिः स्तुतौ ॥ ध्वनन्मङ्गलतूर्योघै–र्ददानावर्थितं मुदा

॥ ९१ ॥ सेनानीर्भोगराजश्च । पुरे नृत्यत्पताकिके ॥ प्राविक्षतां महैश्चित्रै–र्वृद्धस्त्रीकृतमङ्गलौ ॥ ९२ ॥ युग्मं ॥

भोगराजोऽथ सेनान्यं । राज्यजीवितदायिनं ॥ स्तुवन्नप्रीणयत्प्रीत्यो–पचारैर्विविधैः सुधीः ॥ ९३ ॥ इयेष च कृतज्ञत्वा दातुं सर्वोत्तमां कनीं ॥ महोपकारिणे तस्मै । सभ्यान् पप्रच्छ चाऽन्यदा ॥ ९४ ॥ अहो कस्याऽपि कन्याऽस्ति । सेनानीः प्रीयते यया ॥ सूरदत्तो बभाषेऽथ । नृपतिर्दण्डनायकः ॥ ९५ ॥ राजन् ! कन्या ममाऽस्त्यस्याऽ–नुरूपा सुभगाभिधा ॥ तामानाय्य रहो दृष्ट्वा सुरूपां मुमुदे नृपः ॥ ९६ ॥ अदाच्च हरिवीराय । तां स्वयं बहुमानतः ॥ समानकुलशीलानां । योगो हि श्लाघ्यतेऽधिकम् ॥ ९७ ॥

लग्ने दैवज्ञदत्तेऽथ । नृपादेशादचीकरत् ॥ सूरदत्तस्तयोः पाणि–ग्रहणं विविधोत्सवैः ॥ ९८ ॥ ददौ च हरिवीराय । जामात्रेऽश्वरथादिकं ॥ सूरदत्तो यथाशक्ति । धनं च करमोचने ॥ ९९ ॥ भोगराजनृपोऽप्यस्मै । पुरग्रामहयादिकं ॥ वस्त्रालङ्कारदासाद्य–मप्यदाद् बहुमानतः ॥ १०० ॥ तत्र स्थित्वा कियत्कालं । तया सह नवोढया ॥ स्वपुरं प्रति दण्डेशो । यावत्प्रस्थातुमुद्यतः ॥ १०१ ॥ मन्दाऽभूत्सुभगा ताव–त्साद्धं तेन यियासया ॥ शिक्षां नापेक्षते च्छद्म । स्त्रीणां नैसर्गिकं हि तत् ॥ १०२ ॥ सा तुन्दं दुष्यतीत्येवं–वादिनी मञ्चकेऽपतत् ॥ पित्राद्यास्तत्प्रतीकारान् । बहुधाऽचीकरंस्ततः ॥ १०३ ॥ तथापि च्छद्मनैवोच्चैः । क्रन्दत्येपाधिकाधिकं ॥ दर्शयन्ती भृशं स्नेहं । पत्यौ दम्भाच्च वक्ति तम् ॥ १०४ ॥ अहो मे भाग्ययोगेन । पतिः सर्वोत्तमोऽभवः ॥ धिगत्राऽवसरे त्वासीन्मान्द्यं पापेन केनचित् ॥ १०५ ॥ औत्सुक्यं चैवमेवाऽस्थात् । श्वशुरादिनतो मम ॥ श्रुत्वेति तद्वचस्तस्याः । स्नेहं स्वास्मिन् विभाव्य च ॥ १०६ ॥ गन्तुं पुरे स्वस्वामि–दर्शनायोत्सुकोऽप्ययं ॥ प्रत्यैक्षिष्ट पुनःकत्य–प्यहानि तदपेक्षया ॥ १०७ ॥ त्रिभिर्विशेषकं ॥ ना-

भूत्तथापि सोल्लाघा–ऽनिच्छन्ती भोजनाद्यपि ॥ जाग्रत् स्वपिति यः शक्यः । किमुत्थापयितुं हि सः ॥१०८॥ ग्लानायाश्चालने मार्गे–ऽनर्थो माभूत् श्रमादिभिः ॥ आरोग्यं ज्ञापयिष्यामो । ग्रहीतुं [1]पुनरापतेः ॥१०९॥ श्वशुरादिभिरित्युक्त्वा । गन्तुकामस्ततोऽन्यदा ॥ जामाता स तथा युक्ति–दर्शी तैः सत्कृतस्तदा ॥११०॥ भूपमापृच्छय तद्दत्तं । नरसुन्दरभूभुजे ॥ गजाद्यादाय सोऽचाली–त्ससैन्यः स्वपुरं प्रति॥१११॥त्रिभिर्विशेषकं ॥ तं च दूरगतं ज्ञात्वाऽऽश्रित्य काञ्चित्प्रतिक्रियां ॥ सुभगा प्रगुणीभूता । स्वैरिणी ह्यमोदत ॥११२॥ गीतैः सा मधुकण्ठस्य । रज्यन्त्युपचरत्यमुं ॥ नानाकामोपचाराद्यैः । सोऽपि तां तद्वशंवदः ॥११३॥ नैपुण्यातेन चासक्ता । सा क्रीडन्त्यपि नित्यशः ॥ कैश्चिन्नाऽलक्षि धाताऽपि । स्त्रीचरित्रे हि मुह्यति ॥११४॥

अथ तामृजुरुल्लाघां । जामात्रेऽजिज्ञपत् पिता ॥ तद्रूपमोहितः सोऽपि । तामानेतुमुपागमत् ॥११५॥ मुदितः सुरदत्तस्तं । सेनान्यं सपरिच्छदं ॥ प्रतिपत्त्युपचाराद्यै–र्हरिवीरमपिप्रिणत् ॥११६॥ दृष्ट्वा तं सुभगा मम्लौ । भोगीन्द्रमिव दीपिका ॥ अदीदृशद्बहिर्वृत्त्या । मुदं स्नेहं च सा यतः ॥११७॥ चेतसा हसति रोदिति चाऽक्ष्णा । व्यत्ययं च कुरुते निजकार्यात् ॥ दुर्वशानपि वशीकुरुते नॄन् ॥ कस्यचिन्न हि वशा । तु वशा स्यात् ॥११८॥ स्नेहकामोपचारैश्च । पतिं साऽरञ्जयत्तथा ॥ न कोऽप्यभ्येति कस्याऽपि । दुर्विकल्पो यथा हृदि ॥११९॥ प्रतिष्ठासुरभूधाव–द्धरिवीरस्तया सह ॥ दम्भग्रहिलतां ताव–द्भृशमुरीचकार सा ॥१२०॥कम्पयन्ती शिरो यत्तत् । प्रलपन्त्यट्टहासकृत् ॥ अक्षिभ्यां भापयत्यन्यान् । भाजनानि भनक्ति च॥१२१॥हन्ति बालादिकान्नैव । संवृणोत्यङ्गवाससी॥सभ्याऽसभ्याश्च दत्ते च। गालीः स्वान्याऽविभागतः॥१२२॥मुहुर्मुहुर्विना हेतुं। भृशं हसति रोदिति॥कर-

१ ° रागतिः

तालं ददाना च । नृत्यत्युच्चैश्च गायति ॥१२३॥ भाषते जातु च प्राप्त–चैतन्येवान्तरान्तरा ॥ क्रीडन्त्या दीर्घिकायां मे–ऽवस्थेयं ही ह्यभूदिति ॥१२४॥ ततः पित्रादयस्तस्याः । खिन्ना दोषादिशङ्कया ॥ अचीकरन् प्रतीकारान् । विविधान् मान्त्रिकादिभिः ॥१२५॥ दोषान् देवीग्रहप्रेत–शाकिनीव्यन्तरादिकान् ॥ वदन्तो बहवः स्वस्वा–म्नायैस्तां प्रतिचक्रिरे ॥१२६॥ उन्मादसान्निपातादीन् । विचिकित्स्य महौषधैः ॥ प्रयोगैश्च व्यचिकित्सन् । बहून् घस्रांश्चिकित्सकाः ॥१२७॥ कुलदेव्यादिपूजादी–न्यकार्ष्टां पितरावपि ॥ हरिवीरोऽपि देवेभ्यो । मेने नानोपयाचितम् ॥१२८॥ तथापि न गुणस्तस्याः । कर्तुं कैरप्यशक्यत ॥ किमज्ञातनिदाने हि । दोषे कुर्युः प्रतिक्रियाः ॥१२९॥

विलक्षो हरिवीरोऽथ । व्यमृक्षत् श्वसुरौकसि ॥ लज्जे चिरं स्थितो मा मां । हसिपुः शालकादयः ॥१३०॥ अतिरूपां सतीं स्निग्धां । प्रियां चेतोऽनुगां कथं ॥ संजातेदृग्दशां द्रष्टुं । क्षमे च कठिनोऽपि ही ॥१३१॥ लज्जे मित्रादिषु स्वौके–ऽपीदृश्याऽऽनीतयाऽनया ॥ मुक्त्वेमां यामि तल्लोके–ऽनीशो दर्शयितुं मुखम् ॥१३२॥ द्विरस्या ह्येवमापत्तेः । कर्म मे हास्यभूर्जने ॥ तच्चाऽलङ्घ्यं सुराणाम–प्यथ किं मादृशाङ्गिनाम् ॥१३३॥ तदुक्तं–

नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगाः । विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ॥
फलं कर्मायत्तं यदि किममरैः किं च विधिना । नमस्तत्कर्मभ्यः प्रभवति न येभ्यो रिपुरपि ॥ १३४ ॥

स्वकर्मोपप्लुतस्याऽथ । गन्तुं मे संगतं गृहे ॥ ध्यात्वेत्ययं तथा कर्तु–मापृच्छत् श्वशुरादिकान् ॥१३५॥ आनेतुं शीघ्रमागच्छे–र्ज्ञात्वैतां प्रगुणां पुनः ॥ इत्युक्त्वा तेऽप्यमन्यन्त । तं यान्तं समयेक्षिणः ॥१३६॥ ततोऽसौ चलितः प्राप–त्कियद्भिर्वासरैः

पुरं ॥ स्वजनेभ्योऽजीहि तच्च । तस्या मान्धमनागमे ॥१३७॥ तां च जानन् सतीं स्निग्धां । चक्रेऽस्या रूपमोहितः ॥ कुदेवबलिपूजादी-नुपायान् संगमेच्छया ॥१३८॥ बहूनपृच्छद्दैवज्ञांस्तथा शाकुनिकानपि ॥ मेनेऽतिशायिदेवेभ्यः । उपयाचितकान्यपि ॥१३९॥ तत्संगमाप्तिवादिभ्यो । ददौ हृष्यन् धनादि च ॥ विचारं स्त्रीषु रक्तानां । तिरोधत्ते स्मरग्रहः ॥१४०॥ स्वस्थाऽभूत्सुभगा प्राग्वद् । ज्ञात्वा प्राप्तं च तत्र तं ॥ स्वायत्तं मान्धमानेतुं । सुशकं प्रेषितुं च यत् ॥१४१॥ द्रढिमानं विनिर्णीय । तद्वपुष्पाटवस्य ते ॥ पित्राद्या मुदितास्तस्याः । कियत्कालप्रतीक्षणात् ॥१४२॥ आजूहवन्नरैस्तामा-नेतुं जामातरं ततः ॥ मुदाऽऽगात्स च मूर्खो हि । [नर्त्ते प्रत्येति भद्रकम्] ॥१४३॥ युग्मं ॥ अप्रीणन् प्रतिपत्त्याद्यैः । स्मरदत्तादयश्चिरं ॥ तं वीक्ष्य सुभगाऽप्यासी-द्धर्षलज्जाकुला भृशम् ॥१४४॥ सरस्नेहोपचाराद्यैः । सा तथोपाचरच्च तं ॥ यथाभूत्तद्वशः सोऽलं । जगद्वाऽवशयन् स्त्रियः ॥१४५॥

सान्येद्युस्तं रहोऽभाणीत् । समये चलता प्रिय ! ॥ मधुकण्ठस्त्वया मार्ग्यः । सहायः पितुरन्तिके ॥१४६। यदेष सर्वमार्गज्ञः । शक्तो भक्तश्च नेतरि ॥ वेत्त्येकं मार्गमासन्नं । येनाप्यं द्राग्महापुरम् ॥१४७॥ प्रपेदे तद्वचोऽयं यज्जडाः स्त्रीबुद्धिजीविनः ॥ श्वशुरावापप्रच्छे च । प्रतिष्ठासुस्ततोऽन्यदा ॥१४८॥ वस्त्रालंकारमाल्याद्यै-स्तं सत्कृत्य सगौरवं ॥ प्रस्थातुमन्वमन्येतां । तावाशीर्मुखराननौ ॥१४९॥ ताभ्यां दासादिदाने स । मधुकण्ठमयाचत ॥ दत्तमाकार्य चाऽचाली-त्तौ नत्वा सपरिच्छदः ॥१५०॥ चालयमानामथो दत्ता-नर्घ्याऽलङ्कारवाससं ॥ सुभगां तौ पदा नम्रां । मुदाऽन्वाशिष्यतामिति ॥१५१॥ वत्से पत्यौ भवेर्भक्ता । स्त्रीणां सैव हि दैवतं ॥ यतोऽत्राऽमुत्र च प्राप्यं । शर्मिष्टं भोगपुण्यजं ॥१५२॥ सदाचारः सदा पाल्यः । सर्वेषां स हि जीवितं ॥ भूष्यते येन रूपादि-गुणौघो मणिनेव राः [मणिना वपुः] ॥१५३॥ तथा चोक्तं-

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता, तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ॥
सुप्ते तत्र शयीत तत्प्रथमतो मुञ्चेत शय्यामिति, प्राच्यैः पुत्रि! निवेदिताः कुलवधू[1]शुद्धांतधर्मा इमी ॥१५४॥
निर्व्याजा दयिते ननान्दृषु नता, स्वश्रूषु भक्ता भवेः । स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ॥
पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्द्वेषिषु, स्त्रीणां संवननं नतभ्रु! तदिदं वीतौषधं भर्तृषु ॥ १५५ ॥ इत्यादि
॥ स्नेहच्छिक्षामदातां तौ । तादृक्पुत्र्या अपीदृशीं ॥ नैवाऽत्यम्बुयुतो ह्यब्दो । वर्षन् स्थानं विलोकयेत् ॥ १५६ ॥ शिक्षामेतां प्रपेदे
सा । नम्रमौलिर्मुहुर्मुहुः ॥ स्त्रीणां जगद्वञ्चिकानां । नाऽवञ्च्यौ पितरावपि ॥ १५७ ॥ नत्वा तौ प्राचलत्साश्रुः । पत्या सह
सतीव सा ॥ पित्राद्या वलितस्तौ च । संप्रेष्य कियतीं भुवम् ॥ १५८ ॥ सेनानीर्मधुकण्ठोक्ते । मार्गे पत्न्याऽन्वितश्चलन् ॥ देवता-
र्चादिसाफल्यं । मेने तत्संगमान्मुदा ॥ १५९ ॥ अर्द्धमार्गे व्यतिक्रान्ते । तटस्थवनगह्वरां ॥ वीक्ष्य रम्यां नदीं तस्थौ । भुक्त्यै
भूरिपरिच्छदः ॥ १६० ॥ भुक्तः सुभगयाऽभाणि । स्वामिन्! रम्या नदी ह्यसौ ॥ [2]सुदराश्च वने वृक्षाः । क्रीडावोऽत्र क्षणं ततः
॥ १६१ ॥ शूराग्रण्यामुदस्त्रे च । मधुकण्ठाऽङ्गरक्षके ॥ आन्तरे सेवके रक्षा-परे लज्जाभये तु न ॥१६२॥ ततोऽसौ प्राविशत्केल्यै ।
मुदा नद्यां तया सह ॥ स्मरक्रीडा प्रियानुन्ना । रागिणां ह्युत्सवायते ॥१६३॥ रत्वा चाद्भिः कियद्वेलं । सोऽविशद्वनगह्वरे ॥ रेमे
तत्राऽपि च स्वैरं । विविधं रमणीरतः ॥ १६४॥ क्रीडन्तं तं सपत्नीक-मरक्षन् दूरतो भटाः ॥ रक्षामिषाद्रथारूढो । मधुकण्ठोऽ
प्युपाऽभ्रमत् ॥ १६५ ॥

[1] अन्तः पुरस्य धर्मा [2] सुन्दरश्च वनोद्देशः ।

अथ याऽमेप्यतिक्रान्ते । भटास्तस्मिन्ननिर्गते ॥ दध्युर्घोरेऽप्यरण्येऽयं । मुग्धः खेलति किं चिरम् ॥१६६॥ विलम्ब्याऽथ कियज्ञात–शङ्कास्ते तमशब्दयन् ॥ शब्दाऽदाने प्रविश्यान्त–र्वणं विष्वग् व्यलोकयन् ॥१६७॥ सेनान्यं सुभगां चाऽपि । काऽपि नैक्षन्त ते पुनः । खड्गं प्राप्य क्वचित्तस्याऽनिष्टं खिन्नाः शशङ्किरे ॥१६८॥ पिपृक्षवोऽथ तच्छुद्धिं । मधुकण्ठं व्यलोकयन् ॥ [1]तमप्य-नाप्य शोकार्त्ता । विकल्पान् विविधान् व्यधुः ॥१६९॥ तत्पदाद्यप्यपश्यन्त–स्ते किं कर्त्तव्यताजडाः ॥ जातायामथ यामिन्या–मशोचन् केवलं बहु ॥१७०॥ त्रियामीं शतयामाभां । व्यतिक्रम्य कथञ्चन ॥ सर्वेऽप्यनाप्य तच्छुद्धिं । तेऽनन्यगतयोऽचलन् ॥१७१॥ क्रमान्महापुरं प्राप्ता । भूपालाय यथेक्षितं ॥ [2]उदस्राक्षाश्च सेनान्यः । स्वरूपं तन्न्यवेदयन् ॥१७२॥ भूपस्ततः शुचाक्रान्तः । शैलपुरवनादिषु ॥ सुचिरं लक्षशः शूरैः । सर्वतस्तमशोधयत् ॥१७३॥ तथाप्यनाप्य तच्छुद्धिं । तस्मिन् बालसखे नृपः ॥ पुत्रादिभ्योऽप्यतिस्नेहा–द्विललाप चिरं शुचा ॥१७४॥ कुटुम्बमपि सेनान्यो । रोदं रोदं चिरं स्थितं ॥ एकाक्येव सहत्यङ्गी । दुःखं प्राप्तं हि कर्मणः ॥१७५॥ मन्त्र्याद्यैर्बोधितोऽथाऽन्यं । सेनान्यं न्यस्य भूपतिः । क्रमात् शोकोज्झितो रेमे । सर्वाङ्गीणसुखश्रिया ॥ १७६ ॥

व्यतिक्रामति कालेऽथाऽ–न्येद्युर्गजजिघृक्षया ॥ प्रापचद्दर्हसामग्र्या । विन्ध्योर्व्यां सैन्ययुग् नृपः ॥१७७॥ गृह्णतोऽस्य गजांस्तत्राऽ–न्येद्यू रम्ये पटौकसि ॥ सुखासीनस्य भूपस्य । परीवारयुजः पुरः ॥१७८॥ शबरः कश्चिदागत्य । कपिनाट्यमदी-दृशत् ॥ नृत्यन्ति वानरास्तत्र ॥ वानर्यश्चातिचित्रकृत् ॥१७९॥ वादयन्ति च वाद्यानि । घूत्कुर्वन्त्यन्तरान्तरा ॥ मिथो वल्गन्ति

१ तमनवाप्य २ साश्रुनेत्राः

युध्यन्ते । चुम्बन्त्याऽलिङ्गयन्ति च ॥१८०॥ उच्छलन्ति विचित्राणि । ददते करणान्यपि ॥ एवं चित्रीययन्तिस्म । ते जनान् सकला-
नपि ॥१८१॥ रञ्जितोऽथ नृपोऽभीष्टं । शबरायाऽददाद्धनं ॥ अथ मुख्यकपिस्तत्रो-त्फुल्लाक्षो वीक्ष्य भूपतिम् ॥१८२॥ अश्रुधाराः
किरन् धात्री-धवाऽग्रे सोऽपतद् द्रुतं ॥ एवं मुहुर्मुहुः कुर्वन् । व्यसिष्मयत भूपतिम् ॥१८३॥ युग्मम् ॥ अशक्तो नृगिरा वक्तुं ।
चेष्टाभिस्तु वदन्नपि ॥ नाऽबूबुधत् स्वाशयं स । कांश्चिद्धिक् पशुतामिति ॥१८४॥ तं साकूतं हृदा ज्ञात्वा । नाट्याश्चर्याय तद्युतं ॥
शबरायाऽर्थितं दत्वा । कपिवृन्दं नृपोऽग्रहीत्॥१८५॥ [1]ददौ स केलिवीराय ।शिक्षारक्षादिहेतवे॥[आनन्दा]पुराप्यनेकनर्मार्थ।पशुरक्षा-
धिकारिणे ॥१८६॥ गजान् बहून् गृहीत्वाऽथ । कियद्भिर्वासरैर्नृपः ॥ आजगाम निजं धाम । रमते चाऽनिशं सुखम् ॥१८७॥
वीक्ष्य चाऽवसरं केलि-वीरो नर्त्तयते कपीन् ॥ रज्यन् दत्तेऽधिकं ग्रासं । तस्मै तेभ्यश्च भूपतिः ॥१८८॥ स्निह्यन्नज्ञाततत्त्वोऽपि ।
तद् दृष्ट्वा भूभुगन्यदा ॥ कप्यग्रण्ये मणिस्वर्णाऽ-लंकृतीर्निरमीमपत् ॥१८९॥ रम्या विधाय ताश्चान्तः सदसं भूभुजे मुदा । कपिनृ-
त्तादनुस्वर्णकारोऽन्येद्युरढौकयत्॥१९०॥ गृहीत्वा ताः स्वहस्तेन । दत्त्वाऽस्मै पारितोपिकं । परिधापयितुं लग्नः सर्वाङ्गेषु कपेर्नृपः॥१९१॥
कण्ठे ग्रैवेयकं क्षेप्तुं । प्राच्यं वलयमायसं ॥ तस्य यावन्नृपोऽभाङ्क्षीत् । कपिस्तावदभूत्पुमान् ॥१९२॥ हरिवीरो [2]नमतीत्यु-क्त्वैष
राज्ञे नमोऽकरोत् ॥ किमेतदितिसम्भ्रान्ता । नृपाद्या च सभाऽभवत् ॥१९३॥ रुदन्तं तं समुत्थाप्या-लिलिङ्ग प्रीतिमान्नृपः ॥
आश्वास्य संभ्रमस्नेह-वाग्भिरासयदासने ॥१९४॥ अवीवदन्नृपादेशा-द्बहुवाद्यानि वादकाः ॥ अगायन् गायकाः पेठु-र्मङ्गलानि
च बन्दिनः ॥१९५॥ ज्ञात्वा वृत्तान्तमस्य द्राग् । मुदाऽऽगत्य कुटुम्बकम् ॥ कण्ठे लग्नं रुदित्वा च । विदधे मङ्गलावलीम् ॥१९६॥

१ तच्चादात् २ नमत्येवं सोत्कोंऽग्रेभूभुजोऽपतत् ।

अथ पप्रच्छ तं भूपः। किमिदं चरितं तव ॥ असंभाव्यमहो मित्र!। यन्न दृष्टं श्रुतं क्वचित् ॥१९७॥ हरिवीरोऽभणत् स्वामिन्!। कर्मणां किं नु दुर्लभं ॥ क्षिप्तोऽहं येन तिर्यक्त्वे । तस्माच्चाद्य त्वयोद्धृतः ॥१९८॥ शौर्ये च धैर्ये च धने च पूर्णेऽप्यैश्वर्ययोगेऽप्यखिले बले च ॥ मित्रे च भूपेऽपि हरिः कपित्वे । नृत्यत्यहो कर्मगतिर्विचित्रा ॥१९९॥ तदुक्तं—यन्मनोरथशतैरगोचरो । यत्स्पृशन्ति न गिरः कवेरपि॥स्वप्नवृत्तिरपि यत्र दुर्लभा। हेलयैव विदधाति कर्म तत् ॥ २०० ॥

ततो यथान्वभूवं त-त्तथा वच्मि शृणु प्रभो!॥ केल्यै मेऽन्तर्वणं आसि। यावद्भावि श्रुतं त्वया ॥ २०१ ॥ अग्रतः शृणु भूपाल!। प्रविष्टो गहने तदा ॥ जानानस्तां सतीं स्निग्धां । करे धृत्वा नवां प्रियाम् ॥२०२॥ स्मरचेष्टाप्रियालापै-र्मोहयन्तीं मुहुर्मुहुः ॥ चंदनामोदसुभगै-र्मधुरैर्मलयानिलैः ॥२०३॥ नृत्यत्पल्लवमालाभि-र्लताभिश्च मनोरमान्॥ बन्धुरान् कोकिलारावै-स्तरून् पश्यन् स्मरातुरः ॥२०४॥ यावद्भ्रमामि सा ताव-[1]दभणत्कामगद्गदं ॥ माधवीमण्डपे रम्ये। प्रियाऽस्मिन् रम्यते क्षणम् ॥२०५॥ पंचभिः कुलकं ॥ ततस्तदनुवृत्त्याऽहं । पल्लवैः स्रस्तरे कृते ॥ स्मरकेलिसुखं भेजे । प्रेमसारं तया सह ॥ २०६ ॥

अथ वीक्ष्य कपींस्तत्र । भ्रमतः सा जगाद मां ॥ स्वामिन्! पापा यदा मांद्या-त्त्वं मां मुक्त्वा यदा गतः ॥२०७॥ तदा दैवात्स्पृष्टभूता । त्वत्संगसुखवञ्चिता॥ विखिन्नाऽन्येद्युरद्राक्ष-महं भिक्षार्थमागताम्॥२०८॥ परिव्राजिकिकामेका-मौषधीग्रन्थिबन्धुरां ॥ विशां विज्ञाय तामिष्ट-दानादिभिरुपाचरम् ॥२०९॥ युग्मं ॥ तुष्टा सान्येद्युरूचे मां । किमाराध्नोपि मामिति ॥ वद प्रयोजनं किंचित्। क्षमाऽहं सर्वकर्मसु ॥२१०॥ ततोऽभाणि मया मात-र्वदो मे व्यथयत्यथ ॥ कामजः प्रियसङ्गो मे । यथा स्यात्तत्तथा

1 °भाणीन्।

कुरु ॥२११॥ ततः सा वलयं लोह-मौषधीगर्भितं ददौ ॥ ऊचे चाऽस्मिन् समीपस्थे। न स्युर्विघ्ना गदा अपि ॥२१२॥ प्रभवन्ति न दुष्टाश्च। तिर्यङ्नरसुरादयः ॥ ततः प्रपूज्य नत्वा च। व्यसृजं तां मुदाकुला ॥२१३॥ वलयस्य महिम्नाऽऽप-मारोग्यं संगमं च ते ॥ परं त्वमेव मे [1]नाथ-स्त्वच्छिवं च विलोकये ॥ २१४॥ तत्तत्क्षेप्स्यामि ते कण्ठे । समये साम्प्रतं पुनः ॥ मुञ्चाम्युच्छीर्षके रत्या। खेदितोऽसि चिरं मया ॥ २१५॥ ततः स्वपिहि निःशंकः। कप्यादिभ्यः क्षणं सुखं ॥ इत्युक्त्वा दर्शयित्वा च। तन्ममोच्छीर्षके-ऽमुचत् ॥२१६॥ ततोऽस्याः स्नेहवाग्मूढो। विश्रब्धोऽशयि निद्रयां ॥ साक्षेप्सीत्तच्च मत्कण्ठे। प्रायो निद्रा हि वैरिणी ॥२१७॥ यावज्जागर्मि तावत्स्वं। कपीभूतं निभालये॥ तामदृष्ट्वा च खिन्नोऽस्या धावन्ननुपदं द्रुतम् ॥२१८॥ व्रजन्ती मधुकण्ठेन। रथारूढां सहैक्षिषि ॥ पश्यन् ससंभ्रमं स्निग्धं। दीनोऽवादिपि चानया ॥२१९॥ युग्मं ॥ एकाङ्गो मूढ! रे स्नेहः। कियन्निर्वहते चिरं ॥ त्वद्विवाहाद्यन्वमंसि। पित्रादिवशगैव हि ॥२२०॥ अहं बाल्यादपि स्वैर-चारा दुःशीलतापदं ॥ मधुकण्ठे भृशं गीत-कलाढ्य मधुरस्वरे ॥१२१॥ निजे गृहजने रक्ता। पतीयन्ती तमेव च ॥ पाणिग्रहममन्येऽहं । स्वैराचारार्थमेव नो ॥१२२॥ रूपं मेऽत्य-द्भुतं वीक्ष्या-ऽज्ञात्वैवं चरितं पुनः ॥ पाणिग्रहादिकार्येषु । स्वजनैर्बहुमानिषि ॥२२३॥ आबाल्यान्मधुकण्ठानु-रागादिचरितं ततः ॥ विस्तरात्स्वं समाख्याय। पुनरप्यथ साऽभणत् ॥२२४॥ विश्वासायैव सर्वेषां। त्वयि स्नेहाद्यदीदृशं ॥ विफलः प्रेषितोऽपि द्वि-रायान् यत्रैव तिष्ठसि ॥२२५॥ तत्परिव्राजकादत्त-वलयेन कपीकृतः ॥ तिर्यक्त्वं भुङ्क्ष्व यच्छिक्षां। विना प्रत्येति नो जडः ॥२२६॥ न वेत्सि चेन्मदाकूतं। द्विर्दर्शितमपि स्फुटं ॥ अनन्यगतिकायास्त-द्दोषो मे नेतिचेष्टने ॥२२७॥ क्वचिद्गत्वा घनैः

१ नाथः शिवो नित्यं, विलोक्यसे

स्वैर-मानीतैः पितृवंचनात् । क्रीडिष्यावस्त्वमप्यीत्थं । स्वेच्छं क्रीड कपिव्रजैः ॥२२८॥ निगद्यैवं मम तया । प्रेरितो मधुकण्ठकः ॥ ॥ अचीचलद्दिशीष्टायां । रथं पवनरंहसा ॥ २२९ ॥ ततः क्रोधान्वितः फालै-र्दूरं गत्वा पुनः पुनः ॥ नखैर्व्यदारयं द्राक् तौ 'प्रतोदेनाऽऽहतोऽप्यहम् ॥२३०॥ सप्रतीकारखड्गेन । मूर्ध्नि तेनाहतः क्रुधा ॥ ततोऽहं मूर्च्छितोऽपप्त-मसज्जं चानिलैर्निशि ॥२३१॥ प्रातः कुकुव्विभागाऽज्ञः । कपियूथं निरीक्ष्य च ॥ युधा निर्धाट्य यूथेशं । कपिभिररमे चिरम् ॥२३२॥ अन्येद्युः शबरः कश्चित् । सयूथं मां प्रमादिनं ॥ गृहीत्वा कूटपाशेन । चिरं नृत्ताद्यशिक्षयत् ॥२३३॥ तेन चाऽऽपि तव स्वामि-स्त्वया चाऽद्य नरीकृतः ॥ इति मे चरितं मत्वा । मा कश्चित्स्त्रीषु विश्वसीत् ॥२३४॥ अथवा विषयासक्तः । कां नाप्नोति विडम्बनां ॥ प्रायो विषयसंसक्ताः[2] । स्त्रियोऽपि प्रभवन्ति यत्॥ २३५॥ यतो हि नष्टशास्त्रादि-दृष्टिमत्तान्धमूढवत् ॥ सर्वस्वं स्त्रियमेवैकां । पश्यन् प्राणी विचेष्टते॥२३६॥

इति श्रुत्वा नृपोऽवादी-न्मा विषीद सुहृद्वर ! ॥ सुशीलिताः प्रियाः कृत्वा । भुङ्क्ष्व भोगानशङ्कितः ॥ २३७॥ सोऽप्याख्यद्दुर्लभं किञ्चि-न्न मे त्वयि सति प्रभो ! । भोगानां साधनं मुख्यं । स्त्रियस्ताभ्यो बिभेमि तु ॥२३८॥ ततः सर्वाः स्त्रियस्त्यक्त्वा । चरिष्यामि वने तपः ॥ इहाऽमुत्र च सौख्यायाऽ-नुमन्यस्व तदत्र माम् ॥२३९॥ निशम्यैवं नृपो दध्यौ । हा विरक्तः सुहृन्मम ॥ अथवेदृग् न को दृष्ट्वा । विरज्येत सचेतनः ॥२४०॥ मया धनैर्गजैरश्वैः । पत्तिभिः सबलोऽप्ययं ॥ यथा न शकितस्त्रातुं । स्त्रीमात्रकृतदुःखतः ॥२४१॥ जीवाः सर्वेऽपि निस्त्राणा-स्तथैवाऽस्मिन्नहो भवे ॥ दुःखैरार्त्ताः कदर्थ्यन्ते । विविधैः कर्मवैरिभिः ॥२४२॥इन्द्रोऽपि कीटतां याति । नरकं चक्रवर्त्यपि॥पृथ्वीनाथोऽपि पत्तित्वं । धनाढ्योऽपि दरिद्रताम् ॥२४३॥

१· खड्गेन । २ संसक्तौ ॥

नीरोगोऽपि सरोगत्वं। दौर्भाग्यं सुभगोऽपि च॥सर्वसुख्यपि दुःखित्वं॥समर्थोऽप्यसमर्थताम्॥२४४॥तदेवमत्राऽमुत्रा ऽपि॥तत्कर्मविवर्त्ततः ॥ अवश्यगत्वरेष्वास्था।[1]का सुखेषु विवेकिनाम्॥२४५॥विषयग्रामसेवां हि। मन्यन्ते सुखमङ्गिनः॥तदप्राप्तिं च ते दुःख-मित्यहो जन्मिनां स्थितिः॥२४६॥ तन्मुधा विषयेष्वाशा। दुःखमूलं हि साऽङ्गिनां॥ तामेव वागुरां कृत्वा। स्त्रीव्याधा घ्नन्ति तान्मृगान् ॥२४७॥ पित्रादीन् वञ्चयित्वाऽयं। यथा तिर्यक् कृतोऽनया ॥ कुर्यात्काचित्तथा मां चे-न्नृत्वं धर्मादि वा क्व तत्॥ ॥ २४८ ॥ एकस्यामपि चेन्नार्यां। रक्तोऽयं दुःखभागभूत् ॥ तज्जगद्वञ्चिकास्वासु। रमे बह्वीष्वहं कथम् ॥ २४९ ॥

एवं भवसुखोद्विग्नो। यावद्ध्यायति भूविभुः॥ तावद्वर्द्धापितः कैश्चिन्नियुक्तपुरुषैरिति ॥२५०॥ स्वामिन्! हेमजटो नाम्ना। तापसः सपरिच्छदः॥ प्राप्तोऽस्ति पुरसीमायां। ज्ञानध्यानगुरुर्गुरुः॥२५१॥ नृपः श्रुत्वेति मन्वानो। घृतपूरे सितान्वयं॥ नन्तुं तं सपरिवारो--ऽचलत्तापसधर्मभाग्॥२५२॥ गत्वा सीम्नि तरोर्मूले। निषण्णं तं नृपोऽनमत्॥ दत्वा सोऽप्याशिषं स्माह। धर्मं तस्मै निषेदुषे॥२५३॥ नायं क्लेश्यः कोविदैर्मर्त्त्यदेहः। कामैः कष्टैर्विड्भुजां ये किलार्हाः ॥ नेयः श्लाघ्यां सत्तपोभिर्विशुद्धै-र्यैरात्माऽयं शर्म मुक्तेर्लभेत।२५४।चपलं धनमायुरल्पकं।स्वजनाः स्वार्थपरा वपुः क्षयि॥ललनाः कुटिलाः कुतःपरा-भवभीविघ्नभृते भवे सुखम्।२५५।श्रुत्वेत्यधिकसंवेगा-न्न्यस्य राज्ये सुतं नृपः॥हरिवीरादियुग्जैन-धर्माऽज्ञस्तापसोऽभवत्।२५६॥

तदा स्वर्णजटेत्येत-दाख्यां प्रादाद्गुरुर्मुदा॥ पट्टराज्ञ्यपि राज्ञोऽस्य। प्रतिबुद्धा पतिव्रता ॥२५७॥ तपोविघ्नभिया गर्भ-मनुक्त्वा सुरसुन्दरी॥ तापसी सह तेनैव। बभूव भवभीरुधीः ॥ २५८॥ युग्मं॥ ततो हेमजटः स्वर्ण-जटाद्यैस्तापसैर्वृतः॥ वने

[1] का नृदेवसुरेष्वपि

पञ्चशतीसंख्यै-स्त्राऽऽगत्य तपस्यति ॥२५९॥ गर्भेऽन्येद्युः स्फुटीभूते । पृष्टा साऽवग् यथास्थितं ॥ समये शुभलग्ने च । दिव्यां पुत्रीमजीजनत् ॥२६०॥ ववृधे पाल्यमाना सा । तापसीभिः सुलक्षणा ॥ पुण्यलावण्यवल्लीव । नाम्ना तापससुन्दरी ॥२६१॥ समये तत्पिता स्नेहा-त्तां प्रज्ञाजितशारदां ॥ सद्गुणाढ्यां चतुःषष्टि-मप्यथाऽपीपठत्कलाः ॥ २६२ ॥

काले हेमजटः स्वर्ण-जटायाऽथ निजं पदं ॥ दत्त्वा पल्यङ्कविद्यां च । व्योमगां साधनान्विताम्॥२६३॥लेभे सुरतनूं [नुं]योग--विधेस्त्यक्त्वाऽऽत्मनस्तनूं [नुं] ॥ ततः कुलपतिः स्वर्ण--जटस्तान् शास्ति तापसान् ॥२६४॥ युग्मं ॥ अन्येद्युस्ताद्रिरेर्मूर्ध्नि । चैत्ये तापसर-क्षितुः ॥ गिरिचूडस्य यक्षस्य । पुरो ध्यानासनादिभिः ॥२६५॥ विद्यामाराद्धुमारेभे । विधिवत्तामुपोष्य सः ॥ तस्या लक्षजपे पूर्णे-ऽह्न्येकविंशे सुरोऽतुषत् ॥ २६६ ॥ अदात्पल्यङ्कमसै स । यथेच्छं व्योमगामिनं ॥ नत्वा स्तुत्वा च यक्षेशं । तापसः पारणं व्यधात् ॥ २६७ ॥ स तं पल्यङ्कमध्यास्य । दूरेऽप्यद्रिवनादिषु ॥ तीर्थानि वन्दते स्वैरं । विमानारूढखेटवत् ॥ २६८ ॥

प्रापत्सौभा-ग्यसीमाऽथ । तनया तस्य यौवनं ॥ यद्रूपन्यक्कृता दुःखात् । कमला चपलाऽभवत् ॥२६९॥ गुणरूपकलास्तस्या । एवं चेद् द्विद्विरूपतां ॥ प्रत्येकं दधते तर्हि । सोपमाः स्युर्नचाऽन्यथा ॥२७०॥ तस्याश्च व्याकुलो वप्ता-ऽनुरूपवरचिन्तया ॥ भ्राम्यन् पल्य-ङ्कगो नाना-भूपपुत्रान् विलोकते ॥२७१॥ क्वाऽपि राजकुलेऽन्येद्युर्द्रष्टुं कमपि भूपजं ॥ गतः प्रत्यागतश्चाऽयं । व्याघ्ररूपेण तल्पगः ॥२७२॥ तं दृष्ट्वा तापसा भीत्या । नश्यन्तस्तेन संज्ञया ॥ सन्धीरिताः स्थिताः सोऽपि । भूमावित्यलिखन्नखैः ॥२७३॥ शप्त्वां व्याघ्रीकृतः स्वर्ण-जटो देवेन केनचित् ॥ नरोऽहं धर्मतत्वज्ञा-ञ्ज्ञावीत्याऽऽनयताऽत्र तम् ॥२७४॥ तापसेभ्यः परो धर्म-तत्त्वज्ञः को भवेदिति ॥ प्रायुंक्षत स्वमन्त्राद्यां-स्तेऽतः कार्यं तुनाऽसिधत् ॥ २७५ ॥ सांख्यौलूक्याऽक्षपादादि- मतस्थैरपि कारिताः ॥ एवमेव

प्रतीकाराः प्रापुर्विफलतामिह ॥२७६॥ ततश्चिन्ताकुलाः सर्वे–ऽनासाद्यौपयिकान्तरं ॥ मदाद्यास्तापसाः जग्मु–र्गिरिचूडस्य मन्दिरम् ॥२७७॥ शुचयस्तत्पुरो दर्भ–संस्तरस्था उपोषिताः ॥ जपध्यानासनाचाद्यै–स्तमारात्सुः प्रयत्नतः ॥ २७८ ॥ तुष्टः सोऽष्टोपवासान्ते ऽप्राक्षीद्देवः प्रयोजनं ॥ तेऽप्यवोचन् स्वरूपस्थ–मस्मत्कुलपतिं कुरु ॥ २७९ ॥ देवः प्रोचे न चेयं मे । शक्तिर्व्याघ्रीकृतो ह्ययं ॥ मरुता महता तस्माद् । ब्रूत भोः किं करोमि वः ॥ २८० ॥ तेऽवदन्निष्टसिद्ध्यै तद्धर्मतत्त्वज्ञमानय ॥ जगौ देवस्तमानेष्ये । विज्ञाय ज्ञानिनो गिरा ॥ २८१ ॥ ततः क्काऽपि क्षणं गत्वा । पुनरागत्य सोऽवदत् ॥ संगन्ता वः स्वयं तुर्ये । सोऽह्नीत्युक्त्वा च खेऽगमत् ॥२८२॥ पारणाहात्तुरीयेऽह्नि । तापसेषु मदादिषु ॥ मार्गं विलोकयत्स्वद्य । त्वं दिष्ट्याऽऽगाः कुतश्चन ॥ २८३ ॥ स्वरूपस्थं कुलपतिं कर्तुं शक्नोषि भद्र ! चेत् ॥ तदा कुरु सतां कृत्यं । परोपकृतिरेव हि ॥ २८४ ॥

व्याघ्रस्य चरितं चित्रं । हरिवीरमुखादिति ॥ श्रुत्वा स विस्मयं सर्व–मयं तान् प्रत्यथाऽवदत् ॥२८५॥ विधास्ये वोऽर्थितं सर्वं । यदि सर्वज्ञदेशितं ॥ धर्मतत्त्वं प्रपत्स्यध्वे । सम्यक् संप्रति मन्मुखात् ॥२८६॥ तेप्यूचुर्यदि नः कार्यं । करिष्यसि कृतिस्ततः ॥ भावी त्वमेव देवोक्त्या । तत्वज्ञः सुगुरुश्च नः ॥२८७॥ कुमारः साह तद्वह्नि–फलाद्यानयत द्रुतं ॥ तदुक्तं तेऽपि चानिन्यु–र्वह्निकुण्डाद्यपि व्यधुः ॥२८८॥ एते ग्राह्याः प्रबोध्याश्चाऽऽ–डम्बरेणेति चिन्तयन् ॥ कुमारोऽप्यकरोत् [1]स्नात्वा । मुद्राध्यानासनादिकम् ॥२८९॥

ॐ नमोऽर्हद्भ्यः ह्रीँ सर्वसंपद्वशीकरेभ्यः, ह्रीँ नमः सर्वसिद्धेभ्यः सिद्धानन्तचतुष्टयेभ्यः, श्रीँ नम आचार्येभ्यः पञ्चाचारधरेभ्यः, ॐ नम उपाध्यायेभ्यः सर्वविघ्नभयापहारिभ्यः, ॐ नमः सर्वसाधुभ्यः सर्वदुष्टगणोच्चाटनेभ्यः, सर्वाभीष्टार्थान् साधय

१ स्नान

साधय, सर्वविघ्नान् स्फोटय स्फोटय, सर्वदुष्टानुच्चाटय उच्चाटय, एनं स्वं रूपमानय हूँ फुट् फुट् स्वाहा ॥

इत्यादिमन्त्रानुच्चार्य । हुत्वा पुष्पफलादि च ॥ तं पुरःस्थापितं व्याघ्र-मसकृत् पाणिना स्पृशन् ॥२९०॥ औषधीं रेल्लणी-दत्तां । यथेच्छं रूपकारिणीं ॥ नैपुण्यान्न्यस्य तच्छिर्षे । तं प्राग्रूपं नरं व्यधात् ॥२९१॥ दृष्ट्वा कुलपतिं पूर्व-रूपं सर्वेऽपि तापसाः॥ नेमुः प्रमुदितास्तार-कुमारस्तुतिकारिणः ॥२९२॥ सोऽपि सोत्कण्ठमालिङ्ग्य । कुमारमवदन्मुदा ॥ नमो हारितमानुष्य-चिन्तारत्न-प्रदाय ते ॥ २९३ ॥

अथाऽपृच्छन् कुलपतिं । कुमारस्तापसाश्च ते ॥ कथं ते व्याघ्रतैषाऽभू-दित्याद्येपोऽभ्यधात्ततः ॥ २९४ ॥ कन्याया वरवीक्षार्थं । भ्राम्यन् पर्यङ्कगोऽन्यदा ॥ गगनाद्भ्रष्टपर्यङ्को । न्यपतं गिरिमूर्द्धनि ॥२९५॥ तत्राऽद्राक्षं तत्क्षणे स्वं । व्याघ्रीभूत-मथो मुनिं ॥ शिलास्थं ध्यानगं जैनं । तदग्रे चाग्रिमं सुरम् ॥२९६॥ देवीचतुष्टयीकृप्त-गीतवाद्यलयानुगं ॥ मोहनं विश्वनेत्राणां । नृत्यन्तं दिव्यभङ्गिभिः ॥२९७॥ युग्मं॥ अयमेव ममाकार्ष-दागसा केनचिन्मुनिः॥ विचिन्त्येति प्रणम्याऽऽख्यं । रुदन् दुःखात्स्वभा-षया ॥२९८॥ भगवन्नपराद्धं किं । मया यन्मामपीपतः ॥ त्वं व्याघ्रत्वमनैषीश्च । प्रसीदाऽथ नृतां नय ॥२९९॥ मुनिर्जजल्प संकल्प-मात्रमप्यत्र नैव मे ॥ किं चैतत्त्रिदशोऽकार्षी-द्देष रोषात्कुतश्चन ॥३००॥ नाट्यं कृत्वा स्थिते देवे । विदित्वा समयं ततः ॥ पुनस्तं मुनिमप्राक्षं । कोऽयं कस्माच्चुकोप मे ॥ ३०१ ॥ आरणत्करुणासारः । सुरवृत्तं मुनिर्यथा ॥ खेटैश्वर्यं परित्यज्य । प्रव्रज्या-महमाददे ॥३०२॥ क्रमादधीतसिद्धान्तो । [1]द्विविधोरुतपः परः॥ विहरे बोधयन् भव्या-नेकाकी गुर्वनुज्ञया॥३०३॥ अन्यदा गगने

---

१ द्विधा घोरतपः परः

गच्छन् । गिरेरस्यैव मूर्द्धनि॥महन्तमिभमद्राक्षं । हन्यमानं मृगारिणा ॥३०४॥ तत संजातकारुण्यो–ऽवतीर्य द्रुतमम्बरात् ॥तपःप्रभा-
वतः सिंहे । नष्टे स्वस्थस्य हस्तिनः॥३०५॥सर्वाङ्गिक्षमणात्सर्व-पापव्युत्सर्जनादिकं॥कारयित्वाऽऽददे पञ्च–परमेष्ठिनमस्कृतिम्॥३०६॥
॥ युग्मं ॥ शुभध्यानान्मृतः सोऽभू–त्सौधर्मे त्रिदशोत्तमः ॥ मणिचूडाभिधः पञ्च–परमेष्ठ्यनुभावतः ॥ ३०७ ॥
यदुक्तं–नाणाविहपावपराणो वि, जं पाविऊण अवसाणे । जीवो लहइ सुरत्तं तं सरसु मणे नमोक्कारम् ॥१॥

देवीकृतजयारावः । स प्राक्पुण्यं विचिन्तयन् ॥ ज्ञानाद् ज्ञात्वोपकारं मे । द्रागाऽऽगत्याऽत्र भक्तितः॥३०८॥ तेजोभिर्भासय-
न्नाशाः । प्रशान्तं मां शिलास्थितं ॥ नत्वाऽऽख्याय स्ववृत्तान्तं । मुदाऽनृत्यत्पुरो मम ॥३०९॥ युग्मं ॥ पर्यङ्कच्छायामालोक्य ।
त्वामायान्तं ममोपरि ॥ मत्वाऽऽशातनया क्रुद्धः । शप्त्वाऽनैषीदृशामिमाम् ॥३१०॥ एवं मुनिगिरं श्रुत्वा । नत्वा तं विनयात्सुरं ॥
वर्षन्नश्रूणि दीनोक्तिः । शापमोक्षमयाचिषि ॥ ३११ ॥ अलपत्कृपया स्वर्गी । राज्यभोगादि मूढ रे ॥ त्यक्त्वाऽपि त्वं न जानासि
तत्त्वान्याशातयन्नृषिम् ॥३१२॥ निष्फलं मा तपः कार्षी–र्भद्र [1]व्रजाऽऽश्रमं निजं ॥ प्राग्वत्पर्यङ्कमारुह्य । मत्प्रभावेण साज्जितम् ॥३१३॥
मासान्ते तत्त्ववेदी त्वां । स्वभावस्थं करिष्यति ॥ तस्मात्तत्त्वानि विज्ञाय । दद्यास्तस्मै निजां कनीम् ॥३१४॥ ततस्तथाऽहमत्राऽऽगां ।
सर्वं वो ज्ञातमग्रतः ॥ इत्याकर्ण्य चमच्चक्रुः । कुमारस्तापसाश्च ते ॥३१५॥ ततः कृत्वोत्सवान् हर्षा–त्तापसीगीतमङ्गलान् ॥
कुमारं धर्ममप्राक्षुः । सर्वे संभूय तापसाः ॥३१६॥ दिदेश विस्तरात्सोऽपि । द्विविधं धर्ममार्हतं ॥ ऊरीचक्रुश्च ते बुद्धाः ।
सम्यक्त्वाणुव्रतादिकम् ॥ ३१७ ॥

१ व्रज निजं पदं

अथ कुमारीः प्रोचे । कुमारोक्तोऽस्ति नाकिना ॥ मत्कन्यायाः पतिर्भावी । तत्तां परिणय द्रुतम् ॥३१८॥ इत्याकर्ण्य कुमारोऽपि । यावत्किंचिन्न विश्मन ॥ तावत्सुमनसां वृष्टि-स्तन्मूर्ध्नि व्योमतोऽभवत् ॥३१९॥ तां वीक्ष्य तापसा याव-त्समीक्षन्ते पलाकुलाः ॥ गिरिचूडगुरुस्तावत् । प्रादुर्भूयेत्यभाषत ॥३२०॥ भो भो मुनिर्मयाऽपृच्छि । ज्ञानी तत्र गिरौ स्थितः । कथमेष नरो नारी । सोऽवदत् तत्प्रसंगमात् ॥३२१॥ ततोऽप्राक्षं कथं ज्ञानी । मया ज्ञेयः स तत्त्ववित् ॥ स स्माह कोलरूपं त्वां । यो जेष्यति नरेन्द्रभूः ॥३२२॥ ततोऽहं राजधानीषु । भ्रमन्नुपवनावलीः ॥ कोलरूपेण बभ्राम । कोऽप्यजैषीन्न मां पुनः ॥३२३॥ ततो हेम-पुरेऽजैषीदभूत्तागममर्मार्दनं ज्ञात्वा दोर्मात्रवशोऽयं । नष्टे भूपसुतां हते ॥३२४॥ अपहृत्येभरूपादि-माययाऽयं ततो मया ॥ आनिन्ये गरटो व्योम्ना । कन्यायै हितकाम्यया ॥३२५॥ सौन्दर्यौदार्यशौर्योप-कारसद्धर्मतादिभिः ॥ गुणैर्नान्योऽस्य तुल्योऽस्ती-त्यनुभूतमिदं मया ॥३२६॥ अरण्यः कौतुकादत्रा-ऽऽगतः कुलपतेरहं ॥ स्वभावापादनायेत-द्द्राक्षमखिलं समुत् ॥३२७॥ अश्रौषं च भवद्भ्योऽर्ह-द्धर्मेणैव देशितं ॥ ततः प्रबुद्धसंस्कारः । प्राग्जन्माऽचिन्तयं मुदा ॥ ३२८ ॥ तथाहि—

पुरे धन्यपुरे धन्या-भिधानो धनवान् पुरा ॥ अजनीह जनी तस्य । नाम्ना वसुमती सती ॥३२९॥ सुहृत् श्रावकसंसर्गा-दन्यदा संगमे गुरोः ॥ ततः श्रुत्वा स सम्यक्त्व-मूलं धर्ममुपाददे ॥३३०॥ अन्यदा तस्य जायाया । देहे प्रादुरभूद्रुजा ॥ तस्याः शान्त्यै स सर्वेऽपि-चिकित्सामप्यचीकरत् ॥३३१॥ भिषग्भिर्भापितैर्वीर्य-वद्भिर्विविधभेषजैः ॥ तद्देहे ददृशे नैव । गुणः कोऽपि कथं-चन ॥३३२॥ तथापि तद्दृढप्रेम्णा । सोऽपृच्छन्मान्त्रिकादिकान् ॥ स्वसाशायाः कृतास्तैश्च । न त्वेभ्यः कोऽप्यभूद्गुणः ॥३३३॥ ततः स गाढं तन्नेह-प्रतिलासमा पदे पदे ॥ पुरे परिभ्रमन्नान्य-ऽऽटिकार्पटिकानपि ॥३३४॥ उज्जागरोऽर्जितैर्जातु । प्रयोगैर्जं-

जयीति यः ॥ मज्जायाया रुजं न्यक्षां । लक्षं तस्मै ददाम्यहम् ॥३३५॥ इति श्रुत्वा ततः कश्चित् । स्फुटीभूय जटी तदा ॥ तमब्रवीत्क्षणाद्वीतामयां कुर्वे तव प्रियाम् ॥३३६॥ परं सत्यप्रतिज्ञः स्याः । सोपचारश्च चेन्मयि ॥ तदाकर्ण्याऽऽदरात्सोऽपि । तथेति प्रत्यपद्यत ॥३३७॥ विनयेन गृहं नीत्वा । तं स्वजायामदर्शयत् ॥ सन्तोष्य तं च भक्त्या तत्-प्रतीकारमकारयत् ॥३३८॥ तेन प्रयुक्तैरगदै-स्तदङ्गादगमद्गदः ॥ संहृष्टः प्रेक्ष्य सज्ञां तां । केकी कादम्बिनीमिव ॥३३९॥ क्रमात्तद्वपुराप्यायि । तैर्वनं वारिदैरिव ॥ तस्यायुर्वेदवैदग्ध्य-दर्शनाच्च चमत्कृतः ॥३४०॥ स्थापयामास तं मास-माग्रहादत्र जट्यपि ॥ स्वधर्ममुक्त्वाऽर्हद्धर्मे निर्ममे श्रेष्ठिनं श्लथम् ॥ ३४१ ॥ युग्मं ॥ ततोऽनालोच्य पापं त-त्प्रान्तेऽसौ सन्मतिर्मृतः ॥ गिरिचूडसुरः सोऽहं । जातस्तत्पुण्ययोगतः ॥३४२॥ युष्माभिः सह बुद्धश्च । प्रपेदे शुद्धदर्शनं ॥ प्रादुरासं गुरोः शीर्षे । पुष्पवृष्टिं विधाय च ॥३४३॥ देवोक्ताय वरायाऽसै । दद्ध्वं तापससुन्दरीं ॥ कृतार्थः स्याद्यथोद्वाह्यः । स्वोपकारिणमुत्सवैः ॥ ३४४ ॥

श्रुत्वेति कुलपत्याद्याः । कन्यां तां प्रत्यपीपदत् ॥ मुदाऽभ्यर्थ्य कुमारं द्राक् । सामग्रीं च सुरोऽकरोत् ॥३४५॥ रत्नस्तम्भस्थमुक्तास्रक्-तोरणे स्वर्णमण्डपे॥देवीभिस्तापसीभिश्च। गीयमानोरुमङ्गलम्॥३४६॥ अश्रान्तदुन्दुभिध्वान-सुरबन्दिजयारवं ॥ चित्रान्मिलितगीर्वाण-विद्याभृद्गणसंस्तुतम् ॥३४७॥ कुर्वत्युत्सवमस्वप्ने । तापसाः पर्यणीनयन् ॥ कुमारेण कनीं दिव्यवस्त्राभरणभूपिताम् ॥ ३४८ ॥ ददौ देवः कुमाराय। वस्त्राकल्पादि दैवतं ॥ तुष्टः कुलपतिश्चाऽपि। पल्यङ्कं व्योमगामिनम् ॥३४९॥

अथ तत्र वने रम्ये । गिरिचूडेन निर्मिते ॥ स्वर्विमानोपमे हर्म्ये । सप्तभौमे हिरण्मये ॥३५०॥ स्वाद्यखाद्यादिसामग्र्या । सर्वाङ्गीणसुखाकरे ॥ तद्देवपरिवारेण । सेव्यश्चिन्तितदायिना ॥३५१॥ रूपात्यप्सरसा पत्न्या । तया स्निग्धनवोढया ॥ कुमारो

विलसन् दिव्य-भोगसौख्यानि देववत् ॥ ३५२ ॥ उवास तापसप्राप्त-धर्मवृद्धिविधित्सया ॥ नानातीर्थानि पल्यङ्क-चलान्नित्यं च वन्दते ॥३५३॥ चतुर्भिः कलापकं ॥ युतो वा रहितो वाऽपि । पत्न्या स्वैरं कदाचन ॥ क्रीडत्यमरवन्नाना-नदीवार्द्धिवनादिषु ॥ ३५४ ॥ जैनधर्मविधिं सम्यक् । स शिक्षयति तापसान् ॥ दीक्षां जैनीं फलं चास्या-स्तेपामुपदिशत्यपि ॥ ३५५ ॥ क्रमादधीत-सिद्धान्ताः । सर्वानुष्ठानवेदिनः ॥ तेऽप्यर्हच्छासने दक्षाः । प्रविव्रजिषवोऽभवन् ॥३५६॥ एवं नरा धर्ममहामहिम्ना । [1]सदा समाप्त-स्थितिभोगयोगाः ॥ सेव्याः सुरैरप्युररीक्रियन्ते । स्वयं सुखैः स्वर्गिजयश्रियेद्धैः ॥३५७॥ इति श्रीतपागच्छाधिराजश्रीमुनिसुन्दर-सूरिविरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे जयश्र्यङ्के श्रीजयानन्दकुमारस्य देशान्तरचर्यायां हेमपुरपुरोद्यानगदुर्जयकोलविजय-तापसाश्रमगमन-स्वर्णजटकुलपत्यादितापसपञ्चशतीसहितगिरिचूडयक्षप्रतिबोध-कुलपतिपुत्रीतापससुन्दरीतृतीयपत्नीपरिणयन-कुल-पतिदत्तपल्यङ्कविद्याऽन्वितगगनगामिपल्यङ्कचलनानातीर्थनमस्करणादिवर्णननामा सप्तमः सर्गः समाप्तः॥ श्रीरस्तु॥ग्रन्थाग्रं ३६५॥

## ॥ अथाष्टमः सर्गः प्रारभ्यते ॥

यो देवान्तरवृन्दवर्त्तिविविधाऽनेकप्रभावप्रभा-प्रस्थानप्रतिपन्थितां प्रथयति ग्रीष्मोऽत्र भीष्मः कलिः ॥
यन्माहात्म्यभरः स्फुरत्यपभयं तत्राऽप्यहो सर्वगः। सर्वं शीतलयन् जगत् सुखयतादस्मान् स पार्श्वप्रभुः ॥१॥

अथाऽन्येद्युरिहावासे । सप्तमीं भूमिमास्थितः ॥ यावद्भद्रासनासीनः । कुमारोऽभ्रं विलोकते ॥ २ ॥ तावदेकं परिव्राजं।

[1] सदाऽपि सूपस्थित° प्रत्यन्तरे

सुरूपं यौवनोद्धुरं ॥ ददर्शाऽवतरन्तं खात् । स्वसमीपं प्रति द्रुतम् ॥ ३ ॥ तत्राऽऽगत्य मुनिस्तस्मै । दत्ताशीर्दापितासने ॥ निविष्टः सस्पृहं तस्य । मुखाम्भोजं विलोकयन् ॥ ४ ॥ कुमारः स्माह कस्त्वं भो ! । कुत आगाः ! किमिच्छसि ! ॥ ब्रूहि प्रयोजनं येन । तद्दत्वैमि कृतार्थताम्॥५॥अबुध्ये ह्यर्थितामात्रं । व्यक्त्या[ज्ञात्वा]नत्वाऽर्थ्यमिङ्गितैः॥तस्य ज्ञानेऽप्यदानेन । दानिवादः कलङ्क्यते॥६॥ याश्चालज्जां प्रापितेनाऽ–र्थिना यदघमर्ज्यते ॥ विलम्ब्य ददतोऽप्येत–न्नाऽपैति सुकृतं कुतः ॥ यदुक्तं–प्रापितेन चटुकाकुविडम्बं लम्भितेन बहुयाचनलज्जां ॥ अर्थिना यदघमर्ज्यते दाता । तन्न लुम्पति विलंब्य ददानः ॥७ ॥ याचमानजनमानसवृत्तेः । पूरणाय बत जन्म न यस्य ॥ तेन भूमिरिह भारवतीयं । न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ८ ॥ मीयतां कथमभीप्सितमेषां । दीयतां द्रुतमयाचित एव ॥ तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥ ९ ॥ कथमस्याऽर्थितं बुध्ये । ददे च द्रागयाचितं ॥ कुमारे चिन्तयत्येवं । तस्मिन्[त्रैध]वीरशिरोमणौ॥१०॥परिव्राट् स मुदाऽवादी–नैवाऽसाध्यं न किश्चन॥ शूरः परोपकारी च । न त्वत्तः परमः परः ॥ ११ ॥ शृणु वच्मि स्ववृत्तान्त–मभूद्गङ्गातटे गुरुः॥ भद्रदत्ताभिधस्तस्य । गङ्गोदत्तोऽस्मि शिष्यकः ॥ १२ ॥ गुरुदत्तौषधीकल्पा–ल्लक्षयाम्यौषधीरहं ॥ गिरौ मलयकूटाह्वे । सन्ति ता विविधाः पुनः ॥ १३ ॥ लक्ष्याः स्युर्विधिना सम्यग् । साधिता एव ताः परं ॥ ततस्तत्राऽसकृद्गत्वा । प्रारेभे साधना मया ॥ १४ ॥ परं मलयमालोऽस्य । क्षेत्रपालो गिरेः प्रभुः ॥ भापयत्युपसर्गैर्मा । न ताः साधयितुं क्षमे ॥१५॥ गुर्वाम्नायकृतस्वाङ्घ्रि–लेपाद्योजनमम्बरे ॥ एकैकोत्पाततो याऽमीत्युर्व्यां बंभ्रमाम्यहम् ॥ १६ ॥ प्राप्तोऽद्याऽस्मिन् वने वीक्ष्या–ऽसम्भवं स्वर्णमन्दिरं ॥ अवेदं तापसप्रश्नाद् वृत्तं लोकोत्तरं तव ॥ १७ ॥ अपि देवैरजय्यं त्वां । निबुध्य तदुपागमं ॥ याचितुं स्वार्थसिद्धं य–द्याश्चामर्हति न ह्रिये ॥ १८ ॥ भद्र ! शक्नोषि चेज्जेतुं ।

क्षेत्रपं तद्भवौषधीः ॥ मम साधयतो विघ्नान् । हर्तुमुत्तरसाधकः ॥ १९ ॥ कुमारः स्माह विश्वोप-चिकीर्षोरेतदल्पकं ॥ तत्त्वार्थ-श्चेद्विजित्येन्द्र-मपि तत्साधयामि तम् ॥ २० ॥ सोऽभ्यधात्साधु साध्वेत-त्संभवत्यखिलं त्वयि ॥ योजनानां शते दूर-मितो भवति सोऽद्रिराट् ॥ २१ ॥ साधना चाऽसितद्वाद-श्यहन्यारब्धा त्रिभिर्दिनैः ॥ सिद्धिं चतुर्दशीरात्रौ । याति निर्विघ्नता यदि ॥ २२ ॥ अद्य चाऽऽस्तेऽष्टमी कृष्णा । तत्सज्जीभव सन्मते! ॥ प्रातः स्कन्धेऽधिरोप्य त्वां । यामि व्योम्ना दिनैस्त्रिभिः ॥२३॥

इत्यत्वाऽवदत्कुमारोऽथ । याहि स्वार्थं प्रसाधय ॥ स्वशक्त्यैव समेष्यामि । द्वादश्यामुदये रवेः ॥२४॥ नाऽत्राऽर्थे संशयः कार्यो । न चलत्येव यत्सतां ॥ प्रतिपन्नं युगान्तेऽपि । भूमेर्वादिनिदर्शनात् ॥ २५ ॥ श्रुत्वेति मुदितः सोऽगात् । खगत्योपस्कराऽन्वितः ॥ तत्राऽऽप्त्यै मिलनस्थानं । सुविज्ञाप्य नृपाङ्गजम् ॥२६॥ प्रिये ! मलयकूटाद्रौ । गत्वा स्थित्वा दिनत्रयं ॥ विद्यासाधकसान्निध्यं । कृत्वैष्यामि त्वयादिह ॥२७॥ परोपकारपुण्यस्य । त्वमप्यंशमवाप्नुयाः॥पित्राद्यैः पाल्यमानाऽत्र । तावत्तिष्ठेः समाहिता॥२८॥

इति प्रज्ञाप्य पत्नीं स्वा-मगादेकादशीनिशि ॥ कुमारोऽप्यथ तत्राऽद्रौ । पल्यङ्केनाऽकुतोभयः ॥२९॥ संगोप्य क्वाऽपि पल्यङ्कं । साधकं सोऽमिलत्प्रगे ॥ आख्यच्च साधयेष्टं भोः । श्रीजये मयि रक्षके ॥ ३० ॥ आरेभे मुदितः सोऽपि । स्तुवंस्तत्सत्साहसे ॥ विधिना साधनां विघ्नान् । श्रीजये घ्नति सायुधे ॥ ३१ ॥ तृतीयेऽह्न्यथ भूतेष्टा-निशि प्राच्यामुदैक्षत ॥ कुमारोऽभ्यायतीं घोरां । धूम्यामन्धितदिङ्मुखाम् ॥३२॥ स प्राग्देव्यर्पितौषध्याः । सांनिध्यादकुतोभयः ॥ नमस्कारजपात्तां द्राग् । धीरः प्रत्यवधीद् द्रुतम् ॥ ३३ ॥ ततः सोऽवहितः पश्य-न्नग्निं धूम्यानुगं क्षणात् ॥ प्राग्वत्प्रत्यक्षिपद् भीष्म-मट्टहासमथाऽशृणोत् ॥३४॥ यावत्तेनाऽपि न क्षुभ्य-त्येष धीरितसाधकः ॥ तावद्व्योम्नीत्यभूद्वाणी । प्राणिनां च हृदेकभित् ॥ ३५ ॥

किमसि साधकं पूर्व–मथवोत्तरसाधकं ॥ श्रीजयः स्माह पापाणा–नद्रि नाऽऽवां वशे तव ॥ ३६ ॥ कथमत्ति मृगः सिंहं । मृगं वा सिंहरक्षितं ॥ जयामि शक्रमप्येष । त्वज्जये का पुनः कथा ॥ ३७ ॥ पुनर्गीः खेऽभवत्किं रे–ऽन्यार्थं मूर्ख! मुमूर्षसि ॥ किं न वेत्सि न मौखर्य–जय्याः स्युर्निर्जराः क्वचित् ॥ ३८ ॥ व्रज दूरं त्यज स्थैर्यं । यन्न त्वां हन्म्यनागसं ॥ साधकं तु हनिष्यामि। सागसं त्वय्यवत्यपि ॥३९॥ अयं हि मद्गिरेरिच्छु–रादातुं विविधौपधीः॥न मेऽर्चाद्यकरोद्विद्यां । साधयन्निति हन्यते॥४०॥

हसित्वाऽऽह कुमारोऽपि । किमदृश्यो भवस्यथ ॥ वीरश्चेद्भव दृश्यस्त्वं । यथा ते वेद्मि वीरताम् ॥ ४१ ॥ तर्जितः श्रीजयेनैव–ममरः सोऽपि कोपिहृद् ॥ दृश्योऽभूत्कोलरूपेण । कम्पिताद्रिः पदाहतैः ॥ ४२ ॥ कुमारोऽभ्यापतन्तं त–मञ्जनगिरिगोत्रिणं ॥ पोत्रिणं वीक्ष्य दुर्द्धर्पं । सतर्पं समरं समम् ॥ ४३॥ समं तेन चिकीर्षुः सन् । देवीदत्तौपधीवलात् ॥ विधाय शौकरं रूपं । युधे क्रुद्धोऽभ्यधावत ॥४४॥ युग्मं ॥ ततो द्वावप्ययुध्येतां । मिलितौ तौ मदोद्धुरौ ॥ सुघोरैर्घुर्घुरारावै–र्गर्जयन्तौ गिरेर्दरीः ॥ ४५ ॥ दंष्ट्राभ्यां तौ मिथो घ्नन्तौ । दारयन्तौ नखैः खरैः ॥ वलगन्तौ विचटन्तौ च सस्पर्द्धौ जयगर्वितौ ॥ ४६ ॥ कम्पयन्तौ गिरेर्धात्री–मुत्प्लुत्योत्प्लुत्य पाततः ॥ महाकायौ महौजस्कौ । चक्राते दारुणं रणम् ॥ ४७ ॥ युग्मं ॥ [1]बलादभङ्क्त्वाऽथ दंष्ट्राभ्यां । द्रुतं दैवतदंष्ट्रिणं ॥ अजैषीत् श्रीजयो दंष्ट्री । नष्टः कष्टात्त्वसौ रसन् ॥४८॥ ततः सुरः स [2]करटी–भूय प्रादुरभूत्पुरः ॥ तथैव करिरूपेण । कुमारस्तमयोधयत् ॥ ४९ ॥ [3]अचलाप्यचलद्व्योम । पुस्फोटे च तयोर्युधि ॥ अपतन् गिरिशृङ्गाणि । गर्जितादिभिरूर्जितैः ॥५०॥ भग्नदन्तं त्रुटच्छुण्डं । सर्वाङ्गस्फुरितव्यथं ॥ अनीनशत्कुमारेभः । प्रतीभं भाग्यवान् क्षणात्



१ भङ्क्त्वाऽथ दंष्ट्रे प्रत्यन्तरे  २ गजः  ३ पृथ्वी

॥ ५१ ॥ ततस्तौ सिंहरूपेण । पुच्छाच्छोटस्फुटाद्रिरि । विविधं युयुधाते द्राक् । सुरसिंहस्त्वभज्यत ॥ ५२ ॥

सर्वयुद्धेष्वजय्यं तं । दृष्ट्वाऽथ क्रोधभृद्भृशं ॥ प्रादुरासीत्सुरः कृत्वा । रूपं विश्वभयावहम् ॥५३॥ तथाहि—तालोच्चस्थूल-जङ्घाभृन्महीभृत्कन्दरोदरः ॥ पृथ्वायतशिलोरस्को । लम्बातिकृशकन्धरः ॥५४॥ स्फुटं कटाहवुध्नाऽऽस्यः । कीलकाभरदावलिः ॥ अग्निस्थानेक्षणः स्थूल–तुच्छचिर्पटनासिकः ॥ ५५ ॥ वटशाखाभदोर्दण्ड–न्न्यस्तमृटकमुण्डकः ॥ पिशङ्गस्थूलकेशौघो । निम्नगल्लो विलश्रुतिः ॥ ५६ ॥ स्थूलरज्जूपमस्नायु–लैंटिकाङ्गुलिसन्ततिः ॥ पात्रवुध्नांजनश्यामो । रौद्रबीभत्सदर्शनः ॥५७॥ नादयन्तं गुहाः स्वीय–नादैर्डमरुकं मणिं ॥ नागान् स्फारस्फटाटोपान् । फूत्कारै रोदसीभृतः ॥५८॥ मुद्गरं करवालं च । चतुर्भिः पाणिभिर्दधन् ॥ स दिशः पद्धुजाघाता–ट्टहासैर्गर्जयन् जगौ ॥ ५९ अहं मलयमालोऽस्य । क्षेत्रपालो गिरेर्विभुः ॥ त्वया सार्द्धं व्यधां युद्ध–केलिं कोलादिरूपभाक् ॥ ६० ॥ अदीदृशं च यत्स्वाभि–भवं तत्केलिवृद्धये ॥ ततस्तैर्जित्वरंमन्यो । मास्मभूर्मूढ ! रे मुधा ॥ ६१ ॥ न विनष्टं किमप्यद्या–प्ययेथाश्चेज्जिजीविषुः ॥ परार्थं हि मुमुर्षुं त्वां । न बालं मे घ्नतो यशः ॥ ६२ ॥

उवाच श्रीजयो युद्धा–न्येवं ते केलयेऽभवन् ॥ मम त्वन्योपकाराय । पूर्यते न त्वया तु सा ॥ ६३ ॥ यतः—दैत्यारिर्वा हरो वा सुरपतिरपि वा सम्भृतः स्वास्त्रपङ्क्त्या। विश्वस्याऽप्यन्तकृद्वा समहिषगमनोऽन्योऽपि वा लोकपालः॥ तिष्ठेचेत्सङ्ख्यसङ्ख्याविदतुलबलतां ख्यापयन् मदृगग्रे। किञ्चित्तत्पूर्यते भो मम भुजयुगलस्योर्जितस्फूर्त्ति-केली ॥ ६४ ॥ न वपुर्वयसोः स्फात्या । जीयते किन्तु तेजसः ॥ बालस्याऽपि रवेः पादा। मूर्ध्ना धार्या हि भूधरैः ॥६५॥ यदुक्तं—

[1]हस्ती स्थूलशिराः स चाङ्कुशवशः किं वज्रमात्रो गिरि–र्दीपे प्रज्ज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः ॥
कल्लोलोल्ललितो द्रुतं हि गलितो वार्द्धिश्च कुम्भोद्भुवा। तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः॥६६॥
मृत्युरप्यर्थ्यते धीरैः। परोपकृतये यतः ॥ स्थिरधर्मयशःप्राणाः । प्राणन्त्येव मृता अपि ॥ ६७ ॥ जयो वा मरणं वा मे। युद्धैव ज्ञास्यते परं ॥ स्वौजः प्रत्येपि चेन्न प्राग्–युद्धैर्युध्यस्व तत्पुनः ॥ ६८ ॥

स एवं तर्जितोऽनेन। समुत्पाट्याऽसिमुद्गरौ ॥ क्रोधान्धः क्षेत्रपो हन्तुं। कुमारं प्रत्यधावत ॥६९॥ तद्रूपसदृशं रूपं। कृत्वौ–पध्याऽसिभृत्करः ॥ उपतस्थौ कुमारोऽपि। योद्धुं स्मृतनमस्कृतिः ॥ ७० ॥ दाक्ष्याद्वञ्चयमानौ तौ। घातान् दत्तान् मिथः क्रुधा ॥ खड्गाखड्गि चिरं वीरौ। युयुधाते मदोद्धुरौ ॥ ७१ ॥ दुर्जयं श्रीजयं मत्वा। क्षेत्रपस्तु छली बली॥ वाद्यध्यानैः श्रुती विध्यन् । नागैरङ्गानि दंशयन् ॥ ७२ ॥ आघ्नन्मुद्गरखड्गाभ्यां। चतुर्भिर्युगपद्भुजैः ॥ युयुधे सर्वशक्त्यैवं । भापयंस्त्रिदशानपि ॥ ७३ ॥ अथौजसा विघ्नहरौ–पध्या। धर्मौजसाऽपि च॥कुमारः करवालेनाऽ–भेत्सीड्डमरुकं द्रुतम् ॥७४॥ नागांश्च खण्डशश्चक्रे। मुद्गरं चाप्य–चूर्णयत् ॥ शतखण्डं व्यधात् खड्गं। किं हि पुण्यैर्न साध्यते ॥ ७५ ॥ निरस्त्रमथ वीक्ष्येमं। कुमारोऽप्यासिमत्यजत् ॥ इति तल्ली–लया क्रुद्धो–ऽशस्त्रयत्क्षेत्रपस्तरुम् ॥ ७६ ॥ कुमारोऽप्यात्तवृक्षेण। तद्वृक्षं द्रागचूर्णयत् ॥ एवं नवनवैरात्तै–र्वृक्षैर्युद्धमभूच्चिरम् ॥ ७७ ॥ ततः स्थूलशिलाभिस्ता–वयुत्सातां समत्सरौ ॥ दैवतैर्विस्मितस्वान्तैः। स्तूयमानौ मुहुर्मुहुः ॥ ७८ ॥ सोल्लासौ मल्लयुद्धेन। ढुढौकाते

[1] हस्ती स्थूलतमः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो । वज्रेणाऽपि हताः पतन्ति गिरयः किं वज्रमात्रो गिरिः ॥ दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमस्तेजो यस्य विराजते स बलवान् स्थुलेषु कः प्रत्ययः ॥६६॥ एतत्पद्यं प्रत्यन्तरे

द्धं ततः ॥ स्कन्धौ भुजाभिरास्फोट्य । स्फोटयन्तौ पदैर्भुवम् ॥ ७९ ॥ कुक्कुटोत्पातमुत्पत्यो–त्पत्य मुष्टिप्रहारिणौ ॥ पतन्तावुत्प-
तन्तौ द्राग् । लक्षितौ तौ न कैरपि ॥ ८० ॥ मिथः समभिहारेण । लुठन्तौ भुव्युपर्यधः ॥ युद्धेऽप्याश्लेषविश्लेषा–द्यन्वभूतां रताविव
॥ ८१ ॥ भुजास्फोटपरस्कन्धा–घातमुष्टिप्रहारजैः ॥ निनादैः सिंहनादोत्थै–श्चाऽपि विश्वभयङ्करैः ॥८२॥ जगर्जुर्गिरयः क्ष्मा चाऽ–
चलद्बधिरिता दिशः ॥ उद्वेला वार्द्धयोऽभूवन् । सरितश्च विसंस्थुलाः ॥ ८३ ॥ पेतुः फलानि वृक्षेभ्यः । शैलानां शृङ्गतः शिलाः
॥ प्रेताश्च ननृतुः प्रीता । नेशुर्भीताश्च तद्युधि ॥ ८४ ॥ घातं घातं कुमारोऽथ । मुष्ट्याद्यैः श्रान्तनिस्सहं ॥ क्षेत्रपं गगने दूरा–
ल्लीलयाप्युद[ लीलयत् ]लालयत् ॥८५॥ पतितो घोरनिर्घोष–चूर्णितोरुशिलश्च सः ॥ जाततीव्रव्यथश्चासी–द्देवत्वान्न तु खण्डशः ॥८६॥
ततः सुरः कुमारस्ये–त्यवेक्ष्य महिमौजसी ॥ चमत्कृतः स्वरूपस्थो । जितंमन्यस्तमभ्यधात् ॥ ८७ ॥ अयि वीर! त्वमेवाऽसि
। भुव्यजय्यः सुरैरपि ॥ सुरासुरनरेषु प्राक् । न केनाऽपि जितोऽस्मि यत् ॥ ८८ ॥ जिते मयि जगत्सर्वं । जितं मन्ये त्वया ततः ॥
धर्मो मन्त्रोऽथवा कस्ते । यद्बलाद्बलवानिति ॥ ८९ ॥ मत्वा मुक्तकलिं शान्तं । प्रीतं धर्मार्थिनं च तं ॥ जगाद श्रीजयः सम्यग् ।
धर्मं स्वाभाविकाऽऽकृतिः ॥ ९० ॥ देवो मे वीतरागोऽस्ति । गुरुश्चारित्रयुक् पुनः ॥ सम्यक्त्वादिर्दयाढ्योऽर्हद्–धर्मस्तस्माज्जयाम्यहम्
॥ ९१ ॥ ततोऽसौ धर्ममाकर्ण्याऽऽ–दिष्टं तेन सविस्तरं ॥ मुदितः क्षेत्रपोऽभाणीत् । साधुसाध्वसि बोधितः ॥९२॥ अभूवं प्राग्भवे
श्राद्धो । धर्मदत्तोऽहमृद्धिमान् ॥ निरीक्ष्याऽन्येद्युरुद्याने । मासक्षपणकारिणम् ॥ ९३ ॥ चतुःकोटिधनत्यागा–दात्तदीक्षं धनेश्वरं ॥
ध्यानलीनं परिव्राजं । निश्शंकं निश्चलासनम् ॥ ९४ ॥ नत्यर्थागतलोकानां । पुरो गार्हस्थ्यसौहृदात् ॥ अहो त्यागी तपस्व्येष ।
ध्यानी चेति तमस्तवम् ॥ ९५ ॥ मत्वा श्राद्धैरपि स्तुत्यं । तमार्चैस्तन्नृपादयः ॥ इति तुर्यातिचारेण । मिथ्यात्वस्य प्रवर्त्तनात्

॥ ९६ ॥ सम्यक्त्वं स्वं विराध्याऽहं । मिथ्यादृग् क्षेत्रपोऽभवं ॥ सम्यगाराधिते ह्यस्मिन् । जीवो वैमानिको भवेत् ॥९७॥ यदुक्तं–
**सम्मदिट्ठी जीवो । विमाणवज्जं न बंधए आउं ॥ जइ नवि सम्मत्तजढो । अहव न बद्धाउओ पुव्विं ॥ ९८ ॥**

विरोधिते च सम्य-क्त्वे । नीचं देवत्वमश्नुते ॥ दुर्लभा चास्य बोधिः स्या–दनन्तश्च भवभ्रमः ॥९९॥ तेनाऽतिचारमात्रेण । धर्मो ह्याराधितो मया ॥ नापतं दुर्गतौ तेन । बोधित्वं चाधुनाऽऽप्नवम् ॥१००॥ त्वदुक्तं धर्ममाकर्ण्य । जातात्संस्कारजागरात् ॥ अवेदं संविदा सर्व–मेतदाख्यं च तेऽधुना ॥ १ ॥ तत् त्वमेवोपकारी मे । सुहृद् बन्धुर्गुरुश्च मे ॥ मह्यं प्रयच्छ सम्यक्त्वं । नियमांश्च यथोचितान् ॥२॥ देवेनेत्युदितं श्रुत्वा । प्राशंसत् श्रीजयोऽपि तं । धन्यस्त्वं यत्प्रबुद्धोऽसि ॥ सुमनाश्चाऽपि सान्वयाः[यः] ॥३॥ ददेऽस्मै स च सम्यक्त्वं । हिंसादिनियमानपि ॥ तान्याश्रुत्य सुरोऽवक् स्यां । धर्मदातुर्न तेऽनृणः ॥ ४ ॥ वरं वृणु तथापि त्वं । तं दत्वाऽर्चामि यद्गुरुं ॥ अभापत कुमारोऽथ । याच्यं किंचिन्न मेऽस्ति भोः ॥ ५ ॥ तथापि साधकायाऽस्मै । वाञ्छिता वितरौषधीः ॥ यदेतदर्थ एवाऽस्य । मम चाऽयमुपक्रमः ॥६॥ देवोऽजल्पत्प्रदास्येऽहं । नाऽस्य स्थास्यन्ति ताः परं ॥ न हि भाग्यं विना दैवै–र्दत्तमप्यवतिष्ठते ॥ ७ ॥ तास्ततोऽस्म्यनुजानामि । सङ्गृह्णतु स्वयं त्वयं ॥ उपलभ्य यथाभाग्य–मौषधीकल्पपण्डितः ॥८॥ इमाः परं गृहीत्वा प्राक् । त्वमप्यनुगृहाण मां ॥ साराभिर्मद्गिरेराभि–र्यतः स्यादर्चितो गुरुः ॥ ९ ॥ इत्युक्त्वा स कुमाराय । ददौ पञ्च वरौषधीः ॥ अग्रहीत्सोऽपि सन्तो हि । प्रार्थनाभङ्गभीरवः ॥ १० ॥ देवोऽवादीत् कुमारासां । महिमाद्यद्भुतं शृणु ॥ या पीता द्व्यङ्गुलस्थूला । चतुरङ्गुलमायता ॥११॥ द्वादशसहस्रजप–सिद्धैतन्मन्त्रयोगतः ॥ रत्नपञ्चशतीं सैषाऽ–र्चिता दत्ते दिने दिने ॥१२॥ तन्महामन्त्रश्चाऽयं—ॐ **महाभैरवि क्षाँ क्षौँ क्षः श्रियं वितर वितर स्वाहा** ॥

तत्प्रमाणा परा शोणा। तथैवाख्याति किं ददे ?॥ उक्तेऽर्थ्ये द्विगुणं लाहि। त्रिगुणं चेति भाषते ॥ १३ ॥ मन्त्रश्चायं– ॐ महावादिनि ह्रांँ ह्रीँ ह्रौँ महाश्रियं वद वद स्वाहा ॥ दत्ते तु न किमप्येषा। कौतुकादिप्रयोजना ॥ मन्त्रस्य साधनाविध्या–ऽस्याः सर्वं च पूर्ववत् [२] ॥१४॥ शुभ्रा तदर्धमानाऽन्या। सर्वरोगापहारिणी ॥ विषं च निखिलं हन्ति। स्थावरं जङ्गमं तथा ॥ १५ ॥ घातव्रणादिहृत्सद्यः। स्वांबुसेकेन देहिनां ॥ गते चाप्यक्षिणी दत्ते। नैवाऽस्याः काऽपि साधना [३] ॥१६॥ युग्मं ॥ तदर्धमाना नीलाऽन्या। स्वमन्त्रेणाऽभिमन्त्रिता ॥ चेतनस्येतरस्याऽपि। न्यस्यते यस्य मस्तके ॥ १७ ॥ पुत्रकादि यथापृष्ट–मतीतानागताद्यपि ॥ स वक्ति ज्ञानिवत्सम्यग्। मन्त्रे प्राग्वच्च साधना ॥ १८ ॥ मन्त्रश्चाऽयं–ॐ महाघण्टे चण्डे चण्डशासने प्रश्नार्थं वदवद ऐँ ऐँ स्वाहा[४]पञ्चमी स्वाम्बुना हन्तिदोषान् श्यामरुचिर्द्रुतं।दुष्टकार्मणदुर्मन्त्र–चूर्णापथ्यादिसंभवान्[५]॥१९॥

एवं विधिप्रभावादि। कुमारो हृदि धारयन् ॥ क्षेत्रपालाऽन्वितो हृष्टः। साधकस्याऽन्तिकेऽगमत् ॥ २० ॥ देवोऽवादीत्कुमारानु–भावात्तुष्टोऽस्मि भद्र! ते॥ध्यानं मुक्त्वा ममादेशाद्। गृहाण स्वैरमौषधीः॥२१॥मुदाऽसौ[स्य] साधकोऽभ्यर्चा। चक्रेऽथापृच्छ्य भूपजं ॥ स्मरेः कार्ये वदन्नेवं। नत्वा चान्तर्दधे सुरः ॥२२॥ साधकोऽपि गिरौ तस्मिन्। भ्रान्त्वा भ्रान्त्वा यथा-विधि ॥ यथाभाग्यमवापाऽल्प–महिमाः कियतीरिमाः ॥२३॥ ततः कुमारमेत्याऽऽख्यत्। सोऽपि सिद्धं ममेप्सितं ॥ त्वत्प्रभावादथो यामि। स्वं पदं त्वदनुज्ञया ॥२४॥ सहर्षं तं कुमारोऽपि। प्रेष्यान्योपकृतेः समुत् ॥ आगात्पल्यङ्कगो रत्न-पुरस्योपवनेऽम्बरे ॥२५॥ तत्राऽद्राक्षीत्स चैत्यं त–ल्लंघनाशातनाभिया ॥ अवतीर्याऽविशत्तस्मिन्। विधिना चाऽनमज्जिनम् ॥ २६ ॥ विभाव्य योग्यतां तत्र। पल्यङ्कं विघटय्य सः ॥ यत्नात् संगोप्य च क्वाऽपि। शुचिः सर्वं विधिं विदन् ॥२७॥ श्रीयुगादिजिनस्याऽग्रे। मन्त्रांस्त्रीनप्यसाध-

यत् ॥ उपोपितस्त्रिरात्रेण । जिनध्यानैकतत्परः ॥ २८ ॥ मुदाऽर्हन्तं ततोऽभ्यर्च्या–ऽकार्षीत्पारणकं फलैः ॥ रत्नपञ्चशतीं चाप–दाद्यौपध्या यथाविधि ॥ २९ ॥

कृत्वाऽथाऽष्टाह्निकापूजो–त्सवं तस्मिन् पुरेऽविशत ॥ निःस्वश्राद्धगृहेऽवात्सीद् । गृहीते भाटकादयं ॥ ३० ॥ गोशीर्षचन्दन–स्याऽर्ह–त्प्रतिमां सुलघीयसीं ॥ कारयित्वा प्रतिष्ठाप्य । गुरुणा नित्यमर्चते ॥ ३१ ॥ तदर्चानन्तरं चाद्यौ–पधी दत्तेऽर्चिताऽन्वहं ॥ रत्नपञ्चशतीं सारां । पुमर्थत्रयसाधिकाम् ॥ ३२ ॥ हैमे समुद्गके न्यस्याऽ–भ्यर्च्य तामौपधीयुतां ॥ स सुरक्षे पदे गर्भ–गेहगे तं च मुञ्चति ॥ ३३ ॥ स च श्राद्धकुटुम्बेन । नित्यं भक्त्योपचर्यते ॥ वशितेनेप्सितैर्दानै–स्तैस्तथा हि वशं जगत् ॥३४॥ कृत्वा भूरि-परीवार–मर्थिभ्योऽपीप्सितं ददन् ॥ स स्वैरं गीतनाटयाद्यै । रमते श्रीपथादिषु ॥ ३५ ॥ श्रीविलासेति तस्यार्थि–गृहेषु श्रीविला-सनात् ॥ नाममौलमजानानै–र्जनैः सान्वयमौच्यत ॥ ३६ ॥

अथ तत्राऽस्ति पुंरत्नं । नाम्ना रत्नरथो नृपः ॥ दत्ते [1]नाकस्थितिं[सुष्ठुः]सौव–प्रजानां द्विषतां च यः॥३७॥यस्यैश्वर्याङ्गसौन्दर्ये । गाम्भीर्यं शौर्यमुत्तमं ॥ अद्यापि पठितुं मन्ये । बिडौजा भजते गुरुम् ॥ ३८ ॥ अभूत् क्ष्मा कंपमानाऽस्मि–[2]न्नभिषेणयति द्विपः ॥ सर्वाप्यनुव्रता तेषां । स्वाऽन्यव्यक्तिर्हि न स्त्रियः ॥ ३९ ॥ प्रतापार्चिष्मतो यस्य । रजोभिश्च चमूद्धतैः ॥ गङ्गायां [3]घोष इत्यासी–ल्लक्षणा निष्प्रयोजना ॥ ४० ॥ स्वौजसो यद्द्विपद्भूपा । यावत्स्वाह्वमपाघृणन् ॥ द्राग्गौर्वाहिक इत्येत–ल्लक्षणोदाहृतीर्युधि ॥ ४१ ॥ तस्मिन् विजययात्रासु । चलिते सह सेनया ॥ द्वये पिदधते नाम । रूढमेवाऽचला ध्रुवम् ॥ ४२ ॥ गणिका रति-

१ प्रजानां पक्षे न अकस्थितिं अकं दुखं पक्षे स्वर्गस्थितिं । २ रिपौ सेनया सह गमनं ३ घोषस्त्वाभीरपल्लिका

मालाऽस्ति । तत्र रूपजिताप्सराः ॥ जहुर्युवमनोहंसा । न यां सौभाग्यवाहिनीम् ॥ ४३ ॥ कलाभिर्या चतुःषष्ट्या । विशुद्धाभिः
कलामृतं ॥ जित्वाऽऽयोः कृतबह्वङ्गं । नखदम्भादपीपतत् ॥४४॥ सातिरूपकलावत्त्वा-दनुरक्तेन भूभुजा ॥ सतीवान्तःपुरेऽन्यासि
। सर्वोत्तमरतिप्रदा ॥ ४५ ॥ चित्रैः कामोपचारैः सा । विनयादिगुणैरपि ॥ कलादाक्ष्यौचितीभिश्च । नृपं भृशमरञ्जयत् ॥ ४६ ॥
कालादजीजनत्तस्यां । भूपः पुत्रीं सुलक्षणां ॥ शुक्तौ मुक्तामिव स्वाति-जलमुग् भास्वरद्युतिः ॥ ४७ ॥ पुत्र्याः पुराप्यभावेन ।
तल्लाभान्मुदितो हृदि ॥व्यदीधपन्मेदिनीन्दु-स्तज्जन्मोत्सवमादरात् ॥ ४८ ॥ यतः—वृष्टावातपमस्तं । मधुराहारे महार्थतां
स्वर्थे ॥ शांतरसे हास्यकथा-मिच्छंति च पुत्रिणः पुत्रीम् ॥ ४९ ॥ ततः स[2]गौत्रासुत्रामा । सुदिने सुक्षणे क्षणात् ॥
स्वजनान् भोजयित्वाऽऽख्यत् । तां नाम्ना रतिसुन्दरीम् ॥ ५० ॥ धात्रीभिः पाल्यमानाथ । ववृधे स्वर्लतेव सा ॥ अत्यन्तं
भूपतेरिष्टा । जनतानयनोत्सवा ॥ ५१ ॥ वयसा स्पर्द्धयेवाऽस्याः क्रमाद्ववृधिरे गुणाः ॥ रूपसौन्दर्यलावण्य-दाक्षिण्यविनयादयः
॥ ५२ ॥ कलाग्रहणयोग्यं सा । प्रपेदे चतुरं वयः ॥ सर्वोत्तमकलाचार्या-याऽर्पिपत्तां नृपस्ततः ॥ ५३ ॥ कलाः साऽपीपठत्सर्वाः ।
स्वल्पैरपि दिनैरिमां ॥ भारत्याः प्रज्ञया जैत्रीं । पात्रीं विनयसंपदः ॥ ५४ ॥ चतुःषष्टिकलाभिज्ञा । त्रिवर्गानुगशास्त्रवित् ॥
विज्ञाताऽखिलविज्ञाना । नीतिरीतिविशारदा ॥ ५५ ॥ [1] सम्यग्दर्शनी तत्त्वानां । विदुरेन्दुमुखी क्रमात् ॥ द्वित्वं बभार भारत्या ।
न गर्वादेस्तु लेशशः ॥ ५६ ॥ सा प्राच्यभवसंस्कारा-ज्जैनेनाध्यापनादपि ॥ जिनधर्मेऽधिकं सक्ता । भक्ताऽभूत्परमेष्ठिषु ॥ ५७ ॥
ईदृग्रूपगुणाऽप्यन्या । काप्यभून्नविताऽथवा ॥ इति ज्ञातुं तु वाग्देवी । धारयेत्पुस्तकं करे ॥ ५८ ॥ ततः सर्वाग्र्यरूपाया-स्तस्या

---

१ सम्यग्पद्‌दर्शनी तत्त्वविदुरे॰ प्रत्यन्तरे २ राजा

दृष्टुं वरं नृपः ॥ प्रैषीद्दिशो दिशं दूतान् । न त्वाऽऽपुस्तेऽपि तत्समम् ॥ ५९ ॥

अथान्यदाऽन्यराज्ञीनां । दृष्ट्वेर्ष्यामसुचन्नृपः ॥ रतिमालामदूरे च । बाह्यावासेष्ववासयत् ॥ ६० ॥ प्रागधीतकलाभ्यास-स्थैर्यार्थं रतिसुन्दरीं ॥ भूमानु[1]पतदं[ तन्मातुः पार्श्वे सो ] न्यास्थत् । पूरयन्नेतयोर्धनम् ॥ ६१ ॥

अथ चन्द्रेश्वरी तस्य । भूपतेः कुलदेवता ॥ सप्रत्ययाऽर्च्यते लोकै-स्तत्पुरोद्यानचैत्यगा ॥ ६२ ॥ तत्प्रासादेऽन्यदा कश्चि-च्चातुर्मासीमुपोषितः ॥ स्वाध्यायध्यानलीनोऽस्था-दप्रमत्तो महामुनिः ॥ ६३ ॥ रज्यमाना गुणैस्तस्य । स्वाध्यायार्थविभावनात् ॥ संविदा प्राग्भवं साऽवेत् । संस्कारोज्जागरादिति ॥ ६४ ॥ तथाहि—

अभून्नन्दिपुरे पुत्री । देवशर्मद्विजन्मनः ॥ सुरूपा नन्दिनी नाम्ना । सोपयेमे सुशर्मणा ॥ ६५ ॥ गतेऽब्देऽम्रियतैपोऽपि । दैवादीदृग्भवस्थितिः ॥ दुःखिता बोधिता पित्रा । तस्थौ सा तद्गृहे ततः ॥ ६६ ॥ अतिष्ठंस्तद्गृहासन्नो-पाश्रये गुरवोऽन्यदा ॥ धर्मगुप्ताभिधास्तैः स । प्रबोध्य श्रावकीकृतः ॥ ६७ ॥ तत्सुताप्यात्तसम्यक्त्वाऽ-णुव्रता शीलशालिनी ॥ साध्वीभ्योऽनुष्ठितेर्ज्ञात्री । पित्रादेशात्तपस्यति ॥ ६८ ॥ साधीताकियदाप्तोक्तिः । पोढावश्यकतत्परा ॥ भक्ता देवे गुरौ चाल्पा-रम्भाऽभूत् श्राविकोत्तमा ॥ ६९ ॥ अधीत्यादिपरां वीक्ष्य । तद्विघ्नाऽऽशङ्कया पिता ॥ निषेध्य गृहकर्मादि । धर्मेष्वेव न्ययुङ्क्त ताम् ॥ ७० ॥ कालाद् गुर्वाद्यसामग्र्या-ऽध्ययनादिक्रियां विना ॥ आसन्नमठवासिन्या । परिव्राजिकया सह ॥ ७१ ॥ प्रियालापादिभी रज्य-माना गोष्ठ्यादि कुर्वती ॥ मातिचरेः स्वसम्यक्त्वं । पुत्रि ! पाखंडिसंस्तवात् ॥ ७२ ॥ इति पित्रा निषिद्धाऽपि । गाढप्रीतिप्रतारिता ॥

१ समीपं ।

नामुश्चत्संगतिं तस्याः स्वभावो हि स्त्रियामयम् ॥ ७३ ॥ त्रिभिर्विशेषकं ॥

अथाऽस्ति तस्याः सावित्री । ब्राह्मणी प्रातिवेश्मिकी ॥ तत्पुत्रो यज्ञदत्तश्च । तत्प्रियाऽऽस्तेऽञ्जनाह्वया ॥७४॥ परं न रोचतेऽस्मै सा–न्येद्युर्धामगमत् पिता ॥ नन्दिन्यास्तां सदा पश्यन् । स तस्यामन्वरज्यत ॥ ७५ ॥ विषीदंस्तदनाप्त्या च । कृशांगः समभूद्भृशं ॥ मात्रा पृष्टोऽन्यदा चख्यौ । मुक्त्वा लज्जां स्वमाशयम् ॥ ७६ ॥ साऽवादीन्मा विषीद त्वं । पूरयिष्ये त्वदीहितां ॥ ततोऽन्येद्युरवादीत् सा । विस्रब्धां नन्दिनीं रहः ॥ ७७ ॥ वत्से! धन्याऽसि मत्पुत्रो । यत्त्वां कामयते युवा ॥ स्मररूपमिमं श्रित्वा । यौवनं स्वं कृतार्थय ॥ ७८ ॥ रूपमेतत्सलावण्यं । यौवनं विभवोन्मदं ॥ निष्फलं हि विना कान्तं । भोगाश्च सुलभा न तु ॥७९॥ तपोभिस्तज्जरयोग्यै–र्भोगार्हं किं वयो मुधा ॥ मुग्धे! क्षिपसि दोषस्तु । न बाल्ये त्वत्पतेर्मृतेः ॥८०॥ यदुक्तं–पत्यौ प्रव्रजिते क्लीबे । प्रणष्टे प्रतिते मृते ॥ पंचस्वापत्सु नारीणां । पतिरन्यो विधीयते ॥८१॥ निशम्येत्यवदत्क्रुद्धा । नन्दिनी श्राविकोत्तमा ॥ ही धिक्कि भाषसे मूढे! । वचः श्रवणदुःश्रवम् ॥ ८२ ॥ प्राणान्तेऽपि हि किं सत्यः । शीलं लुम्पति मुक्तिदं ॥ लोकद्वयविरुद्धेऽर्थे । को रमेत विविक्तधीः ॥८३॥ तदुक्तं–वरं प्रविष्टं ज्वलितं हुताशनं । न चाऽपि भग्नं चिरसञ्चितं व्रतं॥ वरं हि मृत्युः सुविशुद्धकर्मणा। न चाऽपि शीलस्खलितस्य जीवितम् ॥८४॥ न कामशास्त्रानुष्ठानै–र्नरको विनिवार्यते॥ शीलभ्रंशेन जीवानां तत्र पातस्तु निश्चितः ॥ ८५ ॥ इति प्रतिहता मौनं । कृत्वा सावित्र्यगात्ततः ॥ उक्तिप्रत्युक्तयश्चाऽऽसन् । पुनर्द्विस्त्रिस्तयोरिति ॥ ८६ ॥ तत् स्वाऽसाध्यमिदं कार्यं । मत्वा सावित्र्युपाचरत् ॥ तां परिव्राजिकामस्या । जानाना नन्दिनीं वशाम् ॥८७ ॥ तुष्टाऽप्राक्षीदियं कार्यं । सा मोहग्रहिलाऽगृणात् ॥ प्रतिपादय नन्दिन्या । मातः! कन्तं मदङ्गजम् ॥८८॥ ओमित्युक्त्वा विसृज्येमा–मथ सा स्ववशां

शुनीं ॥ कृत्वेष्टाः पादपातादि–चेष्टाः स्पष्टमशिक्षयत् ॥ ८९ ॥

अथाऽन्यदा सा नन्दिन्याः । स्वान्तिकागमनक्षणे ॥ तां दृक्क्षिप्तौपधां साश्रुं । शुनीं स्वाऽङ्घ्र्योरपातयत् ॥ ९० ॥ नन्दिनी तां तथा वीक्ष्याऽ–प्राक्षीद्रोदिति किं शुनी ॥ ततस्तपस्विनी स्माह । ममाऽस्याश्च कथां शृणु ॥ ९१ ॥ अभूतां द्वे सुते पृथ्वी–पुरे दत्तद्विजन्मनः ॥ ऊढाद्यैकाऽग्निदत्तेन । पुत्रास्तस्यास्त्रयोऽभवन् ॥९२॥ पत्यौ मृते च निर्वेदात् । सा परिव्राजिकाऽभवत् ॥ अथास्या भगिनी लघ्वी । परिणिन्येऽग्निशर्मणा ॥ ९३ ॥ षण्मास्या विधवा साभू–द्दैवं को लङ्घितुं ह्यलं ॥ अतिरूपाऽन्यदा यूना । हरिदत्तेन रागिणा ॥ ९४ ॥ प्रार्थ्यमानाऽपि नैच्छत्तं । भिया शीलव्रतक्षतेः ॥ नाऽवेद् धूर्त्तोक्तिभिर्मूढा । पापं भोगान्तरायजम् ॥ ९५ ॥ ज्यायसीं भगिनीं वीक्ष्य । नैवाऽपुत्रा तपोऽर्हति ॥ तयेति वारिताप्यालात् । पारिव्राज्यं स्वरर्थिनी ॥९६॥ पदे पदेऽर्थ्यमानाऽपि । तरुणैर्मोहितैश्चिरं ॥ नैच्छत्कदाग्रहाद्भोगान् । भाग्यैरुपनतांश्च सा ॥ ९७ ॥ तपः कृत्वा कियत्काल–मिति सा स्वायुषः क्षये ॥ शुनी जज्ञेऽत्र मां जामिं । वीक्ष्य प्राग्भवमस्मरत् ॥९८॥ ततो हारितमानुष्यं । कर्म भोगान्तरायजं ॥ शोचन्ती पतिता मेऽङ्घ्र्यो–र्दुःखाद्रोदित्यनारतम् ॥९९॥ ततस्त्वमपि केनाऽपि । प्रार्थ्यसे यदि सुन्दरि! ॥ तदा भोगान्तरायं मा । कार्षीः शास्त्रनिवारितम् ॥ २०० ॥

इत्यादिकल्पितान्यस्याः । कपटिन्या निशम्य सा ॥ अचालीदचिराद्धर्मात् कियत्सत्त्वं हि योषिताम् ॥१॥ दुष्पालं पालयंत्येषा । ब्रह्म चेदभवच्छुनी ॥ ज्ञानदृष्टं हि नो मिथ्या । तन्मे का भविता गतिः ॥ २ ॥ इह लोके महाकष्टं । तपोब्रह्मादिनिर्मितौ ॥ परत्र गतिरेषा चेद् । भुञ्जे भोगांस्ततो न किम् ॥ ३ ॥ चिन्तयन्तीति सन्देह–शल्या नन्दिन्यगाद्गृहे ॥ तच्चित्तमिङ्गितैर्ज्ञात्वा

। सावित्र्यै च प्रतिन्यवक् ॥ ४ ॥ सावित्री तन्मुदाऽन्येद्युः । आगत्योवाच नन्दिनीं ॥ शुक्लधर्मोऽभ्ययधात्साऽपि । वन्ध्यादिभ्यो बिभेम्यहम् ॥५॥ सावित्र्यूचे प्रयास्याव–स्तीर्थयात्राच्छलात्तथा ॥ यथा शङ्किष्यते नैव । विशुद्धिं [विरुद्धं] तव कश्चन ॥ ६ ॥ ततो देशान्तरे गत्वा । भुङ्क्ष्व भोगान् सुदुर्लभान् ॥ परं पित्रर्पितं द्रव्यं । निजहस्तगतं कुरु ॥ ७ ॥

तयैवं प्रतिपन्नेऽथं । सावित्री स्वार्जनच्छलात् ॥ पुत्रं देशान्तरेऽप्रैषी–त्तद्वधूं च पितुर्गृहे ॥ ८ ॥ नन्दिन्या ग्रहणार्थं च । यावत्तिष्ठति सा गृहे ॥ सा च द्रव्यकृते तावत् । तत्राऽगात्सुव्रतार्यिका ॥ ९ ॥ तत्पार्श्वेशिक्षिताऽधीताऽ–र्हद्धर्मानुष्ठितिश्रिता ॥ नन्दिन्यनंसीत्तां पूर्व–प्रीत्याऽऽगत्याशु भाग्यतः ॥ १० ॥ अप्राक्षीद्धर्मनिर्वाहं । दत्वा धर्माशिषं च सा ॥ साऽपि वार्त्ताप्रसङ्गेना–ऽगूढहृत् स्वाशयं जगौ ॥ ११ ॥ कर्णौ पिधाय साध्व्याख्य–दाः किं मुग्धे ! विमुह्यसि ॥ श्रुताऽधीताऽर्हदुक्ताऽपि । पाप्मभिः कल्पितोक्तिभिः ॥ १२ ॥ रक्ता द्विष्टा विमूढाश्च । चक्रुः शास्त्राणि कानि न ॥ नैतेषां प्राग्भवज्ञानं । कपटे पटिमाऽस्ति तु ॥ १३ ॥ यदि पुत्रैर्भवेत्स्वर्ग–स्तद्भागी शूकरी शुनी ॥ कुक्कुटी खर्यजाद्याश्च । जीवाः प्राग्यान्ति धाममी ॥ १४ ॥ ततः श्रद्धेहि सार्वोक्तं । धेहि शीले दृढं मनः ॥ न मिथ्या कारणाऽभावा–द्वीतरागो हि भाषते ॥ १५ ॥ यदुक्तं—रागाद्वा द्वेषाद्वा । मोहाद्वा वाक्यमुच्यते ह्यनृतं ॥ यस्य तु नैते दोषा–स्तस्याऽनृतकारणं किं स्यात् ॥ १६ ॥ जिनश्चोवाच दौःशील्या–न्नृनारी-णामिहापदः ॥ नृस्त्र्यग्निरूपसंगाद्यै–र्दुःखं प्रेत्य च नारके ॥ १७ ॥ स्त्री स्यात्तिर्यक्षु दुःशीला । खर्युष्ट्री तुरगी मृगी ॥ शूकर्य-जापि वा भार–वहनाद्युग्रदुःखभाक् ॥ १८ ॥ कथञ्चिन्नृभवेऽप्याप्ते । वन्ध्या निन्दुर्गराङ्कता ॥ बालरण्डा कुरण्डा वा । दुर्गन्धा दुर्भगाऽथवा ॥ १९ ॥ कुरूपा कटुवाग् योनि–रोगा कुष्ठादिरोगिणी ॥ हीनाङ्गी निष्कलाऽवीरा । दुष्कुलाभिभवाऽऽस्पदम् ॥ २० ॥

दुर्जीवाऽल्पायुरिष्टैः स्वैः । पुत्राद्यैश्च वियोगिनी ॥ स्त्री दौःशील्यादिभिर्दीर्घ-दुःखान्यनुभवेदिति ॥ २१ ॥ चतुर्भिः कलापकं ॥ निन्द्यं स्त्रीजन्म तत्राऽपि । वैधव्यमतिदुःखकृत् ॥ तत्र बाल्यमपुत्रत्वं । नैःस्व्यं निर्धर्मता क्रमात् ॥ २२ ॥ चतसृष्वेवमापत्सु । पातितं पापकर्मणा ॥ तच्छीलेनोद्धरात्मानं । नावेवाब्धौ पतापतम् ॥ २३ ॥ श्रुत्वेत्यादि यतिन्युक्तं । भीता सा नरकाद्भृशं ॥ आसीद्धर्मे च शीले च । स्थिरचित्ता ततः परम् ॥ २४ ॥ साऽभाणीद्भगवत्यस्मि । रक्षिता साधु दुर्गतेः ॥ उपदेशसुधादानैः । कुबोधगरनाशनात् ॥२५॥तां नत्वा च गता गेहं । सावित्रीमन्यदाऽभणत् ॥ नीचाचारं न धास्ये । न वाच्याऽस्मिंस्त्वया पुनः ॥२६॥ चेत् ब्रूषे तत्त्वाऽनर्थं । कारयिष्ये स्वबन्धुभिः ॥ सावित्र्यथ विलक्षास्या । बिभ्यती सुतमन्वगात् ॥२७॥ विहृतास्वपि साध्वीषु: नन्दिनी धर्मतत्परा ॥ प्राग्वन्मुक्तावलीरत्ना-वल्यादि कुरुते तपः ॥ २८ ॥ पाखण्डिन्या दृढं रूढ-प्रीत्या संगं तु नाऽत्यजत् ॥ दौःशील्य-प्रेरणां ज्ञात-तद्भावा साऽपि नाऽकरोत् ॥ २९ ॥ एवं विराध्य सम्यक्त्वं । परपाखण्डसंस्तवात् ॥ पालितश्राद्धधर्माऽपि । सहस्रं शरदामियं ॥ ३० ॥ मृत्वा चन्द्रेश्वरी देवी । बभूवाऽल्पसमृद्धिका ॥ वञ्चिता कल्पसौख्येभ्यः । सम्यक्त्वादिविराधनात् ॥ ३१ ॥ युग्मं ॥ इति सा प्राग्भवं मत्वा । देवी नत्वा च तं मुनिं ॥ तस्मै स्ववृत्तमाख्याय । बुद्धा सम्यक्त्वमग्रहीत् ॥ ३२ ॥ उपासिते चतुर्मासीं । विहृते चान्यतो मुनौ ॥ सङ्घरक्षादिभिस्तीर्थं । प्रभावयति सार्हती ॥ ३३ ॥

अथ सम्प्रत्ययां श्रुत्वा । जनात्तां रतिसुन्दरी ॥ अनुरूपं वरं लिप्सु-स्तातचिन्ताच्छिदेऽर्चेति ॥ ३४ ॥ तुष्टा साऽप्यन्यदा स्वप्ने । तामवादीदिति स्फुटं ॥ भूपाऽग्रे त्वयि नृत्यन्त्या । स्तम्भादुत्तीर्य पुत्रिके ॥ ३५ ॥ चामराभ्यां यकं वीणा-वादकं वीजयिष्यतः ॥ अर्द्धचक्रिसमो भर्त्ता । स भावी प्राग्भवस्य ते ॥ ३६ ॥ प्रबुद्धा प्रातरर्हन्तं । देवीं च मुदिताऽर्चयत् ॥ नेक्षतेऽन्यं

तदाधेपा । विना पूर्वभवप्रियम् ॥३७॥ प्रेष्यादिरपि चाऽप्नोति। प्रवेशं नैव तद्गृहे ॥ दासीभिरपसार्यन्ते। तद्गतागतयोर्नराः ॥३८॥

कियत्येवं गते काले । तत्राऽगाद्विजया नटी ॥ नाट्यदक्षा महाराष्ट्रात् । स्वाऽर्हभूरिपरिच्छदा ॥ ३९ ॥ चारिं नीरं च साऽमुञ्चत् । प्रतोल्यां राजवेश्मनि ॥ यो मां जयति नाट्येन । तस्य दासी भवाम्यहम् ॥ ४० ॥ दासीं कुर्वे जितं चेति । प्रतिज्ञामुज्जुघोप सा ॥ तत्सन्धां च पुरे राजा । पटहेनोदघोपयत् ॥ ४१ ॥ परं नाऽऽविरभूत्कश्चि–त्तां जिगीषुस्ततो नृपः ॥ विषसाद कलाभिः स्वं । न्यूनं संभावयन् पुरम् ॥ ४२ ॥ मत्वेति पितृवैलक्ष्यं । विनेतुं रतिसुन्दरी ॥ आगत्य व्याहरत्तात ! । लीलयाऽपि जयाम्यमूम्॥४३॥[नृसभायां परं]परं नरसभे नैव । नृत्याम्यंथ नृपो जगौ ॥ ससभ्यस्य पितुर्मेऽग्रे । नृत्यैर्दूरस्थितौ नृणाम्॥४४॥ प्रतिपद्येति नृत्याऽहं । सा निर्णीय गृहेऽगमत् ॥ उक्ते नृत्यदिने राजा–ऽऽजूहवद्विजयां ततः॥ ४५ ॥ रतिसुन्दर्यपि सुखा–सनाऽऽरूढा नृपाज्ञया ॥ सनाट्योपस्करा तत्र । याति सारपरिच्छदा ॥४६॥ न मे नाट्यानुरूपाऽऽस्ते । वीणाया वादिका परं ॥ इति चिन्तातुरा किञ्चित् प्रतीहारीभिरध्वनि ॥ ४७ ॥ पुनः पुनः पुरो दूरो–त्सार्यमाणनरांश्चिरात् ॥ श्रीविलासोऽथ तत्तादृग् । दृष्ट्वा मध्ये चतुष्पथम् ॥ ४८ ॥ किमेतदिति चित्रेणाऽप्राक्षीत्कश्चित्स्वपार्श्वगं ॥ सोऽप्याख्यद्रतिसुन्दर्या । वृत्तान्तं तद्दिनावधि ॥ ४९ ॥ चतुर्भिः कलापकं ॥

अथ सर्वकलावित् स । तन्नाट्याऽऽलोककौतुकी ॥ प्रवेशाऽसंभवात्पुंसः । स्त्रीरूपं विजनेऽसृजत् ॥ ५० ॥ कुतोऽप्यभिमतां वीणां । नीत्वा तत्पेटकेऽमिलत् ॥ आगाच्च रतिसुन्दर्या । सह भूपसभे सुधीः ॥ ५१ ॥ कृतायां नाट्यसामग्र्यां । कियत्सभ्ययुतो नृपः ॥ अतिशिष्टपन्नरान् किञ्चिद् । दूरे नाट्यादिदृक्षनः ॥५२॥ विजयां सपरीवारो–पस्करामथ भूपतिः ॥ प्रागादिदेश नाट्याय ।

साऽपि नान्दीमचीकरत् ॥ ५३ ॥ [1]सावय भंभाम० । प्रारेभे नर्त्तितुं [2]नाना—करणादिमनोहरं ॥ यथानुरूपमारब्ध—गीतवाद्यल-याऽनुगम् ॥ ५४ ॥ रञ्जयन्ती सभां सर्वां । सा चित्रैकरसात्मिकां ॥ अनर्त्तीद्वंशभल्लाऽसि—क्षुरिकाग्रादिषु क्रमात् ॥ ५५ ॥ ततस्त-ण्डुलपुञ्जस्थ—सूचीपुष्पे ननर्त्त सा ॥ प्रतिनाट्यं नृपादिभ्यो । लेभे दानं महाद्भुतम् ॥ ५६ ॥ भ्रूनखाङ्गुलिभङ्गान् सा । नृत्यन्ती [3]वितथान् व्यधात् ॥ तद्वैतथ्यं सदस्यांश्चाऽजिज्ञपद्रतिसुन्दरी ॥ ५७ ॥

भूपादेशान्ननर्त्तोऽथ । लीलया रतिसुन्दरी ॥ सर्वान्नाट्यविधींस्तांस्तान् । मोहनान्मरुतामपि ॥ ५८ ॥ कुमारस्त्री च नृत्यन्त्यां । तस्यां वीणामवीवदत् ॥ तद्ध्वनिश्च सकर्णानां । श्रवणेष्वसुधायत ॥ ५९ ॥ स कोऽप्यत्राऽभवन्नादो । दुरापो यः सुरैरपि ॥ पशवोऽपि गजाश्वाद्याः । स्तब्धास्तेन नरास्तु किम्? ॥ ६० ॥ नाट्यं च रतिसुन्दर्या—स्तेनाऽभूत्ताद्दगद्भुतं ॥ रम्भामपि जयत्येषा । येन किं विजयां पुनः! ॥ ६१ ॥ देवीप्रभावात्ते स्तम्भा—दुत्तीर्य मणिपुत्रिके ॥ चामराभ्यामुभे व्याज—स्त्रीमवीजयतां तदा ॥ ६२ ॥ तद् दृष्ट्वा विस्मिताः सर्वे । दध्यौ च रतिसुन्दरी ॥ अहो देव्युक्तिसंवादो । जातः स्त्री तु पतिः कथम्! ॥ ६३ ॥ मायेयं काऽपि वा यद्वा । यद्वाऽव्यं ज्ञास्यते स्वयं ॥ कार्येयं सुगृहीता तु । स्थाप्या च स्वान्तिके मया ॥ ६४ ॥

अनृत्यदथ नैपुण्या-द्विजया पद्मतन्तुषु॥ [4]लूतातन्तुषु नर्त्तित्वा—ऽजैषीत्तां रतिसुन्दरी॥६५॥ अभूज्जयजयारावो। जगदानन्दनस्ततः॥ तस्यै महाप्रसादं च । ददौ हर्षमयो नृपः ॥६६॥ रतिमाला नृपादेशात्। कुर्वाणा विविधोत्सवान् ॥ आनन्दैकमयी निन्ये । स्वाऽऽवासे रतिसुन्दरीम् ॥ ६७ ॥ तदादिष्टाः प्रतिहार्यः । सभक्तिबहुमानतः ॥ सहैवाऽऽजूहवन्माया—नारीं तां मुखराः स्त्रवैः ॥६८॥ स्त्रीरूपेण

१ एतन्नान्दीसूचकं पद्यमनिर्दिष्टं सर्वप्रतिषु २ नृत्ये हस्तचालनविशेषः ३ अनुचितान् ४ लूता—उर्णनाभ—मर्कटकेति

कुमारोऽथ। गत्वा ताभिः समं कियत् ॥ वित्रास्य नागरूपेण । ताः स्वरूपः स्वधाम्न्यगात् ॥ ६९ ॥ दासीत्वं प्रतिपद्याऽग्रे । चारिणीं दण्डधारिणीं ॥ विजयां रतिमालाऽथाऽ–मुञ्चन्नीत्वा गृहावधि ॥ ७० ॥ सर्वतोऽपि विलोक्याऽथ। मायानारीमनाप्य तां ॥ दास्यस्ता रतिसुन्दर्यै। तत्स्वरूपं न्यवेदयन् ॥ ७१ ॥

तद् श्रुत्वा साऽथ दुःखार्त्ता। प्रतिज्ञामिति चक्रुषी ॥ तामदृष्ट्वा न भोक्ष्येऽहं । व्याकुलास्तास्ततोऽभवन् ॥७२॥ साथोपरुप्यमानाऽपि। रतिमालादिभिर्भृशं ॥ भुङ्क्ते नैव यदा दास्य–स्तदा राज्ञे न्यवेदयन् ॥७३॥ व्याकुलस्तां पुरे सोऽपि। सर्वतोऽन्वेषयन्नरैः ॥ त्र्यहेणाऽपि च न प्राप–दसद्रूपं किमाप्यते ॥ ७४ ॥ निराहारां चतुर्थेऽह्नि । स्वस्मिन्नेकान्तरागिणीं ॥ सन्दिग्धजीवितां श्रुत्वा। तां कुमारः कृपापरः ॥ ७५ ॥ प्राग्भवस्नेहरागाच्च । तदुज्जीवनकाम्यया ॥ प्राग्वन्नारीतनुर्भूत्वा । तस्थिवानुपतद्गृहम् ॥ ७६ ॥ युग्मं ॥

वीक्ष्य दास्योऽथ तां माया–नारीं द्रागुपलक्ष्य च ॥ आहूय रतिसुन्दर्याः । सौधं मानादुपानयन् ॥ ७७ ॥ काचित्प्रागेव गत्वाऽऽशु। तामवर्द्धापयन्मुदा ॥ साप्यानन्दमयीभूय । ददेऽस्यै स्वामलङ्कृतिम् ॥ ७८ ॥ तां सा सोत्कण्ठमभ्यागा–द्धर्षस्नेहाकुला हृदि ॥ वीक्ष्य द्वारागतामङ्घ्र्योः। [पतितोत्थाय चाऽवदत्] पतित्वा च मुदाऽवदत् ॥७९॥ सखि! स्वागतमेह्येहि। मम जीवितदायिनि! ॥ भाग्यैर्जागरितं ह्यद्य । यत्त्वयैषाऽन्वकम्पिपि ॥८०॥ ततः सान्तर्गृहं नीत्वा। पल्यङ्के तां मुदाऽऽसयत् ॥ अपिप्रिणद्विनोदैश्च । धर्मशास्त्रकलानुगैः ॥ ८१ ॥ स्नपयित्वा स्वहस्तेन । तामाहारान् सुधोपमान् ॥ भोजयित्वा च सा भक्ति–नैपुण्याद् बुभुजे स्वयम् ॥ ८२ ॥ ततः साऽभ्यर्थ्य भक्त्या तां । मायानारीं स्वसद्मनि ॥ अतिष्ठिपदथैषाऽपि । स्थिता प्राग्भवमोहतः ॥ ८३ ॥ ततः

प्रीतिप्रवृद्धया ते । कृत्रिमाऽकृत्रिमस्त्रियौ ॥ विनोदैर्धर्मकामार्थ-शास्त्राद्यनुगतैर्मिथः ॥८४॥ प्रीयमाणे बहून् घस्रान् । सौख्यैक्येन व्यतीयतुः ॥ सामुद्रिकविदन्येद्यु-र्दध्यौ च रतिसुन्दरी ॥ ८५ ॥ युग्मं ॥ सर्वेष्वङ्गेषु तान्यस्या । लक्ष्यन्ते लक्षणान्यहो ॥ भवित्री चक्रिराज्यश्री-र्यैः सा स्त्रीत्वे त्वसंभवा ॥ ८६ ॥ विभाव्यन्ते पुमर्हाश्च । गतिचेष्टास्वरादयः ॥ तदत्र कृत्रिमं स्त्रीत्वं । जाने केनाऽपि हेतुना ॥ ८७ ॥ इति निश्चित्य सा स्नेह-स्मेरा स्मितमुखी जगौ ॥ स्वामिन् ! देवीगिरा ज्ञातः । प्राग्भवीयोऽसि मे पतिः ॥ ८८ ॥ यथा प्रादुरकार्षीस्त्वं । कलास्नेहाद्यकृत्रिमं ॥ तथा स्वाभाविकं रूपं । दर्शयाऽनुगृहाण माम् ॥ ८९ ॥

इत्यभ्यर्थनयाऽऽरूढ-प्रौढस्नेहवशादयं ॥ चक्रे स्वाभाविकं रूप-मनुरूपं गुणाश्रियः ॥ ९० ॥ जितेन्द्रस्मरदस्राश्रि । तस्य रूपं निरूप्य सा ॥ आनन्दैकमयीभूता । रोमाञ्चिततनुर्जगौ ॥ ९१ ॥ अद्य पुण्यविभवः फलितो मे । देवताश्च तुतुषू रचितार्चाः ॥ लोकलोचनचकोरैकचन्द्रो । नेत्रयोरमृतसूर्यदभूमें ॥ ९२ ॥ श्रीजयोऽपि निजगाद मृगाक्षि ! । त्वय्ययं सुभगिमामृतवाप्यां ॥ व्यश्रमन्मम मनःकलहंसः । पाङ्किलाऽम्भसि भ्रमंभ्रममुचैः ॥ ९३ ॥

एतद्दासीमुखाद् ज्ञात्वा । रतिमालाप्यवेक्ष्य तं ॥ न्युञ्छनानि तयोः कृत्वा । विदधे विविधोत्सवान् ॥ ९४ ॥ वर्द्धापितोऽथ दासीभि-र्भूपः संमदमेदुरं ॥ देव्याऽऽदिष्टोऽद्य ते पुत्र्याः । पतिः प्रादुरभूदिति ॥ ९५ ॥ ताभ्यो दत्वाऽर्थितं मत्वा । स्वरूपं चाऽखिलं मुदा ॥ नैरराजूहवद् भूपः । सोत्कण्ठः सादरं च तम् ॥ ९६ ॥

राज्ञाऽऽहूतः कुमारोऽथ । यावद्गत्वा निनंसति ॥ तावद्विश्वोत्तराकारं । नृपः प्रीत्याऽऽलिलिङ्ग तम् ॥९७॥ प्रणयप्रमदोत्साहान् हृद्यमात इवाऽखिलान् ॥ कियतोऽथ बहिश्चक्रे । नरनाथो वचच्छलात् ॥ ९८ ॥ अद्य नः फलवती क्षणसृष्टि-र्वीक्षितोऽसि यदनु-

नररूपः ॥ किं तवाऽद्य सुभग ! प्रतिपत्तिं । कुर्महे हृतहृदः सुभगिन्ना ॥ ९९ ॥ प्रश्नमर्हति न ते कुलादि मे । यत्पुरी न विपरीत-वाग्भवेत् ॥ जन्मना त्वमपुनाः पुनः पुन-र्यत्पुरं वद विदग्ध किं हि तत् ॥ १०० ॥

सोऽप्युवाच विजयादिपुरीयो । देशदर्शनकुतूहलकाङ्क्षी ॥ बंभ्रमन् बहुसमृद्धिसमेतं । प्राप्नुवं तव पुरं नृपशक्र ! ॥ १ ॥ इत्याद्यालापपीयूष-पानगोष्ठीं विधाय तं ॥ भूपस्तेन सह स्नान-भोजनाद्यैरपिप्रिणत् ॥ २ ॥ जगादावसरे चैता-मुपयच्छस्व मे कनीं ॥ एषोऽप्याऽऽख्यत्किमज्ञात-कुलाय ददसे सुताम् ॥ ३ ॥ देव्या गीश्च गुणाश्चैते । प्रकृतिश्चाकृतिश्च ते ॥ कुलं तव जगुस्तन्न । प्रार्थनां भङ्क्तुमर्हसि ॥ ४ ॥ इत्याकर्ण्येयुषा जोषं । कुमारेण नराधिपः ॥ सुलग्ने तनयां नानो-त्सवौघैः पर्यणीनयत् ॥ ५ ॥ ददौ भूपो गजाश्वादि । कुमारो नाऽग्रहीद्बहु ॥ निर्बन्धादाऽऽददे चाऽष्टौ । सर्वसारपुराणि सः ॥ ६ ॥ तान्यकार्षीत् प्रियासाच्च । साप्यम्बां तेषु चिन्तिकां ॥ सप्रियो नृपदत्ते स । सौधे सोपस्करेऽवसत् ॥ ७ ॥ स्निग्धया प्राग्भवाऽऽभ्यासात् । स रूपाद्यतिरम्भया ॥ सर्वकामगुणोपेतो । रेमे पत्न्या नवोढया ॥८॥ पञ्चधा बुभुजे शर्म । नाकीव विषयाऽनुगं ॥ सर्वोत्तमं यथाकामं । क्रीडन् वापीवनादिषु ॥ ९ ॥ कदाचिन्नर्त्तयन् पत्नीं । स्वयं वाद्यानि वादयन् ॥ गायन् देवगुरून् भक्त्या । मोदते मोदितप्रियः ॥१०॥ अर्थिभ्यो गीतनृत्तादौ । दीनादिभ्योऽपि चेप्सितं ॥ यच्छन् यथेच्छं लेभेऽसौ । धर्मकीर्त्तीरनुत्तराः॥११॥ दानवत् [श्राद्धेव] प्रत्यहं देव-पूजागुरुनमस्कृतीः ॥ सुकृती कृत्यविन्नैवा-ऽकृत्वाऽभुञ्जीत कर्हिचित् ॥ १२ ॥

देवतावसरं कृत्वा । गुप्ताऽपवरकेऽथ तत् ॥ सङ्गोप्य तालकं दत्वा । दत्ते पत्न्याश्च कुञ्चिकाम् ॥ १३ ॥ गोपायति स्वतन्त्रादौ । तां सा जीवितवद् दृढं ॥ स च प्राग् विधिनाऽऽप्तानि । रत्नानि च यथारुचि ॥ १४ ॥ व्यापारयति पत्न्यै वा । समर्प-

यति कर्हिचित् ॥ सा हि दक्षाऽनुकूलाऽस्य । वपुर्मात्रेण भिद्यते ॥ १५ ॥ सुतास्नेहाद्गृहासक्ते-श्चाप्यभ्येति मुदा सदा ॥ रतिमाला तदावासे । विनोदैश्चाऽवतिष्ठते ॥ १६ ॥ भक्त्या जामातरं प्रीणा-त्यपि विश्रब्धमानसं ॥ उद्गृहीतं पुरद्रव्यं । दत्ते पुत्र्यै त्वलेख्यकम् ॥ १७ ॥

कियत्येवं गते काले । दध्यौ सा विस्मिताऽन्यदा ॥ भूपदत्तं न गृह्णाति । नैपोऽर्जति धनं स्वयम् ॥ १८ ॥ पुराऽऽष्टकस्य नादत्ते । नामाऽपि क्व स्वमार्गणं ॥ नित्यं विलसति स्वैरं । दानभोगैश्च देववत् ॥ १९ ॥ तदभ्येति कुतोऽप्यस्याऽऽ-श्चर्यं धनमनर्गलं ॥ ततस्तं साऽन्यदाऽप्राक्षीत् । कोऽस्त्यध्वा ते धनागमे ॥ २० ॥ सोऽप्यूचेऽस्त्यमितं पित्रा । दत्तं स्वं स्वार्जितं च मे ॥ ततोऽन्यदाऽऽख्यद्भर्त्ता सा । तदश्रद्दधती सुताम् ॥ २१ ॥ पतिं पृष्ट्वा धनोपायं । वद यन्मेऽस्ति कौतुकं ॥ साऽख्यत् प्रश्नेन किं यत्नौ । सर्वमिष्टं हि पूर्यते ॥ २२ ॥ क्रुद्धा व्याचष्ट दुष्टे ! किं । कुक्षौ धृत्वाऽसि वर्द्धिता ॥ एतावदपि यन्मातु-र्न पूरयसि कौतुकम् ॥ २३ ॥ दाक्षिण्यादाह सरला । कृतज्ञा रतिसुन्दरी ॥ यावदभ्यासतो मात-र्वेद्मि तावद्वदाम्यहम् ॥ २४ ॥ तथाहि—

देवतावसरं कृत्वा । मत्पतिर्गुप्तवेश्मनि ॥ सङ्गोप्याऽस्माच्च रत्नानि । बहून्यादाय निस्सरन् ॥ २५ ॥ तालं दत्वाऽथ संभाल्याऽ-र्पयते मम कुञ्चिकां ॥ गोपायितुं भोग्यशेष-रत्नान्यपि च कर्हिचित् ॥ २६ ॥ कदाचिच्च गृहीत्वा ता-न्येति व्यापारयत्यपि ॥ यथेच्छं दानभोज्याद्यै-र्नाधिकं वेद्म्यतः परम् ॥ २७ ॥ देवतावसरे किंचि-द्धनोपायं विभाव्य तत् ॥ ऊचेऽम्बा दर्शयैतन्मे । देवतावसरं सकृत् ॥ २८ ॥ आख्यत्पुत्री न जीवन्ती । करोम्येवं कथंचन ॥ माताऽवक् कुञ्चिकां तर्हि । सकृद्वत्से ! ममाऽर्पय ॥ २९ ॥ साऽऽख्यन्मयि न जीवन्त्यां । सेधिताऽयं मनोरथः । रहस्यं न हि कस्याऽपि । भेद्यं किं प्रेयसः पुनः ॥३०॥

रुप्यत्यम्बाऽथवा तुष्य-त्वेषा प्राणात्ययेऽप्यहं ॥ पतिद्रोहं न कुर्वे यत् । प्राणाः पत्ये मयाऽर्पिताः ॥ ३१ ॥

ज्ञात्वेति रतिमाला त-न्निर्णयं कपटे पटुः ॥ तां सुतात्वेन विश्वस्तां । स्वसुतामृजुमन्यदा ॥ ३२ ॥ चन्द्रहाससुरासिक्त[1]-मस्यै भोज्यमभूभुजत् ॥ तयाऽऽच्छादितचैतन्यां । पल्यङ्केऽशाशयिष्ट ताम् ॥ ३३ ॥ युग्मं ॥ तद्वपुःशोधनाल्लब्ध्वा । रतिमालाऽथ कुञ्चिकां ॥ तया तालकमुद्घाट्य । देवतास्थानमैक्षत ॥ ३४ ॥ वीक्ष्य तत्रौपधीं दिव्यां । तां संभाव्य च रत्नदां ॥ गृहीत्वा पूर्ववचक्रे । सर्वं तद्गोपनादिकम् ॥ ३५ ॥ मुदिता कुञ्चिकां प्राग्वत् । पुत्र्यास्तन्वां जुगोप सा ॥ अथोत्तस्थौ विनिद्रा सा । समये लब्धचेतना ॥ ३६ ॥ कुञ्चिकातालकाद्यं च । प्रागवस्थं समीक्ष्य सा ॥ किञ्चिच्छङ्कान्तरं नाऽऽपत् । को हि धूर्तैर्न वञ्च्यते ॥३७॥

द्वितीयेऽह्नि कुमारोऽपि । देवतावसरक्षणे ॥ अर्चित्वा प्रतिमां जैनी-मैक्षताऽर्चितुमौपधीम् ॥ ३८ ॥ तामलब्ध्वा सशङ्कोऽय-मप्राक्षीत्प्रेयसीं ततः ॥ चकिता चतुराचख्यौ । मातृकर्म विभाव्य सा ॥ ३९ ॥ प्रवेशो नाऽत्र कस्याऽपि । न मुञ्चे क्वाऽपि कुञ्चिकां ॥ अचेतनापराह्नयस्थां । मातृदत्तसुरावशात् ॥ ४० ॥ तदा किञ्चिच्छलं मात्रा । कृतं यदि भविष्यति ॥ तन्न वेद्मीङ्गितान्यस्या-स्तादृशानि खवैक्षिपि ॥ ४१ ॥ त्रिभिर्विशेषकं ॥

सा वृत्तान्तं धनोपाय-प्रश्नाद्यमखिलं जगौ ॥ तत् श्रुत्वा सोऽपि मेने ता-मौपधीं तत्प्रसूहृताम् ॥ ४२ ॥ अप्राक्षी-दौपधीशुद्धिं । श्वश्रूमवसरेऽथ सः ॥ सापि कर्णौ पिधायाऽऽख्य-दाः शान्तं पापमुच्चकैः ॥४३॥ पर्याप्तं तव दानेन । मानेन च मनोरम ! ॥ मा योजय ममात्मान-मनेनाऽनयवर्त्मना ॥ ४४ ॥ राज्ञि त्वयि च सर्वेष्ट-करे स्तैन्यं करोमि किं ॥ स्तैन्यनामाऽपि नो वेत्ति ।

[1] सुरायां क्षिप्त्वा दास्याऽभूभुजत

कश्चित्परिकरेऽपि मे ॥ ४५ ॥ नैवाऽन्यो देवतागार--स्याऽऽसन्नेऽप्येति कश्चन ॥ पत्नीं तु चिन्तिकां तस्य । पृच्छ स्वां यदि शङ्कसे ॥ ४६ ॥ श्रुत्वैवं श्रीजयो दध्यौ । धिगिमां दुष्टचेष्टितां ॥ यदेषा दोषमाख्याति । स्वसुताया अपि क्रुधा ॥ ४७ ॥ न दास्यति विनोपाय--मौषधीं तामियं कुधीः। उपायात्तु गृहीत्वा तां । रत्नदां शिक्षयाम्यमूम् ॥ ४८ ॥ ध्यात्वेत्यूचे ततोऽन्यत्रा--ऽऽलोकिष्ये मातरौषधीं ॥ विसृज्य मुदितां तां च । स्वार्हकृत्यानि सोऽकरोत् ॥ ४९ ॥

अन्यदा देवतासद्म--न्यौषधीं वाक्पटुं रहः ॥ क्षिप्त्वा सह सहस्रेण । रत्नानां स ततः परम् ॥५०॥ आर्हतीं प्रतिमां भक्त्याऽ--र्चित्वा तामौषधीं तथा ॥ वक्त्ययं देहि रत्नानां । देवि ! पंचशतानि मे ॥५१॥ साऽप्युच्चैराह किं वत्स ! । नादत्से तत्सहस्रकं ॥ देहीत्युक्त्वा तदादाय । नियुङ्क्ते च यथोचितम् ॥ ५२ ॥ देवताऽवसरं प्राग्वत् । तालकादिप्रदानतः ॥ संयम्य सोऽन्वहं स्थाने । स्फुटवृत्त्या न मुञ्चति ॥ ५३ ॥ रहोऽन्येद्युः प्रियां सोऽवक् । गोपायेः कुञ्चिकां तथा ॥ यथाम्बा वेत्ति तद्योगा--दीक्षते देवसद्म चेत् ॥ ५४ ॥ तदोपेक्ष्य स्वयं तिष्ठे--रजानानेव दूरगा ॥ पतिचेतोऽनुगा साऽपि । तत् श्रुत्वा कुरुते तथा ॥ ५५ ॥ युग्मं ॥ रत्नान्यादाय निर्यान्तं । नित्यं निध्याय दध्युषी ॥ रतिमाला कथं त्वस्य । रत्नाप्तिर्द्विगुणा ह्यहो ॥ ५६ ॥ ततः सा विस्मिता--ऽन्येद्यु--र्देवतावसरक्षणे ॥ रहः स्थित्वाऽशृणोद्धूर्चा । तस्यौषध्याश्च भाषितम् ॥५७॥ सा प्राग् स्वात्तौषधीं वीक्ष्य । विफलां साधनां विना ॥ दध्यौ प्राग् युग्ममौषध्यो--र्देवतावसरे ह्यभूत् ॥ ५८ ॥ तत्राऽदात्र्येव दुर्दैवाद् । दृष्टात्ता च मयादितः ॥ दात्री सत्या च वाचाऽन्या । भयौत्सुक्यान्न चेक्षिता ॥ ५९ ॥ ततः साऽस्मै ददात्यर्चा--विशेषादधुनाधिकं ॥ अत एव गतौषध्य--न्वेषणेऽस्याऽऽ--दृतिर्गता ॥ ६० ॥ कथमप्यनयोः कार्यः । परावर्त्तोऽधुनाऽपि तत् ॥ चिन्तामणेर्लाभयोगे । को हि तुष्यति कर्करात् ॥ ६१ ॥

साऽन्यदावसरं प्राप्य । परावर्त्त्यौषध्यौ च ते ॥ देवतावसरे प्राग्व-द्रक्षोपायादि चक्रुषी ॥ ६२ ॥

मुमुदेऽथ कुमारोऽपि । प्राग्वद्रत्नागमात्तया ॥ वाक्पद्वीं वालयिष्यामि । क्षणे तामिति चिन्तयन् ॥ ६३ ॥ गणिकाप्यर्चयित्वा ता-मौषधीं याचते धनं ॥ न वक्ति न ददात्येषा। साधनादिविधिं विना ॥ ६४ ॥ गिरा [1]प्रत्ययितां तां सा । तथापि न मुमुक्षति ॥ मन्यमाना विधिं न्यूनं । तद्ज्ञानार्थं च ताम्यति ॥ ६५ ॥ अभिन्नमुखरागा सा । श्वश्रूर्जामातरं पुनः ॥ गोष्ठ्यां प्रीणयति प्रायो । धूर्त्तो धौर्त्त्येन धृष्यते ॥ ६६ ॥ वार्त्तालापे मिथः प्रीत्या । विविधे प्रसृते सति ॥ विज्ञानादि कियद्वेत्सी-त्यप्राक्षीत्सा तमन्यदा ॥ ६७ ॥ सोवादीदौषधीनैकाः । कलाश्च संकलाः कलाः ॥ मन्त्रांश्चित्रांश्च विज्ञाना-न्यन्यूनान्यप्यवैम्यहम् ॥ ६८ ॥ एको मन्त्रोऽस्ति मे येन । सम्यक् संपादने विधेः ॥ अतिरूपा भवेन्नारी । सुभगा नित्ययौवना ॥६९॥ साऽऽख्यत्कुर्वीदृशीं तन्मां । मान्या स्यां येन भूभुजः ॥ सपत्नीनां हरे मानं । प्रौढिर्न स्त्रीष्वतः परा॥७०॥कुमारोऽप्यवदत्तर्हि । मद्रयित्वा शिरः प्रगे ॥ लिप्त्वा भष्या मुखं चैनं । जप मन्त्रमुपोषिता ॥ ७१ ॥ मंत्रश्चाऽयं—रुड् बुड्ड बुड्ड बुड्ड बुड्ड स्वाहा.

मुदा साऽथ तथा कृत्वा । सायमागान्दन्तिके । बाह्याडम्बरकृत्सोऽप्यौ-षध्या तां शूकरीं व्यधात् ॥ ७२ ॥ बद्ध्वा शृङ्खलया स्तम्भे । पापे ! लात्वा मदौषधीं ॥ दोषं ददसे पुनः पुण्या । भुङ्क्ष्व स्तेयफलं ततः ॥ ७३ ॥ इत्याऽऽक्रुश्य क्रुधा तां स । दण्डेनाऽताडयद्भृशं ॥ रुदतीं दीनचेष्टाभि-र्जनयन्तीं भृशं कृपाम् ॥ ७४ ॥ प्रतिपाद्यौषधीदानं । पुनश्चौर्यस्य चाऽक्रियां ॥ पत्नीगिरा जातकृपः । स्वरूपस्थां द्व्यहाद्व्यधात् ॥ ७५ ॥ त्रिभिर्विशेषकं ॥ दत्त्वौषधीं क्षमयित्वा । सुतां जामातरं च सा ॥

---

१ विश्वासप्राप्तां २ धौर्त्त्याद् धूर्तो हि इति प्रत्यन्तरे

क्षमिताऽनुमता ताभ्यां । व्यधाद्भुक्त्यादि तद्गृहे ॥ ७६ ॥

सोऽन्यदावसरे तस्या । हितोदर्कमुपादिशत् ॥ मातः क्षमस्व पूज्याऽपि । यन्मयाऽसि विडम्बिता ॥ ७७ ॥ प्रतिबोधकृते ह्येव–मकार्षं ते दुरापदं ॥ अदत्तात्तफलं विद्धि । दुरुदर्कमिहाऽपि तत् ॥ ७८ ॥ परत्र नरकं घोरं । दौर्भाग्यं निःस्वतादि च ॥ अदत्तात्तफलं मत्वा । कः सुधीस्तदपीच्छति ॥ ७९ ॥ अदत्तं नैव गृह्णन्ति । प्राणनाशेऽपि येऽण्वपि ॥ तान् लक्ष्मीपुञ्जवल्लक्ष्मी–र्वृणोत्यत्र परत्र च ॥ ८० ॥ तथाहि––

पुरन्दरपुरस्पार्द्धि–[1]श्रीमद्धस्तिपुरं पुरं ॥ रूपेण नाम्ना धाम्ना च । राजा तत्र पुरन्दरः ॥ ८१ ॥ तस्याऽस्ति राज्ञी पौलोमी । पौलोमीव वपुष्मती ॥ चतुर्यौदार्यसंपन्ना । शालिनी शीललीलया ॥ ८२ ॥ श्रेष्ठी सुधर्मा सान्वर्थ–नामा तत्र पवित्रधीः ॥ अर्हद्भक्तः कृपासक्तः । सद्गुरौ चाऽनुरक्तहृत् ॥८३॥ धन्याऽस्ति गेहिनी तस्य । गेहे नीतिविचक्षणा ॥ तया समं समाङ्गल्यं । समयं गमयत्ययम् ॥ ८४ ॥ क्रमात्क्षीणधनः श्रेष्ठी । सोऽभूल्लाभान्तरायतः ॥ न तत्याज तथाप्यार्ह–द्धर्मं सुस्निग्धबन्धुवत् ॥८५॥ किन्तु स्वसात्कृतं सर्वं । सुकृतं स्याद्यथा यथा ॥ षडावश्यकदेवार्चा–दिके स यतते तथा ॥ ८६ ॥ युग्मं––

अन्यदानन्यसामान्य–पुण्याढ्याऽपत्यसूचके ॥ स्वप्ने तद्दयिता पद्म–ह्रदं सत्पद्ममैक्षत ॥ ८७ ॥ तं स्वप्नमलपत्पत्ये । सा प्रमोदेन मेदुरा ॥ सम्यग् विमृश्य तस्याऽर्थं । पत्न्यै सोऽपि मुदा जगौ ॥ ८८ ॥ अक्षीणलक्ष्मीलावण्य–पुण्यसान्निधिसान्निधिः[2] ॥ समये स मयेह त्व–त्प्रसूतः प्राप्स्यते सुतः ॥८९॥ तस्योक्तमित्युभाऽऽकर्ण्योऽऽ–कर्ण्य कर्णामृतं ततः ॥ साऽत्यन्तं मुदिता जज्ञे ।

---

१ श्रीध्धं इति प्रत्यन्तरे भिया दृध्धं श्रीध्धं  २ एतानि सान्निधौ–सान्निपि यस्य

निजज्ञेयाऽर्थनिश्चयात् ॥ ९० ॥ गर्भे गर्भाशये वभ्रे । द्वेधा रत्नं खनीव सा ॥ ततश्च तस्याः सर्वाङ्ग–शोभा काऽप्यमिताऽभवत् ॥ ९१ ॥ कान्तिः कान्ततमा ताव–ल्लावण्येन सहोद्गता ॥ सौभाग्यमस्फुरद्भाग्य–मप्यस्या मेधया समम् ॥ ९२ ॥ इत्यङ्गेऽस्याः शुभा भावाः । आसंस्तस्याऽनुभावतः ॥ फलपुष्पश्रियोपेताः । सश्रीकाः स्युर्न किं लताः ॥ ९३ ॥ अर्थतः त्रिभिर्विशेषकम् । [1]इत्य-ङ्गजस्य तस्याऽऽशु । प्रस्फुरच्छुभभाग्यतः । अनेशत् क्षुद्रदारिद्र्यं । दूरतः श्रेष्ठिसद्मनः ॥ ९४ ॥ प्रत्यहं प्रतिपण्यं च । क्रये वा विक्रयेऽपि वा ॥ लाभं सोऽलभत श्रेष्ठी । व्यवसायपरायणः ॥ ९५ ॥ गर्भवृद्ध्या समं पित्रो–रासीत्सीमातिगं सुखं ॥ स्वाजन्यं सज्जनैः सज्जां–गतासन्मानताद्यपि ॥ ९६ ॥

पूर्णेऽथ समये सौम्ये । मासि चित्रासिताऽशिवे ॥ पक्षे [2]वलक्षे कल्याण–योगानामातिथौ तिथौ ॥९७॥ वारे सारे पवित्रे च । नक्षत्रे शोभनेऽह्नि ॥ करणे शरणे श्रीणां । शुभयोगोपयोगयोः ॥ ९८ ॥ निर्दोषे सबले शुद्धे । लग्ने सर्वगुणे शुभे ॥ मुदितोदित-सुस्थान–स्वोच्चस्थनिखिलग्रहे ॥ ९९ ॥ राजन्वति सति प्राप्त–भयविग्रहविड्वरे ॥ शस्यार्थोत्पत्तिभिः प्रीत–जने जनपदेऽखिले ॥ १०० ॥ सुगन्धिशीतलमृदु–स्पर्शे वाति समीरणे ॥ सुलक्षणे क्षणे प्रात–र्मुखे प्रासूत सा सुतम् ॥ १ ॥ पञ्चभिः कुलकं ॥ तन्मातुः काऽपि नो बाधा । पुत्रपुण्यानुभावतः ॥ तज्जन्मना समं हर्षो–त्कर्षः किन्तु तदोदितः ॥ २ ॥ भास्वता तेन पूर्वेव । दिदीपे साधिकाऽधिकं ॥ रत्नेनेव खनिर्दीपे–नेव वेश्मगतावनिः ॥ ३ ॥

केनाऽप्यानन्दितः श्रेष्ठी । सुतजन्मप्रकाशनात् ॥ स्थितः स्थाने कचिद्गेह–बाह्यांगणगवादिके ॥४॥ सुतजन्मप्रकाशेन । तुष्टः

१ परं तपतपस्तेजोमयगर्भप्रभावतः इति प्रत्यन्तरे २ वलक्षे—उज्वलेत्यर्थः

श्रेष्ठी स तत्क्षणं ॥ तस्मै बहुधनं दातु-कामः कामं मुदं दधत् ॥ ५ ॥ यावता खान्तिके स्वार्थ-स्थानं पश्येन्मुहुर्मुहुः ॥ तावता स स्वदानेच्छा-मात्रं तत्राऽऽप नो धनम् ॥ ६ ॥ धनं यस्य न दानेच्छा। प्रायस्तस्याऽत्र दृश्यते ॥ दानेच्छा यस्य च प्राय-स्तस्य तन्नाथवाऽस्ति चेत् ॥ ७ ॥ दानस्यऽवसरे दातु-र्देययोगः सुदुर्लभः ॥ स तु चेत्प्राप्यते तत्प्राक्-पुण्यैरेव परैः परम् ॥ ८ ॥ इत्या-मृश्य स देयार्था-ऽप्राप्त्याभूद्विमना मनाक् ॥ न्यग्मुखश्च मुहुर्भूमिम् । व्यलिखत्स्वाङ्गुलीनखैः ॥ ९ ॥ त्रिभिर्विशेषकं ॥ तत्कालं तत्सुताऽनल्प-पूर्वपुण्यप्रभावतः ॥ कीटिकानगरद्वार-निभं लेभे विलं ततः ॥ १० ॥ पुनर्विलेखनाज्जज्ञे । पृथुद्वारमिदं क्षणात् ॥ तत्राऽद्राक्षीदयं स्वर्ण-द्रव्यं नव्यं प्रमातिगम् ॥ ११ ॥ ततः स्वपुत्रनिःसीम-भाग्याकृष्टमवेत्य तत् ॥ प्रकृष्टविस्मयाद्धृष्ट-मनाः श्रेष्ठी व्यचिन्तयत् ॥ १२ ॥ निस्सीमोत्तमपुण्यानां । सीमाऽऽसीन्मानवेष्वयं ॥ ममाऽऽत्मजन्मा तज्जन्म-महेन महताऽमुना ॥ १३ ॥ निर्मातुमुचितेनाऽद्य । महिमाऽस्य महात्मनः ॥ प्रकाशनीयः सपदी-त्यूचे तं तिष्ठ भो वहिः ॥१४॥ अनाययिष्ये वस्त्रादी-त्याद्युक्त्वा तं विसृज्य च ॥ ततः स्थानात्तदादत्त लक्षाद्यप्रमितं धनम् ॥ १५ ॥ त्रिभिर्विशेषकं ॥ चारु चीवरभूपाद्यं । खाद्यं सर्पिर्गुडादि च ॥ आनाय्याऽमितमेतस्मै । परेभ्यश्च यथोचितम् ॥ १६ ॥ यथेष्टं स ददौ सर्वत्राऽपि त्रापितवानपि ॥ तद्गृहे तूर्यनिर्घोषाऽ-द्वैतं च प्रास्फुरच्चिरम् ॥ १७ ॥ पित्रादीनां मनस्युच्चै-र्महानन्दो ह्यनुत्तरः ॥ एहि याहीति वाचश्च । स्वजनानां प्रमोददाः ॥ १८ ॥ सन्ततः सधवस्त्रीणां । मधुरो धवलध्वनिः ॥ नाटकप्रेक्षणादीनि । जायन्ते च दिने दिने ॥ १९ ॥ महेभ्यानां गृहेभ्यश्चाऽऽ-यान्ति वर्द्धा-पनान्यपि ॥ एवं दशदिनीं चक्रे । पित्रा तज्जननोत्सवः ॥२०॥ अर्थतो नवाभिः सम्बन्धः ॥ षष्ठीजागरणेन्द्वर्काऽऽ-लोकादि निखि-लोत्सवान् ॥ तस्य जन्मानुगांस्तांस्तान् यथाकालं पिताऽकरोत ॥ २१ ॥

अन्यदा स सुधीर्दध्या-वज्जामलवपुःश्रियः ॥ ममाऽऽत्मजस्य जन्माद्य-दिनादारभ्य तद्धिलात् ॥ २२ ॥ प्रत्यहं स्वेहया लक्ष्मी-र्गृह्यते भुज्यते सदा ॥ नियुज्यते च सत्पात्रे । दीनादिषु विसृज्यते ॥ २३ ॥ एवमादीयमानाऽपि । लक्ष्मीर्न हीयते मनाक् ॥ महोदधेरिवादत्त-मुदकं हि सुबह्वपि ॥ २४ ॥ स्थित्या गत्याथवोत्पत्त्या । यत्पृथ्व्यां वस्तु विद्यते ॥ स्वामी हि पार्थिवस्तस्य । तदेतस्याऽप्यसंशयम् ॥ २५ ॥ इदं च पार्थिवायोक्त-मेव मे सौख्यदं भवेत् ॥ अन्यथा तददत्त्वा-दत्राऽमुत्राऽपि दुःखदम् ॥ २६ ॥ सुश्रावकत्वात् स श्रेष्ठी । सदुपायनपूर्वकं ॥ नृपं विज्ञपयामास । यथास्थितनिवेदनात् ॥ २७ ॥ नृपोऽपि न्यायवत्त्वेन । तस्य तच्च दृढव्रतं ॥ अदत्तपरिहाराख्यं । दृष्ट्वा हृष्टस्तमभ्यधात् ॥ २८ ॥ भाग्यैकधाम्नः सञ्जाता-स्तव पुत्रस्य पुण्यतः ॥ प्रादुर्भूता प्रभूता चेत् । श्रीरित्थं साऽस्तु ते ततः ॥ २९ ॥ नृपप्रसादं निःसाद-मासाद्य निरवद्यधीः ॥ सोत्सवाऽडम्बरं सोऽपि । स्ववेश्म मुदितोऽविशत् ॥ ३० ॥

ततश्च सुमुहूर्त्तेऽह्नि । स्वजनान् भोजनादिभिः ॥ उपचर्योपवेश्याऽथ । सुधर्मश्रेष्ठ्युवाच तान् ॥३१॥ यस्मादिनात्प्रभृत्येपो-ऽवतीर्णो मत्कुले सुतः ॥ अक्षीण एव मे लक्ष्मी-पुञ्जः स्फुरति तद्दिनात् ॥ ३२ ॥ तदस्य धर्मसाम्राज्य-भाजः सौभाग्यसेवधेः ॥ मत्पुत्रस्याऽस्तु यः साक्षा-ल्लक्ष्मीपुञ्जेति नाम तत् ॥ ३३ ॥ पित्रोर्मनोरथशतैरुचितैः स साकं । [1]माकन्दकन्दविशदाङ्कुरवत्कुमारः ॥ प्राप्नोति सुन्दरतराऽवयवः प्रवृद्धिं । लोकम्पृणप्रगुणसद्गुणसंगतात्मा ॥ ३४ ॥ तस्याङ्गसौन्दर्यमपि क्रमेण । स्पर्द्धादिवाऽवर्द्धत सार्द्धमङ्गै-स्तदङ्गसौन्दर्यमिवाऽऽर्यलोक-दृग्मानसेष्वप्रतिमः प्रमोदः ॥ ३५ ॥ दन्तोद्गमाऽङ्घ्रिन्यसनाशनादौ । पितृप्रयुक्तोत्सव[2]स्त्र-

१ आम्र   २ रचनाभिः

णाभिः ॥ प्रशंसनीयं स्वजनप्रमोद-प्रदायि तस्य प्रथमं वयोऽभात् ॥ ३६ ॥ सवयोभिः समं बाल्य-वयः क्रीडामनोहरं ॥ हरन् सतां मनांस्येष । कियदप्यत्यवाहयत् ॥ ३७ ॥ पिताऽध्यापयितुं विद्या-स्तद्योग्यमवगत्य तं ॥ अनैषीलेखशालाया-मुपोपाध्याय-मुत्सवैः ॥ ३८ ॥ विनयेन नयेनाऽय-मुपाध्यायमुपाचरत् ॥ तथा यथा स तुष्टोऽस्मै । विद्याः सर्वा ददौ मुदा ॥३९॥ न तच्छास्त्रं न सा विद्या । विद्यते न च तद्धनं ॥ [1]यन्नाऽविन्दत बुद्धयाऽयं । सर्वविद्याविशारदः ॥ ४० ॥ उपाध्यायोऽस्य साक्ष्यासीत् । सर्व-विद्यासु केवलं ॥ यतः स्वयंवरास्तास्तं । दत्तवाच इवाऽगमन् ॥ ४१ ॥ लीलया [2]कलयामास । सकलाः सकलाः कलाः ॥ शिश्राय स्पर्द्धयेवाऽऽसां । जिनधर्मकलाप्यमुम् ॥ ४२ ॥

संप्राप्तसर्वविद्याब्धि-पारः सारसुसूक्ष्मधीः ॥ स्वैरं सुखेन वेश्माट्टा-दिषु क्रीडत्यनारतम् ॥ ४३ ॥ प्रश्नप्रहेलिकाकाव्य-तर्क-गोष्ठिपुरस्सरैः ॥ तैस्तैर्बहुविधैर्विद्या-रसैः स्वं सरसं सृजन् ॥ ४४ ॥ कलाभ्यासैरनेकैश्च । गीतनाट्यानुगैरपि ॥ विनोदैर्मोदयन् मित्र-मनांसि च कदाचन ॥ ४५ ॥ मित्रैः सह सहर्षं स । तत्पुरोपवनादिषु ॥ क्रीडन्नन्येद्युरेकत्र । दृष्ट्वा वन्दितवान्मुनिम् ॥४६॥ त्रिभिर्विशेषकं ॥ मुनिना तेन धर्माशी-र्ददेऽस्मै भद्रकात्मने ॥ गृहिधर्मस्य शास्तिश्च । बाल्येऽप्यादत्त चैष तम् ॥ ४७ ॥ ततश्चा-ऽस्य परा भक्ति-र्वीतरागे गुरावपि ॥ पित्रोश्च तद्वचस्यास्था । सम्यक्त्वे च स्थिरा स्थितिः ॥ ४८ ॥ देदीप्यमाना देहश्री-स्तस्याऽ-भूद्यौवनागमे ॥ प्रभाप्रभासिभागा किं । न नभःश्रीर्दिनागमे ॥ ४९ ॥ रूपश्रीकलितं लीला-ललितं सौम्यदर्शनं ॥ तं विवाहयितुं वप्ता । चित्ते यावदचिन्तयत् ॥ ५० ॥

---

१ यच्च नाऽविन्ननाप्य चेत् इति प्रत्यन्तरे २ अङ्गीचकार

सर्वाङ्गीणगुणागारं । तं कन्यावरमिच्छवः ॥ तावदष्टमहेभ्यास्त–द्गृहेयुगपदाऽगमन् ॥ ५१ ॥ धनेश्वर१स्तथा पृथ्वी–धरः २ साधुर्यशोधरः ३ ॥ श्रीधरः ४ श्रीपतिः ५ श्रेष्ठी । धनदश्च ६ धनावहः ७ ॥ ५२ ॥ जिनदासः ८ श्रियां वास । इत्येते व्यवहारिणः ॥ जगति यथार्थाख्याता । विख्यातास्त्यागलीलया ॥ ५३ ॥ विपुलाया अलंकारा । उदारा दिग्गजा इव ॥ चातुर्यादिगुणाधाराः । श्रेष्ठिनं तं मुदाऽनमन् ॥ ५४ ॥ त्रिभिर्विशेषकम् ॥ जगुश्च कर्तुकामाः सः । पाणिग्रहमहोत्सवं ॥ त्वत्सुतस्य सुरूपाभिः । कन्याभिः समं समं ॥ ५५ ॥रूपश्री १ रूपरेखा २ च । पद्मा ३ पद्मावती ४ तथा ॥ धनश्री ५ मदनश्रीश्च ६ । लक्ष्मी ७ र्लक्ष्मीवतीत्यपि ८ ॥ ५६ ॥ इत्येता नामतः सर्व–सम्मताः सन्ति नः सुताः ॥ सुशीलाः सारसौभाग्य–भाग्यप्रभृतिसद्गुणाः ॥५७॥ रूपसौन्दर्यशालिन्यः । सलीलाः सत्कलोज्ज्वलाः ॥ तदासां स्वसुतेनाऽऽशु । पाणिं ग्राहय सोत्सवम् ॥५८॥ त्रिभिर्विशेषकं॥ ततः स्वोद्वहमुद्वाह–योग्यं तांश्चेभ्यकुञ्जरान् ॥ स्वाजन्यस्थानमालोक्य । श्रेष्ठीमवदत् स तान् ॥ ५९ ॥ भवदागमनं मान्यं । हेतुनाऽनेन हर्षदं ॥ क्षुधितस्याऽध्वनीनस्य । भोक्तुमामन्त्रणं यथा ॥ ६० ॥ पुत्राम्बप्रश्नकन्येक्षा–माङ्गल्यविहगादिभिः ॥ निर्धार्य धार्यं यद्युक्तं । तद्विधित्साम्यमत्सरम् ॥ ६१ ॥

अथ तेऽपि तथा सर्वे । कारयित्वा शुभेऽहनि ॥ तं तत्सुतेन कन्यानां । विवाहं प्रत्यपीपदन् ॥ ६२ ॥ अथ ते मुदिताः सर्वे । सम्बधद्दढतां मिथः ॥ प्रथमं प्रथयामासुः । सर्वस्वजनसाक्षिकम् ॥ ६३ ॥ ततश्चैतेऽपि सर्वेषु । स्वस्वावासेषु सर्वतः ॥ शोभां विचित्रचित्राद्यै–र्मण्डपैस्तोरणैरपि ॥ ६४ ॥ अन्यामपि विवाहार्हां । कारयामासुरादरात् ॥ सारां समग्रां सामग्री–मिति ज्ञाः प्राग् यदूचिरे ॥ ६५ ॥ युग्मं ॥ संबंधदृढिमा[1] सुलग्नघटना[2] संस्पर्शनं [1]भर्मणि[3] । गेहालंकृति[4]शाक[5]पर्पट[6]वटी[7]पक्वान्नपाक-

[1] कार्मणं

क्रियाः[८] ॥ वासः[९] काञ्चनपत्रपूगरचना[१०-११] वीवाहसंवाहनं[१२]। [१]सम्यक्स्तंभ[१३] जवार[१४] मंडप[१५] कुसुंभादिक्रियाऽऽ[१६] मंत्रणं[१७] ॥६६॥ वेदीमण्डपतोरणादिरचना[१८] वर्ण[१९] स्तथोद्वर्णकः[२०]। शृङ्गारश्च चतुर्विधो[२१] वरवधूयुग्मस्य लग्नक्षणे ॥ व्युच्छर्देन वरागमो[२२] ऽर्थमहिमा[२३] मातुर्गृहावेशनम्[२४] । हस्ते कंकणहस्तलेप[२५] समयन्यायघोष[२६] पाणिग्रहाः[२७] ॥ ६७ ॥ एवं च विज्ञदैवज्ञदत्तलग्ने शुभे दिने ॥ सधवा धवलध्वानै[र्देवीकण्ठो]र्नैकत्तर्योर्जितारवैः॥६८॥स्थाने स्थाने महादानप्रीणिताऽशेषमार्गणैः ॥ महेभ्यमुख्या संख्यातलोकलोचनलोभनैः ॥ ६९ ॥ गीतसंगीतविस्तार–सुभगैरद्भुतोत्सवैः ॥ सर्वस्वजनसत्कार–सर्वाचारपुरस्सरम् ॥ ७० ॥ कन्याभिस्ताभिरष्टाभिः । समं समभवन्महान् ॥ लक्ष्मीपुञ्जस्य तत्पित्राऽऽ–ह्लादकारी करग्रहः ॥ ७१ ॥ सुवर्णमणिमाणिक्या–ऽदूष्यदूष्यादिकं बहु ॥ लक्ष्मीपुञ्जकुमाराय । श्वसुरा ददिरे मुदा ॥ ७२ ॥

युवतीमोहनं कामो–ज्जीवनं यौवनं वनं॥ प्राप्य मत्तेभवत्ताभि–र्वशाभिः सह खेलति ॥७३॥ ताभिः प्रियाभिरष्टाभि–रभिराम-गुणर्द्धिभिः ॥ शचीपतिरिवोपेतः । शचीभिः सोऽप्यदीप्यत ॥ ७४ ॥ तरुण्योपचिताङ्गीभिः । सुधामधुरगीतिभिः ॥ पतिव्रताभिः स्वप्रेय–श्चित्तचौरीभिरप्ययम् ॥७५॥ प्रेयसीभिः समं ताभि–र्भुङ्क्ते भोगान् यथासुखं ॥ दत्तदुःखप्रवासेषु । दिव्यावासेषु देववत् ॥७६॥ युग्मं ॥ पितृप्रासादात्प्राक् पुण्या–नुभावात्परमाच्च सः ॥ चिन्ताविमुक्तचित्तः सन् । दिव्यं सुखमविन्दत ॥७७॥ [२]सुखेन लक्ष्मी-पुञ्जस्य । जायमानेऽप्य[३]नेहसः॥ सुबह्वतिक्रमेऽप्यस्य । न धर्मः कोऽप्यहीयत ॥७८॥ यतः—**सामग्गि अभावे वि हु । वस-णे वि सुहे वि तह कुसंगे वि ॥ जस्स न हायइ धम्मो । निच्छयओ जाण तं सड्ढं** ॥ ७९ ॥ प्राक्पुण्यवित्तसंपत्तिः ।

१ सम्यक्वेदि  २ सुखेनोजायमानेन प्रत्यन्तरे, उजायमानेन–देदीप्यमानेन  ३ कालस्य

सर्वतः सुखसन्ततिः ॥ [1]तस्याऽ[2]सपत्नसत्पुण्यैः । समं संमिलिता द्रुतम् ॥ ८० ॥ तं तादृक्सुखिनं भाग्य-सौभाग्यादिगुणावहं ॥ अर्हद्धर्मे रतं दृष्ट्वा । सर्वे सन्मानयन्ति तम् ॥ ८१ ॥ तस्माद्धर्मधराः कर्म-कराद्या अपि जज्ञिरे ॥ लोकेऽपि व्यवहारो यत्-सर्वे मुख्यानुयायिनः ॥ ८२ ॥ प्राग्जन्मपूर्णपुण्यर्द्धि-प्रभावात्प्रभवन्ति न ॥ प्रवेष्टुं हि कदाप्यस्य । देहे गेहेऽपि चाऽऽपदः ॥ ८३ ॥ संपदः प्रत्युताऽऽयान्ति । समग्रास्तं स्वयंवराः ॥ वल्ल्यो द्रुमिव नद्योऽब्धि-मिव द्यामिव तारकाः ॥ ८४ ॥ लक्ष्मीरप्यनुरक्तेव । प्रसक्तेव श्रितेव वा ॥ मणिमन्त्रौषधीचूर्ण-योगै[3]स्तं वशितेव वा ॥ ८५ ॥ भृशं रसानुविद्धेवाऽ प्रवा सुदृढवागिव ॥ रश्मिबद्धेव वा लब्धा-स्वादेव सुखितेव वा ॥ ८६ ॥ किमु वा कृतसंकेता । किं वा कार्मणिता किल ॥ नियंत्रिता वा निगडै-र्व्युता वा कीलिताऽथ किम् ॥ ८७ ॥ दत्तदक्षिणहस्तेव । प्रीत्या पाणौ कृतेव वा ॥ तदीयवेश्म नाऽत्याक्षी-दक्षीणा पुण्ययोगतः ॥८८॥ सुपात्र मित्रदीनार्थि-स्वाङ्गभोगनिजादिषु ॥ सा नित्यं दीयमानाऽपि । त्वैधत ह्यधिकाधिकम् ॥ ८९ ॥ मा मंस्था क्षीयते लक्ष्मीः० ॥ तरङ्गिणीव तल्लक्ष्मी-र्जाता सर्वोपकारिणी ॥ सर्वसौख्यावहा(तत्किं)सुक्त-विपर्ययमसूचयत् ॥९०॥ तत्सूक्तं चेदं-गृहकूपी कृपणानां । लक्ष्मीर्व्यवहारिणां नगरवापी ॥[4]विबुधगणैः किल कथिता । तरङ्गिणीव क्षितीशानाम् ॥९१॥ सज्जनाः स्वजनाश्चापि । वणिक्पुत्राश्च कोटिशः ॥ तल्लक्ष्म्या सुखनिर्वाहा । धर्मादिप्रापिताः परम् ॥९२॥ लक्ष्मीः सैव हि या स्वाऽन्य-जनेभ्यः शर्मधर्मदा ॥ निरुपाधिश्चतुर्वर्ग-समृद्धिस्तद्वताऽऽप्यते ॥९३॥ तथोक्तं-सा लक्ष्मीर्या धर्मकर्मोपयुक्ता । सा लक्ष्मीर्या बन्धुवर्गोपभुक्ता ॥ सा लक्ष्मीर्या स्वांगभोगप्रसक्ता । याऽन्या मान्या सा तु लक्ष्मीरलक्ष्मीः ॥ ९४ ॥

---

१ नुन्ना-नुतना   २ असाधारण   ३ संयमितेव च प्रत्यन्तरे   ४ व्यापारिणां च सरसी इति प्रत्यन्तरे

पुत्रप्राग्भवधर्मस्य । फलमेवमवेक्ष्य सः ॥ श्रेष्ठी सुधर्मा निर्माति । चतुर्धा धर्ममादरात् ॥ ९५ ॥ नित्यं धर्ममिवानन्दा-द्व्यवसायमनेकधा ॥ करोति कारयत्यन्यै-र्मान्यैरपि स कोटिशः ॥ ९६ ॥ कोटिकोटीः पुनर्वह्वी-रुपार्जयदयं स्वयं ॥ तमात्मजं परं प्रेम्णा । तच्चिन्तायां न्ययुङ्क्त न ॥ ९७ ॥ सुखितः पुत्रपुण्येन । चिन्तां धर्मार्थयोश्चिरं ॥ निर्माय कृतनिर्माय-धर्मः सौधर्ममाप सः ॥ ९८ ॥ तदेकपुत्रसन्तुष्टा । तन्माता शीलशालिनी ॥ गार्हस्थ्यमनुपाल्याऽर्ह-द्धर्मात् स्वःशर्मभागभूत् ॥ ९९ ॥ तयोरुपरमेऽप्यस्य । न चिन्ता क्वाप्यभूत्क्वाचित् ॥ सतां हि पुण्यं सर्वत्र । पितृभ्रातृसुहृत्समम् ॥१००॥ लक्ष्मीस्त्रीसुतसन्ताना-द्युपाधिसकलं सुखं ॥ यशःकीर्त्तिमहत्वाद्य-प्यस्य सर्वातिशाय्यभूत् ॥ १ ॥

अन्यदा पश्चिमे यामे । यामिन्या जाग्रतः सतः । धर्मध्यानपरस्याऽपि । चिन्ता तस्येत्यजायत ॥ २ ॥ जन्मादिमादिना-दप्याऽऽ-रभ्याऽलभ्याघवन्नृभिः ॥ कुतः स्वयमियं साक्षाद् । भूयोऽभूत् श्रीरिहाऽक्षया ॥ ३ ॥ तस्येति ध्यायतः कश्चित् । तत्क्षणं दिव्यदेहभृत् ॥ ज्ञानीव संशयोच्छेद-पटुः प्रादुरभूत्पुरः ॥ ४ ॥ श्राद्ध किमेष देवर्षि-र्देवो वा दानवोऽथवा ॥ योगीन्द्रो वाऽन्यरूपस्थः । किं वाऽयं खचरेश्वरः ॥ ५ ॥ यः स कोऽप्यस्तु किन्तु स्या-त्तेजस्वी निस्समाकृतिः ॥ उदारः सद्गुणः कश्चि-देषामेकतरो ह्ययम् ॥ ६ ॥ स्वसद्मन्यागतः शत्रु-रपि पूज्यः सतां मतः ॥ किं पुनश्चैष वाऽज्ञात-गुणोऽप्यचर्यो मणिर्न किम् ॥७॥ क्षणं ध्यात्वेति विनयात् । स नत्वा तं कृताञ्जलिः ॥ आख्यत्के यूयमर्थः कः । कुतः स्थानादिहागताः ॥ ८ ॥ तस्येति विनयाकीर्णां । वाणीमाकर्ण्य तं प्रति ॥ प्रतिनम्य प्रमुदितः । स व्यक्तं व्याहरत्ततः ॥९॥ सुरः सुरंगः प्राग्जन्म-जन्मत्वत्स्नेहरज्जुभिः ॥ अत्राऽहं मित्रताऽऽकृष्टःसमागां स्वास्पदान्मुदा॥१०॥स्वान्ते ते संशयः शङ्कु-रिव दुःखाकरोति यः ॥ ततश्चैतं समुद्धर्तुं वचनं मेऽद्य वैद्यति ॥११॥

अवसरमवाप्यानेन । मदुक्तमधुना शृणु ॥ तथाहि जंबूद्वीपेऽत्र । भरतार्द्धे च दक्षिणे ॥ १२ ॥ मध्ये मध्यमखण्डस्य । मणिपुरं पुरं ॥ अभूतत्र च भूपालः । श्रीपालः कालवत् द्विषाम् ॥ १३ ॥ धन्योऽवदान्यमूर्द्धन्यो । मान्यो धनपतिर्द्विधा ॥ नाम्नाऽर्थेन च गार्भेन-त्साम्राऽऽस्ते यासकुरुती ॥ १४ ॥ प्राणेभ्योऽपि प्रिया तस्य । प्रिया प्रीतिमती सती ॥ सम्यग्नामाढ्यसुत्रामा । तयोर्गुणधरः सुतः ॥ १५ ॥ आसप्तति: कलास्तस्य । सोमस्याऽप्यमलाः सदा ॥ स्फुरन्तिस्माऽखिला विद्या । इव द्युधा गुरोरिव ॥ १६ ॥ क्रमात्स यौवनं प्राप्तः । पित्राऽऽशु परिणायितः ॥ महोत्सवैर्महेभ्यानां । धन्याः कन्या गुणोत्तराः ॥ १७ ॥ प्रेयसीभिः समं ताभिः । समन्तादभ्युपासितः ॥ भोगान् स स्वेच्छया भुङ्क्ते । नित्यमर्जति च श्रियः ॥ १८ ॥ क्रीडाकृतेऽन्यदा सोऽपि । समित्रादिपरिच्छदः । गच्छन् स्वच्छमतिः सूरिं । विशदं विशदाशयम् ॥ १९ ॥ चारणश्रमणं ज्ञान-चतुष्टयविराजितं ॥ दिष्ट्या दृष्ट्वाऽभिगम्याऽऽशु । सादरः समवन्दत ॥ २० ॥ युग्मं ॥ तस्मै धर्माशिषं दत्वा । विदित्वा भद्रकं च तं ॥ गुरुर्दयाऽनृताचौर्य-ब्रह्मापरिग्रहान् ॥ २१ ॥ पञ्चाऽपीमान् यमान् देश-सर्वभेदान् सविस्तरं ॥ नानानिदर्शनाऽऽख्यात-फलं चाख्यत तं प्रति ॥ २२ ॥ स धर्मोपनिषद्भूतां । तदीयां धर्मदेशनां ॥ सम्यक् श्रद्धाय सन्ध्याय । स्वबुद्धौ स्वे हृदि न्यधात् ॥ २३ ॥ ततः सम्यक्त्वमादाय । व्रतानि च यथारुचि ॥ अभक्ष्याऽनन्तकायादि-नियमांश्चोचितान् स तु ॥ २४ ॥ अदत्तादानरूपं च । स तेष्वप्यग्रहीद् व्रतं ॥ विशिष्य निरतीचारं । रुच्या परमयाऽऽत्मनः ॥२५॥ सोऽपृच्छत्तत्स्वरूपं श्री-गुरुंस्तस्य तितिक्षया ॥ तेऽप्यूचुः शृणु वत्स ! त्वं । तार्तीयिकमणुव्रतम् ॥ २६ ॥ मणितृणादिमात्रस्या-ऽप्यन्यसम्बन्धिनः सतः ॥ तत्राथेनाऽवितीर्णस्या-ऽनादानं यत्तदेव तत् ॥ २७ ॥ त्रिविधेन त्रिधाऽपि स्या-त्तत्केषाञ्चित्कथञ्चन ॥ द्विधाऽपि त्रिविधेनैत-दिति वा देशतस्त्विदम् ॥ २८ ॥ अन्येऽपि

बहवो भेदाः । संभवन्त्यत्र ते परं ॥ अर्हास्तेषामसत्वाना-मित्यथो शृणु तत्फलम् ॥ २९ ॥ एषु भेदेषु ये येन । प्रपन्ना यादृशा यदा ॥ [1]आराद्धाश्च विराद्धाश्च । तेऽनुरूपफलप्रदाः ॥ ३० ॥ तथाहि—

पतितविस्मृतनष्टहृताहित-स्थितमदत्तमिहाऽन्यधनाद्यपि ॥ अणुतमं यदिवाऽनणु लाति यः । स पतिता नरके नरकेसरी ॥ ३१ ॥ विविधबन्धवधैश्च स पीड्यते । बहुविधाऽसुखदौःस्थ्यदरिद्रताः ॥ बहुभवारतिभीततिदुर्गति-प्रपतनाऽहितसंहतिसंगमाः ॥ ३२ ॥ द्वितयलोकविनाशकलङ्किता-सुकृतमूलविमूलनमूर्खताः ॥ धृतिमतिप्रभृतिक्षतयः क्षणात् । तमनुयान्ति तथा [2]च विपत्तयः ॥ ३३ ॥ त्रिभिर्विशेषकं ॥ इति विमृश्य हितं परकीयकं । सकलवस्तु तृणाद्यपि ये मुदा ॥ परिहरन्ति विवेकदृशः सदा । नियमतोऽभिमता जगतोऽपि ते ॥ ३४ ॥ यथौचित्याचाराद्धेऽस्मिन् । द्वेधाऽपि शिवसंपदः ॥ पुंसां लोकद्वयीसिद्धि-श्चाऽपि सर्वशुभावहा ॥ ३५ ॥ अनर्थसार्थाः पृथवोऽप्यपार्था[3] । एव प्रथन्तेऽत्र विवर्णवाग्वत् ॥ अर्थाः समर्थास्त्रिपुमर्थसिद्ध्यै । सिन्धूद्भारा इव न क्षयन्ति ॥ ३६ ॥ स्थिताः स्थिरा एवं जगत्यदत्त-त्यागं प्रतिज्ञाय कुलाद्रिवद्ये ॥ [4]अनन्तवन्नित्यमनन्तमेकं । यशो जगद्व्यापि जयत्यमीषाम् ॥ ३७ ॥ तेजस्विना[5]महिमरश्मिवदादिमास्ते । सौम्यात्मनां [6]तुहिनरश्मिवदग्रिमास्ते ॥ सर्वोपकारकरणोद्यतजीवितानां । धुर्येव वारिदवरा इव ते भवन्ति ॥ ३८ ॥ तृतीयाणुव्रतस्येति । पालनाऽपालनोद्भवे ॥ शुभाशुभे फले श्रुत्वा । तत्सम्यक् पालयेश्चिरम् ॥ ३९ ॥ तथेति प्रतिपद्याय-ममायं सपरिच्छदः ॥ तान् वन्दित्वाऽगमद्वेश्म । स स्वं तद्भावभावितः ॥ ॥ ४० ॥ विधायाऽबाधया धर्मा-द्यर्थांस्त्रीन् सफलान् स च ॥ लक्ष्म्यानन्त्येऽपि भाग्यं स्वं । परीचिक्षिषुरन्यदा ॥ ४१ ॥ माता-

---

१ तेषां विराधाराधानां । फलं शृणु शुभाशुभं-इति पाठान्तरं २ विपदोऽखिलाः प्र० ३ निष्फला ४ आकाशवत् ५ सूर्यः ६ चन्द्रः

पितृनथाऽऽपृच्छ्य । प्रियाः स्वाः स्वजनानपि ॥ प्रणिवान्यगणेयानि । पणित्वा लाभदान्यपि ॥ ४२ ॥ अगादेशान्तरे दूरे । पुरं पृथ्वीप्रतिष्ठितं ॥ प्राभृतैः प्रभुमानन्ध । पुरान्तस्तदनुज्ञया ॥ ४३ ॥ भाटकात्तगृहे पण्या–न्यानाय्य सपरिच्छदः ॥ नित्यं देवान् गुरूंश्चाऽर्चन् । धर्मनिष्ठः स तिष्ठति ॥ ४४ ॥ चतुर्भिः कलापकं ॥ वणिक्पुत्रान् श्रियां पात्री–कुर्वन्मधुरया गिरा ॥ मित्रीकुर्वन् बहून् लोकान् । धर्मशास्त्या पवित्रयन् ॥ ४५ ॥ करोति कारयत्येतै–र्व्यवसायाननेकशः ॥ व्यवहारस्य शुद्ध्यैव । साधर्म्यस्य हि जीवितम् ॥ ४६ ॥ युग्मं ॥ ततः साऽपि प्रयत्नेन । साध्या हि गृहमेधिनां ॥ तृतीयव्रतसम्बन्धाऽ–तिचाराणां विवर्जनात् ॥४७॥ न्यूनाधिकतुलामाने १ । स्तेनाऽऽनीतादिसंग्रहः २ ॥ प्रतिरूपाक्रिया ३ स्तेना–ऽनुज्ञाऽ४ रिनृपभूगमः ५ ॥ ४८ ॥ इति पञ्चाप्य-मून् व्यस्तान् । समस्तांश्चाऽपि वर्जयन् ॥ पूर्णप्रसिद्धिमाहात्म्यः । सुखेन श्रियमर्जति ॥ ४९ ॥ युग्मम् ॥ अमेयां श्रियमर्जित्वा । जित्वा भाग्येन दुर्दशाः ॥ विशांपतिं वशीकृत्य । तत्र धर्मोन्नतीर्व्यधात् ॥५०॥ नरेन्द्राऽनुमतः पित्रा–ह्याहूतश्च स सार्थपः ॥ पूर्वं प्रस्थाप्य सार्थं स्वं । स्वयं पश्चात्ततोऽचलत् ॥ ५१ ॥

अथो वाजिनमारुह्य । जवेनाऽध्वनि स व्रजन् ॥ ग्रामाकरपुराऽरण्या–द्यतिक्रामन् यथाक्रमम् ॥ ५२ ॥ प्रातः कुतश्चिन्नगरा–[1]न्निर्गत्यानन्दिनि वने ॥ दूरान्तरावधि प्राप्तुं । जवाद्यावत्प्रयात्ययम् ॥ ५३ ॥ युग्मम् ॥ तावत्पथि पुरः पश्य–त्यश्वारूढः स कुण्डले ॥ रम्ये मणिमये दिव्य–देव्याः कर्णच्युते इव ॥ ५४ ॥ ते तारतेजसी सारे । अपि वीक्ष्य तदा ततः ॥अर्कालोकादिव दृशौ । निरीहोऽयं न्यवर्त्तयत् ॥ ५५ ॥ मणिमालामयं हारं । सारं चाऽग्रे स दृष्टवान् ॥ मणिरत्नसुवर्णौघैः । पूर्णं कुम्भमपि क्रमात् ॥५६॥

[1] °त्याऽन्यदिने प्रत्यन्तरे ।

स्वात्तव्रतास्थां मनसि । कृत्वैतां निःस्पृहाऽग्रणीः ॥ दृषत्पूर्णनिधिं रज्जु-मालामिव च सोऽत्यजत् ॥५७॥ सोऽचिन्तयच्च किमिदं । कथं चाऽगात्पुरो मम ॥ एतत्त्रयमिति ज्ञातु-मीहे किं वेति चिन्तया ॥ ५८ ॥ सोऽथ विस्मयविस्मेर-मना मार्गमतिव्रजन् ॥ अकस्मात् श्रान्तमद्राक्षीत् । सवेगमपि तं हयम् ॥ ५९ ॥ अश्वादुत्तीर्य तस्थौ स । यावच्चिन्ताऽऽकुलः किल ॥ तावत्तत्क्षणमेवैतं । गतप्राणमिवैक्षत ॥ ६० ॥

स विच्छायमुखः खेद-मेदुरो हृदि दध्यिवान् ॥ किमश्वोऽयं तृषाद्यर्त्या । मूर्च्छितो वा मृतोऽथवा ॥ ६१ ॥ अचेतनीकृतः किं वा । क्षुद्रदेवेन केनचित् ॥ इत्यादि क्षणमामृश्य । दैवं प्रत्यवदत्तदा ॥ ६२ ॥ युग्मं ॥ रे दैव! किमकार्षीस्त्व-मकाले संहरन्नमुं ॥ जात्यं तेजस्विनं सर्व-लक्षणाढ्यं तुरङ्गमम् ॥६३॥ वक्रवक्लमपि स्वामि-भक्तं चित्तप्रियङ्करं ॥ रङ्गाद्गतिकरं मार्ग-सहायं बलवत्तरम् ॥ ६४ ॥ कृशकर्णं मृदुमध्य-संस्थानं विपुलासनं ॥ ऋद्धिदं मांसलं सर्व-गुणोपेतं सुखावहम् ॥६५॥ त्रिभिर्विशेषकं ॥ मदपेक्षाविमुक्तश्चेत् । त्वमेवमकृथास्तदा ॥ कुर्वीथाः स्वेप्सितं किन्तु । मा म्लानिं सुकृतस्य मे ॥ ६६ ॥ इत्यात्मसाक्षिकं प्रोच्य । विनाऽश्वं स्वस्य दुष्करं ॥ मार्गोल्लंघनमित्यत्रा-ध्वन्यः कोऽपि भिषग्वरः ॥ ६७ ॥ यद्येत्योपकृतिप्रह्व-श्चिकित्सत्यौषधैर्हयं ॥ जीवयत्यपि चाऽस्मै त-द्ददामीयन्मितं धनम् ॥ ६८ ॥ युग्मं ॥ प्रतिज्ञापूर्वमालोच्ये-त्येतद्भ्राम्यन्नितस्ततः ॥ आलोकयति सर्वा अं-प्याशा आशावशो भृशम् ॥ ६९ ॥ वेला बह्वप्यतिक्रान्ता । तस्यैवं कुर्वतः सतः ॥ नाऽऽयासीत् पथिकस्तत्र । पथि कश्चिज्जनस्तदा ॥ ७० ॥ परं चिरं प्रयासोत्था । तृषा तस्याऽपिबत्सुखं [भवत्भृशं]॥तयार्दितः स सार्थेशः ।श्रान्तोऽपि वनमभ्रमत् ॥७१॥ ॥७१॥ पथः शुद्धिं प्रथयितुं । परं नोपरतस्ततः ॥ न चाऽलभत तच्छुद्धिं । न मर्मज्ञं विना हि सा ॥ ७२ ॥ ततः खिन्नः क्वचित्सान्द्र-

च्छायोच्छाये तरोस्तले ॥ तिष्ठत्यागत्य यावत्स । तावदम्भोभृतं दृतिम् ॥ ७३ ॥ तच्छाखालम्बिनं पश्य–न्नूर्ध्वाऽऽलोकी गल-
ज्जलं ॥ कस्याऽयं केन वा पूर्णः । पाथसाऽस्य पतिः पुनः ॥ ७४ ॥ क्व गतः स च चेद् दृग्भ्यां । दृश्यते प्रार्थ्यते तदा ॥ निपी-
यते च पानीयं । तृड्दुःखं चाऽपनीयते ॥ ७५ ॥ इत्यन्तःकरणस्याऽन्त–र्ध्यात्वा सत्वाधिकः स तु ॥ यावत्तत्रोपविष्टस्तद्–द्रुमशा-
खाग्रगः शुकः ॥ ७६ ॥

नृभाषयैव सुव्यक्तं । [1] तावत्तत्र च तं प्रति ॥ उवाच तृषितोऽत्यन्तं । दृश्यते तादृगिङ्गितैः ॥ ७७ ॥ ऊर्ध्वं दृतौ च
दृष्ट्वाऽम्भः । पिपासुरपि नाऽपिबः ॥ किन्त्वेवमेवासीनश्च । [2]यत्तस्याऽऽचक्ष्व कारणम् ॥ ७८ ॥ अन्यच्चाऽत्र द्रुमे मेऽस्ति । कुलाय
स्वकुलायकृत् [वासो नित्यं स्वीयैः सह] ॥ वसामि तत्र स्वैरं चाततस्त्वमातिथिर्मम ॥७९॥ पुण्यैरेवाऽऽप्यते सद्भि–र्यादृशस्तादृशोऽतिथिः॥
भवादृशस्तु सर्वाग्र्य–गुणः किमिति कथ्यते ॥८०॥ महानुभाग भोः पुण्य–ज्योत्स्नाज्योत्स्नापते ततः ॥ यत्तरसत्कमपि ह्येत–दम्बुस्त्वं
पिब सत्वरम् ॥ ८१ ॥ एकाश्रयत्वसम्बन्धा–दनुज्ञाप्युचिताऽस्य मे ॥ अतो मयि कृपां कृत्वा । तृषां हृत्वा सुखी भव ॥ ८२ ॥
तृषायामधृतिर्गाढा । तस्यां सत्यां न धर्मधीः ॥ ततश्च धृतिमान् भूत्वा । पुनः पुण्यं समाचरेः ॥ ८३ ॥ तदुक्तं—सव्वत्थ
संजमं । संजमाओ अप्पाणमेव रक्खिज्जा ॥ मुच्चइ अइवायाओ । पुणो विसोही नयाऽविरई ॥ ८४ ॥

हे कीरकुलकोटीर । [3]यदुक्तं किल कोविदैः ॥ शृणु तत् त्वं न जानासि । तत्त्वं धर्मगतं यतः ॥८५॥ यत्त्वया मे हितं प्रोचे ।
न तत्तत्वविदां हितं ॥ यतस्त्वं न दत्तेनापि । तज्जलस्याऽधिपत्यभाक् ॥ ८६ ॥ यश्च यस्याधिपस्तेन । यद्दत्तं श्रद्धया सतां ॥

---

१ तावत्तद् भावयेदिवत् प्रत्यन्तरे । २ तत्रा° प्रत्यन्तरे ३ प्र० कुटीराकूटसंविदै

स्वामिदत्ततया तत्रा-ऽदत्तदोषो न विद्यते ॥ ८७ ॥ अदत्तं नाददेऽत्रेति-प्रतिज्ञातवतां सतां ॥ लोकद्वयेऽपि सर्वाः स्युः । संपदस्तत्पदाश्रयाः ॥ ८८ ॥ अदत्तग्राहिणां नृणां । न गुणः कोऽपि गण्यते ॥ न सुखं न यशो न श्री-र्न धर्मः किन्तु दुर्गतिः ॥ ८९ ॥ अदत्तादानदोषस्त्वा-रूढः सकृदपि ध्रुवं ॥ आजन्मार्जितसत्कीर्तिं । तत्क्षणादेव लुम्पति ॥ ९० ॥ ततश्च तत्ते सम्बन्धि । न जलं नाददे च तत् ॥ त्वद्वचसाप्यथो नैव । प्राणान्तेऽपि पिबाम्यहम् ॥ ९१ ॥ मरणं सकृदेव स्या-ज्जलापाने तृषोदयात् ॥ सकृदप्यतिचारेऽस्य । तत्कर्ता तदनन्तभाग् ॥ ९२ ॥ त्रिधापीत्यस्य तद्दार्ढ्य-वतः सार्थपतेस्तथा ॥ कथां कथयतस्तथ्यां । साकं शुकशकुन्तिना ॥९३॥ क्षणाददृश्यीभूतेऽस्मिन् । विस्मितस्य पुरः पुमान् ॥ कुतोऽप्याविरभूत्कश्चि-दकस्मादप्यचिन्तितः ॥९४॥ युग्मं॥

आगत्य सत्यसन्धाय। नमस्तस्मै विधाय सः॥ तमभ्यधात्त्वमेवैकः॥सात्विकः स्वव्रते दृढः॥९५॥ इत्यादितत्कृतां श्लाघां। स्वां श्रुत्वा सार्थपोऽलपत् ॥ त्वमप्यसि गुणीहाऽन्य-गुणान् दृष्ट्वा च मोदसे ॥ ९६ ॥ परं भवते पृच्छामि । चरित्रं चित्रकृत्तव ॥ वद कस्त्वं किमर्थं च । तवाऽत्रागमनं कुतः ॥ ९७ ॥ सोऽप्याख्यत् शृणु भो भद्र-प्रकृतेऽनिकृते कृतिन् ! ॥ तथाहि भरतेऽत्रैव । वैताढ्यो धरणीधरः ॥ ९८ ॥ तत्राऽऽस्ते दक्षिणश्रेण्यां । यथार्था विपुला पुरी ॥ चन्द्रविद्याधरेन्द्रस्य । राजधानी सुविश्रुता ॥९९॥ तस्यां विशदनामाऽभूद्विद्याधरनरोत्तमः ॥ विमला मणिमालेव । मणिमाला च तत्प्रिया ॥ १०० ॥ तयोस्तनूजः सूर्योऽहं । समये ग्राहितः कलाः ॥ अध्यापितश्च सर्वाणि । शास्त्राण्यध्यापकाऽन्तिके ॥ १ ॥ मित्यतीताः प्रतीताश्च । प्रज्ञप्तिप्रमुखाः सुखात् ॥ पित्रादिदत्ताश्चित्तार्थ-दात्रीर्विद्या असाधयम् ॥ २ ॥ तद्बलाल्लीलया शैला-द्यास्पदेष्वीप्सितेष्वहं ॥ विचरन् स्वेच्छया नित्यं । विलसामि वसामि च ॥ ३ ॥ शक्तित्रयाढ्यः कस्याऽपि । किमपि स्थाम धाम वा ॥ प्रायो न मन्ये प्रौढोढ-रामाभिश्च समं रमे ॥ ४ ॥

अन्यदा विमलाचार्य-सन्निधौ धर्मदेशनां ॥ श्रुत्वा प्रबुद्धस्त्यक्तर्द्धि-र्दीक्षामादत्त मे पिता ॥५॥ स्वात्मनि द्विविधामाधाद् ग्रहणासेवनादिकां ॥ यथाम्नायमयं शिक्षां । सद्गुरूनाराध च ॥६॥ तपःसंयमसंपन्ना-नेकलब्धिर्गुणोदधिः ॥ गुरुप्रसादसम्प्राप्त-सर्वसातिशयश्रुतः ॥ ७ ॥ विनयर्द्धिसमृद्धः स्वो-त्कृष्टानुष्ठाननिष्ठधीः ॥ धीरः परीषहाऽक्षोभ्यः । प्रमादमदमुक्तहृत् ॥ ८ ॥ क्रमेण स्वगुरूपान्ते । प्राप्ताचार्यपदः क्रमात् ॥ चारुचारित्रवैशद्या-ऽवाप्तज्ञानचतुष्टयः ॥ ९ ॥ भव्यप्राणिप्रबोधार्थं । पृथिव्यां विहरंश्चिरं स्वल्पाहारैः सुधासारै-रिव तां सरसां सृजेत् ॥ १० ॥ चतुर्भिः कलापकं ॥

अथाऽहं गृहवासान्त-र्वसन् पितृधूरां धरन् ॥ कुकर्मतः कुसंगाच्च । कुतश्चिचौरतां दधौ ॥ ११ ॥ विद्याबलैरनेकैश्च । स्वयं धनमनर्गलं ॥ भूपादीनां भूचराणां । निरन्तरमपाहरम् ॥ १२ ॥ चौर्यबुद्ध्या च मे क्रौर्य-महार्ये मानसेऽवसत् ॥ दोषाश्चाऽन्येऽपि तत्स्नेहा-दिव तत्र स्थितिं व्यधुः ॥१३॥ सत्यसन्मतिसन्तोष-क्षमादमदयादयः ॥ गुणाः सर्वेऽप्यतो भीताः । प्रोषिता मुषिता इव ॥१४॥

अस्मिन्नवसरे सार-मद्भाग्याऽऽकारिता इव ॥ महर्षयो मज्जनकाः । पूज्या विशदसूरयः ॥ १५ ॥ प्राप्नुवन् विपुलापुर्या-मार्याणां निकरैः सह ॥ निशम्यागममुद्यान-पालादेः समहोत्सवम् ॥ १६ ॥ खेटेन्द्राद्यैर्मयाऽन्यैश्च । सर्वैः सह परिच्छदैः ॥ गत्वाऽमी वन्दिता भक्त्या । [1]प्रमुदा संस्तुतास्तथा ॥ १७ ॥ युग्मम् ॥ तद्धर्मदेशनाबुद्धा । बहवोऽपि प्रपेदिरे ॥ सम्यक्त्वदेश-चारित्रा-द्युचितं स्वरुचेरिमे ॥१८॥ गतेषु तेषु स्वस्थान-[2]मथो मह्यं महाहितं ॥ धर्मोपदेशमादिश्य । [3]न्यक्षशिक्षापुरस्सरं ॥१९॥ सरङ्गं ग्राहितः स्तैन्य-नियमं नयमञ्जुलं ॥ तैर्द्वेधा पितृभिः पूज्यैः । सोऽहं मोहं च मोचितः ॥ २० ॥ युग्मम् ॥ अदत्तपरिहारस्य

---

१ प्र० संस्तुताः सेवितास्तथा । २ प्र० महानन्दं ३ विस्तृत

पालने ते निदर्शनं ॥ ते मह्यं दर्शयामासु-र्मद्व्रतस्थैर्यसिद्धये ॥ २१ ॥ लोकद्वयहितां न्यक्षां । गुरोः शिक्षां समीक्ष्य च ॥ स्वचि-त्तेऽहं वहन् भक्तिं । प्रपेदे तन्निदेशतः ॥ २२ ॥ किंचेदं चेतसि स्वीये । चिन्तयांचकृवानहं ॥ सकृत्परीक्षे तं तात-निदर्शित-निदर्शनम् ॥ २३ ॥ किमाकारः किमाचारः । कीदृग्दार्ढ्यश्च स व्रते ॥ महर्षयोऽप्यमी श्लाघां । कुर्युर्यस्य निदर्शनात् ॥ २४ ॥ विमृश्येति वने यान्तं । भवन्तं समुपस्थितः ॥ अदीदृशं पथि भ्रष्टान् । मणिकुण्डलसेवधीन् ॥ २५ ॥ तान् दृष्ट्वाऽपि तदादाने । न मनाक् ते मनोऽभवत् ॥ त्वद्दुःखाय च जात्याऽश्व-मपि तेऽदर्शयं मृतम् ॥२६॥ सम्पूत्येतं च जीवन्तं । दर्शयामि स्वविद्यया ॥ तन्मुदाऽश्वं तमारुह्य । बन्धो! व्रज निजं पुरम् ॥२७॥ तथा तव तृपार्त्तस्य । जलापूर्णदृतौ दृशं ॥ दापयित्वा शुकीभूय । मुदाऽहं त्वां न्यमन्त्रयम् ॥ २८ ॥ तथाऽपि न त्वयाऽपायि । परादत्ततया पयः ॥ मर्पितैपा तृपा किन्तु । दुर्द्धर्पोऽपीति कौतुकम् ॥२९॥

कथं वा न भवान् भद्र! । भविनां भुवि भद्रभूः ॥ सत्यप्रतिज्ञ एवं यः । स्वव्रतं निरवाहयत् ॥ ३० ॥ जात्य[1]जांबूनद-स्येव । परीक्षैवं मया कृता ॥ स्वस्मिन्नेवाऽनघा श्लाघ्या-ऽनर्घ्यता च त्वया दधे ॥ ३१ ॥ गुरोर्गिरां प्रतिष्ठाऽऽप्सीत् । सन्धया सिद्धयाऽनया ॥ अथेदानीं ददे तुभ्यं । मिथ्यादुष्कृतमात्मना ॥ ३२ ॥ तृतीयाऽणुव्रतस्येति । दार्ढ्यमाढ्यतमं तव ॥ दृष्ट्वा तुष्टोऽस्मि तत्किञ्चि-दादायाऽनुगृहाण माम्॥३३॥इत्युक्त्वाऽहं नभोगामि-विद्यां पठितासिद्धिदां ॥ सद्यः[प्रादां]प्रादान्मुदा भक्तिं । कर्तुं तुभ्यं सधर्मणे ॥ ३४ ॥ अन्यदप्युचितं विद्या-मंत्रौपध्याद्यनेकधा ॥ भक्त्या दत्वा धनं भूरि । दातुं तु त्वामयाचिषं ॥ ३५ ॥ विद्यामादाय तत्सर्वां । मां सन्तोष्य त्वमप्यथ ॥ अपृच्छः स्वच्छधीर्मां भोः । कस्येदं निखिलं धनम् ॥ ३६ ॥ श्रुत्वेति त्वां प्रति

१ सुवर्णस्य

श्रोत्रे । ममैवेदं हि सम्प्रति ॥ परं पुरा ममाऽन्येषा-मप्यत्र गृहितं कियत् ॥ ३७ ॥

इत्याकर्ण्य प्राह सार्थ-वाहः साहसिकाग्रणीः ॥ हे[1] खेचराचरन्नेव-मश्रुषे वचनीयताम् ॥ ३८ ॥ एकतः कौतुकं धर्म-तत्त्वं त्वं [2]विन्दसेऽन्यतः ॥ रुषेव कुरुषे तस्मा-द्विपर्ययमपर्ययम् ॥ ३९ ॥ चौर्यागतश्रिया सार्द्धं । संगतं शुद्धमप्यदः ॥ अशुद्धं ते धनं जज्ञे । मद्येनेवाऽखिलं पयः ॥४०॥ प्रतिपन्नोऽसि चेद्धर्म-मन्तिके स्वपितुर्गुरोः ॥ तं च प्रतिष्ठां नेतुं चेद् । वाञ्छा स्वच्छात्मनोऽस्ति ते ४१ ॥ यदि चौर्यान्निवृत्तोऽसि । सद्व्रतो भविताऽसि चेत् ॥ तदा लोप्त्रमिदं सर्वं । स्थाने स्थापय सत्वरम् ॥४२॥यद्यदीयं धनं किञ्चिद् । ज्ञायते सर्यतेऽथवा ॥ अभुक्तं वाऽथ भुक्तं वा । तत्तत्र प्रापयाऽखिलम् ॥ ४३ ॥ इत्थंकारं त्रिधा शुद्ध्या । कृते तस्मिंस्तवाऽधुना ॥ विपुलः पुण्यसंभारः । ख्यातिः प्रीतिश्च सर्वतः ॥ ४४ ॥

गिराऽथ सार्थया सार्थ-वाहस्यैवं प्रशस्यया ॥ प्राप्तप्रीतिरहं सर्वं । तथैवाऽकरवं क्षणात् ॥४५॥ ततः सुकृतिनां सर्व-कृतिनां चाग्रणीर्भवान् ॥ स्वचित्तकल्पितस्यार्थ-स्याऽथजीवितदातरि॥४६॥ विमृश्याऽऽवश्यदेयत्व-मन्यथा तु व्रतव्यथां ॥ मयि तावतिथं वित्तं । दातुं मम पुरोऽकरोत् ॥ ४७ ॥ बह्वाग्रहेऽपि नात्तं त-न्मया कियदपीत्यदः ॥ त्वया मत्साक्षिकं धर्म-स्थानेषु व्ययितं मुदा ॥ ४८ ॥ त्रिभिर्विशेषकं ॥ संकथाः प्रथयित्वैव-मावां मुदितमानसौ ॥ स्वस्थाने प्रापतां पाप-तापहृद्धर्मचिन्तकौ ॥ ४९ ॥ स्वस्थानसंस्थोऽपि तथा तथा भवा-नवाप्य धर्मावसरान् परःशतान् ॥ अर्हद्विहारप्रतिमादिमानि सत्-पात्राणि सप्ताऽपि सदाप्यपूपुषत् ॥५०॥ दीनादिदानान्यपि सर्वदाप्यदाः । सम्यग्व्रताऽभिग्रहपालनं व्यधाः ॥ पुरः पुनर्भद्र यथा यथा वृथा । भवन्त्यनर्थो

[1] प्र० खेचर वदन्नेव । [2] प्र० वदसे

धनसार्थमोपिणः ॥ ५१ ॥ नन्दीश्वरद्वीपसुराद्रिशत्रुं-जयोज्जयंतादिसमग्रतीर्थान् ॥ कृताऽकृतान् व्योमगविद्यया‍ऽथ । पूजोत्सवैः सुप्रथितानकार्षीः ॥ ५२ ॥ मन्त्रौषधिप्रभृतिसर्वमथो नभोग-विद्यादिवित्तमखिलं च कृतार्थयित्वा ॥ तत्तत्परोपकृतिभिः कृतिनां सदापि । स्वं जीवितं सुचरितैर्भरितं व्यधास्त्वम् ॥ ५३ ॥

भावात्समाराध्य चिरं स दान-शीले तपो भावनयाऽन्वितं च ॥ निधाय धर्मे धनमुज्ज्वलं स्व-मायुः प्रपूर्य त्वमभूरिहैपः ॥ ५४ ॥ खेटः पुनः सद्गुरुदेशितं तं । धर्मं विशुद्धं विधिवद्विधाय ॥ स्वायुःक्षयेऽभूवमहं महर्द्धिः । पल्यायुवान् व्यन्तरनिर्जरेन्द्रः ॥ ५५ ॥ त्वया पुरा जन्मनि सार्थवाह-भवे स्वरुच्या सुकृतं कृतं यत् ॥ तस्माद्भवेऽस्मिन्नवतारयस्तात् । प्रभृत्यभूत्ते सकलार्थसम्पत् ॥ ५६ ॥ अहं पुनः प्राग्भवरूढधर्म-स्नेहादिहाऽऽगत्य गृहे त्वदीये ॥ अक्षीणलक्ष्मीः परमादरेणाऽऽ-विर्भावयामास सुखाय शश्वत् ॥ ५७ ॥ इत्युक्त्वा व्यन्तराधीश-स्तत्सन्देहं निरस्तवान् ॥ दिव्यनेपथ्यहारादि-दानैश्च तमतोषयत् ॥ ५८ ॥ ततो गतस्तमापृच्छय । स्वस्थानं व्यन्तरामरः ॥ लक्ष्मीपुञ्जमहेभ्योऽपि । मुदितः प्राग्भवश्रुतेः ॥५९॥ विमृशंश्च क्षणं तत्र । लेभे जातिस्मृतिं ततः ॥ सर्वं सुरोक्तं निश्चित्या-ऽर्हद्धर्मेऽतिदृढोऽभवत् ॥ ६० ॥ युग्मं ॥ अमुञ्चन् सततं धर्म-मकुर्वन् गर्हिता क्रियाः ॥ अनर्गलं ददद्दानं । शिष्टानां सङ्गतिं सृजन् ॥ ६१ ॥ स तु सातोदयाद्भोग-फलकर्माऽनुभावतः ॥ समग्रां भोगसामग्रीं । चिरं प्राप्याऽकृतार्थयत् ॥ ६२ ॥ युग्मम् ॥

अन्यदा तु गिरः प्राप्य । [1]गुरोर्भानोरिव प्रभाः ॥ प्रभात इव तच्चित्तेऽ-भूद्विवेकः प्रकाशवत् ॥ ६३ ॥ ततः सरङ्गसंवेग-

[1] भानोर्भासमिव गुरोर्गिरां त्वन्येद्युरागमे इति प्रत्यन्तरे

जलक्षालितकश्मलः ॥ लघुकर्मा महेभ्यः स । महेभ्यः सप्रथां मुदा ॥६४॥ तपस्सामाददे तस्याऽ—भ्यर्णे चेभ्यजनैः समं ॥ अध्यै-ष्टैकादशाङ्ग्यादि । तपश्च बहुधा व्यधात् ॥ ६५ ॥ त्रिभिर्विशेषकं ॥ प्रपाल्य शुद्धचारित्रं । मृत्वाऽन्तेऽनशनादिना ॥ द्वादशे त्रिदिवे देव-श्रियं सम्प्रापदुत्तमाम् ॥ ६६ ॥ अब्धीन् द्वाविंशतिमायु-र्भुक्त्वा देवभवे ततः ॥ नृपीभूय यथाख्यात—चारित्राऽवाप्तकेवलः ॥ ६७ ॥ पृथ्व्यां विहृत्य सम्बोध्य । भव्यान् सेत्स्यत्ययं ततः ॥ भविताऽष्टगुणः सिद्धः । सिद्धानन्तचतुष्टयः ॥ ६८ ॥ भो भो भव्याः पूर्ववृत्तान्तकान्तं । लक्ष्मीपुञ्जस्येति वृत्तं विदित्वा ॥ तत्त्वाभ्यासान्निर्मिमीध्वं प्रयत्नं । तार्तीयीकाऽणुव्रताराधनाय ॥ ६९ ॥ ग्रहणत्यागयोरेव—मदत्तस्य निदर्शनात् ॥ प्रबुद्धा निषिषेधैषाऽ—प्यदत्तादानमाभवम् ॥ ७० ॥ प्रपेदेऽन्यदपि श्राद्ध—योग्यं धर्ममियं मुदा ॥ तदा गिरा कुमारस्य । सत्सङ्गो हि सुरद्रुमः ॥ ७१ ॥ एषा वधूवरौ तौ च । धर्मसाधर्म्यतस्ततः अवर्तन्त मिथः प्रीत्या । सुखसर्वस्वसङ्गताः ॥ ७२ ॥

धर्मसौख्यमये काले । व्यतिक्रान्ते कियत्यथ ॥ कुमारोऽन्येद्युरद्राक्षी—न्निशि स्वप्ने क्वचित्पुरे ॥ ७३ ॥ गिरेः कस्यचिदासन्ने । कुरूपं भिक्षुरूपिणं ॥ आत्मानं दधतं मूर्ध्नि । काष्ठभारं चतुष्पथे ॥ ७४ ॥ युग्मम् ॥ स प्रबुद्धस्ततो दध्यौ । मनोवाग्गोचरातिगः ॥ अहो असंभवी स्वप्नो । न जाने किंफलो ह्ययम् ॥ ७५ ॥ दक्षिणाऽक्षि क्षणं तस्य । तत्साक्षीव तदाऽस्फुरत् ॥ तन्निमित्तं स निश्चिक्ये । स्वोपायाऽव्यभिचारिताम् ॥७६॥ कारयित्वा ततः प्रौढं । पटं तत्र च नैपुणात् ॥ [दक्षैरा]कारुणालीलिखत्सर्वं । यथादृष्टं पुरादिकम् ॥ ७७ ॥ नगक्रीडासरोवापी—चतुष्काट्टगृहादिभिः ॥ लिखितैर्वर्णकैर्वर्ण्यैः स पटोऽभून्मनोहरः ॥ ७८ ॥

अथास्ति तत्पुरोद्याने । चैत्यं श्रीऋषभप्रभोः ॥ स तद्द्वारमिलद्द्वारं । सत्रागारमचीकरत् ॥ ७९ ॥ तत्पुरः पीठमेकं स ।

सूत्रधारैरसूत्रयत् ॥ सममप्यसमं प्रोच्चं । वृत्तं सज्जनचित्तवत् ॥ ८० ॥ नानास्थानाऽऽगतान् सार्व-दिकान् दीनादिकानपि ॥ नित्यं भोजयितुं सत्रे-ऽथाऽदिशत्स स्वाकिङ्करान् ॥ ८१ ॥ तं चित्रितपटं पीठे । विस्तारयितुमन्वहं ॥ तान् दर्शयितुमादिक्ष-दयं दक्षान् स्वसेवकान् ॥ ८२ ॥ एवंकृते च यः कोऽपि । स्थिरदृष्टिर्निरीक्ष्य तं ॥ तत्पुराद्यभिधां ब्रूते । मेलनीयः स मे जनः ॥ ८३ ॥ उपद्रवेभ्यः सर्वेभ्यः । प्रयत्नेन निशास्वपि ॥ रक्षानियुक्तैर्युष्माभिः । पालनीयः पटः स तु ॥ ८४ ॥ इत्यादि शिक्षिता दक्षा-स्ते कुमारस्य सेवकाः ॥ यथादेशमिदं सर्व-मन्वतिष्ठन् मुदा सदा ॥ ८५ ॥ ततश्च चैत्ये सत्रे च । गतागतकृतो जनाः ॥ तं विलोक्योल्लसच्चित्रा-श्चित्ररूपाण्यवर्णयन् ॥ ८६ ॥

अन्यदा पथिकाः केचि-द्धूलिधूसरवाससः ॥ दूरागतास्तमीक्षित्वा-ऽवोचन् विस्मेरविस्मया ॥ ८७ ॥ अहो निवासस्थानं नः । केनाऽप्येतद्यथास्थितं ॥ श्रीपद्मपुरमालेखि । ज्ञानविज्ञानधीमता ॥ ८८ ॥ पटस्य पालकाः प्रोचुः । के यूयं कुत आगताः ॥ साहुस्ते पद्मपुरतः । केनाऽप्याऽऽलिलिखेऽत्र यत् ॥८९॥ नृभिर्नियुक्तैः द्राक् चोप-कुमारं तेऽथ निन्यिरे ॥ तद्विस्मयादिवृत्तान्तः । समुत्तस्मै न्यवेदि च ॥ ९० ॥

पान्थान् सन्तोष्य पप्रच्छ । कुमारोऽथ प्रमोदभाक् ॥ व्यक्त्या पद्मपुरादीनां । स्वरूपं तेऽप्यथो जगुः ॥ ९१ ॥ योजनानां शतेऽस्त्यस्मात् । पुरात्पद्मपुरं पुरं ॥ आलेखिताऽनुसारिश्रि । पद्मकूटाऽद्रिसन्निधौ ॥९२॥ तस्मिंस्त्रिदिवजैत्रर्द्धौ । राजा पद्मरथाह्वयः ॥ जयतीन्द्रं प्रतापश्री-रूपैश्वर्यादिभिर्गुणैः ॥ ९३ ॥ सर्वोज्ज्वलगुणस्याऽपि । परं तस्य विधोरिव ॥ अस्ति नास्तिकधर्मित्व-कलङ्कः कर्मणां वशात् ॥९४॥ इत्याद्याकर्ण्य दत्वाऽर्हे । दानं तान् विससर्ज सः ॥ अन्येद्युश्च प्रियां साह । तस्मिन् जिगमिषुः पुरे ॥ ९५ ॥

प्रियेऽमुकं नमस्कृत्य । तीर्थं यावदुपैम्यहं ॥ तावत्तिष्ठेः श्वश्रूपार्श्वे । कलाभ्यासं वितन्वती ॥ ९६ ॥ दानादीनि च कुर्वीथाः । पुराष्टकंभवैर्धनैः ॥ विषण्णापि हि सा मेने । पत्युराज्ञां पतिव्रता ॥ ९७ ॥ रहः पल्यङ्कमारुह्य । कुमारोऽथाऽन्यदा निशि ॥ अगमन्नभसा तस्मिन् । पद्मकूटगिरौ द्रुतम् ॥९८॥ पल्यङ्कं क्वाऽपि सङ्गोप्य । भिल्लरूपं स कुत्सितं ॥ कृत्वा मेलितकाष्ठानां । मूर्ध्नि न्यस्य च भारकम् ॥ ९९ प्रातः पद्मपुरस्यान्तः । प्राविशद्दुर्दशाग्रणीः ॥ गत्वा चतुष्पथे चाऽस्था–द्विक्रेतुं दारुभारकम् ॥ १०० ॥

अथ तत्राऽऽगताः केचिद् । ददृशू राजपुरुषाः ॥ तं कुरूपेषु सीमानं । स्थूलपिङ्गलकुन्तलम् ॥ १ ॥ कटाहकतलाभाऽऽस्यं । पृथुस्फुटमस्तकं ॥ पिङ्गाक्षं [ततं विलग्न][1]कननं चिल्ल–भवनाटं पिचण्डिलम्॥२॥दन्तुरं श्यामलम्बोष्ठं पृथुस्थूलपदद्वयं ॥ धारितोष्ट्रगतिं श्यामं । बीभत्सं कटुदुःस्वरम् ॥ ३ ॥ दृश्यस्थूलस्नसाजालं । स्फुटकङ्कालभैरवं ॥ कुलक्षणसमग्राङ्गं । मूर्त्तं पापमिवोत्थितम् ॥४॥ पिशाचमिव दुष्प्रेक्ष्यं । दौर्भाग्यमिव पिण्डितं ॥ लतावेष्टितमूर्द्धानं । शीर्णकौपीनवाससम् ॥ ५ ॥ तमवेक्ष्य सथूत्कार–मपि ते जगदुर्नराः ॥ त्वामाऽऽह्वयति भो भूप–स्तदेहि नृपसंसदम् ॥ ६ ॥ स जगौ क्व नृपः क्वाऽहं । क्व मे भूपसभाऽऽगतिः ॥ अर्थश्चेद्दारुभिस्तानि । गृहीत्वा मां विमुञ्चत ॥ ७ ॥ ते जगुर्भद्र मा भैषी–स्त्वयैवाऽर्थस्तदेहि भोः ॥ प्रसादं ते नृपः कर्त्ता । ततस्तैः स सहाऽगमत् ॥ ८ ॥ नीत्वा सदसि सद्यस्तै–र्दर्शितः स महीभुजः ॥ तस्थौ सोऽप्युपदीकृत्य । भूपाऽग्रे दारुभारकम् ॥ ९ ॥

जगादाऽवनिभृत्कस्त्वं । किं नामा वससि क्व च ॥ सोऽवदत्पिठराभिख्यो । भिल्लोऽहं दुर्विधाऽग्रणीः ॥१०॥ वसामि पद्मकूटाद्रे–र्दर्यां गेहाद्यभावतः ॥ जीवामि च पुरस्याऽन्तः । प्रत्यहं काष्टविक्रयात् ॥ ११ ॥ राज्ञाऽभाण्यथ किं भद्र ! । पुरे मेऽप्यसि

[1] चिप्पुटनासमित्यर्थः

दुःखितः ॥ नाऽहं सहे हि कस्याऽपि । दौःस्थ्यं स्वपुरवासिनः ॥ १३ ॥ सोऽवादीत्स्वर्णनिभेऽप्यस्मिन् । पुरे दुःख्यसि कर्मभिः ॥
तटाके जलपूर्णेऽपि । चातकस्तृषितो न किम् ॥ १४ ॥ नृपतिः साह याचस्व । यत्किञ्चित्ते हि रुच्यते ॥ स साहोदरपूरं स्व-
मर्जामि दारुविक्रयात् ॥१५॥ न हि भाग्याधिकं नृणां । तिष्ठत्यर्जितमप्यदः ॥ चातकैः पीतमप्यम्बु । गलरन्ध्रेण नैति किम्॥१६॥
त्वयि तुष्टेऽपि तद्भूप ! । याचे किञ्चिद्धनादि न ॥ परं ममाऽस्ति नो धान्य-रन्धनी तत्प्रदेहि ताम् ॥ १७ ॥ ददामीत्युक्त्वा
भूभर्त्ता । पुत्रीं विजयसुन्दरीं॥ आहूयोवाच हे पुत्रि ! । जिनधर्मात्सुखं यदि ॥१८॥ ततस्ते [प्रभुरेषोऽ]प्रचुरः सौऽस्ति । तत्सुखं भुङ्क्ष्व
तत्सुखं ॥ इमं वृणु वरं भिल्ल-मीदृग् प्राप्यः पुरेऽत्र नः ॥ १९ ॥ अस्मादपि सुखं भावि । धर्मे तद्दायिनि स्थिते ॥ साधनान्तर-
योगेऽस्या-नुभवे ह्येति संशयम् ॥ २० ॥ अविषण्णा सुता प्राह । यदादिशति मे पिता ॥ करिष्येऽहं तदेवैष । धर्मो हि कुलयो-
षिताम् ॥ २१ ॥ कुरूपमपि तं वीक्ष्य । प्राग्भवस्नेहजागरात् ॥ अस्निह्यत्सा भृशं तस्मिन् । सोऽपि तस्यां तथैव च ॥२२॥ ततः
सा सहसा गत्वा । भिल्लस्याऽस्याऽतिकर्कशं ॥ जग्राह पाणिना पाणिं । वृतोऽयमिति वादिनी ॥ २३ ॥ तदा मौहूर्तिकः कश्चि-
द्रहोऽवादीत् समीपगान् ॥ साम्प्रतं स मुहूर्त्तोऽस्ति । येन कन्याविवाहितः ॥ २४ ॥ वरश्चक्री भवेद्राज्ञी । वधूः स्त्रीषु गुणोत्तमा ॥
विवाहस्त्वेषश्चित्राढ्यो । न जानेऽस्य फलं ततः ॥ २५ ॥ युग्मम् ॥ ततः प्रवर्द्धमानेर्ष्या-कोपः स्वाऽपत्यसाहसात् ॥ सविस्मया-
कुले सर्व-राजन्यौघे नृपोऽवदत् ॥२६॥ वरवेषानुसारेण । यद्वधूर्वेषमर्हति ॥ तदस्यै शाटिकां काचि-दुःस्थार्हां दत्त भो भटाः॥२७॥
अवैधव्यावबोधाय । वलये च कथीरजे ॥ आनिन्युस्तत्त्रयं तेऽपि । कुतश्चिन्नीचगेहतः ॥२८॥ राजाऽऽज्ञया ततः सा तां । शाटिकां
वलये च ते ॥ परिधायाऽमुचत्पूर्व-वेषालङ्कारडम्बरम् ॥ २९ ॥ जगाद स ततो राज-न्नाहमर्हामि ते सुतां ॥ किं खरस्य गले

केश्चि-द्दृष्यते मणिघण्टिका ॥ ३० ॥ काणां कुब्जां तथा श्यामां । दासीं काञ्चिन्ममाऽर्पय ॥ प्रिया काकस्य काक्यर्हा । शस्यते न तु हंसिका ॥ ३१ ॥ रूपसाराण्युपादायाऽ-प्सरसां या विधिर्व्यधात् ॥ तत्ताः क्षिप्ता लघूभूता-स्तृणवद्वायुना तु खे ॥ ३२ ॥ पूर्णचन्द्रमुखी पद्म-नेत्राऽखिलसुलक्षणा ॥ सर्वाङ्गसुभगाऽऽकारा । लावण्यरसकूपिका ॥३३॥ राजहंसगतिः प्राज्ञा । पिकवन्मधुर-ध्वनिः ॥ चतुःषष्ठिकलादक्षा । धर्मज्ञा धर्मचारिणी ॥ ३४ ॥ जयन्ती निजरूपेण । रतिप्रीतिरमा अपि ॥ क्वाऽसौ तव नरेन्द्रस्य। तनया विनयादिभूः ॥ ३५ ॥ दुर्भगः क्व च भिल्लोऽहं । दारुभारपरिग्रहः ॥ सीमा सर्वकुरूपेषु । निर्लक्षणशिरोमणिः ॥ ३६ ॥

मन्त्रिणोऽप्यवदन् खिन्ना । हाहारवपरे जने ॥ राजन्नर्हसि नाऽपत्ये । दुर्विनीतेऽप्यतिक्रुधम् ॥ ३७ ॥ परिणामहितं चैत-न्नैव भावि कुकर्म ते ॥ लोकधर्मविरुद्धं हि । विपदे स्यात्प्रभोरपि ॥ ३८ ॥ राजा प्रोचे न मे दोषः । स्वल्पोऽप्यस्तीह मन्त्रिणः ॥ भिल्लोऽयं जैनधर्मिण्या । स्वयमेवाऽनया वृतः ॥ ३९ ॥ भूपानां रीतिरेषैव । यत्कन्याः स्युः स्वयंवराः ॥ भाग्यजे कर्मणि त्वत्र । साक्षिमात्रं भवाम्यहम् ॥ ४० ॥ साह भिल्लं च भूभृद्वोः! । मदुक्तं नाऽन्यथा भवेत्। भुङ्क्ष्व सौख्यं यथाभाग्यं । भजन् सर्वकला-मिमाम् ॥ ४१ ॥ पुत्रीमप्यभ्यधाद् भूपो । भद्रे! पण्डितमानिनि ॥ पित्रवज्ञाकुलाचार-विनयाऽतिक्रमादिजम् ॥ ४२ ॥ फलं भुङ्क्ष्व भजन्तीमम् । पतिं भिल्लं स्वयं वृतं ॥ इति दृष्टफलं कुर्या । धर्मं च स्वैरमार्हतम् ॥ ४३ ॥ युग्मम् ॥ जगौ सा सर्वथा तात! । न त्वं कार्येऽत्र दुष्यसि ॥ विधाता सुखदुःखानां । कर्मभ्योऽस्ति परो न हि ॥ ४४ ॥ कुलमुद्योतयिष्ये तत् । पितुरादेशकारिणी ॥ पितृ-दत्तं सुरीयन्ति । पतिं सत्यो हि कुत्सितम् ॥ ४५ ॥ तद्गिराऽथ घृताऽऽहुत्या । क्रुधा सोऽग्निरिव ज्वलन् ॥ यामत्रयेण नेत्रोप-घात-कृद्गरभावितम् ॥४६॥ ताम्बूलं भोजनान्तेऽदात्तस्यै शुद्धवराय च ॥ अभाषिष्ट च त्वं याहि । सवधूको निजं पदम् ॥ ४७ ॥ युग्मम्

राजाज्ञां स प्रपद्याऽथ । प्राचलत्स्वपदं प्रति ॥ तस्याऽनुगामिनी जज्ञे । छायेव नृपनन्दिनी ॥४८॥ भूभृदुच्चैर्जगौ भो भोः । स वध्यश्चौरवन्मम ॥ योऽनुगन्ताऽनयोः किञ्चित् । प्रदाता वा धनादिकम् ॥ ४९ ॥ ततः क्रुद्धनृपाद्भीत्या । सचिवादिषु मौनिषु ॥ आक्रोशत्सु रहः सर्व–पौरेषु च नृपाऽऽधमम् ॥ ५० ॥ ददत्सु विविधं दैवा–द्युपालम्भाश्च सर्वतः ॥ सोऽस्थादेवकुले गत्वा । सवधूकः पुराद्बहिः ॥ ५१ ॥ सती साऽथ निजोत्संगे । तस्य न्यस्य पदौ मुदा ॥ कराभ्यां जितपद्माभ्यां । पस्पर्श स्मेरितस्मरम् ॥ ५२ ॥ तथा दृष्ट्वा जनाः सर्वे । दूरस्था भूभृतो भयात् ॥ सतीत्वं तुष्टुवुस्तस्या । निनिन्दुश्च नृपाऽधमम् ॥ ५३ ॥

अथ पप्रच्छ भिल्लस्तां । भद्रे! देवाङ्गनोपमां ॥ मह्यं सर्वाऽपकृष्टाय । भूपः किं भवतीमदात् ॥ ५४ ॥ सा जजल्प शृणु स्वामिन्! । सम्बन्धोऽस्ति महानयं ॥ अस्मिन् पद्मपुरे राज्यं । भुञ्जन् पद्मरथोऽस्त्ययम् ॥ ५५ ॥ गुणैर्नयप्रतापाद्यैः । सुखाकुर्वन्नपि प्रजाः ॥ जहाति कौलधर्मं तु । न कथञ्चित्कुलागतम् ॥ ५६ ॥ उभे रमयतश्चित्तं । पत्न्यौ तस्य गुणोत्तरे ॥ पद्मा सौभाग्यसद्माभा । कमला चाऽमलाशया ॥५७॥ प्रत्युर्धर्मं सृजत्याद्या । कमला चाऽर्हतं रहः ॥ सुश्राद्धकुलजातत्वा–दुपदेशाच्च सद्गुरोः ॥५८॥ पद्मायाः पद्मदत्ताख्यो । विनयादिगुणोत्तरः ॥ पुत्रोऽभूत्तनया चाऽस्याः । सुरूपा जयसुन्दरी ॥ ५९ ॥ कमलायाः सुतैवाऽभूत् । क्रमाद्विजयसुन्दरी ॥ धात्रीभिः पाल्यमाने ते । पाठार्हं प्रापतुर्वयः ॥६०॥ निजात्मजाऽथ पाठार्थ–मुपाध्यायस्य पद्मया ॥ आर्पि मिथ्यादृगग्रण्यै । ईदृशां हीदृशे रतिः ॥ ६१ ॥ पुनर्जैनकलाचार्या–याऽध्यापयितुमार्पिपत् । स्वां सुतां कमला ते चाऽध्यैपातां शास्त्रमादरात् ॥ ६२ ॥ मातुः संसर्गतो मुख्यो–पदेशात्पाठकस्य च ॥ कौलधर्मरताद्याऽभू–त्तथैवाऽन्याऽर्हती परा ॥ ६३ ॥ पाठकाभ्यां ततो मात्रो–रर्पिते प्राप्तयौवने ॥ तावपिप्रिणतामम्ब्रे । यथेच्छं प्रीतिदानतः ॥ ६४ ॥

अथालङ्कृत्य ते पाठ-परीक्षायै सपाठके ॥ चिन्तायै च परस्याऽम्बे । प्रेषिष्टामुपभूपतिम् ॥ ६५ ॥ प्राप्ते च प्रेक्ष्य ते स्नेहा-दुत्सङ्गेऽप्यागमन्नृपः ॥ पाठस्वरूपमप्राक्षी-दर्हमालाप्य पाठकौ ॥ ६६ ॥ सर्वशास्त्रकलापाठे । ताभ्यां निगदिते नृपः ॥ परीक्षायै कनीयोग्यं । समस्यापदमार्पिपत् ॥ ६७ ॥ पिक्खइ सुक्खसयाइं । इत्याकर्ण्यादिमा द्रुतं ॥ समस्यां तामपूरिष्ट । पितुर्भक्ताऽस्य धर्मगा ॥ ६८ ॥ तथाहि—

तुह संकरु तुह बंभ निव । तुह पुरिसुत्तम ताय ॥ तुज्झ पसाइणे सव्वपया । पिक्खइ सुक्खसयाइं ॥६९॥

इत्याकर्ण्य नृपः सर्वं । सदस्याश्चाथ सर्वतः ॥ तुष्टुवुस्तां समस्यां च । पाठकं च प्रमोदिनः ॥७०॥ परं जहास कन्याऽन्या । तथा दृष्ट्वा च भूपतिः ॥ प्रपच्छ कारणं हास्ये । साऽवक् तात ! न किञ्चन ॥७१॥ निर्बन्धे च कृते पित्रा । साऽवदत्तात ! कौतुकं ॥ नीतिशास्त्राऽज्यभिज्ञोऽपि । प्रज्ञाविजितवाक्पतिः ॥ ७२ ॥ त्वादृशो विदुरोऽप्येष । मत्स्वस्रा चाटुमात्रतः ॥ समस्यापूरणादेवं । मोघते नेतिकिमुच्यते ? ॥७३॥ प्रशंसन्ति सदस्याऽऽद्या । अपि तत्त्वपराङ्मुखाः ॥ एवं जगत्यतत्त्वज्ञे । तद्गुणैर्वर्तिष्यते कथम् ? ॥७४॥ अगमञ्जसमालोक्य ततो नर्मागतं मम ॥ राजोचे तर्हि तत्त्वोक्त्या । समस्या पूर्यतां त्वया ॥ ७५ ॥ पित्रादेशं समासाद्य । हृष्टा तां साऽप्यपूरयत् ॥ आर्हताध्यापकाऽभ्यास-जिनधर्मैकतत्त्वधीः ॥ ७६ ॥ तथाहि—

जिणवर जसु हीयडे वसे । जिणमुणिजिणतत्ताइं ॥ तं पंडियजण उभयभवि । पिक्खइ सुक्खसयाइं ॥७७॥

श्रुत्वा च पाठकस्तस्याः सदस्याश्चाऽपि केचन । नृपभीत्या स्थिता जोषं । दधतोऽपि चमत्कृतिम् ॥ ७८ ॥ भूपोऽप्राक्षी-त्कयाऽपूरि । तात्त्विकी भोः सभासदः ॥ नृपचित्ताऽनुरोधेन । ते प्रोचुः प्राच्यया यतः ॥७९॥ अनुमतिं तदुक्तेऽर्थे । नृपो लघ्वीं

ततोऽवदत् ॥ सभालोकविरुद्धं किं । रे रे वदसि कद्वदे ! ॥ ८० ॥ न्यगदत्सा मया प्राग-प्यूचे तत्त्वपराङ्मुखाः ॥ ऐहिकार्थाय सर्वेऽपि । चाटुमात्रकृतो जनाः ॥ ८१ ॥ ततः स्वाऽवज्ञया धर्म-पक्षपातेन च क्रुधा ॥ सोऽवादीत्त्वं प्रसादेन । कस्यैवं सुखिताऽसि रे ! ॥ ८२ ॥ अब्रवीत्साऽप्यहं तात ! । जनताश्चाऽखिला अपि ॥ स्वस्वकर्माऽनुभावेन । सुखदुःखान्यवाप्नुमः ॥८३॥ त्वत्प्रसादा-त्सुखं चेत्स्या-त्तत्किं स्युः केऽपि दुःखिताः ॥ सर्वत्र ह्येकरूपोऽय-मिति तात ! निबुध्यताम् ॥ ८४ ॥ ततोऽधिकं नृपः क्रुद्धो-ऽवद-देवं यदि स्थितिः ॥ वरिष्यसि वरं तत्कं । त्वद्दत्तमिति साऽब्रवीत् ॥ ८५ ॥ नृपोऽवोचदिहाऽहं किं । प्रभवामि सुताऽधमे ! ॥ साऽवक् त्वमपि तं कर्म-वशादेव प्रदास्यसि ॥८६॥ अभाणीत् क्रोधतो भूभृ- त्तर्हि याहि निजं पदं ॥ आहूतार्हे वरे प्राप्ते । तद्वि-वाहार्थमापतेः ॥ ८७ ॥ प्रमाणं मे त्वदादेशः । सा विनीता जगाविति ॥ ततो राज्ञा विसृष्टे ते । स्वं पदं प्राप्य खेलतः ॥ ८८ ॥

अथाऽदिशद्भटान् भूपो । भो भो भ्रान्त्वा पुरादिषु ॥ दुःस्थः सर्वाऽपकृष्टो द्राक् । कश्चिदानीयतां नरः ॥ ८९ ॥ ततस्ते त्वां यथा निन्यु-र्यथा विजयसुन्दरी ॥ दत्ताऽहं तुभ्यमाकार्य । विदितं ते तयाऽखिलम् ॥ ९० ॥ इत्याकर्ण्याऽवदद्भिल्लो । विस्मया-दिरसाकुलः ॥ एवं पितुरपि क्रोधः । सदपत्येष्वहो कथम् ! ॥ ९१ ॥ अथवा किमकृत्यं स्यात् । क्रूराणां कौलधर्मिणां ॥ जैनं धर्मं विना क्वाऽस्ति । विवेको विश्वपावनः ॥ ९२ ॥ स दध्यौ च परीक्षेऽस्या । दृढतां स्नेहशीलयोः ॥ करिष्यामि ततः प्रीतिं । रीति-र्ह्येषा विवेकिनाम् ॥९३॥ अथ तस्यास्तदा तादृग्-विषताम्बूलभक्षणात् ॥ व्यथाः प्रादुरभूदक्ष्णो-स्तीव्रा भिल्लं जगौ च सा ॥९४॥ स्वामिन्नस्य नृपस्याऽस्ति । गरस्तादृग् निहन्ति यत् ॥ जग्धो नेत्रे त्रिभिर्यामै-र्देयो विश्वस्तवैरिणाम् ॥ ९५ ॥ ताम्बूलान्तः स तं मेऽदाद् । ज्ञातस्तद्भक्षणे च सः ॥ भूभुजः कोपचेष्टाभि-स्तथा च वदनाकृतेः ॥ ९६ ॥ पितुः प्रसादं मन्वाना । तथापि तद-

भक्षयं ॥ दत्ते शुभाशुभे बुद्धी । कर्मैव हि शुभाशुभम् ॥ ९७ ॥

अथ तस्य प्रभावान्मे । व्यथेते लोचने तथा ॥ यास्यतस्ते तथा मन्ये । धिग्मे दैवं पराङ्मुखम् ॥ ९८ ॥ कथं पूरिष्यते हाहा! । त्वच्छुश्रूषामनोरथः ॥ जाता ते भारभूताऽस्मि । जीवितं किं विनाक्षिणी ॥ ९९ ॥ निगद्यैवं भृशं नेत्र–व्यथावृद्ध्याति-दुःखिता ॥ मन्दं मन्दमरोदीत्सा । रोदयन्ती पशूनपि ॥१००॥ प्राग्भवे मन्त्रिपत्नीत्वे । मुनिर्भिक्षागतोऽवदत् ॥ नाहारोऽयं सदो-पत्वात् । शुद्धयतीति पुनः पुनः ॥ १ ॥ दिवालोके विशुद्धेऽपि । वदन्नो शुद्धयतीत्ययं ॥ भिक्षेभ्यो दीयतामन्ध । इत्याक्रुश्यत यत्तया ॥ २ ॥ ततोऽर्जितं यदुष्कर्म । तद्भवेऽक्षपि तत्तया ॥ तत्तत्पोऽनुतापाद्यैः । शिष्टकस्त्वस्य कोऽप्यणुः ॥ ३ ॥ तद्विपाका-त्तदा तस्या । दुष्टादुदयमीयुषः ॥ पत्नीभावोऽपि पत्युस्त–स्त्रिलस्याऽभूत्सुदुःखदः ॥ ४ ॥ पितृदत्तगरादप्यु–दभून्नेत्रव्यथाऽपि च ॥ गिराऽपि यतिनामाशा–तना स्यादिति दुःखदा ॥ ५ ॥ पञ्चभिः कुलकं ॥

ज्ञानार्थं तत्स्वरूपस्य । राज्ञाऽथ प्रेषिता नराः ॥ रहःस्थास्तत्तथा मत्वा । गत्वा राज्ञे व्यजिज्ञपन् ॥ ६ ॥ क्रोधान्धो निर्घृणः सोऽपि । श्रुत्वा तन्मुमुदे मनाक् ॥ अनुतापो हि पापानां । दुरापः पापनिर्मितौ ॥ ७ ॥ अथ स्वेष्टक्रियाविघ्न–करणाऽऽशङ्कया क्वचित् कन्याम्बा कमला राज्ञा । प्रैषि प्राणार्यदम्भतः ॥ ८ ॥ सा स्वधामागता पुत्री–वृत्तान्तं सर्वमादितः । व्यक्तं दास्यास्तमाकर्ण्य । दुःखतो मूर्च्छिताऽपतत् ॥ ९ ॥ दासीभिर्विहितैरर्हो–पचारैरुज्जिजीव च ॥ विलप्य च महोत्कण्ठा । दासीद्वययुताऽथ सा ॥ १० ॥ पुत्रीं द्रष्टुं रहस्तासि–न्नेव देवगृहेऽगमत् ॥ दूरस्थाऽपि ततो मत्वा । तत्स्वरूपं तथाविधम् ॥ ११ ॥ दुःखक्रोधद्वयं प्राप्याऽऽ–गत्य राज्ञान्तिकेऽवदत् ॥ धिक् त्वां दुर्मतिकं सर्व–विरुद्धाऽकृत्यकारिणम् ॥ १२ ॥ ईदृश्यैव निजेऽपत्ये । चण्डाला अपि कुर्वते ॥ विड-

म्बितैवं मत्पुत्री । किं राजन्नन्धिताऽथ किम् ॥ १३ ॥ यथास्थिताऽर्थवादिन्या । कोऽनयाऽकारि दुर्नयः ॥ कर्मणा सर्वनिन्द्येनाऽ–
नेन श्वभ्रे पतिष्यसि ॥१४॥ उदरे क्षुरिकां क्षिप्त्वा । मरिष्यामि त्वहं द्रुतं ॥ इत्युक्त्वा क्षुरिकां यावत् । क्षिपति सा निजोदरे॥१५॥
तावदुद्दाल्य तां भूपो । जगाद शृणु सुन्दरि! ॥ क्रोधान्धेन मया तादृक् । कुकर्म विहितं तदा ॥ १६ ॥ सचिवोक्तैर्जनोक्तैश्च ।
निन्दाक्रोशैः पदे पदे ॥ अनुतप्तोऽधुना त्वसि । विशिष्य तु तवेरितैः ॥ १७ ॥ संशोध्य प्रातरानेष्ये । सुतां स्वां बहुमानतः ॥
सज्जयिष्यामि तन्नेत्रे । द्विधाप्यस्त्यौषधं हि मे ॥ १८ ॥ तां दास्यामि च कस्मैचि–द्वराय नृपसूनवे ॥ स्यात्प्रमाणं न यत्कार्यं ।
कोपराभस्य निर्मितम् ॥१९॥ राज्ञेत्याश्वासिताऽशेत । राज्ञी किञ्चित्समाहिता ॥ कथंचिन्निद्रया रात्रि–र्दुःखितायाः प्रयात्विति ॥२०॥

अथ सा श्यामलीभूत–लोचना नृपनन्दना ॥ निन्दन्ती स्वार्जितं कर्म । विललापेति दुःखिता ॥ २१ ॥ विराधितः किं
मयका जिनाधिपो । जितेन्द्रियो वा किमु गर्हितो गुरुः ॥ उपाद्रवं सङ्घमवज्ञयाऽथ किं । यदित्यभूवं घनदुःखभाजनम् ॥२२॥ हहा पितः!
किं जनिताऽथ पालिता । त्वयाम्ब! किं किञ्च मृता न शैशवे ॥ यदित्यवापं सुखधर्मवर्जितां । दशामिमां पूर्वकृतैः कुकर्मभिः ॥ २३ ॥
भटा महान्तो भरतादयोऽप्यहो।त्वयाभिभूत्यादिसुदुःखिताः कृताः॥न तैर्विधे!तृप्यसि यत्कृपोचिते।विडम्बनामित्यबलाजने न्यधाः॥२४॥

विलपन्ती विभाव्यैवं । भिल्लस्तामुल्लसत्कृपः ॥ गिरिमालिन्यवाप्तौष–ध्यम्बुनाऽसज्जयद् दृशौ ॥ २५ ॥ ततः सा जातनि–
र्बाध–दिव्यनेत्रा मुदाऽवदत् ॥ अहो महाप्रभावोऽसि । कर्मणाऽनेन वल्लभ! ॥ २६ ॥ दुःसाध्यमीदृशं यत्ना–दाराद्धैर्हि सुरैरपि ॥
दासीयं सौवशुश्रूषा–क्षमाऽकारि यदाभवम् ॥ २७ ॥ भिल्लो बभाण काष्ठार्थं । भ्रमता गिरिमूर्द्धसु ॥ ज्यायःशबरवैद्यस्यो–पदेशेन ॥७२॥
महौषधी ॥ २८ ॥ अवबुद्धप्रभावेयं । लतागुल्मेषु कुत्रचित् ॥ प्राप्तोपलक्षिता चिह्नै–र्गृहीता च यथाविधि ॥ २९ ॥ गोपायिता

बहुकालं । फलवत्यधुना त्वभूत् ॥ विश्वाऽग्र्यगुणशालिन्या–स्तव लोचनदानतः ॥ ३० ॥ परं निःस्वः कुरूपोऽहं । कुलजातिगुणोज्झितः ॥ महाभूपाङ्गजायास्ते । भद्रे नाऽर्हामि भर्तृताम् ॥ ३१ ॥ भिल्लो विटालयामि त्वां । रूपात्यप्सरसं कथं ॥ कथं पापमुपार्जामि । मुधा कृत्वा च जन्म ते ॥३२॥ शिरीषसुकुमाराङ्गी न स्पृष्टाऽसि रवेः करैः ॥ त्वं वहसि कथं दारु–भारं दुर्गाद्रिमूर्द्धतः॥३३॥ याहि तद्भूपतेः पार्श्वे । रोषः शान्तोऽस्य सम्भवी ॥ स हि तिष्ठति नाऽपत्ये । चिरं पित्रोरिति श्रुतिः ॥३४॥ जनापवादसंतप्तः । शमितश्च त्वदम्बया ॥ स गन्ता त्वद्वियोगार्त्तः । प्रमोदं तव दर्शनात् ॥ ३५ ॥ सस्नेहं क्षमयित्वा त्वां । कस्मैचिद् भूपसूनवे ॥ वराय चाऽनुरूपाय । दास्यति प्रथितोत्सवम् ॥ ३६ ॥ करग्रहणमात्रेण । परिणीतं पतिं तु मां ॥ मदाज्ञया [1]चलन्त्यास्ते । न तु दोषोऽस्ति कश्चन ॥ ३७ ॥ तदेहि नृपसश्रान्त–मुञ्चामि त्वां रहोऽधुना ॥ विजने राजमार्गे न । लज्जा केनाऽप्यदर्शनात् ॥ ३८ ॥ अहं च तत्र यास्यामि । यत्र कोऽपि न भोत्स्यते ॥ इति श्रुत्वा विखिन्ना सा । जगौ गद्गदया गिरा ॥ ३९ ॥

एवं किं भाषसे स्वामिन् ! । वज्राघातनिभं गिरः ॥ [2]श्रूयन्तेऽपि सतीभिर्न सतीत्वप्रतिलोमगाः[3] ॥४०॥ सकृदेव प्रदीयन्ते कन्याः सत्कुलसंभवाः ॥ पितृदत्तं न मुञ्चन्ति प्राणान्तेऽपि पतिं च ताः ॥ ४१ ॥ पतिस्त्वं मे गतिस्त्वं मे यादृशस्तादृशोऽपि तत् । शरणं त्वद्वियुक्ताया यमो संयमोऽथवा॥४२॥एवामकर्ण्य तच्छीलस्नेहदृढिमभृद्गिरः । मायाभिल्लो जगौ स्मियन् । विस्मयानन्दमेदुरः ॥४३॥ यदि तत्त्वमिदं भद्रे ! खलु तन्मातुराशिषः । तुतुषुः कुलदेव्यश्च । पुण्यानि च जजागरुः ॥ ४४ ॥ कृत्रिमं भिल्लरूपं मे कारणेन कृतं ह्यदः । पश्य स्वाभाविकं रूपं । दर्शयाम्यधुना तव ॥४५॥ इत्युक्त्वा स व्यधाद्रूपं । दिव्यं स्वाभाविकं निजं ॥ मुह्यन्ते येन देव्योऽपि

---

१ त्यजन्त्या प्र०  २ श्रूयते प्र०  ३ गीः प्र०

किं पुनर्मानुपस्त्रियः ॥ ४६ ॥ रत्नोद्योतेन तद्वीक्ष्य । सानन्दं यमवेदयत् ॥ कुमाररूपवत्तस्य नोपमानं जगत्यपि ॥ ४७ ॥ हर्ष-गद्गदमुचे सा किमतेन्नाटकं प्रिय ! ॥ विमोहयसि यन्मात्रं । नानारूपैः सुपर्ववत् ॥ ४८ ॥

अभापिष्ट कुमारोऽथ । क्षत्रियस्याङ्गजोऽस्म्यहं ॥ कलाविज्ञानविद्यादि-पाठार्थं कौतुकादपि ॥ ४९ ॥ भ्राम्यन् विविधदेशेषु । क्वाप्यध्यैपि कलागणं ॥ अथापमौपधीश्चापि । विचित्रमहिमान्विताः ॥ ५० ॥ आराद्धदेवतादत्त-पल्यङ्केन खगामिना ॥ पश्यन् गिरिपुरादीनि । प्राप्तं रत्नपुरेऽन्यदा ॥ ५१ ॥ पर्यणैपं पुरे तत्र । भूपजां रतिसुन्दरीं ॥ वसन् भूपार्पितावासे । नानाभोगसुखेऽरमे ॥ ५२ ॥ तद्दक्स्वमोपलम्भाच्च । तद्विधाताय तादृशं ॥ भोग्यं चेक्षितुमौपध्या । कृत्वा रूपमिहागमम् ॥ ५३ ॥ इत्यादिनिज-वृत्तान्त-मास्वप्नं तु यथायथं ॥ हर्षस्नेहवशादेप-स्तस्याः सर्वमजागदीत् ॥ ५४ ॥ तमाकर्ण्य नवानन्दो-च्छसदङ्गी जगाद सा ॥ प्रिय ! सत्यं मुनेर्जज्ञे । वचस्तद् ज्ञानवारिधेः ॥५५॥ यतोऽन्येद्युः पुरोद्याने । प्राप्तं ज्ञाननिधिं गुरुं ॥ दासीनिवेदितं नन्तुं । मदम्बाऽगान्मया सह ॥५६॥ नत्वा च देशनां तस्य । श्रुत्वाऽपृच्छन्मम प्रश्नः ॥ भगवन् ! कर्मणा मेऽभू-त्केनचिन्नास्तिकः पतिः ॥५७॥ अहं च मम पुत्री च । कुर्वहे धर्ममार्हतं । ततः कोऽस्याः पतिर्भावी । स्नेहो ह्यस्यामणुः पितुः ॥ ५८ ॥ मुनिर्जगाद पुत्री ते । धर्मशीला सुलक्षणा ॥ भरतार्द्धपतेर्मान्या । महाराज्ञी भविष्यति ॥५९॥ पुनः पप्रच्छ माताऽथ । मेलिष्यति कथं नु सः ॥ मुनि-राख्यदिहोद्याने । चैत्यमस्त्यादिमार्हतः ॥६०॥ चक्रेश्वर्याश्च तत्राऽस्ति । प्रतिमा तत्कृताऽर्चया ॥ देव्या संतुष्टया योगो । वरेणाऽस्याः करिष्यते ॥ ६१ ॥ श्रुत्वैतन्मुदिता चाम्बा । नत्वा तं गृहमागमत् ॥ तदादि चार्चते देवीं । भक्त्या चोपस्करैर्वरैः ॥ ६२ ॥ तन्मन्ये तुष्टयाऽदायि । भाग्यप्रेरितया मम ॥ स्वशोऽयं तत्त्वया स्वामिन् ! । योगोऽयमभवद्यतः ॥ ६३ ॥ निशम्यैवं कुमारोऽवक् । जैन-

धर्मोऽनुरागतः ॥ साध्वभूदावयोः सर्वे । तथैव च भविष्यति ॥ ६४ ॥

यास्यावः साम्प्रतं स्थाने । केनाऽप्यनुपलक्षितौ ॥ ज्ञापयिष्यामि न स्वं च । विना ते पितृशिक्षणम् ॥ ६५ ॥ न शिक्षयितुमर्हामि । मन्तोः प्राप्तिं विना हि तं ॥ नाऽधुना स स्फुटः कश्चि–ल्लभ्यते यं स मन्यते ॥ ६६ ॥ तल्लब्ध्वाऽवसरे मन्तुं । शिक्षयिष्यामि तं भृशं ॥ बोधयिष्याम्यर्हद्धर्मं । हरिष्ये चाऽस्य कौलताम् ॥ ६७ ॥ उपकारात्परं कृत्यं । नाऽऽस्ते यत्परमं सतां ॥ परमो नोपकारोऽस्ति । धर्मदानात्परः पुनः ॥ ६८ ॥ ततो विघ्ननिवारिण्या । महौषध्याऽनया प्रिये ! ॥ रक्ष्यमाणा क्षणं तिष्ठे–रिह सर्वभयोज्झिता ॥ ६९ ॥ यावद्रोपायितं स्वस्य । पल्यङ्काभरणादहं ॥ आनयामि त्वदर्हांश्च । दुकूलाऽलङ्कृतीः पुरात् ॥ ७० ॥

ओमित्युक्ते तया सोऽथ । तां समर्प्य महौषधीं ॥ गत्वा पल्यङ्कमादाय । सालङ्कारः पुरेऽगमत् ॥ ७१ ॥ चतुष्के तत्र कस्याऽपि । महेभ्यस्याऽऽपणे गतः ॥ अयाचतेष्टमूल्येन । दुकूलाऽऽभरणानि तम् ॥ ७२ ॥ ततो रत्नस्वरूपेण । मूल्येन द्विगुणेन सः ॥ वणिक् लोभाद्ददौ तस्मै । दुकूलादि यथार्थितम् ॥७३॥ सर्वाङ्गालङ्कृतीश्चाऽपि । कारिताः स्ववधूकृते ॥ नव्याः सर्वोत्तमाः सोऽदात् । किं हि द्रव्यान्न सिद्ध्यति ॥ ७४ ॥ ततस्तत्सर्वमादायाऽऽगत्य देवकुले द्रुतं ॥ मुदितो मुदितां पत्नीं । कुमारः पर्यधापयत् ॥ ७५ ॥ पत्न्या सह क्षपां क्षिप्त्वा । पल्यङ्के सुखनिद्रया ॥ व्योम्ना विचलिषुर्ब्राह्मे । मुहूर्ते स तयोच्यत ॥७६॥ यास्यावः क्वाऽधुना सोऽपि । जगौ रत्नपुरे पुरे ॥ यत्राऽस्ति त्वमिवाऽभीष्टा । पत्नी मे रतिसुन्दरी ॥ ७७ ॥

अथाऽभ्यधादियं स्वामिन् ! । विज्ञप्यं किञ्चिदस्ति मे ॥ अहं परोपकारैक–परस्य तव तत् शृणु ॥७८॥ कमलादिपुरीभूपः । पुरेऽस्ति कमलप्रभः ॥ स च मे मातुलस्तस्याऽऽदिमा प्रीतिमती प्रिया ॥ ७९ ॥ जयस्वरः सुतस्तस्याः । क्रूरो दुर्नयदुर्भगः ॥ अस्ति

कर्मवशात्किञ्चि–दामयाढ्योऽप्रियंवदः ॥ ८० ॥ परा भोगवतीत्यस्ति । सुरूपा सुभगा प्रिया ॥ साऽतिभक्ताऽत्यभीष्टा च । मन्मा-
तुश्चारुभाषिणी ॥ ८१ ॥ तस्या विजयसूरश्च । पुत्रोऽस्ति सुभगोत्तमः ॥ ओजस्वी विनयी दाता । तन्मातुश्चाऽतिवल्लभः ॥ ८२ ॥
आस्ते चैकाऽनुजा तस्य । स्वसा कमलसुन्दरी ॥ वयोरूपकलाधर्मै–र्मत्समा निस्समा गुणैः ॥ ८३ ॥

अन्यदा च नृपोऽप्राक्षी–त्कञ्चिन्नैमित्तिकोत्तमं ॥ राज्यार्हं वद मे पुत्रं । सोऽवददूगुणिनं लघुम् ॥८४॥ निशम्यैवं मुदा राजा । सत्कृत्य विससर्ज तं ॥ श्रुत्वा कुतोऽपि तत्प्रीति–मती त्वेवमचिन्तयत् ॥८५॥ सज्जे भोगवतीपुत्रे । सति सर्वगुणाऽन्विते ॥ रोगिणो मम पुत्रस्य । राज्यस्याऽऽशाप्यसंभवा ॥ ८६ ॥ अविनीते पुराऽप्यासि–श्नल्पस्नेहं मनः पितुः ॥ नैमित्तिकवचोऽप्यासीत् । क्षारक्षेपोपमं व्रणे ॥ ८७ ॥ नरेन्द्रोऽयं तु धर्मिष्ठो–ऽवसरे प्रव्रजिष्यति ॥ नाऽहं प्रव्रजितुं शक्ता । तादृक्शक्त्याद्यभावतः ॥८८॥ सापत्न्यं राज्यऋद्धीद्धं । दुःस्थं च तनयं निजं ॥ पश्यन्त्या मे तदा चित्ते । कीदृशी भविता धृतिः ॥ ८९ ॥ सपत्न्याः सुतमेतं त–त्स्वसूनो राज्यविघ्नदं ॥ हन्मि केनाऽप्युपायेन । विपक्षं न्यक्करयामि वा ॥९०॥ मोहान्धा सा ततः काञ्चि–दारराध कपालिनीं ॥ पापां तदिष्टदानाद्यै–श्चूर्णयोगादिवेदिनीं ॥ ९१ ॥ तुष्टा साऽन्येद्युराचष्ट । सखि! मत्तः किमिच्छसि ॥ यतः प्रीणासि मामेवं । येनाऽर्थो वद तं ददे ॥ ९२ ॥ राज्ञी जगाद यद्येवं । मत्पुत्रस्य तदोद्धर ॥ सपत्नीपुत्रशल्यं द्राक् । साऽजल्पदिदमल्पकम् ॥९३॥ जग्धं यत्कुरुते स्तम्भं । [1]करांघ्रीणां गृहाण तत् ॥ चूर्णं देयाश्च भोज्यान्त–र्वैरिणः स्वार्थसिद्धये ॥ ९४ ॥ प्रसादं साऽथ मन्वाना । हृष्टा राज्ञी तदग्रहीत् ॥ सत्कृता च तया साऽपि । मुदिताऽगात्कपालनी ॥ ९५ ॥ तदाद्यथ सपत्न्यां सा । मायया तत्सुतेऽपि

---

१ प्राणितूर्याङ्गाणामिति प्राण्यङ्गानां समाहारेऽपि कराङ्घ्रिवत्स्यादावसङ्ख्येये य इत्येकशेषे षष्ठीबहुवचने च कराङ्घ्रीणामिति सिद्धं

च ॥ विश्वासाय तयोः स्नेहं । दर्शयत्याधिकाधिकम् ॥ ९६ ॥

अन्येद्युः पर्वणि काऽपि । न्यमन्त्रि स्वगृहे तया ॥ राज्ञी भोगवती पुत्र-युता स्नेहकिरा गिरा ॥ ९७ ॥ विश्वस्ता सरला मासा । तद्गृहं भोजनाय सा ॥ हैममासनमध्यास्ते । तद्वदेव सुतोऽपि च ॥९८॥ महागौरवभक्तिभ्यां । राज्ञी प्रीतिमती तयोः ॥ विधिवत्सर्वकृत्यानि । भोजनार्हाणि कुर्वती ॥ ९९ ॥ पर्यवेषयदेतस्या । मोदकान्मोदिताशयान् ॥ कृतान् कपालिनीदत्त-चूर्णमिश्रान् सुतस्य च ॥१००॥ तान् परां च सुधास्वादां । भुक्त्वा रसवतीमिमौ ॥ सत्कृतौ [1]वस्त्रभूषाद्यै-र्विविधैर्गृहमीयतुः ॥ १ ॥ ततो विजयचन्द्रस्य । कुमारस्य शनैः शनैः ॥ स्तम्भोऽभूत्पाणिपादस्य । तच्चूर्णस्याऽनुभावतः ॥ २ ॥ कर्तुं किञ्चिन्न पाणिभ्यां । पादाभ्यां चलितुं न च ॥ मनागपि स शक्नोति । कठरे कर्मणां गतिः ॥ ३ ॥ स तन्माता नरेन्द्रश्च । भेजुर्व्याकुलतां ततः ॥ विविधांश्च प्रतीकारान् । वैद्यादिभिरचीकरन् ॥ ४ ॥ विना प्रीतिमतीमेकां । सर्वाश्चिखिदिरे प्रजाः ॥ स्वस्वविज्ञोदितायोप-चारायोपाक्रमन्त च ॥ ५ ॥ कृतैर्मान्त्रिकवैद्याद्यै-रुपचारैरनेकधा ॥ न च तस्य गुणः कोऽपि । जज्ञे कर्मवशो हि सः ॥ ६ ॥ कुमारः पितरौ चाऽस्य । प्रीतिमत्यां च शङ्किताः ॥ तद्भोजनानुजातत्वा-च्चेष्टितैरपि तादृशैः ॥ ७ ॥

अथ तद्विषयेऽप्राक्षी-त्कश्चिन्नैमित्तिकं नृपः ॥ व्याहार्षीत्स कृतं नार्या । दोषं तं दुष्टचूर्णजम् ॥ ८ ॥ दिव्यौषध्यनुभावेन । भाविन्यस्य नीरोगता ॥ असाध्यता ह्यपि भाय । इतरैरौषधादिभिः ॥ ९ ॥ युग्मम् ॥ तं सत्कृत्य विसृज्याऽथ । नृपो दासीनिवेदितं ॥ प्रीतिमत्याः कपालिन्या । सह सङ्गं निबुध्य च ॥१०॥ नरैः कपालिनीं तां चाऽऽ-कार्य वाढमताडयत् ॥ ततः सम्यक्

---

[1] सत्कृतौ विविधैरर्होपचारै * प्रत्यन्तरे

तयाऽऽख्यायि । राज्यै चूर्णार्पणादि तत् ॥११॥ युग्मम् ॥ धिक्कृत्य स तदा प्रीति-मतीं क्रोधान्नृपस्ततः ॥ निरवासयदेषाऽपि । दुःखिताऽगात्पितुर्गृहम् ॥ १२ ॥ तत्राऽपि सहते लोक-धिक्कारान् विविधानियं ॥ भृशं कटुफलं घोरं । पापं ह्यत्र परत्र च ॥१३॥ स्पृहयन् यदधान्यऽधीः सृजे-द्धनभोगादि तदश्नुते न वा ॥ यदि वा चपलं च पापजा । इह चाऽमुत्र च यातना ध्रुवाः ॥ १४ ॥

अथो भूपतितद्वर्ग्य-पौरा निजगदुर्मिथः ॥ अहो दौष्ट्यं हृदः स्त्रीणां । साहसिक्यमहो महत् ॥१५॥ धिग्धिगैहिकसौख्याऽणु : पापजन्तवः ॥ कुर्वते कर्म तद्येन । लभन्ते नरकव्यथाः ॥ १६ ॥ युग्मम् ॥ अथ देशान्तरात्काश्चि-त्ताद्दगायाति कर्हिचित् ॥ उल्लाघयति यः पुत्रं । ममेमं पुरुषोत्तमः ॥१७॥ एवमालोच्य यः काश्चि-त्पटुयत्यङ्गजं निजं ॥ ददेऽस्मै सह देशेन । कनीं कमल-सुन्दरीम् ॥ १८ ॥ इति भूपः प्रतिज्ञां स्वां । पटहेनोदघोषयत् ॥ वाद्यते सर्वतश्चैषः । पक्षे पक्षे त्र्यहं त्र्यहम् ॥ १९ ॥ त्रिभिर्विशे-षकं ॥ वृत्तान्तश्चाऽन्यदा प्रेम्णा । मातुलाऽऽहूतया मया ॥ बुबुधे स्थितया मातृ-कुलाऽऽवासेऽखिलोऽप्ययम् ॥ २० ॥

मया सहैकपत्यं च । प्रीत्या कमलसुन्दरी ॥ ऐहिष्ट भ्रातृदुःखात्तु । न किञ्चन तदाऽवदत् ॥ २१ ॥ ततस्तत्र पुरे गत्वा । भ्रातुरुल्लाघनान्मम॥[सर्वलोक] सार्वलौक्ययुतं मातृ-पक्षं स्वामिन् सुखाकुरु॥२२॥सामर्थ्यमत्राऽपि तु निश्चिनोमि । तवेश मल्लोचन-दानशक्त्या ॥ तदस्ति विश्व किमु वस्तु किञ्चित् । कल्पद्रुमो यद्ददितुं न शक्तः॥२३॥ तवेहमानस्य परोपकारं । ह्येकं स भावी परमः प्रियैव ॥ अयं कुमारो नयधर्मशीलः । सुखी सुखं प्रापयिता प्रजा यत् ॥ २४ ॥ श्रुत्वेति पत्न्या गदितं कुमार-स्तस्मिन्पुरेऽयं गमनं प्रपेदे ॥ तथा प्रियाऽऽप्त्या स परीक्ष्य भाग्यं । निजं जयश्रीद्रुमवाप्तहर्षः ॥ २५ ॥

इतितपापक्षपूज्यश्रीदेवसुन्दरसूरि० श्रीज्ञानसागरसूरि० शिष्य श्रीसोमसुन्दरसूरिपट्टभृद्गच्छाधिराजश्रीमुनिसुन्दरसूरिविरचिते श्रीजया-

नन्दराजर्षिकेवलिचरित्रे जयश्रयङ्के श्रीजयानन्दकुमारस्य देशान्तरचर्यायां गङ्गदत्तपरिव्राजकोपकार-मलयमालक्षेत्रपालजय-तदर्पितसमहिममहौषधीपञ्चकप्राप्ति-तत्पूर्वमन्त्रिभवपत्नीद्वयजीवरतिसुन्दरीविजयसुन्दरीमहाऽवदातसोत्सवपाणिग्रहण-लक्ष्मीपुञ्जदृष्टान्त-तृतीयव्रतपालनफलदर्शन-कमलसुन्दरीकरग्रहणप्रस्तावनादिवर्णनो नामाऽष्टमः सर्गः समाप्तः श्रीरस्तु ॥ ग्रन्थाग्रं ९४२ ॥

## ॥ अथ नवमः सर्गः प्रारभ्यते ॥

यः प्रत्यूहसमूहमांहसमतिव्यूहैः सहाऽपोहति । प्रीतिं प्रापयते परामभिमतश्रेणिप्रदानैः समं ॥
सौभाग्याऽभ्युदयैश्च सार्द्धमधिकां दत्तेऽत्र नीरोगतां । विश्वे पार्श्वजिनेशितुः स महिमा निर्मातु वः संपदः ॥१॥

अथ स श्रीजयानन्द-कुमारः प्रियया सह ॥ व्योम्ना पल्यङ्कमारुह्याऽ-गात्पुरे कमलात्पुरे ॥ २ ॥ पल्यङ्कं क्वाऽपि सङ्गोप्य । तत्रोद्याने धियां निधिः ॥ चक्रे स शाबरं रूपं । दर्शनीयं मनाग् निजम् ॥ ३ ॥ प्रियां च शबरीरूपां । दर्शनीयां चकार सः ॥ कुतश्चिन्मेलिताऽनेकौ-षधिग्रन्थि स्फुटां दधत् ॥ ४ ॥ प्राविक्षत्सदलङ्कारो । दुकूलाभरणेद्धया ॥ पुरेऽस्मिन् प्रियया सार्द्धं । तत्पुरद्धर्या सविस्मयः ॥ ५ ॥ महेभ्यस्याऽथ कस्याऽपि । विशालं वीक्ष्य मन्दिरं ॥ भाटकेन स वासार्थं । ययाचे चित्रशालिकाम् ॥६॥ महेभ्यः साह कस्त्वं भोः । कुतश्चागात्पुरादथ ॥ सोऽवादीत्शबरोऽस्म्येष । वैद्यः सर्वौषधादिवित् ॥ ७ ॥ कौतुकी सप्रियो भ्राम्यन्नानादेशान्तरेष्वथ ॥ सश्रीकेऽस्मिन् पुरे वस्तुं । याचे जातरुचिः पदम् ॥ ८ ॥ क्रुद्धोऽवादीद्गृहेशोऽथ । याहि रे भिल्लपाटकं ॥ भिल्लो ह्यशुचिरज्ञातो । मद्गृहे प्राविशः कथम्? ॥ ९ ॥ लक्षार्घं भाटकेऽथाऽदात् । तस्मै रत्नं स लीलया ॥ स्थास्यामि दिवसान्

स्वल्पा-नेवाऽत्राऽहमिति ब्रुवन् ॥ १० ॥ ततः सविस्मयाऽऽनन्दो । गृहनाथोऽप्यचिन्तयत् ॥ किमयं धनदः साक्षा-द्विद्याभृत्किं [1]क्षितीश्वरः ॥ ११ ॥ ईदृशी दानलीला हि । न क्वाऽप्यन्यत्र दृश्यते ॥ सगौरवमथाऽवादीद् । भिल्लराजं वणिग्वरः ॥ १२ ॥ गृहाण मद्गृहे स्वैरं । चित्रशालां मनोहरां ॥ शुचयो हि [2]गुणेष्वेव । जातौ शुच्यशुची न तु ॥ १३ ॥ ततः स चित्रशालायां । सप्रियोऽ-स्थाद्यथासुखं ॥ गृहस्योपस्करं चाऽस्मै ॥ सर्वं रत्नैर्वणिग् ददौ ॥ १४ ॥

अथ तत्र वसन् रत्नैः । पूर्यमाणमनोरथः ॥ मनोऽनुकूलया पत्न्या । नव्यया स्नेहसारया ॥ १५ ॥ रूपातिरम्भया साकं । भुङ्क्ते भोगान् महेन्द्रवत् ॥ दिव्यौषध्यादिभिर्लोके । विविधानामयान् हरन् ॥ १६ ॥ स्वस्मिन् शबरवैद्यत्वं । ख्यापयन् प्रियया सह ॥ अगृह्णन् किमपि प्रौढो-पकारेषु कृतेष्वपि ॥ १७ ॥ स्वयं पत्न्या च वीणादि । वादयन् गाययन्नपि ॥ गायकेभ्योऽपि गीतानि । शृण्वन् श्रुतिसुधामिव ॥ १८ ॥ नर्त्तयंश्च नटीवृन्दं । ददद्दानान्यनर्गलं ॥ शबरवैश्रवणेति-कृताह्वो मुदितैर्जनैः ॥१९॥ पौराणामितरेषां च । चित्रकृच्चरितैर्निजैः ॥ तन्नाम्ना ख्यातिमान् स्वैरं । सर्वत्र विलसत्यपि ॥ २० ॥ षड्भिरर्थतः कुलकं ॥

अन्यदा तत्पुरोद्याने । भरतेश्वरनिर्मितान् ॥ आर्यवेदान् बहूंश्छात्रान् । पाठयन्तं द्विजोत्तमम् ॥२१॥दृष्ट्वा कश्चिन्महाप्रज्ञ-स्तानध्येतुमियेष सः ॥ विप्ररूपं विना वेदा-ध्ययनं नेत्यचिन्तयत् ॥ २२ ॥ युग्मम् ॥ ततोऽन्येद्युर्मिषं किञ्चित् । कृत्वाऽऽपृच्छ्य गृहाधिपं ॥ दत्वा चोपस्करं तस्मै । सप्रियो निशि निर्ययौ ॥ २३ ॥ स्थित्वोद्याने च तां रात्रिं । प्रातः स्वं विप्ररूपिणं ॥ प्रियां च ब्राह्मणीरूपां । हेतुमुक्त्वा चकार सः ॥ २४ ॥ ततो मध्यमरूपौ तौ । सालङ्कारौ सयौवनौ ॥ प्रविश्य तत्पुरस्याऽन्तः । कस्याऽपि

[1] किमीश्वरः प्र०  [2] गुणा एव प्रत्यन्तरे

वणिजो गृहे ॥ २५ ॥ पूर्ववद्रत्नदानेन । प्रीतेन भृशसुन्दरे ॥ भाटकेनाऽर्पिते तेन । सोपस्करमतिष्ठताम् ॥२६॥ युग्मम् ॥ सुपरीक्ष्य [1]भुजिष्यादीन् । कृत्वा निजपरिच्छदे ॥ स्थापयन् दयितां वृद्ध–विज्ञस्त्रीरक्षितां गृहे ॥ २७ ॥ सम्पूज्य रत्नदानेनो–पाध्यायाद्विनयी ततः ॥ अधीते विधिना वेदा–न्नीतिधर्मप्रकाशकान् ॥ २८ ॥ भाग्यात्पदानुसारिण्या । प्रज्ञयाऽल्पैरपि द्युभिः ॥ सोऽध्यैष्ट सकलान् वेदान् । सर्वच्छात्रप्रशंसितः ॥२९॥ अर्चित्वा च महादानै–र्गुरुं छात्रान् प्रमोद्य च ॥ प्राप्तो गेहे महाभोगान् । प्राग्वद्भुङ्क्ते यथारुचि ॥ ३० ॥ स्थापयन् ब्रह्मवैद्यत्व–मुपकुर्वन् जनव्रजं ॥ पूर्ववद्गीतनाट्याद्यै । रमते श्रीपथादिषु ॥ ३१ ॥ भेजे ख्यातिं पुरे चाऽस्मिन् । ब्रह्मवैश्रवणेति सः ॥ रैरत्नादिमहादान–प्रीतार्थिप्रथिताह्वयः ॥ ३२ ॥ पटहं वाद्यमानं स । शृण्वानोऽप्युपभूपतिं ॥ स्वस्मिन् राज्यकनीलोभा–शङ्कोत्पत्तिभियैति न ॥ ३३ ॥ अयं सुरः किं स हि नैव भूस्पृक् । किमाश्विनेयः स हि नैकचारी ॥ किं वा नृधर्मा स पुनः कुबेरः । कोऽयं ततो ह्यद्भुतभागधेयः ॥ ३४ ॥ भैषज्यं दानलीला च । सर्वे चाऽस्मिन् कलागुणाः ॥ सन्ति येऽन्यत्र ते क्वाऽपि । न दृष्टा नैव च श्रुताः ॥ ३५ ॥ पूर्वं त्वीदृग्गुणो दृष्टः । शबरो नेक्ष्यतेऽधुना ॥ तद्रूपान्तरभृच्छक्त्या । किमन्योऽयं स एव वा ॥ ३६ ॥ एवं विकल्प्यमानोऽयं । सर्वतः सर्वनागरैः कश्चित्क्रीडापदं पीठं । श्रीपथेऽध्यास्त सोऽन्यदा ॥ ३७ ॥ कौतुकाद्वादयन् वीणां । गायन्मित्रैः समं मुदा ॥ पौरश्रुतिसुधावर्षं । कुर्वाणो यावदस्ति सः ॥ ३८ ॥ दासीवृन्दगता कुब्जा । दास्येका तावदागमत् ॥ तत्र गीतरसाकृष्टा । तस्थौ नीरार्थमियूती ॥ ३९ ॥

वीक्ष्याऽप्राक्षीत्स विप्रस्तां । काऽसि त्वं साप्यररणीत् ॥ भोगवत्या महाराज्ञ्या । दास्यस्मि स जगावथ ॥ ४० ॥ किं रे कुब्जाऽसि

[1] दासादीन्

साऽराणी–द्वातदोषेण सोऽभणत् ॥ पुरेऽत्राऽपि न केनाऽपि । हले किं नु चिकित्सिता ॥ ४१ ॥ साभाणीद्वहुभिर्विज्ञै–र्बहुधाऽस्मि चिकित्सिता ॥ परं भवादृशः कोऽपि । नाऽमिलन्मन्दभाग्यतः ॥ ४२ ॥ ततः स्वाभ्यर्णमाकार्य । तां स्नसाजालमर्मसु ॥ आहत्या-हत्य नैपुण्या–न्मुष्टिभिर्द्रागसज्जयत् ॥ ४३ ॥ ततः सा सरलीभूता । मुदिता तमवावचीत् ॥ कोऽप्यलक्ष्यस्वरूपोऽसि । पौरभाग्या-दिहागतः ॥ ४४ ॥ मत्वेकेनाऽपि देवानां । सुसाध्यं पाटवं हरिः ॥ अपीदुपचिकीः पृथ्व्या–स्त्वामिहैकं नु दस्रयोः ॥४५॥ तदेहि नृपतेर्गेहं । तत्सुतं पटय द्रुतं ॥ भव भूपकुलाऽभ्यर्च्यः । पौरैस्त्वर्च्यः पुराऽप्यसि ॥ ४६ ॥ सोऽवदद्याहि हंजे ! त्वं । नाऽर्थो राजकुलेन मे ॥ राज्ञ्यभ्यर्णमगात्तूर्णं । सा ततो विस्मृतोदका ॥ ४७ ॥ तां वीक्ष्याऽरंरणीद्राज्ञी । काऽसि त्वं साप्यवंभणीत् । किं स्वामिनि न जानासि । तव दास्यस्मि कुब्जिका ॥४८॥ विस्मिता साऽवदद्राज्ञी । किमरे ऋजिमा ? तव ॥ साऽप्यभाणीदिमां मेऽदाद् । ब्रह्म-वैश्रवणो भिषक् ॥४९॥ स कुत्राऽस्तीति राज्ञ्योक्ते । श्रीपथेऽस्तीति साऽवदत् ॥ राज्ञ्युवाच स शक्नोति । पुत्रं पटयितुं न वा ॥५०॥ दास्यवादीन्न सामर्थ्यं तद्विश्वेऽप्यस्य यन्न हि ॥ ततो गत्वा द्रुतं राज्ञी । भूभुजे तन्न्यवेदयत् ॥ ५१ ॥

राजाऽप्याजूहवत्तं द्राग् । मुदितः प्रेष्य धीसखान् ॥ सोऽपि तैर्बहुमानेनाऽऽकारितो भूपसंसदि ॥ ५२ ॥ औषधीग्रन्थियुग यज्ञो–पवीतादिद्विजांकभृत् ॥ आगत्य नरनाथाय । ददावित्याशिषं मुदा ॥५३॥ तथाहि–भुञ्जानो हितमितपक्वमेव सात्म्यात् । कुर्वाणः श्रममुषसीह वामशायी॥स्त्रीसेवानिलमलमूत्रशल्यमुज्झन् । त्वं नेतर्गदगणवर्ज्जयाऽरिचक्रम् ॥५४॥ आशि-षाऽपीति भैषज्य-तत्त्वोक्त्या भिषजां वरं ॥ मत्वा तं बहुमानेना-ऽध्यासयत्कनकासनम् ॥५५॥ अप्राक्षीद्भद्र ! कोऽसि त्वं। कुतश्चागा धियां-निधे ! ॥ स्ववासाज्जनताभाग्यैः । किं सुखाकुरुषे पुरम् ॥ ५६ ॥ सोऽप्यवोचद् द्विजन्माऽस्मि । गिरिपल्ल्यां वसन्नहं ॥ तातवै-

षोपदेशेन । जानामि विविधौषधीः ॥ ५७ ॥ सुचिरं तत्कृते भ्रान्त्वा । नानागिरिवनादिषु ॥ उपलक्ष्य च ताः सम्यक् । नैकाः [1]संगृहिता मया ॥ ५८ ॥ ताभिरुल्लाघयन् लोकान् । परोपकृतिकौतुकी ॥ पुरग्रामादिषु भ्राम्य-न्नत्राऽऽगां स्वर्जयिश्रियि ॥५९॥

अथोचे तं नृपः साधो ! । परोपकृतिकौतुकी ॥ इत्युक्तं यत्त्वयेदानीं । तद्धि सत्यापय द्रुतम् ॥६०॥ अस्ति पुत्रस्य मे गात्र-सङ्कोचात्मा महामयः ॥ निजौषधादिसामर्थ्या-त्तं साधोऽपनय द्रुतम् ॥६१॥ आकृत्या च प्रकृत्या च । गिरा च त्वां महाशय ! ॥ मन्ये विश्वोपकारैक-निष्ठनिःशेषशक्तिकम् ॥ ६२ ॥ व्याजहार द्विजः सोऽथ । दर्शय स्वाङ्गजं नृप ! ॥ साध्यं चेदाऽऽमयं जाने । तदा प्रतिकरोमि तम् ॥ ६३ ॥ सह तेन ततो भूभृ-द्गत्वाऽमात्यादिसंयुतः ॥ अदीदृशत पुत्रं स्वं । भिषजा तेन तादृशम् ॥ ६४ ॥ मायाविप्रोऽवदद्राज-न्नामयो विषमो ह्ययं ॥ केवलैर्नौषधैः साध्यो । [मन्त्रेणार्पितचूर्णजः] मन्त्रौजायितचूर्णजः ॥६५॥ व्यपनेष्ये ततो मन्त्रैरौषधैश्च प्रयत्नतः ॥ आनाययत् विचित्रं त-न्मंत्रपूजाद्युपस्करम् ॥ ६६ ॥ राज्ञाऽप्यानायिते तस्मिन् । विज्ञायाऽऽडम्बरार्हतां ॥ जवुन्यन्तारितो भूत्वा । दूरयित्वा मनाग् जनान् ॥ ६७ ॥ मण्डलं विपुलं कृत्वा । चन्दनैर्दीपिताऽनले ॥ ॐ नमो अर्हते ॐ ह्रीं-सिद्धेभ्यश्च नमो वषट् ॥ ६८ ॥

इत्याद्युच्चारयन्मन्त्रान् । ध्यानमुद्रासनादियुक् ॥ कर्पूरागुरुपुष्पाद्यै-र्होमं कुर्वन् बलिं क्षिपन् ॥६९॥ संस्थाप्य मण्डलासत्तौ । सोपष्टम्भं नृपाङ्गजं ॥ महौषध्यम्बुधाराभिः । सेकं सेकमसज्जयत् ॥ ७० ॥ अपनीते च नेपथ्ये । यावदायाति पार्थिवः ॥ कुमार-स्तावदुत्थाय । नमश्चक्रे पितुः पदौ ॥ ७१ ॥ गाढमालिङ्ग्य सस्नेहं । सुतं तं च भिषग्वरं ॥ कनकासनमध्यास्त । सह ताभ्यां

१ संगृह्य रोगिणः

साऽराणी–द्वातदोषेण सोऽभणत् ॥ पुरेऽत्राऽपि न केनाऽपि । हले किं नु चिकित्सिता ॥ ४१ ॥ साभाणीद्बहुभिर्विज्ञै–र्बहुधाऽस्मि चिकित्सिता ॥ परं भवादृशः कोऽपि । नाऽमिलन्मन्दभाग्यतः ॥ ४२ ॥ ततः स्वाभ्यर्णमाकार्य । तां स्नसाजालमर्मसु ॥ आहत्याहत्य नैपुण्या–न्मुष्टिभिर्द्रागसज्जयत् ॥ ४३ ॥ ततः सा सरलीभूता । मुदिता तमवावचीत् ॥ कोऽप्यलक्ष्यस्वरूपोऽसि । पौरभाग्यादिहागतः ॥ ४४ ॥ मत्वैकेनाऽपि देवानां । सुसाध्यं पाटवं हरिः ॥ अैपीदुपचिकीः पृथ्व्या–स्त्वामिहैकं नु दस्रयोः ॥४५॥ तदेहि नृपतेर्गेहं । तत्सुतं पटय द्रुतं ॥ भव भूपकुलाऽभ्यर्च्यः । पौरैस्त्वर्च्यः पुराऽप्यसि ॥ ४६ ॥ सोऽवदद्याहि हंजे ! त्वं । नाऽर्थो राजकुलेन मे ॥ राज्यभ्यर्णमगाच्चूर्णं । सा ततो विस्मृतोदका ॥ ४७ ॥ तां वीक्ष्याऽरंरणीद्राज्ञी । काऽसि त्वं साप्यवंभणीत् । किं स्वामिनि न जानासि । तव दास्यस्मि कुब्जिका ॥४८॥ विस्मिता साऽवदद्राज्ञी । किमरे ऋजिमा ? तव ॥ साऽप्यभाणीदिमां मेऽदाद् । ब्रह्मवैश्रवणो भिषक् ॥४९॥ स कुत्राऽस्तीति राज्योक्ते । श्रीपथेऽस्तीति साऽवदत् ॥ राज्युवाच स शक्नोति । पुत्रं पटयितुं न वा ॥५०॥ दास्यवादीन्न सामर्थ्यं तद्विश्वेऽप्यस्य यन्न हि ॥ ततो गत्वा द्रुतं राज्ञी । भूभुजे तन्न्यवेदयत् ॥ ५१ ॥

राजाऽप्याजूहवत्तं द्राग् । मुदितः प्रेष्य धीसखान् ॥ सोऽपि तैर्बहुमानेनाऽऽकारितो भूपसंसदि ॥ ५२ ॥ औषधीग्रन्थियुगयज्ञो–पवीतादिद्विजांकभृत् ॥ आगत्य नरनाथाय । ददावित्याशिषं मुदा ॥५३॥ तथाहि–भुञ्जानो हितमितपक्वमेव सात्म्यात् । कुर्वाणः श्रममुषसीह वामशायी॥स्त्रीसेवानिलमलमूत्रशल्यमुज्झन् । त्वं नेतर्गदगणवर्ज्जयाऽरिचक्रम् ॥५४॥ आशिपाऽपीति भैषज्य-तत्त्वोक्त्या भिषजां वरं ॥ मत्वा तं बहुमानेना-ऽध्यासयत्कनकासनम् ॥५५॥ अप्राक्षीद्भद्र ! कोऽसि त्वं।कुतश्चागा धियांनिधे ! ॥ स्ववासाज्जनताभाग्यैः । किं सुखाकुरुषे पुरम् ॥ ५६ ॥ सोऽप्यवोचद् द्विजन्माऽस्मि । गिरिपल्ल्यां वसन्नहं ॥ तातवै-

घोपदेशेन । जानामि विविधौषधीः ॥ ५७ ॥ सुचिरं तत्कृते भ्रान्त्वा । नानागिरिवनादिषु ॥ उपलक्ष्य च ताः सम्यक् । नैकाः [1]संगृहिता मया ॥ ५८ ॥ ताभिरुल्लाघयन् लोकान् । परोपकृतिकौतुकी ॥ पुरग्रामादिषु भ्राम्य-न्नत्राऽऽगां स्वर्जयिश्रियि ॥५९॥

अथोचे तं नृपः साधो! । परोपकृतिकौतुकी ॥ इत्युक्तं यत्त्वयेदानीं । तद्धि सत्यापय द्रुतम् ॥६०॥ अस्ति पुत्रस्य मे गात्र-सङ्कोचात्मा महामयः ॥ निजौषधादिसामर्थ्या-त्तं साधोऽपनय द्रुतम् ॥६१॥ आकृत्या च प्रकृत्या च । गिरा च त्वां महाशय! ॥ मन्ये विश्वोपकारैक-निष्ठनिःशेषशक्तिकम् ॥ ६२ ॥ व्याजहार द्विजः सोऽथ । दर्शय स्वाङ्गजं नृप! ॥ साध्यं चेदाऽऽमयं जाने । तदा प्रतिकरोमि तम् ॥ ६३ ॥ सह तेन ततो भूभृ-द्गत्वाऽमात्यादिसंयुतः ॥ अदीदृशत पुत्रं स्वं । भिषजा तेन तादृशम् ॥ ६४ ॥ मायाविप्रोऽवदद्राज-न्नामयो विषमो ह्ययं ॥ केवलैर्नौषधैः साध्यो । [मन्त्रेणार्पितचूर्णजः] मन्त्रौजायितचूर्णजः ॥६५॥ व्यपनेष्ये ततो मन्त्रैरौषधैश्च प्रयत्नतः ॥ आनाययत् विचित्रं त-न्मंत्रपूजाद्युपस्करम् ॥ ६६ ॥ राज्ञाऽप्यानायिते तस्मिन् । विज्ञायाऽऽडम्बरार्हतां ॥ जवन्यन्तारितो भूत्वा । दूरयित्वा मनाग् जनान् ॥ ६७ ॥ मण्डलं विपुलं कृत्वा । चन्दनैर्दीपिताऽनले ॥ ॐ **नमो अर्हते ॐ ह्रीं-सिद्धेभ्यश्च नमो वषट्** ॥ ६८ ॥

इत्याद्युच्चारयन्मन्त्रान् । ध्यानमुद्रासनादियुक् ॥ कर्पूरागुरुपुष्पाद्यै-र्होमं कुर्वन् बलिं क्षिपन् ॥६९॥ संस्थाप्य मण्डलासत्तौ । सोपष्टम्भं नृपाङ्गजं ॥ महौषध्यम्बुधाराभिः । सेकं सेकमसज्जयत् ॥ ७० ॥ अपनीते च नेपथ्ये । यावदायाति पार्थिवः ॥ कुमार-स्तावदुत्थाय । नमश्चक्रे पितुः पदौ ॥ ७१ ॥ गाढमालिङ्ग्य सस्नेहं । सुतं तं च भिषग्वरं ॥ कनकासनमध्यास्त । सह ताभ्यां

१ संगृह्य रोगिणः

महीपतिः ॥ ७२ ॥ सचिवादिपरीवारो-ऽप्याययौ प्रमदाऽऽकुलः ॥ आतोद्यानि विचित्राणि । निनेदुर्नादिताम्बरम् ॥ ७३ ॥ अगायन् गायनाः प्रोच्चैः । पेठुर्मङ्गलपाठकाः ॥ जगुर्मङ्गलगीतानि । सानन्दाः सर्वतः स्त्रियः ॥ ७४ ॥ हर्षोत्कर्षाद्व्यधान्माता । सुतस्य न्युञ्छनान्यथ ॥ अन्या अपि व्यधू राज्ञ्यो । वर्द्धापनमहोत्सवम् ॥ ७५ ॥ हर्षाद्वयमयो भूपो । मायाविप्रमथाऽवदत् ॥ अहो भाग्यभरोऽस्माकं । येनाऽसि मिलितोऽधुना ॥ ७६ ॥ अहो ते मन्त्रवादित्व-महो समहिमौषधी ॥ अहो परोपकारित्व-महो सुभगता गिराम् ॥ ७७ ॥ सर्वराज्यप्रदानेऽपि । भवामस्तव नाऽनृणाः ॥ दद्मस्तथाऽपि शक्त्यर्हं । प्रीता द्विजपते! वयम् ॥७८॥ गृहाण देशमेकं त-द्यथारुचि नरोत्तम! ॥ इत्युक्त्वा भूपतिर्यावत् । सचिवाद्याः परेऽपि च ॥ ७९ ॥ रत्नालङ्कारवस्त्रादि । तस्मै दातुं ढुढौकिरे ॥ किमप्यगृह्णन् स प्रोचे । मायाविप्रो महीपतिम् ॥ ८० ॥ उपकारे कृते सन्तः । पुण्यमेकं विहाय किं ॥ किञ्चिद्गृह्णन्ति राजेन्द्र! । क्काऽपि पुण्यार्थवृत्तयः ॥ ८१ ॥ चिकित्साद्यर्जितं प्राग-प्यस्ति निर्वाहकृद्धनं ॥ कोऽर्थोऽधिकेन मेऽनेन । तद्धि लोभादिवृद्धिकृत् ॥ ८२ ॥ भूयसाऽपि हि लाभेन । नैव लोभो निरस्यते ॥ न हि मात्राऽधिको जय्यो । मात्राहीनेन केनचित् ॥ ८३ ॥ आत्मानं सुखयाम्येष । सन्तोषेणैव तन्नृप! ॥ जीयते हि सुरेन्द्रोऽपि । सन्तोषोद्भवशर्मणा ॥८४॥ वैप्रधर्मक्रियाविघ्न-कृता देशेन किं नु मे ॥ तथापि समये राजन्! ज्ञास्येऽहं तद्विधावपि ॥ ८५ ॥ राजतीर्थेक्षणं मेऽभू-त्सार्वलौक्यप्रमोददं ॥ धर्म्यं च विहितं कर्म । किमीहे तदतः परम् ॥ ८६ ॥

इत्यादि तद्गिरा तादृग्-दानालंकरणादिभिः ॥ तमनीहं भृशाढ्यं च । निबुध्य व्याहरन्नृपः ॥ ८७ ॥ पश्चादप्यस्तु देशादेरूरीकारो यथोचितं ॥ सम्प्रति क्क स्थितोऽसीति । ब्रूहि विप्रस्ततोऽवदत् ॥ ८८ ॥ भाटकात्ते वणिग्गेहे । तिष्ठामि प्रियया सह ॥

व्याजहार नृपो धाम्नि । नित्यं तिष्ठ ममैव तत् ॥ ८९ ॥ तथोररीकृते तेन । भूपः प्रेष्य सुखासनं ॥ दासीवृन्दं तथा वीणां । तद्गिरा तत्प्रियामपि ॥९०॥ तत्स्थानात्सर्वमानाय्य । बहुमानाद् द्विजोत्तमं ॥ स्वावासे चित्रशालादौ । भूपतिस्तमतास्थपत् ॥९१॥ अचीकरत्स्वभृत्यैश्च । तं स्नानं भोजनादि च ॥ स राजगौरवप्रीत–स्तत्र चास्थाद्यथासुखम् ॥ ९२ ॥ अन्यदा भूपतिर्भोग–वत्या विज्ञैश्च मन्त्रिभिः ॥ समं व्यचारयद्देशो । दास्यतेऽस्मै महानपि ॥ ९३ ॥ कन्या पुनः कथं देया । विप्राय गुणिनेऽपि च ॥ भिक्षाचरकुलोद्भूतो । राजकन्यां किमर्हति ॥९४॥ मन्त्रिणोऽथाऽवदन्नेष । विप्रमात्रं न संभवी ॥ लक्षणैः शौर्यवृत्त्यादि–गुणैश्च नृपतोचितैः ॥ ९५ ॥ तदस्मै दीयते कन्या । स्वामिन् कमलसुन्दरी ॥ प्रतिज्ञां हातुमर्हन्ति । न ह्यमोघगिरो नृपाः ॥ ९६ ॥ ततो भाग्यं [illegible] कन्यायाः । प्रमाणमथ भूपतिः ॥ राज्ञी चैषां प्रपेदाते । वाक्यं तत्सत्र्यानुगं ॥ ९७ ॥

अथ पद्मपुरे पद्म–रथो राजा निजां सुतां ॥ ददौ तादृशभिल्लाय । रभसेन तथा रुषा ॥ ९८ ॥ राज्ञीमन्त्र्यादिवाग्भिः स । संजातानुशयः प्रगे ॥ नरैरशोधयद्भिल्ला–धास्पदेष्वखिलेषु तौ ॥९९॥ स च भिल्लः सुता साऽपि । क्वाऽपि प्रापि परं न हि ॥ ततो नानापुरग्राम–गिरिपल्लीवनादिषु ॥ १०० ॥ नरान् स्वान् सर्वतः प्रैषी–च्छोधनाय तयोर्नृपः ॥ न च ते लेभिरे क्वाऽपि । तौ दूरेऽपि चिरादपि ॥१॥ ततो राजा सुतास्नेहात् । शुशोच चिरदुःखभाक् ॥ स्वं कुकर्म च तत्ताहक् । कालात् शोकोज्झितोऽप्यभूत्॥२॥ सोऽथ स्वां ज्यायसीं पुत्रीं । भूपः सेवार्थमीयुषे ॥ नरसिंहस्य पुत्राय । पुरन्दरपुरेशितुः ॥३॥ नरकुंजरसंज्ञायाऽ–नुरक्तां जयसुन्दरीं ॥ ददौ व्यधाच्च सानन्द–स्तद्विवाहमहोत्सवम् ॥ ४ ॥ सत्कृतोऽथ भृशं राज्ञा । सजायः स्वपुरेऽगमत् ॥ भुङ्क्ते च स महाभोगां–स्तया सह नवोढया ॥ ५ ॥

अथ सा कमला राज्ञी । तयोः शुद्धचनवाप्तितः ॥ पुत्री वियोगदुःखार्त्ता । रोदं रोदं चिरं स्थिता ॥६॥ एवं विडम्बिता पुत्री–त्यतिक्रुद्धाऽपि भूभुजि ॥ कियतोऽजीगमद् घस्रान् । स्वांगजामेलनाऽऽशया ॥ ७ ॥ यदा च जयसुन्दर्याः । पाणिग्रहमहोत्सवः ॥ प्रारेभे बहुधा गीत–वाद्यनाट्यादिबन्धुरः ॥ ८ ॥ तदा तं वीक्षमाणा सा । सपत्न्याश्च तथा मुदं ॥ स्मृत्वा पुत्रीं निजां तस्या–स्ता-दृशीं च विडम्बनाम् ॥ ९ ॥ भृशं पुनर्नवीभूत–क्रोधेर्ष्याशोकदुःखतः ॥ तत्र स्थातुमशक्ता द्राग् । गृहीत्वा स्वं परिच्छदम् ॥१०॥ अनुज्ञाप्य च राजानं । चलिता शीघ्रवाहनैः ॥ संकटे शरणं स्त्रीणां । पितुरेव गृहं यतः ॥११॥ ततस्तत्राऽगमत्स्वीय–भ्रातुर्भूमि-भुजः पुरे ॥ दास्या चाऽज्ञापयत्तस्मै । तदुद्याने निजाऽऽगमम् ॥ १२ ॥ पंचभिरर्थतः कुलकं ॥

ज्ञात्वा भाप्तां च तां भूपः । सान्तःपुरपरिच्छदः ॥ तत्र सन्मुखमागत्य । मणनाम मुदाकुलः ॥१३॥ततो दत्वाशिषं भ्रातुः । कण्ठे लग्ना रुरोद सा ॥ तमथाऽऽश्वास्य भूपालो । निवार्य रुदितं च तत् ॥१४॥ उपविश्याऽऽसनं जामि–मासयित्वाऽन्वयुङ्क्त च ॥ तत्स्वरूपमजानानः । संभ्रान्तोऽनीदृगीक्षणात् ॥ १५ ॥ किमकस्मादनाहूताऽ–प्यागमः किञ्च रोदिपि ॥ वृत्तान्तं साऽथ तं पुत्र्याः । सर्वमामूलतोऽवदत् ॥१६॥ तमाकर्ण्य नृपः खेदा–दुदस्राक्षः स्वसुः पतिं ॥ निनिन्द कौलधर्माणं । मन्त्र्यादींश्च चट्टक्तिकान् ॥१७॥ स धैर्यमवलंब्याऽथ । स्वसारं स्नेहतोऽवदत् ॥ मा विपीदः स्वसरिति । कर्मैवाऽत्राऽपराध्यति ॥ १८ ॥ यदुक्तं—नित्यं नियत्याः परवत्यशेषः । कः संविदानोऽप्यनुयोगयोग्यः ॥ अचेतना सा च न वाचमर्हे–द्वक्तानुवक्तश्रमकर्म भुङ्क्ते ॥ १९ ॥ तथाप्यवसरोपायौ । भाप्याऽयं शिक्षयिष्यते ॥ दर्पान्मे स्वसृ[1]जामेय्यो–र्य एवं स्माऽपराध्यति ॥ २० ॥ सर्वतः शोधयिष्यामि ।

[1] भाषायां भागेजी अत्र कर्मणि स्म योगे पष्ठीद्विर्वचनम्

चानयिष्यामि जामिजां ॥ प्रगुणीकारयिष्यामि । ब्रह्मवैश्रवणेन ताम् ॥ २१ ॥ कोऽसाविति तया प्रोक्ते । तद्वृत्तान्तं नृपोऽवदत् ॥ घनोश्च प्रगुणीकारे । विस्मयाऽऽनन्ददायिनम् ॥ २२॥ प्रागुण्यं भ्रातृजस्याऽथ । श्रुत्वा स्नेहात्सविस्मया ॥ आनन्दं प्राप हर्षोत्का । पुत्रीदुःखं व्यसस्मरत् ॥ २३ ॥

राज्योऽथ भोगवत्याद्याः । प्रणेमुस्तां सगौरवं ॥ सापि चालिङ्गनाशीर्भिः । प्रेम्णा ता अप्यपिप्रिणत् ॥२४॥ अथो सुखासनारूढां । स्वसारं सपरिच्छदां ॥ स्वावासे भूधवोऽनैषीत् । सगौरवमहोत्सवम् ॥ २५ ॥ ततो विजयसुंदरं सा । प्रणम्रं भ्रातृजं निजं ॥ शिरस्याघ्राय सस्नेहं । नानाशीर्भिरमूमुदत् ॥ २६ ॥ चक्रे वर्द्धापनं चाऽस्य । मणिमुक्ताफलादिभिः ॥ न्युञ्छनानि च कुर्वाणा कुलभाग्यादि तुष्टुवे ॥ २७ ॥ ब्रह्मवैश्रवणस्याऽपि । चक्रे वर्द्धापनादि सा ॥ गुणैः परोपकाराद्यैः । स्तुवती तं मुहुर्मुहुः ॥ २८ ॥ संप्रीण्य स्वजनान् सर्वान् । निजपैत्र्यकुलानुगान् ॥ आलापाद्यैर्यथार्हं सा । तस्थौ भ्रातृगृहे सुखम् ॥ २९ ॥ ब्रह्मवैश्रवणस्याऽथ । विप्रीरूपामियं प्रियां ॥ दर्शं दर्शं स्फुरत्स्नेहात् । पार्श्वे चाऽतिष्ठिपद्बहु ॥३०॥ प्रीणाति प्रेमवार्त्ताभिः । स्वाम्बा तामुपलक्ष्य सा ॥ तां चाऽन्यरूपधात्रीं सा । नोपलक्षयति प्रसूः ॥ ३१ ॥

अथ नैमित्तिकं घनोः । स्वरूपं प्रोक्तपूर्विणं ॥ जामेय्याः शुद्धिमप्राक्षी-द्राजाहूय सगौरवम् ॥३२॥ स निमित्तवशाचाख्य-त्सधवा सा महर्द्धिभृत् ॥ कालेन कियताऽत्रैव । सुखिताऽऽत्मा मिलिष्यति ॥ ३३ ॥ अधिकं च न जानामि । तं सत्कृत्य विसृज्य च ॥ राजा तदुक्तमाचख्यौ । भगिन्यै साऽप्यमोदत ॥ ३४ ॥ नरानुद्यमिनः क्ष्माभृत् । प्रेष्य सर्वासु दिक्ष्वथ ॥ नानादेशपुरग्राम-

सरःशैलवनादिषु ॥ ३५ ॥ दूतांश्च सर्वगान् प्रेष्या[1]-वरोधेष्वपि भूभुजां ॥ प्रेम्णा सर्वप्रयत्नेन । स्वां जामेयीमशोधयत् ॥ ३६ ॥ लेभे नास्याः पुनर्भूपः । शुद्धिमात्रमपि क्वचित् ॥ तटस्थेऽपि यदज्ञानं । छद्मस्थेष्वपराध्यति ॥ ३७ ॥ ब्रह्मवैश्रवणश्चाऽपि । शोधनं न न्यषेधयत् ॥ कोलशिक्षां विना नावि-र्भविष्यामीति सन्धया ॥ ३८ ॥

अथ वैदेशिकः कश्चि-त्स्वाऽर्हसर्वपरिच्छदः ॥ तत्राऽऽययौ नटोऽन्येद्यु-र्भृशं बिभ्रत्कलामदम् ॥ ३९ ॥ विज्ञो जयति मां नाट्य-कलया यो जगत्यपि ॥ तस्य दासो भवाम्येष । प्रतिज्ञां ख्यापयन्निति ॥ ४० ॥ नीरचारी नृपावासद्वारे दर्पान्मुमोच सः ॥ नृपोऽवादीत्सकृन्नृत्य । ज्ञायते येन ते कला ॥ ४१ ॥ नृत्यन् सूच्यासिकुन्ताग्रा-दिषु विज्ञानलीलया ॥ विविधैः करणैश्चाऽयं । सभां सर्वामरञ्जयत् ॥ ४२ ॥ कुर्वन्नभिनयं वीर-चरित्राणामनेकधा ॥ पुष्यन्नवरसांश्चक्रे । सदस्यांस्तन्मयानयम् ॥४३॥ नाट्यान्ते च महादानं । नृपाद्याः प्रीणिता ददुः ॥ विस्मिताः प्रशशंसुश्च । भृशं सर्वेऽपि तत्कलाम् ॥४४॥ मुखमोटनकं चक्रे । ब्रह्मवैश्रवणः पुनः ॥ भ्रूभङ्गादिषु वैतथ्यं । यथास्थानं प्रदर्शयन् ॥ ४५ ॥

जगाद नरनाथोऽथ । स्वनटादीन् विलोकयन् ॥ यो नृत्येन जयत्येनं । कोऽपि सोऽस्ति पुरेऽपि मे ॥ ४६ ॥ सन्ति राज्ञो विचित्राऽऽस्ते । नटाद्या नाट्यवेदिनः ॥ परं जेतुमशक्तास्तं । सर्वे तस्थुरधोमुखाः ॥४७॥ ब्रह्मवैश्रवणोऽथाऽवक् । राजन् काऽस्मिन् कला नटे ॥ लीलयाऽपि जयाम्येनं । यदि दत्से परिच्छदम् ॥४८॥ व्याहरन्नृपतिः स्वैरं । गृहाण पुरुषस्त्रियः ॥ पेटकेभ्यो नटादीनां । शिक्षयेश्च मदाज्ञया ॥ ४९ ॥ कुमारोऽप्यवदत्तर्हि । करिष्ये सप्तमेऽहनि ॥ नाट्यं तादृग् यतः सद्यो । मदोऽस्य व्यपया-

१ अन्तःपुरेषु

स्यति ॥ ५० ॥ तत्प्रतिज्ञामिति श्रुत्वा । नटः सोऽप्यह्नि सप्तमे ॥ आगमादि प्रतिज्ञाय । विसृष्टो भूभुजाऽगमत् ॥ ५१ ॥ कुमारोऽपि नटादीनां । पेटकेभ्यः परीक्षया ॥ गृहीत्वा कतिचिद्धूनो । युवतीश्च महामतीन् ॥ ५२ ॥ कृत्वा सद्यः कविः सौव–चरित्रस्यैव वाचकं ॥ अध्याप्य नाटकं सम्यक् । शिक्षयित्वा च तत्कलाम् ॥ ५३ ॥ मेलयित्वा च सामग्रीं । ज्ञापयित्वा च भूभुजः ॥ कर्त्तुं सर्वोत्तमं नाट्य–मुपतस्थेऽह्नि सप्तमे ॥ ५४ ॥ राजाप्यासनमध्यास्त । विपुले रंगमंडपे ॥ राजवर्ग्यान्महेभ्यादीन् पौरांश्चाह्वन्नटं च तम् ॥ ५५ ॥ सच्छिद्रकजवन्यंत–र्ललनाश्चाऽप्याऽतिष्ठिपत् ॥ स्वसृपत्नीकनीमुख्या–श्छिद्रैर्नाट्यावलोकिनीः ॥ ५६ ॥

सभायामिति पूर्णायां । कौतुकाकुलचेतसि ॥ कुमारो नाट्यमारेभेऽपूर्वरंगादिपूर्वकम् ॥ ५७ ॥ नटीस्थानस्थितां पत्नीं । पात्राणि विविधानि च ॥ भूमिकासु विचित्रासु । प्रयुञ्जानो यथाविधि ॥ ५८ ॥ मृदंगवंशवीणादि–चित्रातोद्यनिनादभृद् ॥ मधुरध्वनिगंधर्व–गीताऽऽरावमनोहरम् ॥ ५९ ॥ विचित्रकरणाऽऽकीर्णं । सम्यक्तालल्यानुगं ॥ कुर्वन्मायावटुर्नाट्यं । स्ववृत्तमभिनिन्यिवान् ॥ ६० ॥ तथाहि—विजयपुरे जयविजयौ । भूपौ प्रथमस्य सिंहसारोऽभूत् ॥ तनयः परस्य जज्ञे । यथागुणी श्रीजयानन्दः ॥ ६१ ॥ केवलिपार्श्वे धर्म–प्रतिपत्तिर्निशि गिरौ यथा चाऽऽसीत् ॥ देशान्तरे च गमनं । विद्याध्ययनं विशालपुरे ॥ ६२ ॥ उद्वाहो नृपकन्यायाः । पल्ल्यां गिरिमालिनीप्रबोधश्च ॥ कनकपुरे द्यूतं नृप–कन्यापरिणयनरेल्लणीबोधौ ॥ ६३ ॥ गीतिः ॥ शूकरयुद्धं तापसप्रति–बोधस्ततसुताकरग्रहणं ॥ युधि मलयमालविजयो । महौषधीदानरत्नपुरगमनम् ॥ ६४ ॥ नाट्यं रतिसुन्दर्याः । करग्रहो भिल्लरूपकरणादि ॥ इत्याद्यखिलमदीदृश–दभिनयविधिना यथास्थितं स बटुः ॥ ६५ ॥ गीतिः ॥ ततः पद्मपुरे भिल्ल–रूपेण नृपकन्यकां ॥ परिणिन्ये यथा देव–कुले सा च यथान्धिता ॥ ६६ ॥ औषध्या च यथा चक्रे । तां पुनर्नवलोचनां ॥ तथैवाऽभिनयं सर्वं । स यथास्थमदीदृशत् ॥ ६७ ॥

परं निजप्रियामातु-स्तदेकन्यस्तदृक्तया ॥ तन्नाटयं जवनीछिद्रैः । पश्यन्त्या भ्रान्तिहेतवे ॥ ६८ ॥ चक्रे पद्मपुराद्याह्व-परावर्त्तमयं यथा ॥ अस्ति भोगपुरे भोग-दत्तो नास्तिकभूपतिः ॥ ६९ ॥ सुदामा सुभगा कन्ये । सुजयाविजयोद्भवे ॥ आद्याऽदायि नरेन्द्राय । क्रुधा भिल्लाय चाऽपरा ॥ ७० ॥ परावर्त्तेऽपि चाऽऽह्वानां । यथार्थेऽभिनये सति ॥ उपभिल्लं सुतां वीक्ष्य । सम्यग् विजयसुन्दरीम् ॥७१॥ भृशमुज्जागरस्नेहा । भाग्याद् दृष्टाऽस्यहो सुते ॥ इत्यादिवादिनी काण्ड-पटान्निर्गत्य सत्वरम् ॥ ७२ ॥ तस्याः कण्ठे विलग्योच्चै-र्यावद्रोदिति दुःखतः ॥ औषध्या ब्राह्मणीं चक्रे । तावन्मायाबटुः प्रियाम् ॥ ७३ ॥ तां जगाद च किं मात-र्भ्रान्ताऽस्येषा हि मे प्रिया ॥ सुभगा भूमिकायुक्ता । न पुनस्तनया तव ॥ ७४ ॥ न हि नाटये कृतं रूपं । सम्यग्भवति किञ्चन ॥ ततः खेदाद्भुतव्रीडा-व्याकुला तां मुमोच सा ॥ ७५ ॥ दध्यौ च तनयैषा मे । किं स्याद्रूपान्तरस्थिता ॥ मम स्नेहोऽधिको ह्यस्यां । लसत्यादर्शनादपि ॥ ७६ ॥ किं वा प्रिया द्विजस्याऽस्य । ज्ञास्यते चाऽग्रतोऽखिलं ॥ इति ध्यात्वा तथैवैषा । पुनर्नाटयं व्यलोकत ॥७७॥ सोऽपि चक्रे देवकुले । सुभगासज्जनावधि ॥ बटुः साभिनयं नाटयं । विरराम ततस्ततः ॥७८॥ ततः सर्वसदस्यानां । विशेषाऽऽश्चर्यहेतवे ॥ भल्लाग्रन्यस्तसूच्यग्र-पुष्पोपरि ननर्त्त सः ॥ ७९ ॥ सोऽपि मायाबटुर्नाटये । यं पुपोष रसं यदा ॥ तदा तन्मयतां प्राप-दवेद्यान्तरवेदनाम् ॥ ८० ॥ भ्रूभंगादि न तन्नाटये । वितथं सूक्ष्ममप्यहो ॥ अलक्षि दक्षिणैः क्वाऽपि । निष्कलंका हि तत्कला ॥ ८१ ॥ अगृह्णति बटौ किञ्चि-न्नृपमंत्र्यादयो ददुः ॥ पेटकेभ्यो नटादीनां । महादानानि विस्मिताः ॥ ८२ ॥ पुरः कलावतस्तस्य । सर्वानपि कलावतः ॥ सर्ववारिनिधेरग्रे । कूपानिव च मेनिरे ॥ ८३ ॥

ततस्तस्य बटोर्नाटय-कलयाऽथ चमत्कृतः ॥ प्राग्नटः स्वं जितं मत्वा । पादयोः पतितोऽवदत् ॥८४॥ दासोऽस्म्येष तव ब्रह्म-न्नाप्राणा-

त्तपरिच्छदः ॥ हिमवद्धानुभिर्भानो–रगलन्मे कलामदः ॥८५॥ वटुर्जगाद कोऽर्थो मे । ब्रह्मणः किङ्करैर्नटैः ॥ स्थानं याहि न यद्विश्वे–ऽधिकाऽधिककलाः किमु ? ॥८६॥ ततोऽगात्स्वपदं हृष्टो । विसृष्टः क्ष्माभृता नटः ॥ विसृज्य पर्षदं राजा–ऽप्राक्षीत्तं कमलान्वितः ॥८७॥ ब्रह्मन्नृपाङ्गजः कोऽयं । त्वं यस्याऽभिनयं व्यधाः ॥ स च देवकुलात्प्रात–र्भिल्लोऽगात्सप्रियः क्व च ॥ ८८ ॥ व्याजहार बटुः पृथ्व्यां । सप्रियः कौतुकादहं ॥ कुर्वन् विचित्रनाट्यानि । प्रापं भोगपुरेऽन्यदा ॥ ८९ ॥ तत्र स्थानांतराऽभावा–न्निशि देवकुले वसन् ॥ मिथो विलक्षणे वाढं । वीक्ष्य तस्मिंश्च दम्पती ॥ ९० ॥ सचित्रो भिल्लमप्राक्षं । कुरूपस्याऽपि ते कथं ॥ ईदृग्देवांगना-रूपा । प्रियेति वद मित्र! भोः ॥९१॥ ततः सोऽवक् चरित्रं स्वं । यादृक् तत्राऽऽगमावधि ॥ तत्तादृक् स्वहृदि न्यास्थं । चित्र-कृन्नाद्रियेत कः ? ॥९२॥ स चाऽहं च ततोऽस्वाप्स्व । सप्रियौ सुखनिद्रया ॥ न जाने प्रातरुत्थाय । सपत्नीकोऽगमत् क्व सः ॥९३॥ अहं श्रान्ततया सुप्तो । गते तस्मिन्नजागरं ॥ सप्रियश्चलितः प्रातः । क्रमाद् भ्राम्यन्निहागमम् ॥ ९४ ॥ चरित्रं चित्रकारित्वा–दभ्यनैषं च संप्रति ॥ तस्यैवं विदितं याव–दग्रतो वेत्ति सैव तु ॥ ९५ ॥

श्रुत्वेति दध्यतुः क्ष्माभृत् । कमला च सविस्मयौ ॥ नाऽहो रूपानुसार्यस्य । दानलीलाधनादि तत् ॥ ९६ ॥ किमयं विप्र-रूपेण । दृश्यते भिल्ल एव सः ॥ किं वा सम्यग् द्विजः कोऽपि । गहनं ह्यस्य चेष्टितम् ॥ ९७ ॥ विप्रीरूपा त्वियं सैव । किं स्या-द्विजयसुन्दरी ॥ अन्या वा काऽपि को वेत्ति । चरित्रं हि कलावताम् ॥ ९८ ॥ एतौ वा भवतां यौ वा । तौ वा ज्ञातमिदं पुनः ॥ केनाऽपि सत्कलाभाग्य–निधिना नृपसूनुना ॥९९॥ उपयेमेऽन्यरूपेण । ध्रुवं विजयसुन्दरी ॥ सुखिता दिव्यनेत्रा चा–स्तीति हर्षो-ऽद्भुतो हि नौ ॥ १०० ॥ ज्ञास्यते चाग्रतोऽप्यस्मिन् । बटावत्रैव तस्थुषि ॥ कन्यादानेन तत्स्थाप्यः । प्रतिज्ञाऽपीति पूर्यते ॥१॥

इत्यालोच्य बटुं साह । राजा ब्रह्मन्! कला तव ॥ अपूर्वा काऽपि या पृथ्व्यां । न दृष्टा न श्रुता क्वचित् ॥२॥ एकयाऽपि त्वया नाटच–कलया राज्यमद्य नः ॥ विज्ञानिसंपदा सर्व–राज्येष्वारोपि सून्नतिम् ॥ ३ ॥ द्वासप्तत्या कलाभिस्ते । जगद्भासयतोऽभितः ॥ शशलक्ष्मा समः किं स्यात्? । षोडशैव कला दधत् ॥४॥ ततः स्थातव्यमत्रैव । त्वया मित्र! मदन्तिके ॥ सर्वेष्टदर्शनेभ्योऽपि । दर्शनं ह्यतिशायि ते ॥ ५ ॥ ओमिति प्रतिपेदाने । तस्मिन् स्वं स्वं प्रहर्षुलाः ॥ ययुर्भूपादयो धाम । मुखरास्तत्कलास्तवैः ॥ ६ ॥ तदादि वर्द्धमानेन । प्रेम्णा तां च बटुप्रियां ॥ कमलाऽस्थापयत्पुत्री–मिवोपस्वं विशेषतः ॥ ७ ॥ प्रीत्याऽऽलापादिभिः सा च । तया सह तथाऽतुषत् ॥ यथा सुधारसाऽऽस्वाद–राज्यलाभादिभिर्न तु ॥ ८ ॥ प्रोचे धात्रीमथान्येद्युः कनी कमलसुन्दरी ॥ तमेव रमणीयन्ती । बटुं तन्नाटचरञ्जिता ॥ ९ ॥ मातर्दत्ते किमस्मै मां । द्विजायाऽद्यापि नो नृपः ॥ प्रतिज्ञातार्थनिर्वाहे । संतो हि चिरयन्ति न ॥ १० ॥ श्रुत्वेत्याख्यत्तदम्बा भू–भुजे सोऽप्यजरीहृषीत् ॥ आशयं तनयायास्तं । विज्ञाय स्वाशयाऽनुगम् ॥ ११ ॥ अन्येद्युर्मन्त्रिसामंत–श्रेष्ठिसेनेश्वराऽऽदिभिः ॥ समाजे भूषितेऽध्यास्त । स्वर्णसिंहासनं नृपः ॥ १२ ॥ ब्रह्मवैश्रवणश्चाऽपि । मान्यः सर्वसभासदां ॥ आसांचक्रे नृपासत्तौ । प्रदायाऽऽशिषमासने ॥ १३ ॥ तमथोचे नृपो ब्रह्मन्! । पाणौ कुरु मदङ्गजां ॥ रूपेणाऽप्सरसां जैत्रीं । समग्रगुणशालिनीम् ॥१४॥ प्रतिजानीहि तद्दानं । सज्जयाश्वक्रुषे सुतम् ॥ भूमिमेर्वादिवत्संधा । न चलत्येव यत्सताम्॥१५॥ बटुरूचे पुराऽप्यस्ति । विप्री मे धान्यरन्धनी ॥ अधिका तु न सामान्य–जनानां युज्यते प्रिया ॥ १६ ॥ मदनस्य कथां श्रुत्वा । कः क्रियाद्वल्लभाद्वयं ॥ कोऽसाविति नृपेणोक्ते । विप्रः प्रोचे च तत्कथाम् ॥ १७ ॥

**शुद्धज्ञानक्रियाभ्यां यः प्राप्य मोहजयश्रियं ॥ परां ज्ञानरमां लेभे । तस्मै सर्वविदे नमः ॥ १८ ॥**

अर्थयन्तेऽङ्गिनः शर्मा-म्यर्थ्यमक्षयमेव तत् ॥ परमैकांतिकात्यन्तं । निरूपाख्याऽनुपाधिजं ॥ १९ ॥ कामजे विपरीतेऽस्मा-द्रमन्ते दुर्धियः सुखे ॥ न मतं कृतिनामेतत्तद्धि स्त्रीमुख्यसाधनम् ॥ २० ॥ स्त्रियश्च कुटिलाः क्रूराः । परिणामेऽतिदुःखदाः ॥ मदनो धनदेवश्च । दृष्टान्तोऽत्र निशम्यताम् ॥ २१ ॥ स्त्रीणां दुश्चरितं दृष्ट्वा । भोगेभ्यो विरमंति ये ॥ ते स्युः श्रेयःश्रियां पात्रं । तावेवाऽत्र निदर्शनं ॥ २२ ॥ तथाहि भरतेऽत्रैव । सन्निवेशे कुशस्थले ॥ समभून्मदनो नाम । [1]श्रेष्ठी मदनरूपभाक् ॥ २३ ॥ [2]तस्य चण्डाप्रचण्डाह्वे । यथार्थाख्ये स्वभावतः ॥ अभूतां मदनस्येव । रतिप्रीती इव प्रिये ॥ २४ ॥ क्रमाच्चण्डाप्रचण्डाह्वे । पत्युः प्रेमास्पदं भृशं ॥ मिथश्च कलहायेते । ते यैस्तैरपि कारणैः ॥ २५ ॥ भृशं कोपाभिमानाभ्यां । निषिद्धे च न तिष्ठतः ॥ प्रचण्डां निकटग्रामा-न्तरे सोऽस्थापयत्ततः ॥ २६ ॥

कृत्वाऽऽज्ञां नियमं चैकै-कस्यास्तिष्ठत्ययं गृहे ॥ अन्यदा तु प्रचण्डाया । गृहे केनाऽपि हेतुना ॥ २७ ॥ स्थित्वैकमधिकं घस्रं । चण्डायाः स गृहेऽगमत् ॥ खण्डयन्ती कणान् साऽपि । तमागच्छन्तमैक्षत ॥ २८ ॥ युग्मं ॥ ततः सा मुशलं तस्या-भिमुखं प्राक्षिपत्क्रुधा ॥ इष्टा दुष्ट! प्रचण्डा ते । किमत्रैषीति वादिनी ॥ २९ ॥ तद्वीक्ष्य व्याकुलो भीत्या । स नंष्ट्वा कियतीं भुवं ॥ यावद्विलोकते पश्चा-त्तावत्तत्सर्पमैक्षत ॥ ३० ॥ धावमानं च तं दृष्ट्वा । स्फटाऽऽटोपभयङ्करं ॥ द्रुतं विशिष्य नंष्ट्वा स । प्रचण्डाया गृहेऽगमत् ॥ ३१ ॥ तं तथा वीक्ष्य साऽप्याख्यद् । भीतिश्वासाकुलः कथं ॥ प्रिय! सत्वरमत्रागा-श्चण्डावृत्तं च सोऽप्यचक् ॥ ३२ ॥ सावदद्भव तत्स्वस्थो । नैतत्किञ्चिद्भयावहम् ॥ तावद्भुजङ्गमो रौद्र-स्तद्गृहांगणमागमत् ॥ ३३ ॥ तं च वीक्ष्य क्रुधा साऽपि ।

---

१ रूपाभ्यांकुलपुंगवः ॥ २३ ॥  २ बाल्यादपि कुतोऽप्यासबहुविद्याबलाऽन्विते तस्याऽभूतामुभे रूपाद्रतिप्रीती इव प्रिये *प्रत्यन्तरे

शरीरोद्वर्त्तनोद्भवान् ॥ पिण्डानभ्यक्षिपत्सद्य । [1]बभ्रुभूतैश्च तैरहिः ॥ ३४ ॥ न्यघाति खण्डशः कृत्वा । मदनश्च चमत्कृतः ॥ गतेषु बभ्रुषु क्वाऽपि । दध्यौ नानारसाकुलः ॥ ३५ ॥ युग्मं ॥ चण्डाकोपात्प्रणष्टस्य । प्रचण्डा मे शरण्यभूत् ॥ कोपिष्यति यदैषाऽपि । तदा कः शरणं पुनः ॥ ३६ ॥

प्रियकारिण्यपि प्रायो । न कुप्यति कदापि यः ॥ दुर्लभोऽसौ भुवीदृक्कु–योषा क्रोत्स्यति नो कथम्? ॥ ३७ ॥ राक्षस्यौ तदिमे त्यक्त्वा । यामि देशांतरे क्वचित् ॥ त्याज्यं सोपद्रवं राज्य–मप्यात्मकुशलाय यत् ॥ ३८ ॥ इति ध्यात्वा रहोऽन्येद्यु–र्गृहीत्वा स्वं धनं बहु ॥ निर्ययौ मदनो देशा–न्तरे भ्रमति चेच्छया ॥ ३९ ॥ कियद्भिर्वासरैः सोऽथ । दिवो जैत्रं निजश्रिया ॥ संकाशपुरमागत्यो–द्यानेऽशोके व्यशंश्रमीत् ॥ ४० ॥ तावत्तत्रेयुषा भानु–दत्तेन श्रेष्ठिनोच्यत ॥ मदन! स्वागतं ते भो । एहि यावो निजं गृहम् ॥ ४१ ॥ स्वनामग्रहणाऽऽह्वाना–दिभिरेष चमत्कृतः ॥ सह तेनाऽगमत्तस्य । मन्दिरं सुन्दरं श्रिया ॥४२॥ श्रेष्ठी विधाप्य तं स्नान–भोजनादि सगौरवं ॥ पुरस्कृत्याऽङ्गजां पाणौ । कुरुष्वेमां जगाविति ॥ ४३ ॥ सोऽपि तां पक्वबिम्बोष्ठीं । चन्द्रास्यां पद्मलोचनां ॥ रूपेणाऽतिरतिं वीक्ष्य । श्रेष्ठिनं विस्मितोऽवदत् ॥४४॥ कथं जानासि मे नाम? । किं करोपि च गौरवं? ॥ अज्ञातकुलशीलस्य । किं च दत्से सुतां निजाम्? ॥४५॥ श्रेष्ठ्यवोचचतुर्णां मे । पुत्राणामुपरीप्सिता ॥ सुता विद्युल्लताह्वैषा । जज्ञे नानोपयाचितैः ॥ ४६ ॥ प्राणेभ्योऽपि ममाऽभीष्टा । पाठिताः सकलाः कलाः ॥ यौवनस्था यदा साऽभूत् । तदैवं हृद्यचिन्तयम् ॥ ४७ ॥ देया वराय कस्मैचित् । पुत्रीयं लोकरीतितः ॥ न वियोगमहं चाऽस्याः । सोढुं क्षणमपि क्षमे ॥ ४८ ॥

---

१ नकुलभूतैः

एवं चिन्तातुरं ह्यो मां। निर्निद्रं शयितं निशि ॥ आगत्य कुलदेव्यूचे। वत्स! चिन्तां करोपि किम्? ॥४९॥ प्रातरेतत्पुरोद्याने। किङ्किल्लिक्ष्मारुहस्तले ॥ मदनं प्राच्ययामान्ते। कन्यार्हं लप्स्यसे वरम् ॥५०॥ विशुद्धकुलजाताय। तस्मै सर्वगुणाऽऽत्मने ॥ देयाः कन्यां स च स्थाप्यः। स्वौकसेवाऽवियुक्तये ॥ ५१ ॥ इत्युक्त्वा देव्यगादद्य। तद्वचःकारकोऽप्यहं ॥ तदादेशाद्ददे पुत्री–मिमां परिणयस्व तत् ॥ ५२ ॥ त्यक्तपूर्वकलत्रेण। कियन्तं समयं मया ॥ वण्ठेनेव क्व च स्थेय–मेककेन प्रियां विना ॥ ५३ ॥ इदृग् च देवताऽऽदिष्टा। दुष्प्रापाऽपि ममाऽभवत् ॥ सुप्रापा भाग्ययोगेन। मनोविश्रामभूः कनी ॥५४॥ तदेतां परिणीयाऽत्र। तिष्ठामि धन-भोगयुक् ॥ इति ध्यात्वा प्रपेदे त–न्मदनः श्रेष्ठिनो वचः ॥ ५५ ॥ ततः श्रेष्ठी विवाह्यैतां। तेन हर्षोत्सवाद्वयात् ॥ ददे तस्मै धनं गेहो–पस्करं च प्रमातिगम् ॥ ५६ ॥ आवासे श्रेष्ठिना दत्ते। मदनोऽपि नवोढया ॥ तया सस्नेहया साकं। भुङ्क्ते भोगान् यथा-रुचि ॥ ५७ ॥ भोगा यद् यत्र तत्राऽपि। भवन्त्याऽऽकस्मिका नृणां ॥ पुण्यस्यैव प्रभावोऽयं। ततः कुरुत तज्जनाः! ॥ ५८ ॥

एवं सुखमये याते। समयेऽस्य कियत्यथ ॥ आगाद्वियोगिनीकालो। वर्षाकालोऽन्यदा क्रमात् ॥ ५९ ॥ तस्मिन्निश्यन्यदा कान्तं। स्मृत्वा स्मरवशां वशां ॥ वियुक्तां रुदतीं काञ्चित्। स गवाक्षस्थितोऽशृणोत् ॥ ६० ॥ दध्यौ चैपा कथा भर्त्तु–र्वियोगात्स्मरपीडिता ॥ रोरुदीति तथा मन्ये। नारीभिः सोऽतिदुस्सहः ॥ ६१ ॥ ततो ये द्वे मया मुक्ते। प्रियस्नेहवशे चिरं ॥ स्मृत्वा मां ते स्मरार्त्तर्ये। कथमद्य भविष्यतः ॥ ६२ ॥ कथंचित्तत्सकृद्गत्वा। चिरादाश्वासयामि ते ॥ विशिष्याऽनपराधां च। प्रचण्डा-मुपकारिणीम् ॥ ६३ ॥ इति स्मृत्वा प्रियायुग्म–वियोगभवदुःखतः ॥ अमुञ्चदश्रुधारां स। वाससा लोचनेऽस्पृशत् ॥ ६४ ॥ तं च विद्युल्लताऽद्राक्षीत्। क्षुब्धाऽप्राक्षीच हे प्रिय! ॥ उदितं रुदितं किं ते–ऽधुनैवाऽऽकस्मिकं हहा! ॥ ६५ ॥ अवदन्नपि तद्धेतुं। निर्बन्धे

तु कृतेऽवदत् ॥ सर्वं व्यतिकरं पूर्व-पत्न्योस्तत्स्मरणादि च ॥ ६६ ॥ यद्येवं न हि किं तत्र । गत्वा नाऽश्वासयस्यमू ? ॥ तयेत्युक्ते-ऽवदत्सोऽपि । यदि त्वमनुमन्यसे ॥ ६७ ॥ तदा यामीति सा श्रुत्वा । स्त्रीस्वभावाद्भृशेर्ष्यिता ॥ दध्यौ कुर्वेऽस्य शुश्रूषां । सर्वां दासीव सर्वदा ॥६८॥ विनयाऽतिक्रमात्स्नेह-प्रातिकूल्यं कदापि च ॥ नर्मणाऽपि गिरा वाऽपि । काऽपि नाऽण्वप्यदीदृशम् ॥ ६९ ॥ तथाप्येष स्मरत्यद्य । प्राक्पत्न्योस्तादृशोरपि ॥ नाऽहं स्मरव्यथां पृथ्वीं । सोढुं क्षणमपि क्षमे ॥ ७० ॥ कालः स्मरसखश्चाऽयं । विलोलजलदावलिः ॥ ततो विस्मारयाम्येनं । कालक्षेपं विधाय ते ॥७१॥ विचिन्त्येत्यवदत्साऽथ । प्रिय ! प्रावृषि संप्रति ॥ विषमा गिरिवाहिन्यः पन्थानः पङ्कदुर्गमाः ॥ ७२ ॥ ततः प्राप्ते शरत्काले । प्रवासं कर्तुमर्हसि ॥ ततस्तस्थौ तदुक्त्या सः । कामी हि स्त्री-वचोवशः ॥ ७३ ॥ प्रावृषं गमयामास । यथाभोगसुखं स च ॥ गन्तुमापृच्छतैतां तु । दृष्टुमुत्कंठुलः प्रिये ॥ ७४ ॥ साऽपि किञ्चि-द्विचिन्त्याऽऽशु । तं गन्तुं चाऽन्वमन्यत ॥ करम्बं चाग्रिमं कृत्वा । शम्बलं प्रचुरं ददौ ॥ ७५ ॥

तदाऽऽदायाऽथ सोऽचालीद् । ग्राममेकमवाप्तवान् ॥ मध्याह्ने तत्सरस्तीरे । विशश्राम तरोस्तले ॥ ७६ ॥ स्नात्वा देवगुरून् स्मृत्वा । भोक्तुं चेच्छन्नचिन्तयत् ॥ यदि प्रदायाऽतिथये । भुञ्जे स्यात्तद्विवेकिता ॥७७॥ यान्तं देवकुलात्तावद् । ग्रामान्तर्भैक्ष्य-हेतवे ॥ कञ्चिज्जटाधरं दृष्ट्वा । स निमन्त्रितवान्मुदा ॥ ७८ ॥ यथाश्रद्धं ददौ तस्मै । [1]दानशौण्डः करम्बकं ॥ क्षुधितः सोऽपि तत्रैव । द्राग् भोक्तुमुपचक्रमे ॥ ७९ ॥ भुङ्क्ते च मदनो याव-त्तावत्कश्चित्क्षुतं [2] व्यधात् ॥ मत्वाऽपशकुनं तच्च । प्रत्यैक्षिष्ट क्षणं सुधीः ॥ ८० ॥ तावद्भुक्त्वा करम्बं त-[3]मूरणः स तपस्व्यभूत् ॥ प्रचचाल च संकाश-नगराभिमुखं द्रुतम् ॥ ८१ ॥ मदनस्तं

१ बहुप्रदः २ भाषायां ' छींक ' ३ भाषायां घेटो

तथा वीक्ष्या-ऽभोक्षं चेत्तं करम्बकं ॥ अभविष्यं ततो नून-महमप्येवमूरणः ॥८२॥ दयादानमहिम्नाऽस्या । विपदस्त्वस्मि रक्षितः ॥ विचिन्त्य चेति यात्येष । क्वेत्याश्चर्यात्तमन्वगात् ॥ ८३ ॥ युग्मं ॥ जवाद् द्वावपि तौ यान्तौ । संकाशपुरमीयतुः ॥ गेहे विद्युल्लतायाश्च । प्राविशद् द्रुतमूरणः ॥ ८४ ॥ को वृत्तान्तो भवेदस्ये-तीक्षितुं [1]गृहतो बहिः ॥ रहः क्वाऽपि स्थितः सम्यक् । पश्यतीमं सविस्मयः ॥ ८५ ॥

विद्युल्लताऽथ तं स्वौकः । प्राप्तं वीक्ष्योरणं क्रुधा ॥ पिधाय सत्वरं द्वारं । दण्डेनाऽताडयद् दृढम् ॥ ८६ ॥ त्यक्त्वा निरपराधां मां । सापराधे अपि प्रिये ॥ रेरे रमयितुं यासि ? । न व्यरंसीचिरादपि ॥८७॥ मुशलं किमु मे नास्ति ? । परं तेन न हन्म्यहं ॥ भर्तुः प्राणापहारं किं । करोमीति घृणावशात् ॥ ८८ ॥ चण्डाया मुशलाद्भीतः । प्रचण्डां शरणं श्रितः ॥ मया तु हन्यमानस्त्वं । किं नु त्राणं प्रपत्स्यसे ? ॥८९॥ वादंवादमितीमं सा-ऽताडयच्च मुहुर्मुहुः ॥ आरसन्तं च तं श्रावं । श्रावं लोकोऽमिलत्पुनः ॥९०॥ जजल्प किमरे मूढे ! । ताडयसघृणे ! पशुं । बिभेषि हत्यया नाऽस्य । वणिक्कुलभवाऽपि किम् ? ॥ ९१ ॥

ततश्च साप्यसिश्चत्त-मभिमन्त्रितवारिणा ॥ उरणोऽभूद्यथारूपो । भस्माक्ताङ्गो जटाधरः ॥ ९२ ॥ वीक्ष्य तं च जनोऽप्राक्षी-द्रुदन्त ! किमिदं तव ॥ ततः सोऽपि स्ववृत्तान्तं । यथागद्गदमूचिवान् ॥ ९३ ॥ यः खादति करम्बं स । धकुम्बं सहतीति च ॥ तदाद्याभाणको लोका-देष प्रवृत्ते भुवि ॥९४॥ तपस्वी चाऽनशत्सद्यो । भीत्या तरललोचनः ॥ विस्मितोऽगात्पदं लोको । दध्यौ विद्युल्लता ततः ॥ ९५ ॥ धिग्धिग् निरपराधोऽयं । तपस्वी पीडितो मया ॥ न जाने क्व गतो भर्त्ता । मिलिष्यति पुनर्न

---

[1] मदनो °प्रत्यन्तरे

वा ॥ ९६ ॥ शिक्षया तं वशीकृत्य । भोक्ष्ये भोगान् यथारुचि ॥ एवं मनोरथो व्यर्थो । ममाऽभूदधुना किल ॥ ९७ ॥ अभूज्जने ममोद्घाटो । वियोगोऽपि धवेन च ॥ तज्जज्ञे हस्तयोर्दाहः । औत्स्यन्त १पूपकाश्च हा ॥ ९८ ॥

मदनोऽथ निरीक्ष्यैत–द्दध्यौ नानारसाकुलः ॥ अनयाऽनेन वृत्तेन । निर्जिते प्राक्प्रिये मम ॥९९॥ योगिनामप्यगम्यानि । योषितां चरितान्यहो ॥ धिग् धिग् रागान्धितान् जीवान् । राज्यन्ते येऽत्र तास्वपि ॥१००॥ राक्षसीः सर्पिणीर्व्याघ्रीः । क्रौर्यान्नार्योऽतिचक्रमुः ॥ विश्वसन्ति य एतासु । नृरूपाः पशवो हि ते ॥१॥ ततश्चण्डां प्रचण्डां च । त्यक्त्वा विद्युल्लतामपि ॥ करिष्ये स्वहितं येन । संकटाच्छुटितोऽस्म्यतः ॥ २ ॥

ध्यात्वेति मदनो भ्राम्यन् । हसन्तीं नगरीमगात् ॥ श्रिया सर्वपुरीर्जित्वा । हसन्तीमिति सान्वयाम् ॥ ३ ॥ तत्रोद्याने ददर्शाऽभ्र–लिहं चैत्यं हिरण्मयं ॥ प्रविश्य विधिना तत्र । भक्तिहर्षोच्छ्वसत्तनुः ॥ ४ ॥ प्रणम्य तुष्टुवे रात्न–प्रतिमामादिमाऽर्हतः ॥ आलुलोके च चैत्यस्य । स्वर्विमानजितः श्रियम् ॥ ५ ॥ धन्यंमन्यस्ततोऽध्यास्त । मुदितो रङ्गमण्डपं ॥ तावत्तत्राऽगमत्काश्चि–च्चारुवेषाङ्गयौवनः ॥ ६ ॥ नत्वा स्तुत्वा च तीर्थेशं । सोऽपि तत्रैव मण्डपे ॥ दीर्घं दुःखेन निःश्वस्यो–पाविशन्मदनान्तिके ॥ ७ ॥ निःश्वसन्तं च तं प्रेक्ष्य । मदनः स्माह हे सखे! ॥ कस्त्वं किं निःश्वसिष्येवं । दुःखितोऽहमिवाऽसि किम्? ॥८॥ स जगौ धनदेवोऽहं । वणिगत्रैव वासभाक् ॥ दुःखं तु मे कथिष्येऽहं । त्वं च कः किंश्च दुःखितः ॥९॥ अवदन्मदनो मित्र! । दुःखं लज्जाकरं मम ॥ कथ्यमानं भवेन्नूनं । तथाप्येष वदामि ते ॥ १० ॥ यतः साधर्मिकः स्निह्यन् । प्रथमेऽप्यास्ति दर्शने ॥ कथितं तत्प्रबोधाय । भवेच्च

१ पृथुका

प्रायशः सताम् ॥ ११ ॥ ततः कुलस्थलग्राम—वासादारभ्य सोऽखिलं ॥ आख्यद्यथास्थितं वृत्तं । स्वं तत्राऽऽगमनावधि ॥ १२ ॥
अभणद्धनदेवोऽथ । कियन्मात्रमिदं सखे! ॥ शृणोपि मम वृत्तान्तं । यद्यत्याश्चर्यकारकम् ॥ १३ ॥ मदनः स्माह तद् ब्रूहि । श्रोतुमुत्कण्ठुलोऽस्मि यत् ॥ धनदेवस्ततः सौवं [स्वीयं] । वृत्तान्तं वक्ति तद्यथा॥१४॥अत्रैवाऽऽसीन्महापुर्यां। श्रेष्ठी धनपतिर्गुणी ॥ श्राद्ध-धर्मे रतः शुद्धे । द्वेधा लक्ष्मीश्च तत्प्रिया ॥ १५ ॥ नानोपायैरजायेता—मुभयौ तनयौ तयोः ॥ प्रथमो धनसाराह्वो । धनदेवाभि-धोऽपरः ॥ १६ ॥ पाठितौ तौ कलाः सर्वाः । कन्ये च परिणायितौ ॥ सद्धर्मसुखलीनानां । तेषां कालस्त्वगात्कियान् ॥१७॥ ततो विशुद्धधर्मेण । पितरौ स्वर्गमीयतुः ॥ सशोकौ बोधितौ पुत्रौ । मुनिचन्द्रमहर्षिणा ॥ १८ ॥ प्रिये च कलहायेते । मिथः सस्नेहयो-स्तयोः ॥ ततो विभक्तसारौ ता—वस्थातां पृथगोकसोः ॥ १९ ॥ अथो लघीयसो जाया । स्वैरिणी न समाधिकृत् ॥ वीक्ष्याऽन्यदा तमुद्विग्नं । ज्येष्ठोऽप्राक्षीच्च कारणम् ॥२०॥ स्वीकृतं चाऽसमाधान—माह तस्मै ततो लघुः ॥ विज्ञाय तदभिप्रायं । धनसारः प्रय-त्नतः ॥ २१ ॥ भ्रातृस्नेहाद्विलोक्याढ्यां । पुना रूपकलागुणैः ॥ इभ्यजां धनदेवेन । कन्यकां पर्यणीनयत् ॥ २२ ॥ युग्मम् ॥ सोऽभुङ्क्त धृतिमान् भोगां—स्तया सह नवोढया ॥ भाव्यत्वात्स्वैरिणी साऽपि । प्राक्पत्नीव क्रमादभूत् ॥ २३ ॥ यदुक्तं—प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः । सोऽवश्यं भवति नृणां शुभोऽशुभो वा ॥ भूतानां महति कृतेऽपि हि प्रयत्ने । नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥ २४ ॥ अन्यदा धनदेवोऽथ । जिज्ञासुश्चरितं तयोः ॥ जगौ सायं भृशं मेऽद्य । प्रिये! शीतज्वरोऽच्चटत् ॥ २५॥ आस्तृतायां ततश्चाऽऽस्यां । शय्यायां सोऽस्वपद् द्रुतं ॥ माययाऽदीदृशन्निद्रां । वासोभः पिहिते-क्षणात् ॥२६॥ यामान्तं निशि मत्वा तं । निद्राणं घोरशब्दतः ॥कनिष्ठामवदज्ज्येष्ठा । सामग्रीं कुरु हे स्वसः! ॥२७॥ ततो द्राग्गृ-

हक्कृत्यानि । कृत्वा निर्याय ते उभे ॥ आरूढे च गृहोद्यान-सहकारद्रुमोपरि ॥ २८ ॥

निरीक्ष्य धनदेवोऽथ । निर्याते ते रहोऽन्वगात् ॥ चूतस्य कोटरे तस्थौ । वस्त्रेण स्वं बबन्ध च ॥ २९ ॥ मन्त्रे जप्ते ततस्ताभ्यां । नभसोदपतत्तरुः ॥ द्राग्गत्वा चाम्बुधौ रत्न-द्वीपे रत्नपुरे स्थितः ॥ ३० ॥ उत्तीर्याऽस्मात्पुरस्यान्तः । प्राविक्षतां च ते स्त्रियौ ॥ विचित्राणि च चित्राणि । निरीक्षेते यथारुचि ॥३१॥ प्राविशद्धनदेवोऽथ । पुरेऽत्राऽनुसरन्निमे ॥ तयोस्तादृक्चरित्रेण । भृशं चित्रीयमाणहृत् ॥ ३२ ॥ अथाऽत्राऽस्ति निधिः श्रीणां । श्रीपुञ्जः श्रेष्ठिपुङ्गवः ॥ जाता पुत्रचतुष्कोप-र्यस्य च श्रीमती सुता ॥ ३३ ॥ यस्या रूपं निरीक्ष्यैवा-ऽऽकांक्षयाप्यनवाप्तितः ॥ दुःखात्कामः क्षयद्देहो । जज्ञेऽनङ्गः शनैः शनैः ॥ ३४ ॥ विद्याः कलाश्च यां सर्वाः । सस्पर्द्धमिव शिश्रियुः ॥ सौभाग्यैकपदं तादृक् । किलाऽवीक्ष्य पदान्तरम् ॥३५॥ जायमाने तदोद्वाहे । तस्याश्च विविधोत्सवैः ॥ सार्थेशवसुदत्तस्य । पुत्रः सुत्रामलीलया ॥ ३६ ॥ हयारूढश्चलच्चारु-चामरैरुपवीजितः ॥ उत्तमाङ्गधृतस्फार-मायूरातपवारणः ॥ ३७ ॥ देवदूष्यनिभक्षौम-सर्वाभरणभूषितः ॥ उत्सवैः परिणेतुं तां । यावदायाति तोरणे ॥ ३८ ॥ तावदुत्सववीक्षार्थं । मिलितैरमितैर्जनैः ॥ पर्यस्ततोरणस्तम्भः । पपात सहसा तिरः ॥ ३९ ॥ तदग्राच्छीर्षवलिका । निपत्याऽऽस्फोटयच्छिरः ॥ वरस्य स ततश्चाऽभू-न्मर्मघाताद्यमातिथिः ॥४०॥ पंचभिरर्थतः कुलकम् ॥ आकस्मिकमहाशोक-विह्वलः स्वगृहे ततः ॥ आक्रन्दन्नगमत्सद्यः । सार्थपः सपरिच्छदः ॥ ४१ ॥

तत्स्वरूपमिदं श्रेष्ठी । विज्ञाय विधिनिर्मितं ॥ साकं स्वपरिवारेण । विचारमिति निर्ममे ॥ ४२ ॥ प्रारब्धमन्यथा कार्यं । दैवेन विदधेऽन्यथा ॥ को वेत्ति प्राणिनां प्राच्य-कर्मणां विषमां गतिम् ॥४३॥ कन्येयं यदि नाद्यैव । लग्नेऽस्मिन् परिणाय्यते ॥

प्रसिद्धौ तद्भाग्यस्य । जातायां सर्वतो जने ॥ ४४ ॥ सकलङ्कामिमां पुत्रीं । न कोऽपि परिणेष्यति ॥ सर्वोऽपि जीवितं प्राय-श्चिरमिच्छेन्न तु प्रियाम् ॥ ४५ ॥ युग्मम् ॥ वरेण येन केनाऽपि । यथाभाग्यं तदीयुषा ॥ उद्यौवनेन पुत्रीय-मद्यैव परिणाय्यते ॥ ४६ ॥ विचार्यैवं ततः श्रेष्ठी । वरं कश्चिद्विलोकितुं ॥ सर्वतः स्वान् जनान् प्रैषीद् । भ्रमन्तस्ते पुरेऽभितः ॥ ४७ ॥ धनदेवं वराकारं । प्राप्तं तं दृष्टुमुत्सवं ॥ युवानं वीक्ष्य सन्माना-दानयन् श्रेष्ठिनोऽन्तिके॥४८॥ युग्मम् ॥ दृष्ट्वाऽनुरूपं पुत्र्यास्तं । सोऽभ्यर्थ्य च भृशं मुदा ॥ तेन तां सोत्सवं यूना । विधिना पर्यणीनयत् ॥ ४९ ॥ स्वरूपमीदृशं पूर्व-पत्न्योः प्रदद्दशे मया ॥ तत्ते यथा तथा त्याज्ये । वाञ्छता क्षेममात्मनः ॥ ५० ॥ विना पत्नीं न निर्वाहो-ऽतिथिपूजाद्यभावतः ॥ ततः स्वयंवरामेतां । सुरूपां गुणशालिनीम् ॥ ५१ ॥ पित्राऽत्यभ्यर्थनापूर्वं । दीयमानां त्यजामि किं ॥ धनदेवो विचिन्त्यैव-मुपयेमे मुदैव ताम् ॥५२॥

इतश्च तत्प्रिये स्वैरं । क्रीडित्वाऽत्र समागते ॥ श्रुत्वा नव्यप्रकारं तं । विवाहं दृष्टुमुत्सुके ॥ ५३ ॥ सुरयुग्मोपमं वीक्ष्य । वधूवरयुगं च तत् ॥ तद्रूपविस्मिते दैवा-द्योगं तुष्टुवतुश्च तम् ॥ ५४ ॥ आर्यपुत्र इवाऽऽभाति । वरोऽयमिति लघ्व्यवक् ॥ ज्येष्ठा जजल्प रूपाद्यैः । समानाः कति नो नराः ॥ ५५ ॥ स तु शीतज्वरार्त्तोऽस्ति । निद्राणो नौ पतिर्गृहे ॥ कथमत्राऽऽगातिस्तस्य । माऽशङ्किष्ठास्ततोऽत्र तम् ॥ ५६ ॥ ततस्ते प्रापतुः क्वाऽपि । क्रीडायै स्वेच्छया पुनः ॥ वास-धाम जगामाऽथ । धनदेवो वधूयुतः ॥ ५७ ॥ तत्राऽप्यूर्ध्वगृहस्याऽग्र--गवाक्षगत ईक्षते ॥ स तत्स्थानाद्यभिज्ञानं । पत्न्योर्गमनशङ्कया ॥ ५८ ॥ क्व हसन्ती क्व वा रत्न-पुरं चूतोऽग्रगः क्व च ॥ स्नुर्धनपतेर्भाग्या--द्धन·

देवोऽभ्यगात् [1]श्रियं ॥५९॥ श्लोकमेतं लिलेखाऽयं । श्रीमत्या वसनाञ्चले ॥ कुङ्कुमेन ततः किञ्चि–त्कार्यमुद्दिश्य निर्ययौ ॥६०॥ गतश्चूते प्रिये वीक्ष्या–रूढे ते सोऽप्यथ द्रुतं ॥ प्राग्वत्तत्कोटरे [2]प्राप्तः । पत्न्योर्गमनशङ्कया ॥ ६१ ॥ ततः स्त्रीजप्तमन्त्रेण । व्योम्नोत्पत्य द्रुतं ययौ ॥ चूतोऽपि तद्गृहोद्याने । तत्र तस्थौ च पूर्ववत् ॥६२॥ ततश्च धनदेवोऽपि । रहो निजगृहे ययौ ॥ शय्यायां प्राग्वदस्वाप्सी–न्निदद्रौ च पटावृतः ॥ ६३ ॥ तत्प्रिये च गृहे प्राप्ते । निःशङ्के वीक्ष्य तं तथा ॥ शयिते शय्ययोर्निद्रा–सुखं च क्षणमापतुः ॥ ६४ ॥ प्रातरुत्थाय चाऽर्हाणि । गृहकर्माणि चक्रतुः ॥ धनदेवोऽस्ति चाऽद्याऽपि । निद्राणो रात्रिजागरात् ॥६५॥

अथ निद्रावशात्तस्य । पाणिः प्रावरणाद्बहिः ॥ दक्षिणो निरगाद्भाग्य–वशादाबद्धकङ्कणः ॥६६॥ वीक्ष्य तं चकिता लघ्वी । प्रिया ज्येष्ठामदीदृशत् ॥ साऽपि स्माहाऽऽर्यपुत्रो नु । वरोऽयमिति यत्त्वया ॥ ६७ ॥

अवादि तदभूत्सत्य–मावाभ्यां कथमप्यहो ॥ रहस्तत्राऽयमागत्य । तामुपायंस्त कन्यकाम् ॥ ६८ ॥ तदनेनाऽवयोस्तादृग् । वृत्तान्तो बुबुधेऽखिलः ॥ मनागपीति मा भैषीः । करिष्येऽत्र प्रतिक्रियाम् ॥ ६९ ॥ इत्युदित्वा प्रदायाऽथ । ग्रन्थीन् सप्ताभिमन्त्र्य च ॥ बबन्ध धनदेवस्य । वामे दवरकं पदे ॥ ७० ॥ चतुर्भिः कलापकं ॥ यावत्तत्पाणिसंस्पर्शा–द्धनदेवः प्रबुध्यते ॥ ददर्श तावदात्मानं । शुकीभूतं सविस्मयः ॥ ७१ ॥ दध्यौ चाऽग्रे प्रियां वीक्ष्य । कङ्कणच्छोटनं मम ॥ विस्मृतं तेन तत्पाणौ । वीक्ष्याऽसौ शङ्किता ध्रुवम् ॥ ७२ ॥ कथंचिन्नैशवृत्तान्तं । ज्ञात्वा कीरीचकार मां ॥ नास्यामीदृग्चरित्राया–मसंभाव्यं हि किञ्चन॥७३॥ युग्मम् ॥ धिग्मया हारितं नृत्वं । पशूभूतः करोमि किं ॥ ध्यात्वैवं दुःखितो भीत्या । यावदुड्डयते स च ॥ ७४ ॥ करेणाऽऽक्रम्य

[1] श्रिया  [2] तस्थौ स्वं बबन्ध च वाससा प्रत्यन्तरे

तं गारं । कोपादुद्दृश जगाद सा ॥ रे रे ज्वरच्छलं कृत्वा । चरित्रं नौ विलोकसे ? ॥ ७५ ॥ युग्मम् ॥ न तक्रयादृशां गम्यं । सद्य छलजं फलं ॥ अथ तं पञ्जरे क्षिप्त्वा । गृहकार्येषु साऽलगत् ॥ ७६ ॥ प्रशंसन्ती कलां तस्या–स्तथैवाऽन्याऽपि संमदात् ॥ सोऽपि शोनति पश्यन् स्वं । गृहं परिजनादि च ॥७७॥ अथ ते सच्छमत्कारं । पचन्त्यौ भर्जिकां तदा ॥ शुकं नीत्वाऽस्त्रधारायां । न्यस्य मापयतश्च तम् ॥७८॥ रे! शृणोपि छमत्कारान् । निहत्यैवं त्वमप्यथ ॥ पश्यसे सच्छमत्कारं । कदापीत्यादिभापितैः ॥७९॥ अर्थतो युग्मम् ॥ ताभ्यामित्यन्वहं नीय–मानो जीवितसंशयं ॥ कथञ्चिद्दुःखितः कीरो । व्यतिक्रामति वासरान् ॥ ८० ॥

अथ रत्नपुरे श्रेष्ठी । श्रीपुञ्जो निर्गतं वरं ॥ अनायातं च विज्ञाय । सर्वत्राऽप्यगवेषयत् ॥ ८१ ॥ अलब्ध्वा च प्रगे तेन । लिखितं श्लोकमैक्षत ॥ अजानाश्च धियां धाम । तस्य वासपदादि सः ॥ ८२ ॥ तथाहि—पुर्यां हसन्त्यभिख्यायां । सूनुर्धनपतेरयं ॥ कथञ्चिद्धनदेवाख्यो । नाक्षाऽत्राऽगाजगाम च ॥ ८३ ॥ तदुदन्तमुदित्यैवं । रुदन्ती स्थापिता सुता ॥ वरमाकारयिष्यामि । द्रागित्याश्वासनाकृते ॥ ८४ ॥ हसन्त्यां यान्तमन्येद्युः । सार्थवाहं निबुध्य सः ॥ श्रेष्ठी सागरदत्ताह्व–मर्थोपार्जनहेतवे ॥ ८५ ॥ आर्पिपद्धनदेवाय । तस्य राज्या अलङ्कृतिं ॥ सान्दिष्टं च यथा पत्नी । संभाल्या द्रागिहागतेः ॥ ८६ ॥ ततः सागरदत्तोऽपि । पोतेनोल्लङ्घ्य वारिधिं ॥ हसन्त्यां प्राप्तवान् सद्यो । धनदेवगृहेऽगमत् ॥ ८७ ॥ तमदृष्ट्वा प्रिये तस्याऽप्राक्षीत्क्वाऽऽस्ते पतिर्नु वां ॥ ताभ्यामूचे गतो देशा–न्तरे द्रव्यार्जनाय सः ॥ ८८ ॥

सोऽथाऽप्यादीदलङ्कारं । श्रीपुञ्जः प्राहिणोदिमं ॥ जामात्रे धनदेवाय । शीघ्रमाजूहवच्च तम् ॥ ८९ ॥ ऊचे ताभ्यामिदं साधु । धनदेवः प्रियां हि तां ॥ द्रष्टुमत्युत्सुकोऽप्याशु । देशेऽगाद्गाढकार्यतः ॥ ९० ॥ गच्छतोक्तं च तेनैति । कोऽपि रत्नपुराद्यदि ॥

तद्धस्तेन शुकः पत्न्यै । प्रेष्यो ग्राह्यं तदर्पितम् ॥ ९१ ॥ इत्युदित्वा शुकस्ताभ्यां । तस्याऽर्पि स सपञ्जरः ॥ आत्ता चालङ्कृतिः सोऽथो–त्तारके कीरयुग्मयौ ॥९२॥ क्रमात्क्रयाणकानां स । विधाय क्रयविक्रयौ ॥ आगाद्रत्नपुरे नावो–ल्लंघ्य वारिनिधिं जवात् ॥९३॥ निवेद्य श्रेष्ठिने सर्वं । धनदेवप्रियोदितं ॥ आर्पिपत्तं शुकं सोऽपि । स्वपुत्र्यै मुमुदे च सा ॥ ९४ ॥ भर्तुः प्रसादं सा मन्य–माना तं रमयत्यलं ॥ दृष्ट्वा दवरकं पादे–ऽत्रुटद्विस्मिताऽन्यदा ॥ ९५ ॥ धनदेवः स्वभावस्थ–स्ततोऽभूत्तं निरीक्ष्य सा ॥ विस्मिता मुदिता चाख्य–त्स्वामिन्! किमिदमद्भुतम् ॥ ९६ ॥ यत्पश्यसि तदेवेति । पृच्छ्यं न त्वधुनाऽधिकं ॥ इत्युक्तेऽनेन सा गत्वा । पितुरेतन्न्यवेदयत् ॥ ९७ ॥

मुदितो धनदेवाय । सोऽथ सन्मानपूर्वकं ॥ स्वविमानाभमावासं । धनं चोपस्करं ददौ ॥ ९८ ॥ तत्राऽस्थाद्धनदेवोऽथ । सह पत्न्या नवोढया ॥ भोगान् सस्नेहया स्वैरं । भुञ्जानः पुण्यदत्तदृक् ॥ ९९ ॥ कर्मभिर्व्यवसायाद्यै–र्लक्ष्मीमर्जति चाद्भुतां ॥ उदीर्णप्राच्यपुण्यानु–भावात्पुण्यानुगा हि सा ॥ १०० ॥ काले कियत्यतिक्रान्ते । श्रीपुञ्जे स्वर्गमीयुषि ॥ भ्रातॄणां स्नेहदौर्बल्यं । ज्ञात्वा जनकवेश्मनि ॥१॥ यियासुः संगता पत्या । श्रीमतीत्यथ दध्युषी ॥ कीदृशो गृहवासोऽस्य ? । कीदृश्यौ च पुराश्रिये ? ॥२॥ युग्मम् ॥ इति तद्दर्शनोत्कण्ठा–वती तं श्रीमती जगौ ॥ स्वामिन्! स्वपितुरावासं । सकृद्दर्शयसे न किम् ? ॥३॥ पितृश्वसुरयोर्गेहे । वासः श्लाघ्यो हि नृस्त्रियोः ॥ व्याहरद्धनदेवोऽथ । ज्ञास्यते समयेऽप्यदः ॥ ४ ॥ ततो धृतिमती साऽपि । तस्थौ भोगैकदत्तदृक् ॥ पुनः कालान्तरेऽन्येद्यु–र्व्याहार्षीत्सा पतिं प्रति ॥५॥ स्वामिंस्त्रिधा मनुष्याः स्यु–र्जघन्योत्तममध्यमाः ॥ श्वसुरस्वपितृस्वीय–गुणेभ्यः ख्यातिधारिणः ॥ ६ ॥ तवाऽत्रस्थस्य तन्नाथ! । समृद्धिः श्वसुरोद्भवा ॥ उत्तमत्वाय नैषा तु । तद्यावस्ते पितुर्गृहम् ॥ ७ ॥

पत्न्या प्रोक्तमिति श्रुत्वा । धनदेवो जगाद तां ॥ भद्रेऽद्यापि छमत्कारान् । भर्जिकायाः स्मरामि तान् ॥ ८ ॥ पत्युरित्युक्तमाकर्ण्य । साऽप्राक्षीत्के नु ते प्रिय ! ॥ आदितोऽपि स्ववृत्तान्तं । सम्यक् सोऽप्यवदत्ततः ॥ ९ ॥ श्रुत्वा तं श्रीमती हास्याऽवहे विदधती जगौ ॥ कियन्मात्रमिदं स्वामिन् ! । मा भैषीरीदृशाचतः ॥ १० ॥ तत्र नूनं भलिष्येऽहं । निःशङ्कं स्वगृहं व्रज ॥ मया सह न ते बाधा । भवित्री काऽपि कर्हिचित् ॥११॥ इति पत्नीगिरा दत्ता-वलम्बात्साहसं भजन् ॥ आपृच्छय स्वजनान् सो-गाद्वसन्तीं सप्रियः क्रमात् ॥ १२ ॥ विशन् स्वोकसि पत्नीभ्यां । तदवस्थोऽप्ययं कथं ॥ स्वं रूपं प्रापदित्यादि । ध्यायन्तीभ्यामदर्शि सः ॥ १३ ॥ ततोऽभ्युत्तस्थतुस्ते तं । दर्शयन्त्यौ मुदं बहिः ॥ कृत्वाऽऽचमनदानादि-प्रतिपत्तिं सगौरवम् ॥ १४ ॥ सप्रियं चित्रशालायां । तं नीत्वा न्यस्य चाऽऽसने ॥ निवेश्य स्वागतप्रश्ना-धैरमूमुदतां पतिम् ॥ १५ ॥ युग्मम् ॥

ततो ज्येष्ठा गिरा लघ्व्याऽऽनीय [1]पाद्यं वरोदकं ॥ सभक्तिक्षालितौ तस्य । चरणौ ताम्रभाजने ॥ १६ ॥ गृहीत्वा तज्जलं ज्येष्ठाऽभिमन्त्र्य च ततो ध्रुवं ॥ तेनाच्छोटयदेतच्च । ववृधे तद्गृहेऽभितः ॥ १७ ॥ भीतोऽयं वर्द्धमानेऽस्मिन् । श्रीमत्या मुखमीक्षते ॥ साऽभिधत्ते च मा भैषी-रित्येवं तु मुहुर्मुहुः ॥१८॥ ततो गुल्फौ क्रमाज्जानू । उरू नाभिमुरो गलं ॥ नासां च यावदायातं । वर्द्धमानं च तज्जलम् ॥ १९ ॥ श्रीमतीमभ्यधाद्भीत-स्ततोऽयं त्वत्प्रतिक्रिया ॥ कस्मै कार्याय मज्जायां । नासायामप्यतः परम् ॥ २० ॥ ततः सा धेनुवत्सर्वं । मुखेन तदपात्पयः ॥ सद्यस्तथा यथा नाऽस्य । क्वाऽपि विन्दुरपीक्ष्यते ॥ २१ ॥

पूर्वपत्न्यौ ततस्तस्याः । पादयोर्द्रागपप्तताम् ॥ त्वया जिग्यिवहे आवां । निजविद्याकलागुणैः ॥ २२ ॥ आवामाराधयिष्याव-

---

[1] पादक्षालनार्थं

स्ततस्त्वां स्वामिनीमिव ॥ ततस्ताः स्वस्वकार्येषु । लग्नाः प्रीतिजुषो मिथः ॥ २३ ॥ अहो तिस्रोऽप्यमूः क्षुद्र–विद्याभिः समता ययुः ॥ मिलिताश्च मिथः प्रीत्या । शीलसाम्ये हि सौहृदम् ॥ २४ ॥ ततः स्वैरित्वमेवाऽस्या । अपि ज्ञात्वाऽऽद्ययोरिव ॥ आयान्ति खलु संसर्गा–दसन्तोऽपि गुणेतरा ॥ २५ ॥ ददृशे आद्ययोर्भक्ति–स्तृतीयस्या अपीदृशी ॥ मयि चेद्भविता तत्कः । शरणं मे भविष्यति ॥ २६ ॥ तिस्रोऽपि तदमूस्त्यक्त्वा । प्रत्यक्षा राक्षसीरिव ॥ करोमि स्वहितं किञ्चि–द्येन स्यान्न पुनर्भयम् ॥ २७ ॥ विचिन्त्यैवं गृहात् किञ्चित् । कार्यमुद्दिश्य निर्ययौ ॥ उद्याने चाऽत्र चैत्येऽस्मिन् । धनदेवः समाययौ ॥ २८ ॥ स चाऽहं धनदेवाख्यो । दुःखमित्यवदं निजं ॥ शुकत्वादौ त्वन्वभूवं । यत्तच्चदुःखतोऽधिकम् ॥ २९ ॥ उपागताऽपि यद्दैवा–द्दलिता पशुता तव ॥ नान्वभूर्वपुषा तेन । दुःखं तद्भाग्यवानसि ॥ ३० ॥ मदनोऽथ निशम्यैवं । विस्मितो व्याजहार तं ॥ भवं दुःखमयं मत्वा । कुर्व आत्महितं सखे! ॥ ३१ ॥ एवं वार्त्तयतोस्तुल्य–वृत्तयोः प्रीतितस्तयोः ॥ गुरुर्विमलवाह्वाह्व–स्तत्राऽऽगात्सपरिच्छदः ॥ ३२ ॥ नत्वा स्तुत्वा युगादीशं । सोऽपि तत्रैव मंडपे ॥ प्रासुके कम्बले शिष्यै–ढौंकिते समुपाविशत् ॥ ३३ ॥ स भक्तिवन्दितस्ताभ्यां । धर्मलाभाशिषं ददौ ॥ देशनां विदधे धर्म्यां । पुरश्चासीनयोस्तयोः ॥ ३४ ॥

"शरदभ्रसमाः श्रियोऽखिला–स्तटिनीपूरसमं च जीवितं ॥ नटपेटकवत्कुटुम्बकं । ननु को मुह्यति धर्मकर्मसु? ॥ ३५ ॥ शरणं न विपत्सु कश्चन । स्वजनाः स्वार्थपरा वपुः क्षयि ॥ ललनाः कुटिलाः कुतः परा–भवभीविघ्नभृते भवे सुखम् ॥ ३६ ॥ अणुवैषयिकं सुखं भवे । तदपि स्याच्छलनाद्यसाधनं ॥ ललना त्वखिलापदां सखी । न बुधोऽस्मिन्ननुरज्यते ततः ॥ ३७ ॥ परमे तदगत्वरे सदा–प्यपवर्गस्य सुखेऽनुरज्यतां ॥ स च संयमसाधनो मतः । प्रतिपद्यध्वमतः सुसंयमम् ॥ ३८ ॥" गोभिर्गुरुविधोस्तस्य । संवेगा–

मृतवर्षुकैः ॥ भवतृष्णाभवे तापे । गते प्राव्रजतामिमौ ॥३९॥ संविग्नौ गुरुणा तेन । सह व्यहरतां मुनी ॥ नानातपांसि कुर्वाणौ । द्वादशाङ्ग्यामधीतिनौ ॥४०॥ सिद्धयोगौ मिथः प्रीत्या । सदा सह विहारिणौ ॥ विधिना पूरितायुष्कौ । नारमत्यजतां वपुः ॥४१॥ उद्भूतां च सौधर्मे । पञ्चपल्यायुषौ सुरौ ॥ भुक्त्वा सुरसुखान्येता–वुत्पन्नौ नृषु तद्यथा ॥ ४२ ॥ विजयपुराह्वे नगरे । पुत्रोऽभूत्समरसेनभूपस्य ॥ विजयावल्यां जातो । मणिप्रभाह्वो मदनजीवः ॥ ४३ ॥ पित्रार्पितराज्यभरो । भुक्त्वा राज्यश्रियं बहुकालं ॥ म्लानमवेक्ष्याऽऽम्रवनं । प्रतिबुद्धो राज्यमङ्गजे न्यस्य ॥४४॥ सैष जिनेश्वरसूरेः । पार्श्वे दीक्षामुपाददे भूपः ॥ बहुतपसा लब्धावधि–विज्ञानाऽऽकाशगमनशक्तिरभूत् ॥ ४५ ॥

अथ वैताढ्यगिरीन्द्रे । रथनूपुरचक्रवालवरनगरे ॥ धनदेवस्य च जीवः । पूर्णायुः स्वर्गतश्च्युत्वा ॥ ४६ ॥ नाम्ना महेन्द्रसिंहो । विद्याधरचक्रवर्त्त्यभूत्स महान् ॥ पत्न्यस्य रत्नमाला । पुत्रावपि रत्नचूडमणिचूडौ ॥ ४७ ॥ पत्नी तस्याऽन्येद्यु–स्त्रातुमशक्ता महामयादमृत ॥ तच्छोकार्त्तो व्यलप–न्मोहवशात् खेटचक्रवर्त्त्येषः ॥ ४८ ॥ ज्ञानेन तमवबुध्य च । मणिप्रभो मुनिपतिर्गगनगामी ॥ पूर्वभवस्नेहवशा–त्तत्राऽगात्खेटनायकेन नतः ॥ ४९ ॥ उक्त्वा पूर्वभवस्त्री–चरितमयं तेन बोधितो मुनिना ॥ प्राव्रजदस्य समीपे । राज्यभरं न्यस्य रत्नचूडसुते ॥ ५० ॥ अखिलाऽऽगमेष्वधीती । चरन् सदा बहुविधं तपोऽत्युग्रं ॥ अभवल्लब्धिनिधानं । क्रमादयं खेटराजर्षिः ॥ ५१ ॥

द्वावपि तौ राजर्षी । सुचिरमथाऽष्टाङ्गयोगसाधनया ॥ क्षिप्ताऽखिलकर्ममलौ । शिवपदसुखमापतुः क्रमतः ॥ ५२ ॥ समदनधनदेववद् बुधा ये । विषयसुखं परिभाव्य दुःखहेतुं ॥ विदधति चरणं ततो विरक्ताः । शिवसुखसंपदमियूति क्रमात्ते ॥५३॥ खेन्दु-

शरभूमितेऽब्दे १५१० । मुनिसुन्दरसूरिभिस्तपाचार्यैः प्राकृतसुमतिचरित्रा-न्मोहारिजयश्रिये सतां विदधे ॥५४॥ मदनचरितमेतत्सं-निशम्य प्रवीणो । धनपतिसुतवृत्तं चाऽपि सम्यग् विचिन्त्य । इह च परभवे चाऽत्यन्तदुःखप्रदाभिः । कलयति रमणीभिः को नु सौख्याभिलाषम् ॥ ५५ ॥

श्रुत्वैवं विस्मिताः सर्वे । चातुर्यं तस्य तुष्टुवुः ॥ विचार्य मन्त्रिभिः साकं । राजोचे स्वेष्टसिद्धये ॥ ५६ ॥ वृत्तं सम्यगिदं स्त्रीणां । गृहस्थैस्तास्तु दुस्त्यजाः ॥ नैकान्ताचाऽखिला निन्द्या । यान्ति मुक्तिं हि ता अपि ॥ ५७ ॥ गुणा दोषाश्च जीवेषु । भवन्ति कर्मणां वशात् ॥ भवन्ति हेतवश्चैषां । मिथ्यात्वाद्याः किलाऽऽश्रवाः ॥ ५८ ॥ आकारो नैति पुंसो वा । स्त्रियो वेत्यत्र हेतुतां ॥ आश्रवा एव तन्निन्द्याः । किमाकारस्य निन्दया ॥५९॥ प्रागेव तु त्वया प्रोक्तं । नाऽधिका युज्यते प्रिया ॥ सामान्यस्य जनस्येति । ब्रह्मं[1]स्तस्य स्मराऽधुना ॥ ६० ॥ न सामान्यो जनो हि त्वं । स्त्रीभिर्यः शक्यतेऽर्दितुं[2] ॥ पाणौ कुरु सुतां तन्मे । सन्तो भञ्जन्ति नार्थनाम् ॥६१॥ ततो विप्रोऽवदद्राजं-स्तवादेशो यदीति मे ॥ अधुना तत्प्रतीक्षस्वाऽवसरेऽर्हं तु भोत्स्यते ॥ ६२ ॥ प्रतिज्ञा मम काऽप्यस्ति । यावत्सा तु न पूर्यते ॥ तावद्वाच्योऽत्र नैवाऽहं । ज्ञास्येथाऽवसरे च ताम् ॥ ६३ ॥

इति द्विजगिरा भूप-मन्त्र्याद्या जहृषुर्भृशं ॥ उत्तस्थुरथ विज्ञप्ते-ऽवसरेऽत्राऽधिकारिणा ॥ ६४ ॥ चक्रुश्च द्युनिशोः कृत्या-न्यखिलानि यथोचितं ॥ द्विजेनोरीकृतं स्वं च । श्रुत्वा कन्याऽप्यमोदत ॥ ६५ ॥

अथ भूपः कृतप्रातः-कृत्यः संसद्युपाविशत् ॥ पूर्णायां राजवर्गीयैः । स्वर्णसिंहासने वरे ॥६६॥ अथ तत्र प्रतीहारः । क्ष्मापं

१ सूत्रं कर्मणि षष्ठी  २ पराभवं कर्तुम्

नत्वा व्यजिज्ञपत् ॥ स्वामिन्! पद्मरथस्याऽस्ति । राज्ञो दूतः समागतः ॥ ६७ ॥ गोपुरे स्थापितं तं च । मुञ्चे मध्यसभं न वा ॥ मुञ्चेति भूभुजा प्रोक्ते । सोऽपि गत्वा मुमोच तम् ॥ ६८ ॥ दूतोऽथ पर्षदि प्राप्तो । भूपं रूपातिमन्मथं ॥ द्योतयन्तं सभां सर्वां । रत्नाभरणरश्मिभिः ॥ ६९ ॥ धृतस्वर्णमणिच्छत्रं । वीज्यमानं च चामरैः ॥ सर्वतो मन्त्रिसामन्त–श्रेष्ठिसेनेश्वरादिभिः ॥ ७० ॥ महत्तैश्चश्रवणाद्यैश्च । सुहृद्भिः पीठमर्दकैः ॥ अन्यैरप्यमितैर्मान्यैः । पौरैर्वैश्रवणैः श्रिया ॥ ७१ ॥ कविभिः कथकाद्यैश्च । पण्डितैर्विविधैरपि ॥[1] कञ्चुकैः [2]संकटांगैश्च । विविधायुधदुर्धरैः ॥ ७२ ॥ प्रवीरैरंगरक्षैश्च । सेव्यमानं समन्ततः । ददर्शैश्वर्यलीलाभि–र्जयन्तं पितृजित्वरम् ॥ ७३ ॥ चतुर्भिः कलापकं ॥ भूमहेन्द्रं ततो नत्वा । विस्मितस्तत्समृद्धिभिः ॥ आसाभासासने राज्ञा । दापिते संज्ञया श्रुवः ॥ ७४ ॥

अथोच्यत नृपेणैष । [3]कच्चित्कुशलवानसि? ॥ भद्रं पत्युर्भगिन्या नः? । कोऽर्थश्चाऽऽगमने तव? ॥७५॥ नमयित्वा शिरः सोऽपि । जगाद रचिताञ्जलिः ॥ क्षेमं मे त्वत्प्रसादेन । भद्रं ते भगिनीपतेः ॥७६॥ आकर्णय सकर्णेन्द्र! । गृणाम्यर्थमथागमे ॥ असि पद्मपुरेन्द्रेण । महितः सन्निधौ तव ॥ ७७ ॥ सन्दिष्टं चाऽस्ति तेनैवं । पुत्री विजयसुन्दरी ॥ दत्ता भिल्लाय कस्मैचिद् । दैवतः सहसा क्रुधा ॥ ७८ ॥ विलोकितौ तु तौ प्राप्त–र्नाप्तौ खिद्ये ततोऽन्वहं ॥ ततस्त्वमपि सर्वत्र । यथाशक्ति विलोकयेः ॥७९॥ अन्यच्च तव कन्याऽस्ति । रम्या कमलसुन्दरी ॥ यत्सौन्दर्यजिता लक्ष्मी–रेकदृश्यपि रज्यते ॥८०॥ ततः सा पद्मदत्ताय । मम पुत्राय दीयतां ॥ अनुरूपो ह्ययं योगः । सारत्योरिवाऽनयोः ॥८१॥ कर्णाऽध्वन्यध्वगीकृत्य । दूतोदितमिदं नृपः ॥ किञ्चिद्द्व्यचिन्तयच्चित्ते । दातुं तदुचितोत्तरम् ॥८२॥

1 सन्नाहैः   2 सङ्कीर्णाङ्गैः   3 इष्टपरिप्रश्ने

स्वसा [1]कौलाय चेद्दत्ता। तदीदृग् प्रागपि ह्यभूत् ॥ पुनस्तस्य कुले पुत्रीं। ददेऽभीष्टां ततः कथम् ?। ॥८३॥ भूपस्त्वेष भृशं शूरः। कोश-
सैन्यबलोत्तरः ॥ साम्नोपायेन तत्कार्यो। निषेधोऽत्र नयानुगः ॥ ८४ ॥

विमृश्यैवं नृपः साह। भद्र! प्रागप्यशूशुधं ॥ भिल्लं विजयसुन्दर्या। युतं प्रापं न तु क्वचित् ॥८५॥ पुत्रीं पुनरिमां प्राग-
प्यदां कमलसुन्दरीं ॥ कुमारप्रगुणीकार–महोपकृतिकारिणे ॥ ८६ ॥ ब्रह्मवैश्रवणायाऽस्मै। प्रतिज्ञातवशात्तथा ॥ अन्वरज्यत कन्या-
ऽपि। कौमुदीव [2]कलाभृति ॥ ८७ ॥ सकर्णः सोपकण्ठैवं। दूतोऽवादीत्सुतां प्रभो! ॥ राजराजाङ्गजं मुक्त्वा। दत्से भिक्षाचराय
किम् ?। ॥ ८८ ॥ राजोचे त्वत्प्रभुः पुत्रीं। दत्वा भिल्लाय नाऽदुषत् ॥ दद्द्वर्णोत्तमायाऽहं। दुष्यामीत्येष को नयः ? ॥ ८९ ॥ दूतो-
ऽभाषत भूपेन। कृतं क्रोधवशाददः ॥ राजाऽवोचत्प्रतिज्ञात–वशाद्भद्र! मयाप्यहो ? ॥९०॥ दूतोऽवोचद्विधिर्बाह्यो। बाध्यते [3]नान्त-
रेण किं? ॥ विप्रदानं तथा राज–सुतदानेन बाध्यताम् ॥ ९१ ॥ आन्तरोऽयं नृपस्ते यत्। प्रौढिस्वाजन्यविक्रमैः ॥ राजंस्तवर्जिमा
कोऽयं। यन्मोहः प्राध्वरेऽध्वनि ॥९२॥ त्रिदर्पीकृतकन्दर्प–रूपो भूपसुतः क्व सः ॥ क्व चाऽयं नटविद्याद्यै-र्द्विजातिरुदरम्भरिः॥९३॥
बहूपकारिणेऽप्यर्हा। गोधनादिप्रदानतः ॥ दक्षिणैव हि विप्राय। न तु राजसुता क्वचित् ॥ ९४ ॥ बहुभारवहस्याऽपि। चा-
रिरेव विशेषतः ॥ युक्ता [4]चक्रीवतः कण्ठे। न वद्धुं मणिघण्टिका ॥९५॥ नृपः साहाऽकृते कार्ये। युज्येताऽर्हादिचिन्तनं ॥ निर्वाहस्तु
प्रपन्नस्य। सतां तस्मिन् कृते सति ॥ ९६ ॥ यदुक्तं—दिग्गजकूर्मकुलाचल–फणिपतिविधृताऽपि चलति वसुधेयं ॥ ॥९८॥
प्रतिपन्नममलमनसां। न चलति पुंसां युगान्तेऽपि ॥९७॥ प्रपन्नेऽस्मिंस्ततः कार्ये। विदुषां संमते मया ॥ मा विचारान्तरं

१ नास्तिकाय  २ चन्द्रे  ३. असिद्धं बहिरङ्गं अन्तरङ्गे इति व्याकरणन्यायात्  ४ गर्दभस्य ।

कार्यी–दूत! कृत्यान्तरं कुरु॥९८॥उज्जगार ततो दूतः। स्वहितं विमृशाऽऽयतौ॥प्रौढेन सह यद्राजन्!। खाजन्यं सर्वकार्यकृत् ॥९९॥ सूनवे राजराजस्य। यदि दास्यसि नो कन्यां?॥ ततस्तां गृह्णतस्तस्य। बलाद्वारयिताऽस्ति कः?॥१००॥ स्वयं पद्मरथः क्ष्माभृ–द्वीरः सोऽस्ति यदाहवे ॥ प्रतिवीरास्तृणायन्ते। तृणीयन्ति च जीवितुम्॥ १ ॥ तस्य सैन्यांबुधौ च त्वं। ससैन्यः सक्थुमुष्टिवत् ॥ भविता न च ते त्राणं। तदाक्रान्तस्य कश्चन ॥२॥ तद्राज्यं जीवितं चाऽसि। स्पृहयालुः क्षितीश! चेत् ॥ ततस्तत्सूनवे कन्यां। दत्वा त्वं तिष्ठ शर्मणा ॥ ३ ॥

श्रुत्वेत्युज्जागरक्रोध–मानोऽभाषिष्ट भूपतिः ॥ साधु दूत! त्वमेवाऽसि। धुरीणः सर्ववाग्मिनाम् ॥ ४ ॥ पुरो ममाऽपि यो वक्तु–मेवं धृष्टः प्रगल्भसे?॥ परं स्वस्वामिनः किं न। सूपदेशं ददासहो!॥ ५ ॥ नास्तिकत्वेन यः क्षत्र–कुलं मलिनयत्यलं॥ आन्तरः स कथं ज्ञेयः। क्षत्रपंक्तेर्बहिष्कृतः ॥ ६ ॥ समं तेन कुलीनानां। स्वाजन्यं ह्यास्पदं ह्रियाः ॥ पापेऽस्मिंश्च चिरं प्रौढि-र्न स्यात्सु सुखसंपदाम् ॥ ७ ॥ यतः—तरुवत्तटिनीतटोद्गतः। प्रमदाहृद्गतगुह्यमन्त्रवत् ॥ जलवच्च मृदामभाजने। न चिरं स्थास्यन्ति पापिषु रमा ॥ ८ ॥ शौर्यं चाऽस्य स्वधाम्न्येव। [1]प्रभूतं न तु संगरे ॥ तत्राऽप्येष गलच्छक्ति–स्तृणीयिष्यति हि स्वयम् ॥९॥ अन्ये ते तस्य सैनाब्धौ। ससैन्याः सक्थुवन्ति ये ॥ तस्य सैन्याम्बुधिं पातु–महं तु वडवानलः ॥ १० ॥ को बिभेति? ततः कौला–दस्मात्क्षत्रकुलोद्भवः ॥ चेद्राज्यजीवितोद्विग्नः। सन्नह्यतु स तद्युधि ॥ ११ ॥ निग्राह्योऽयं हि मे जामि–जामेय्योरपमाननात् ॥ ॥ पुराऽप्यासीत् परं तत्र। स्वाजन्यं विघ्नकार्यभूत् ॥ १२ ॥ ऐश्वर्यमदमत्तोऽयं। स्वयं

1 ' प्रथिष्यन् ' प्रत्यन्तरे

चेत्तद्विलुम्पति ॥ तत्प्राप्य क्षुधितो भोज्यं । क्षैरेयीघृतशर्कराः ॥ १३ ॥ याहि दूत! द्रुतं ब्रूयाः । प्रभुं स्वामिति मद्गिरा ॥ कन्यां कौलकुले नैव । दास्ये कुर्या यथारुचि ॥ १४ ॥ इति वादिनि भूपेऽवक् । ब्रह्मवैश्रवणः क्रुधा ॥ अहो उक्तौ रसो राज्ञो । भटानां च क्षमाऽद्भुता ॥ १५ ॥ इत्युक्तेरपि दूतो य–न्नाद्याऽपि गलहस्त्यते ॥ श्रुत्वैवं कोऽपि वीरोऽज–गलहस्तत क्रुधाऽऽशु तम् ॥१६॥ दूतोऽपीत्यपमानोत्थ–भृशक्रोधोद्धुरो द्रुतं ॥ ततो गत्वाऽवदत्सर्वं । राज्ञः पद्मरथस्य तत् ॥ १७ ॥

अथ दूतगिरा तस्य । मध्वाहुत्येव हव्यभुक् ॥ दिदीपे भूपतेः क्रोधो । भृशं द्रागभिमानिनः ॥१८॥ द्राक् च मेलयितुं सैन्यं । रणभेरीमवीवदत् ॥ त्यजन्ति हि भटाः प्राणान् । सहन्तेऽभिभवं न तु ॥ १९ ॥ सुमुहूर्त्ते गजारूढः । सर्वमङ्गलपूर्वकं ॥ अत्युत्साहोच्छ्वसदेह–श्छत्रचामरभासुरः ॥२०॥ गर्जयन्नम्बरं वाद्य–नादैर्घोषैश्च सैन्यजैः ॥ शकुनैर्वार्यमाणोऽपि । प्रेर्यमाण इवाऽधिकम् ॥२१॥

नृपः पद्मरथः पद्म–पुराद्भूरिचमूवृतः ॥ निर्ययौ जेतुकामोऽथ । भूपालं कमलप्रभम् ॥ २२ ॥ क्रमाच्च चलतस्तस्य । कटके सर्वतोऽमिलन् ॥ सहस्रा दन्तिनां त्रिंशत् । तावन्तश्च रथा अपि ॥२३॥ त्रिंशल्लक्षास्तुरङ्गाणां । तावत्यः पत्तिकोटयः ॥ अकम्पन्त चलत्यस्मिन् । द्वैधा अपि च[1] भूभृतः ॥ २४ ॥

अथ सर्वाऽभिसारेण । समायान्तं निशम्य तं ॥ चक्रे मन्त्र्यादिभिर्मन्त्रं । भूपतिः कमलप्रभः ॥ २५ ॥ अहो बलीयसा सार्द्ध–मस्माभिर्वैरमादधे ॥ सहसा कोपमानाभ्यां । निर्वाह्यं तत्कथं ततः? ॥२६॥ राज्ञेत्युक्तेऽवदन्मन्त्री । कृतं स्यादकृतं न हि ॥ पराभवो हि नो सोढुं । शक्यः क्षत्रकुलोद्भवैः ॥ २७ ॥ दृष्टदोषे कथं कौल–कुले कन्या च दीयते ॥ ततो व्यतिकरेऽत्राभू–न्म

१ भूभृतः—राजानः पक्षे पर्वताः

किमप्यविचारितम् ॥ २८ ॥ तत्सज्जीक्रियते वप्रो । भ्रियते च कणादिभिः ॥ मेलयित्वा च सैन्यानि । दुर्गस्थैरेव युध्यते ॥२९॥ नृपः साह भवत्वेवं । परं निर्गत्य योत्स्यते ॥ भंक्ष्यते शत्रुसैन्यं च । साहसात्किं न सिद्ध्यति ? ॥३०॥ युद्ध्यमानं च दुर्गेण । बाधते मां त्रपा भृशं ॥ सहते वीरमानी कः । स्वदेशाक्रमणं द्विषा ? ॥ ३१ ॥

ब्रह्मवैश्रवणोऽथाऽऽख्य–त्सत्यमेतन्नराधिप ! ॥ त्यज वैरिभयं दूरा–न्मा कार्षीर्दुर्गसज्जताम् ॥ ३२ ॥ [1]अभिषेणयितुं शत्रुं । पुराभिर्याहि सत्वरं ॥ जेष्याम्येकोऽहमेवाऽमुं । स्थेयं सर्वैः समाहितैः ॥ ३३॥ यथा मे नाटकं दृष्टं । विसयानन्दमेदुरैः ॥ तथैवा-ऽऽयोधनं दृश्यं । निःशङ्कं भवदादिभिः ॥ ३४ ॥ श्रुत्वैवं मुदितो राजा । मेलयित्वा निजं बलं ॥ विधाय मंगलाचारान् । स्तुत्वा देवगुरू क्रमात् ॥ ३५ ॥ परमेष्ठिनमस्कारं । सर्वविघ्नहरं स्मरन् ॥ आरूढ प्रौढदन्तीद्रं । छत्रवित्रासिताऽऽतपः ॥ ३६ ॥ चामरैर्वीज्यमानोऽग्रं । वाद्यनादैश्च पूरयन् ॥ शकुनैर्वर्द्धितोत्साहः । ससैन्यो निर्ययौ पुरात् ॥३७॥ ब्रह्मवैश्रवणोऽप्याशु । विविधाऽऽयुधदुर्द्धरः॥ सङ्ग्रामोचितसामग्र्या । रथारूढस्तमन्वगात् ॥ ३८ ॥

प्रागेवोचेऽथ तं यान्तं । कमला कृतमङ्गला ॥ पतिं मे मा वधीर्युद्धे । त्वमलक्ष्यो हि कोऽप्यसि ? ॥३९॥ तत्प्रियाप्यवदद् युद्धे । संमुखीनोऽपि मे पिता ॥ न वध्यः सापराधोऽपि । तद्वचः सोऽप्यमन्यत ॥ ४० ॥ अथ पद्मरथोर्वीशि–सैन्यात् शूराग्रणीर्नृपः ॥ अर्द्धसैन्योऽप्यभिद्वेषि । चचाल कमलप्रभः ॥४१॥ गत्वा स्वदेशसीम्नि द्राग् । तस्थौ स स्वस्थमानसः ॥ न युद्धे हि विलम्बन्ते । ससत्त्वोत्साहशक्तयः ॥४२॥ सरःकूपसरिद्वापीः । शोषयन्नथ मार्गगाः ॥ राजा पद्मरथोऽप्यागा–त्तदाऽऽसन्ने च तस्थिवान् ॥४३॥

[1] पराभवितुं

उत्सवाभं रणं प्राप्तं । मन्यमाना भटा निशि ॥ शस्त्रजागरिकां चक्रुः । सैन्ययोरुभयोरपि ॥ ४४ ॥

रणेक्षाकौतुकी चाऽथाऽऽ–रोहत्पूर्वाचलं रविः ॥ प्रतापोऽस्य भटानां च । मिथःस्पर्द्धात्त्विवर्द्धत ॥४५॥ विलुप्त[1]वसवश्चण्ड–[2]करश्चण्डरुचेः किल ॥ ताराः क्वाऽप्यगमन् लुब्ध–नृपस्येव पुराङ्गनाः ॥४६॥ स्वकरैः पद्मिनीस्पर्श–दोषाद्दोषाकरः किल ॥ [3]पाद्म-नीपतिना लुप्त–वसुर्म्लानतमोऽभवत् ॥४७॥ कूजन्तः प्रीतितश्चक्रा । न विना[4] बान्धवं सुखं ॥ [5]नैशस्वविप्रयोगोक्त्या । वदन्तीतीव भास्वते ॥४८॥ प्राप्तोदये भास्वति भूभु[मि]जीवो–त्तमे तमोऽशेषमपि प्रजासु ॥ व्यलीयताऽनीतिसमूहवद् द्राग् । नयौघवच्च प्रसृतः प्रकाशः ॥ ४९ ॥

अथ ढक्का हुडुकाश्चाऽ–नेकाः शङ्खाश्च भेरयः ॥ पटहाः खरमुख्यश्च । काहलादीनि चाऽभितः ॥ ५० ॥ प्रणेदू रणतूर्याणि । युगपत्सैन्ययोर्द्वयोः ॥ प्रलयाम्भोधरध्वान–मदध्वंसि ध्वनिप्रथम् ॥ ५१ ॥ तन्नादप्रसरैस्त्रस्ता । बिलेषु फणिनोऽविशन् ॥ गुहासु च वने सिंहा । गह्वरेषु च दन्तिनः ॥५२॥ अमिलन्नभसि प्रेत–भूताद्या राक्षसा अपि ॥ कौतुकेक्षणमांसाप्ति–धिया हर्षप्रनर्त्तिनः ।५३।

अथ तूर्योत्थनादैस्तै–र्वर्द्धितोत्साहमानसाः ॥ भटाः सैन्यद्वयेऽप्याशु । ससज्जू रणकर्मणि ॥५४॥ अथाऽश्वरथपत्तीभ–पङ्क्तयोऽत्र यथास्थिताः ॥ स्वं स्वं स्थानममुञ्चन्त–श्चलन्त्यभिमुखं मिथः ॥ ५५ ॥ मिथोऽग्रसैनिकाः शीघ्र–ममिलन् बलयोर्द्वयोः ॥ दूरादप्युपलक्ष्याङ्कै–र्वृण्वन्तः सुभटा भटान् ॥५६॥ मिथः सैन्यद्वयस्येभाः । पर्वता इव जङ्गमाः ॥ रथा भूस्पृग्विमानाभा । हयाश्च गरुडा इव ॥ ५७ ॥ मिलितास्तेषु वीरौघा । मियो योद्धुं डुढौकिरे ॥ उत्पतन्तः पतन्तश्च । सिंहा इव च पत्तयः ॥५८॥ गजानां ॥१००॥

१ किरणाः २ सूर्यस्य ३ सूर्येण ४ सूर्यं ५ रात्रिनिर्वृत्तस्य स्ववियोगस्य वचनेन

गर्जिभिर्वाजि-हेषाभी रथचीत्कृतैः ॥ सुभटानां भुजास्फोटै-र्वाद्यानां पटुभिः स्वनैः ॥ ५९ ॥ अन्योऽन्यास्फलदस्त्रोघ-निर्घोषैश्च समन्ततः ॥ भूतादिकाऽट्टहासैश्च । पुस्फोटेव नभस्तदा ॥६०॥ गजा वपुर्गताऽऽर्द्धै-र्वीरबाणैः समन्ततः ॥ जातपक्षाः पुनः शैला । इवाऽसृग्निर्झरा बभुः ॥ ६१ ॥ पतन्तो हस्तिनः केचि-दाहता वीरमुद्गरैः ॥ अन्वकार्षुः पुरा जात-पक्षच्छेदान्नगान् क्षणम् ॥ ६२ ॥ विद्धा दूरगतैर्बाणै-र्जातच्छिद्रा गजा बभुः ॥ मदस्य कृतनिर्याण-मार्गा इव महाभटैः ॥ ६३ ॥ गजेन पतता वक्षः-स्थलेऽकम्पत मेदिनी ॥ दधती रुधिरस्वेदं । पत्येव नवकामिनी ॥ ६४ ॥ जितेषु प्रतिवीरेषु । वीरा मुमुदिरे परे ॥ हर्षादनिमिषाः शीर्षे-ष्वेषां पुष्पाण्यवर्षिषुः ॥६५॥ अभज्यन्त रथा वीरै-र्गदाभिः पर्पटा इव ॥ अपात्यन्त भटाः साऽश्वा । बालक्रीडाकृता इव ॥६६॥ पत्तयश्चाऽप्यलोठयन्त । भुवि चञ्चानरा इव ॥ उत्तिष्ठन्तस्त्वपात्यन्त । रथचक्रगजाङ्घ्रिभिः ॥ ६७ ॥ सर्वतः प्रसृतैर्वीर-बाणैः खे मण्डपोऽभवत् ॥ वार्यते प्रसरो येन । द्विषां रविरुचावपि ॥ ६८ ॥

जाते च सर्वतो ध्वान्ते । शस्त्रसंघर्षजाऽनलैः ॥ सर्वत्रोद्योत एवाऽऽसी-द्वीरास्येषु विशिष्य च ॥६९॥ एवमायोधने योधैः । क्रियमाणेऽतिभैरवे ॥ कमलप्रभभूनेतु-रग्रसैन्यमभज्यत ॥७०॥ अपसर्पत्तदालोक्य । यावदुत्तिष्ठति स्वयं ॥ धात्रीधवो युधे क्रोध-दुर्द्धरो द्राग्धनुर्धरः ॥ ७१ ॥ राजन्! समरसंरम्भः । कोऽयं ते मयि सत्यपि ॥ एवं निषिध्य तं तावद् । ब्रह्मवैश्रवणो रणे ॥७२॥ उदस्थाद्रथमारूढो । विविधाऽऽयुधबन्धुरं ॥ कुण्डलीकृतकोदण्ड-श्चण्डदोर्दण्डविक्रमः ॥७३॥ युग्मम् ॥ सोऽवर्षत् सर्वतो बाणान् । शिरस्त्राणादिभेदिनः ॥ इव धाराधरो धारा । निराधारान् रिपून् सृजन् ॥७४॥ विव्याध स गजान् साय-स्त्राणान् सप्रक्षरान् हयान् पत्तीन् सकवचांश्चाऽपि । युगपत्सर्वतः शरैः ॥ ७५ ॥ अपीपतद्गजार्दीश्च । युगपत्स सहस्रशः ॥ अलक्षितागमैर्बाणैः । कल्पान्ता-

ऽनिलवद् द्रुमान् ॥ ७६ ॥ सरथान् विरथांश्चक्रे । सगजानगजान् क्षणात् ॥ सजीवानपि निर्जीवान् । सहयानहयान् भटान् ॥७७॥ गजादीनप्य[1]योधांश्च । स जवाद्विविधायुधैः ॥ अशीर्षाऽङ्घ्रिकरान् कांस्कांन् । योधानपि च नाऽसृजत् ॥७८॥ यथा वैद्यकविद्यावित् । पथ्यैः सोऽपू पुषज्जनान् ॥ तथा वैरिगणप्राणैः । कृतान्तमपि सङ्गरे ॥ ७९ ॥ तस्मिंश्चक्रगदाखड्ग–बाणालीमुद्गरादयः ॥ मुक्ताः शस्त्रगणा वीरै–स्तूलायन्तेस्म सर्वतः ॥ ८० ॥ घ्नन्तमेवं द्विपत्सैन्य–मायुधैरौषधैरिव ॥ वीक्ष्याऽसाध्यमिव व्याधिं । युद्धं मुक्त्वाऽत्रसन् भटाः ॥ ८१ ॥ गह्वरेषु न्यलीयन्त । केचित्केचिज्जलाशये ॥ नारीरूपेण केऽप्यस्थुः । केऽपि भट्टादिरूपिणः ॥ ८२ ॥ तृणं दत्वा मुखे केचित् । केऽपि मुक्तायुधाः स्थिताः ॥ तमेव शरणीचक्रुः । केचित्केऽपि जिनक्रमौ ॥ ८३ ॥ त्यक्त्वाऽस्त्राण्यक्षमालां च । केऽप्यलुः श्राद्धदम्भतः ॥ ॐ नमो अरिहंताण–मित्युच्चैर्घोपघोपिणः ॥ ८४ ॥

इति त्रस्तं बलं वीक्ष्य । निखिलं स्वं विसंस्थुलं ॥ युद्धे पद्मरथः क्ष्माभृ–द्धावे क्रोधदुर्द्धरः ॥ ८५ ॥ ब्रह्मवैश्रवणं प्रोचे । हंसि किं रे द्विजब्रुव ! ॥ उपेक्षितो द्विजत्वेना–ऽनाथामिव विरूथिनीम् ॥ ८६ ॥ अस्या नाथोऽस्म्यहं हन्मि । तत्त्वां सम्प्रति सागसं ॥ लज्जन्ते निपतन्तस्तु ।[2] भिक्षादाङ्गे शरा मम ॥ ८७ ॥ सुभिक्षं साम्प्रतं भूयः । प्राप्यन्तेऽनुगृहं कणाः ॥ ताम्रपात्रं गृहाणेदं । भिक्षामट सुखं बटो ! ॥८८॥ म्रियसे परकार्येण । किं मुधा रे ! [3]बटुब्रुव ! ॥ कथं गृह्णाम्यहं ब्रह्म–हत्यां राजसुनिन्दिताम् ॥८९॥

इति तद्विक्क्तिक्रुद्धो । जगाद कपटद्विजः ॥ क्षत्रत्वं ब्राह्मणत्वं वा । हेतुर्न हि पराक्रमे ॥ ९० ॥ यः स्यां स स्यामहं राज–न्नथवा किं कुलेन ते ॥ परनिन्दा त्वदायत्ता । मदायत्तः पराक्रमः ॥ ९१ ॥ [4]यच्च सैन्यस्य नाथत्वं । तव लोप्स्यामि तद्

१ हस्तिपकादिरहितान् २ 'भिक्षाटाङ्गे'प्रत्यन्तरे, भिक्षां अदतीति भिक्षादा भिक्षाचरा इत्यर्थः ३ ब्राह्मणाऽधम । ४ यथाऽनाथामिवेत्याद्युक्तं ध्रुवं लोप्स्यामि तत्र नु इति प्र०

द्रुतं ॥ सुभिक्षं च करिष्यामि । यमौकसि तवाऽसुभिः ॥ ९२ ॥ ताम्रपात्रेण मे कोऽर्थ-स्तव राज्यं गृहीष्यतः ॥ प्राणावधि च ते सर्व-भिक्षां मे दास्यति विधिः ॥ ९३ ॥ कौले पुत्रीवधाऽभीरौ । ब्रह्महत्या भिये कुतः ॥ उपेक्षा तु द्विजत्वेन । कातर्यस्यैव सू-निका ॥ ९४ ॥ परकार्यार्थमेव स्यात् । सतां सर्वोऽप्युपक्रमः । रवीन्दुद्रुममेघाद्या । दृष्टान्ताः सुलभास्त्विह ॥ ९५ ॥ ददे पुत्र्या-स्त्वयाऽन्ध्यं य-च्चचे चित्तेप्सितं ध्रुवं ॥ यत्कौलोऽपीहसे श्राद्ध-पुत्रीं लुप्तविवेकदृक् ॥ ९६ ॥ युधा तद्दर्शयाऽऽत्मीयं । पौरुषं क्षत्रि-योऽसि चेत् ॥ ध्रुवते हि फलेनैव । स्वान् गुणाश्च गिरोत्तमाः ॥ ९७ ॥

इति तद्वीर्यृताहुत्यो-दीप्तक्रोधाऽनलो नृपः ॥ अढौकत युधे बाढं । कुण्डलीकृतकार्मुकः ॥ ९८ ॥ मर्मवर्मभिदो बाणान् । ब्रह्मणे शतशोऽमुचत् ॥ [1]अकाण्ड एव [2]तत्काण्डान् । काण्डैर्द्राक् सोऽप्यखण्डयत् ॥ ९९ ॥ अथ स्वस्वामिना दत्ता-वष्टम्भा नृपसै-निकाः ॥ युद्धेऽढौकन्त सन्नह्य । युगपत्कोटिशः पुनः ॥६००॥ तावद्भूप इवैकोऽपि । ब्रह्मवैश्रवणश्च तान् ॥ युगपत्कोटिशो बाणै-र्विव्याध व्याधवन्मृगान् ॥१॥ गृह्णन्मुश्चन्नसौ बाणा-न्न च कैरपि लक्ष्यते ॥ लक्ष्यन्ति भटा द्रागाऽऽ-त्मानं तैर्विद्धमेव तु ॥ २ ॥ शक्तिमित्यद्भुतां तस्य । वीक्ष्य सर्वैर्विसिष्मिये ॥ अहो ! भाग्यं बलं चाऽस्य । सर्वैरिति च तुष्टुवे ॥ ३ ॥

निषिद्धा अपि तेनाऽथ । तद्युद्धोत्साहवर्द्धनात् ॥ कमलप्रभभूपाल-सैन्यान्यप्यलगन् युद्धे ॥ ४ ॥ कुमारक्ष्मापयोरेवं । बलयोश्चोभयोरपि ॥ रणः प्रववृते शूर-शौर्यहेमकषोपलः ॥ ५ ॥ भटैश्छिन्नानि शीर्षाणि । भटानां खे तथाऽभ्रमन् ॥ यथा राहु-मयं जज्ञे । तदुत्पातभयङ्करम् ॥ ६ ॥ भग्नभल्लगदाचक्र-शूलशक्त्यसिमुद्गराः ॥ भ्रेमुर्दलद्वयात् खे नु । वातोद्धूतवनात् खगाः॥७॥

---

१ तत्काल  २ बाणान्

याहि शस्त्रं विमुच्याऽरे! । प्रहरामि न भीरुके! ॥ तिष्ठाऽस्ति चेद्धि क्षत्रत्वं । धिग्वाचाट? [1]निनङ्क्षसि ॥ ८ ॥ कृपालुर्हन्मि किं बालं? । नश्य रे! मा मृथा वृथा ॥ किं नु सुप्तोऽसि हा! वीर! । रिपुस्तेऽयं प्रगल्भते ॥९॥ साधु वीरस्त्वमेकोऽसि । शरैर्विद्धोऽपि युध्यसे ॥ उत्तिष्ठोत्तिष्ठ किं भग्नो? । नष्टो नष्टो हतो हतः ॥१०॥ मिथ आहूयमानानां । नामग्राहं रणार्थिनां ॥ गर्जतां सर्वतो वाचो । भटानामभवन्निति ॥ ११ ॥ चतुर्भिः कलापकं ॥

कुमारोऽथ चिरं युध्ध्वा । शरै राज्ञोऽच्छिदद्धनुः ॥ छत्रं च चामरालीं च । शिरस्त्राणं च वर्म च ॥ १२ ॥ राजा पद्मरथोऽप्याऽऽशु । गृहीत्वाऽभिनवं धनुः ॥ चिच्छेदाऽस्य बटोर्बाणं । नलिनीनालवच्छरैः ॥ १३ ॥ सोऽपि कोपोत्कटोऽभाङ्क्षी-द्रदया भूभुजो रथं ॥ राजाऽपि मुद्गरेणाऽस्य । स्यन्दनं खण्डशो व्यधात् ॥ १४ ॥ गदां चाऽचूर्णयच्चूर्णं । वर्णज्येष्ठस्य निष्ठुरं ॥ उत्प्लुत्याऽथाऽसिना विप्र-श्चापं राज्ञोऽकरोद् द्विधा ॥ १५ ॥ तस्मै राज्ञा ददे खड्ग-घातस्तेनाऽप्यवञ्चि सः ॥ कोपोत्कटश्च विप्रोऽसौ । तं दातुं यावदुद्यतः ॥ १६ ॥ तावत्खड्गेन तत्खड्ग-माजघान नृपस्तथा ॥ द्वावप्यन्योन्यमास्फाल्याऽ-जायतां कणशो यथा ॥१७॥ ततोऽमर्षाधिकक्रोधा-त्कुमारोऽप्यधरं दशन् ॥ आह्वास्त मल्लयुद्धाय । भूवीरं वीरमानिनम् ॥ १८ ॥ बध्ध्वा परिकरं सोऽपि । तद्युद्धार्थमुपस्थितः ॥ सिंहोऽपि हि किमाऽऽहूतो । युद्धे स्यादलसस्थतिः ॥ १९ ॥ द्वावप्येतौ भुजास्फोटैः । स्फोटयन्तौ नभस्तथा ॥ कम्पयन्तौ भुवं पादा-घातैरास्फलतां मिथः ॥ २० ॥ उत्पतन्तौ पतन्तौ च । कुर्कुटाविव तौ भटौ ॥ गर्जन्तौ तर्जयन्तौ च । मिथश्चित्राय कस्य न? ॥२१॥ मिथोऽलातभ्रममनु-भ्राम्यन्तौ तौ महाभटौ ॥ लुठन्तावुत्थितौ पृथ्व्या-मदृश्येतामनन्तरौ ॥२२॥

[1] नष्टुमिच्छसि

द्रुतमाश्लिष्टविश्लिष्टौ । पृथ्व्यां चोपर्यधो मिथः ॥ पतितौ खे च तौ क्षिप्तौ । न ज्ञातौ कर्तृकर्मणी ॥ २३ ॥ महौजस्कौ महावीरा–वन्योन्यजयकाङ्क्षिणौ ॥ अयुध्येतां चिरं भूप–स्ततः श्रान्तिमगाद्भृशम् ॥ २४ ॥ अविश्रमरणेऽप्याप । मायाविप्रः श्रमं न तु ॥ गजेन सह युध्ध्वा हि । सिंहः श्राम्यति जातु न ? ॥ २५ ॥

प्राप्याऽथाऽवसरं वीरः । कुमारो विप्ररूपभृत् ॥ मुष्टिनाऽताडयत्पद्म–रथं भूपं तथोरसि ॥ २६ ॥ मूर्च्छितो भ्रान्तनेत्रोऽसौ । मुखेन रुधिरं वमन् ॥ अपतत्स यथा पृथ्व्यां । वातोद्धूतजरद्द्रुवत् ॥ २७ ॥ तं तथा पतितं वीक्ष्य । सज्जीकर्तुं जिघृक्षवः ॥ अधावन्त भटास्तस्य । भक्ताः शक्ताश्च लक्षशः ॥ २८ ॥ गृहीत्वा धनुरास्फाल्य । ब्रह्मवैश्रवणः शरान् ॥ अवर्षत्सर्वतस्तेषु । तथाऽगर्जच्च सिंहवत् ॥ २९ ॥ चक्रशक्तित्रिशूलानि । गदाभल्लादिकानि च ॥ भित्त्वा तदायुधान्याशु । तान् विव्याध मृगानिव ॥३०॥ तद्बाणैर्व्याकुलाः सर्वे । जीविताकर्षणोद्यताः ॥ ग्रहीतुं च विमोक्तुं च । न शेकुः किञ्चिदायुधम् ॥३१॥ तेनैवं क्रियमाणेऽरि–क्षय-काल इवाऽऽहवे ॥ रुद्धेषु स्वामिनं नेतुं । वीरेष्वप्रभविष्णुषु॥३२॥कमलप्रभभूनेता । भ्रूसंज्ञाप्रेरितैर्भटैः॥ भूपं पद्मरथं बध्ध्वाऽथाऽऽनाय्य स्वरथेऽक्षिपत् ॥३३॥ गृहीतं तं भटास्तस्य । वीक्ष्य स्वाम्याशयोज्झिताः ॥ मुधा म्रियामहे कस्य । कार्यायेति व्यचिन्तयन् ॥३४॥

ततो मुक्त्वा रणं सर्वे । गतिमन्यामनाप्य ते ॥ तमेव शरणं भेजु–र्द्विजेन्द्रं जीवितार्थिनः ॥ ३५ ॥ कुमारस्तांस्तथा वीक्ष्य । मा भैष्ट त्रायकोऽस्मि वः ॥ एवमाश्वासयामास । हस्तोत्क्षेपं प्रसन्नदृक् ॥ ३६ ॥ ततो जयजयाराव–मुखरा व्यदधुः सुराः ॥ तच्छीर्षे कौसुमीं वृष्टिं । नेदुर्दुन्दुभयश्च खे ॥ ३७ ॥ जयतूर्याण्यवाद्यन्त । शिबिरे कामलप्रभे ॥ जयसांराविणं चक्रे । सर्वतोऽपि

महाभटैः ॥३८॥ यस्याऽस्ति देवो हृदि मोहजेता। गुरुश्च पञ्चेन्द्रियवैरिजैत्रः॥ धर्मश्च दुःकर्मजयैकतानः। स एव युद्धेऽपि जयं लभेत ॥३९॥ भक्तिर्न यस्याऽर्हति सद्गुरौ च। जिनोक्तधर्मे च रुचिर्न काचित्॥ भवे भवे सर्वपराभवाणां। सुदुस्सहानां भवनं भवेत्सः॥ ४०॥

अथ श्वश्र्वाश्च वध्व्वाश्च। कुमारः संस्मरन् गिरः॥ औषध्या सज्जयांचक्रे। नृपं पञ्चरथं जवात्॥ ४१॥ कृत्वा निगडितं तं च। कुमारः पञ्जरेऽक्षिपत्॥ विना नास्तिकतात्यागं। न मोक्ष्यामीति सन्धया॥ ४२॥ रिपोः स्वस्य च सैन्येऽपि। शस्त्रघातव्यथार्दितान्॥ सैन्यानसज्जयत्सर्वा–नौषधीजलसेकतः॥ ४३॥ ततस्ते मुदिताः सर्वे। तुष्टुवुस्तं द्विजोत्तमं॥ अहो स्वाऽन्याऽविशेषेण। सन्तः स्युरुपकारकाः॥ ४४॥

अथाऽऽनन्दमयीभूय। भूपतिः कमलप्रभः॥कुमारंद्विजमालिङ्ग्य। तोष्टवीतिस्म वन्दिवत्॥४५॥ अहो! शौर्यमहो धैर्य–महो अन्योपकारिता॥ अहो! गम्भीरिमा नेदृग्। त्वत्तोऽन्यत्रेक्ष्यते कचित्?॥४६॥ एकैवैषाऽभवत्सृष्टि–र्जगन्ति सृजतो विधेः॥ मन्ये घूणाक्षरन्यायात्त्रैलोक्येऽप्रतिमत्वतः॥४७॥ त्वया वत्स! कृतार्थाः स्मः। पूर्वपुण्यानुभावतः॥ जातसङ्घटनेनैवं। तं प्रोच्याऽऽरोहयद्गजम्॥ ४८॥ नृपोऽपि गजमारूढः। सह तेन पुरं प्रति॥ ससैन्यः प्राचलद्वाद्य–निनादैर्नादयन् दिशः॥४९॥ कुमारब्राह्मणः सैन्यं। तत्पञ्चरथभूपतेः॥ सहाऽऽकार्य पुरासन्ने। सुस्थानेऽस्थापयत् कचित्॥ ५०॥ तस्मात्सारान्नरान् कांश्चि–न्मंत्रिसेनेश्वरादिकान्॥ सहाऽकार्षीत्स्वसेवां तैः। कारयन् विपुलाशयः॥ ५१॥ पदे पदे तोरणधोरणीधरं। सुमौक्तिकस्वस्तिकपंक्तिभासुरं॥ ध्वजाऽवलिभ्राजितमन्दिरापणं। स्फुटं नटीपेटकनाट्यसङ्कटम्॥ ५२॥ वृद्धाङ्गनानिर्मितनैकमङ्गलं। पतिः पृथिव्या द्विजराजस-

ङ्गतः ॥ सचामरच्छत्रविराजितोऽविशत् । महामहैः स्वं [१]पुरमादरान्वितः ॥ ५३ ॥ युग्मम् ॥

विसृष्टा भूभुजा मन्त्रि-सामन्ताद्या निजं निजं ॥ जग्मुर्धाम द्विजेन्द्रोऽपि । गृहेऽगात्सपरिच्छदः ॥ ५४ ॥ कर्माणि चक्रिरे स्नान-भोजनादीनि तेऽखिलाः ॥ वासरं गमयामासु-श्चैनं रणकथादिभिः ॥ ५५ ॥ राजवर्ग्याश्च पौराश्च । विचित्रालापपेशलाः ॥ ब्रह्मवैश्रवणादीना-मस्तुवन् विविधान् गुणान् ॥ ५६ ॥ ब्रह्मवैश्रवणादेशा-द्राजा पद्मरथोऽपि सः ॥ रथे पञ्जरगो न्यस्य । सहैवाऽऽनायि रक्षकैः ॥ ५७ ॥ स्थापितस्तैर्यथादेशं । भोजितश्च स तिष्ठति ॥ शोचन् स्वं कर्म तद्विप्र-विक्रमाऽतिचमत्कृतः ॥ ५८ ॥

अथ सिंहासनं हैमं । सदस्यास्तीर्य संसदि ॥ प्रातर्द्विजेन्द्रमध्यास्याऽर्द्धासनेऽध्यास्त भूपतिः ॥ ५९ ॥ आनाय्य पुरुषैः पद्म रथं निष्कास्य पञ्जरात् ॥ तं प्रति व्याहरद्ब्रह्म-कुमारः सुकुमारगीः ॥ ६० ॥ सुताविडम्बनापाप-स्यैक्षिष्ठाः फलमित्यरे ! ॥ पुनः पश्य न तस्याऽन्तः । स्याद्यस्मादियताऽधम ! ॥ ६१ ॥ उक्त्वैवमौषधीं तस्य । शीर्षे दत्वा च नैपुणात् ॥ विप्रस्तं मर्कटं चक्रे । पुनश्चित्रमयीं सभाम् ॥६२॥ आनाय्य शृङ्खलां लौहीं । तस्य चाऽचिक्षिपद्गले ॥ जगाद च नरान् रे ! रे ! । दुष्टमेतं पुरान्तरे ॥६३॥ प्रत्यट्टं प्रतिगेहादि । प्रतित्रिकचतुःपदं ॥ ताडंताडं कशाघातै-र्दृढं भ्रमयताऽभितः ॥६४॥ चतुर्भिः कलापकं ॥ विप्ररूपकुमारस्य । प्रोक्तं श्रुत्वेति तन्नराः ॥ प्रपद्येदं तथाकर्तुं । तं धृत्वा यान्ति यावता ॥ ६५ ॥ रुदती कमला तावद् । दृष्ट्वा पत्युर्विडम्बनां ॥ दुःखिता भूभुजं स्माह । कर्मेदं वारयाऽग्रज ! ॥ ६६ ॥ जने लज्जापवादश्च । स्यादेवं मे तवैव च ॥ प्रतिव्रताभिराराध्यः । कृतागस्कोऽपि यत्पतिः ॥ ६७ ॥ ब्रह्मवैश्रवणं सा च । प्रोचे वत्स ! कृपां मयि ॥ कृत्वा मुञ्च पतिं [२]मातुर्वचनं मा कृथा वृथा ॥६८॥

---

१ "मात्मधाम च इति प्रत्यन्तरे    २ मातुः सदृशी कमला तस्याः उक्तिर्वैश्रवणं प्रति एषा।

जगौ राजाऽपि हे ब्रह्मन्! दीनेऽस्मिन् कृपणे नते ॥ क्रोधं नाऽर्हसि येन स्युः । प्रणामान्ताः सतां क्रुधः ॥ ६९ ॥ विमुञ्च तदिमं भूपं । स्वभावस्थं कुरुष्व च ॥ अद्राक्ष्म कोपशक्तिं ते । प्रसादं दर्शयाऽधुना ॥ ७० ॥

प्रोचे विप्रकुमारोऽथ । मुञ्चाम्येनं ततो यदि ॥ त्यक्त्वा नास्तिकतावादं । जैनं धर्मं प्रपद्यते ॥७१॥ करिष्यस्येतदुक्तं भोः । पृष्टश्चैवं तं भूभुजा ॥ मर्कटः साह चेष्टाभिः । करिष्ये सर्वमप्यदः ॥ ७२ ॥ ततः कृपालुतां प्राप्तो । ब्रह्मचैश्रवणोऽकरोत् औषध्या तं स्वभावस्थं। निगडाद्यप्यभञ्जयत् ॥७३॥ ततश्चाऽऽश्वासनापूर्वं। तमुपाविशदासने॥ चित्रानन्दमयाश्चासं-स्तथा दृष्ट्वा नृपादयः ।७४। कमलप्रभभूपाद्याः । प्रणेमुस्तं गतक्रुधः ॥ स्वाजन्यात्प्रौढिमत्वाच्च । स्वाधीने हि न वैरिता ॥ ७५ ॥ मंत्रिसेनाधिपाद्याश्च । द्विजेनाऽऽकारितास्तदा ॥ मुक्तं स्वं स्वामिनं मत्वा । प्रणेमुर्मुदिता भृशम् ॥ ७६ ॥

अथ पद्मरथः क्ष्माभृ-ल्लज्जानम्राननोऽब्रवीत् ॥ दुःखाश्रुविप्लुताक्षस्तान् । नृपादीन् गद्गदाक्षरम् ॥ ७७ ॥ नाऽहं प्रणामयोग्योऽस्मि । महापापकलङ्कितः ॥ अदृष्टाश्रुतपूर्वं य-द्व्यदधां कर्म गर्हितम् ॥७८॥ अलभे तत्प्रभावेण । दुःखमत्रैव तादृशं ॥ सत्यमेतदभूदत्रै-वोग्रपुण्याघयोः फलम् ॥ ७९ ॥ पुत्री भिल्लाय या दत्ता । दुश्चूर्णेनान्धिता च हा! ॥ मृता जीवति वा साऽस्ति । कुत्र वाऽवस्थया कया ॥ ८० ॥ पुत्रीहत्याभवं पाप-मिति दुःखाकरोति मां ॥ तदम्बाऽगाद्वियोगार्त्ता । रुष्टा चेत्यपि मे त्रिपत् ॥८१॥

मान्यमानस्तृणायापि । न वीरान् स्वौजसाखिलान् ॥ भटकोटिसमक्षं द्राग् । जितोऽहं वटुनाऽपि यत् ॥ ८२ ॥ यत्नाऽपि प्रापितः काश्चि-न्मर्कटत्वादिदुर्दशां ॥ तत्पराभवदुःखान्तं । गन्तुं कः क्षमते पुमान् ॥८३॥ यस्मात्तस्मादुपायात्तत् । श्रेयो मरणमेव मे ॥ प्रवेक्ष्यामि ततो वह्नौ । सज्जीकुरुत तं भटाः ॥ ८४ ॥ गिरः पद्मरथस्येति । श्रुत्वा स्वभगिनीपतेः ॥ तस्य खेदभिदेऽब्रा-

दीव् । भूप्रभुः कमलप्रभः ॥ ८५ ॥ बटुनाऽपि जितोऽसीति । मा म्लानोभूर्नरोत्तम ! ॥ पराभवादिदुःखानि । नाऽऽपुः किं भरता-दयः ॥ ८६ ॥ बटुमात्रं न चिन्त्योऽयं । दिव्यः कोऽपि पुमान् ध्रुवं ॥ चेष्टितैरीदृशैर्ज्ञेयो । ज्ञास्यते समये त्विदम् ॥ ८७ ॥

अथो मायाद्विजोऽवादी–त्तदेतत् पापफलं कियत् ॥ यद्दत्ते नारकं दुःखं । मनोवागगोचराऽतिगम् ॥ ८८ ॥ पापमूलं ततस्त्यक्त्वा । राजन्नास्तिकताऽऽग्रहं ॥ जैनधर्मं मपद्यस्व । लोकद्वयसुखावहम् ॥ ८९ ॥ दृष्टवानसि पापस्य फलमेवं नरोत्तम ! ॥ आद्रियस्वाऽथ पुण्यानि । सर्वदुःखक्षयो यतः ॥ ९० ॥ भुङ्क्ष्व सर्वं निजं राज्यं । रुष्टामनुनय प्रियां ॥ कुरुष्व चाऽर्हताद्धर्मात् । कृतार्थं मानुजं जनुः ॥ ९१ ॥ अथोवाच नृपः किञ्चित् । तद्गिरैवं समाहितः ॥ विज्ञाय तनयाशुद्धिं । करिष्ये सर्वमप्यदः ॥ ९२ ॥ याचित्वा भर्तुरादेशं । तस्य मायाबटोः प्रिया ॥ तत्राऽगत्याऽवदद्भूपं । व्रीडामन्मनया गिरा ॥ ९३ ॥ तुंहिं संकर इत्यादि–सम-स्यापूरिका नृप ! ॥ तव स्तवेन सत्योक्तिः । किं भवेज्जयसुन्दरी ॥ ९४ ॥ किंवा[1] जस हियेत्यादि–धर्ममाहात्म्यवादतः ॥ समस्या-पूरिका सत्य–गीः स्याद्विजयसुन्दरी ॥ ९५ ॥

भल्लीवत्तद्गिरा मर्म–ण्याविद्ध इव भूपतिः ॥ दध्यौ स्वाऽकृत्यसंस्मृत–लज्जादुःखनताननः ॥ ९६ ॥ कथमेतदियं वेत्ति । किं श्रुतं ज्ञानिनो मुखात् ? ॥ सैव रूपान्तरस्थैषा । किं वा विजयसुन्दरी ? ॥९७॥ अथवा कमलाराज्या । मुखाज्ज्ञात्यनया श्रुतं ॥ आसन्नवर्तिनी ह्येषा । तस्याः प्रीतिपदं सदा ॥९८॥ राजाऽवादीन्मया सर्वाः । प्रजाः स्युः सुखिता यदि ॥ तत्किमाऽऽत्मानमेवाऽहं । नाऽरक्षं संकटादतः ? ॥९९॥ ततः सुखात्मकाः पुण्यै–र्ब्रह्मवैश्रवणादिवत् ॥ दुःखिताश्च निजैः पापैः । सर्वेऽपि स्युर्मदादिवत् ॥७००॥

---

१ जिणंदवर जसु हियडेत्यादि

साऽवोचद्भूप! यद्येवं । तत्किं पुण्यं करोपि न? ॥ सुतार्त्तिर्यदि [1]विघ्नाय । तत्पृच्छैनं पतिं मम ॥१॥ सर्वशास्त्रकलाविज्ञो । निमित्तादिबलैर्ह्ययं ॥ अतीताऽनागतं वेत्ति । यथार्थं वक्ति चाऽखिलम् ॥ २ ॥

तत प्रपच्छ भूपस्तं । मिलिष्यति सुता मम ॥ कदा वा किमवस्था वा? । ब्रह्मन्निति वद स्फुटम् ॥३॥ सोऽपि चाऽडम्बरं कृत्वा । लग्नन्यासादिविस्तरैः ॥ द्राग् मेलित्री सुखात् त्वां सा । मां [2]शङ्किष्ठा जगाविति ॥ ४ ॥ परं राजन्निमां मां चो–पलक्षयसि किञ्चन? ॥ भूपः स्माह व्यधाग्यात्मा । ह्युपलक्ष्यस्त्वया गुणैः ॥५॥ अधिकं न हि जानेऽह–मन्वयाह्वादि वां पुनः ॥ ततो विजयसुन्दर्या । विवाहे यादृशं निजम् ॥ ६ ॥ रूपमासीद्व्यधाद्वैल्ल–मौषध्या तादृगेव सः ॥ पत्न्या विजयसुन्दर्या । रूपं स्वाभाविकं पुनः ॥ ७ ॥ अहो! ईदृक्कुरूपाय । कथमीदृग्गुणा सुता? ॥ ददे भूपेन धिक्क्रोध–मानौ विश्वविडम्बिनौ ॥८॥ यथा रूपवतीष्वेषा । सीमा विजयसुन्दरी ॥ तथा सीमा कुरूपेषु । भिल्लोऽयमिति चाऽवदत् ॥९॥ सा जगाद च मां भूपो–पलक्षयसि सम्प्रति॥ लज्जानम्राननः सोऽपि । व्याहार्षीदुपलक्षये ॥१०॥ सुताऽसि मम दुर्बुद्धि–सीम्नो विजयसुन्दरी ॥ तादृक्कुकर्म तु स्मृत्वा । नाऽऽस्यं दर्शयितुं क्षमे ॥ ११ ॥ ततश्च विसयानन्द–खेदचिन्तादिभी रसैः ॥ विविधैर्व्याकुलस्याऽस्य । सा निपत्य पदोर्जगौ ॥ १२ ॥ मा खिद्यास्त्वं नृपोत्तंस! । मयेयं तनया क्रुधा ॥ विडम्बितेति यत्तेऽभूत् । क्रोधोऽपि मेऽद्भुतर्द्धये ॥१३॥ नाकरिष्यस्तदा क्रोधं । यदीदृग्मे कथं ततः? ॥ अभविष्यत्पतिर्यस्य । [3]शौण्डीर्याऽनुभवस्तव ॥ १४ ॥ सुवर्णभूमिप्रभवं रजोऽपि । स्वर्णात्मतां याति यथाऽग्नियोगात् ॥ बभूव रोपोऽपि पितुस्तवैवं । हिताय तादृक्पतियोगतो मे ॥ १५ ॥ ततस्तद्वचसा हृष्टः । स्नेहादालिङ्ग्य तां नृपः ॥

१ अन्तराय हेतवे २ क्लेशिष्ठा प्र० ३ बलानुभवः

अङ्के न्यवीविशन्नूनं । यस्तातस्तात एव सः ॥ १६ ॥

तथा दृष्ट्वाऽभ्यधाद्भिक्षो । राजन्! पुत्र्युपलक्षिता ॥ उपलक्षयसे किञ्चि–न्मामप्यथ नृपोऽवदत्? ॥१७॥ लक्ष्याऽलक्ष्यस्वरूपोऽसि. । जिनेन्द्रोदितवस्तुवत् ॥ विश्वं मोहयसे नाना–रूपऋद्धिकलादिभिः ॥ १८ ॥ तदेवं सर्वथा कस्त्वा–मुपलक्षयितुं क्षमः ॥ सुधीरप्यसुधीस्तत्र । भवेशो यत्र नो धियाम् ॥१९॥ रूपेण यादृशा कन्याऽ–दायि ते तदवेदिषं ॥ वेत्ति स्वाभाविकं कस्तु । स्थानवंशाद्यपादि च ॥ २० ॥ कमलप्रभभूपाद्या । उपकर्णं जगुर्मिथः ॥ यथाऽस्य कृत्रिमं भैक्षं । रूपमेतदवेक्ष्यते ॥ २१ ॥ वैप्रमप्येवमेवैतत्–प्रणयिन्याश्च मन्महे ॥ लक्षणैश्चरितैरेभिः कथं विप्रो भवेदयम्? ॥ २२ ॥

ततः स्माह नृपो भद्र! । भैक्षं रूपं कृथा यथा ॥ कुरु स्वाभाविकं तद्व–न्मोहयिष्यसि नः कियत्? ॥२३॥ मायाभिक्षुस्ततोऽवादीद् । दुश्चूर्णेनाऽन्धिता यथा ॥ भूभुजा निजपुत्रीयं । सजनेत्रा मया कृता ॥ २४ ॥ तदा च प्रत्यज्ञासीति । त्वदनौचित्यजक्रुधा ॥ यावत्कुर्वेऽस्य कौलस्य । शिक्षां बोधं च नो भृशम् ॥२५॥ तावन्नाऽऽविर्भविष्यामि । स्वस्वरूपेण कुत्रचित्? ॥ क्षन्तव्यं तदहो! पूज्या । यद्विमोहेन दुःखिताः ॥ २६ ॥

अथ पूर्णप्रतिज्ञोऽस्मि । ततः प्रादुर्भवाम्यहं ॥ इत्युक्त्वा स स्वमौषध्या । रूपं स्वाभाविकं व्यधात् ॥ २७ ॥ परं स्वस्य परस्याऽपि । नानारूपाणि कुर्वतः ॥ नाऽस्याऽलक्ष्यौषधी कैश्चि–द्धस्तलाघवनैपुणात् ॥२८॥ भूपाद्योऽथ तद्रूपं । दिव्यं जितहरिस्मरं ॥ वीक्ष्य व्याहार्पुरन्योन्यं । चित्रानन्दाऽद्भुतात्मकाः ॥ २९ ॥ अहो [1]संवाधदो रूपं । गुणलक्षणविक्रमैः ॥ विश्राम्यति चिरत्नो हि ।

---

१ अनुकारि

नाऽनुरूपविधौ विधिः ॥३०॥ नाटके योऽभिनिन्ये प्रा–गनेन नृपनन्दनः ॥ दिव्यरूपः स एवाऽयं । नानाप्रौढावदातभूः ॥ ३१ ॥ एवं स्तुवान्ति तं यावत् । सर्वे भूपद्वयादयः ॥ तद्वृत्तान्तं तथा श्रुत्वा । तावत्कमलसुन्दरी ॥ ३२ ॥ तत्र हर्षोच्छ्वसद्देहा । प्राप्ता तद्रूपमोहिता ॥ अक्षिपद्विस्मृतव्रीडा । तत्कण्ठे वरमालिकाम् ॥ ३३ ॥

अहो! साधु वृतं सर्वे–ऽपीति स्माहुः सभासदः ॥ नेदुर्मङ्गलतूर्याणि । पेठुर्भद्राणि बन्दिनः ॥ ३४ ॥ हर्षकोलाहलं श्रुत्वा । तत्स्वरूपं निबुध्य च ॥ तत्राऽगात्कमला राज्ञी । द्राक् प्रमोदोच्छ्वसत्तनुः ॥ ३५ ॥ वीक्ष्याऽऽम्बामपतत्तस्याः पदोर्विजयसुन्दरी ॥ साऽपि चाऽऽलिङ्ग्य तां स्नेहात् । कण्ठे लग्ना स रोदिति ॥३६॥ स्नेहोल्लासेन हार्देन । किञ्चिदज्ञाताऽसि हे सुते ! ॥ छन्ना रूपान्तरा–ऽभ्रेण । नोपलक्षीन्दुकान्तिवत् ॥ ३७ ॥ अद्य नः सफलं जन्म । पूर्णाः सर्वे मनोरथाः ॥ प्रणेशुर्विपदो दूरं । त्वत्संगमसुखाद्भ–यात् ॥ ३८ ॥ कुमारोऽप्यनमत् श्वश्रूं । साऽपि चाऽऽशीःशतं ददौ ॥ मङ्गलानि च कुर्वाणा । स्वसंवेद्यां मुदं दधौ ॥ ३९ ॥

कुमाराऽनुज्ञया साऽथ । सह पुत्र्या गृहेऽगमत् ॥ ससर्ज स्वजनानां च । तां प्रदर्श्य मुदद्वयम् ॥४०॥ कमलप्रभभूपोऽपि । भवद्वर्द्धापनोत्सवः ॥ सर्वतोऽचीकरन्नाना–महोत्सवमयं पुरम् ॥ ४१ ॥ कुमारः श्वशुरं नत्वा । क्षमयित्वा च भूपतिं ॥ तद्विशेषप्रबो–धार्थ–मथो एवमुपादिशत् ॥ ४२ ॥ त्वं राजा सेवकाश्चाऽन्ये । त्वं दाताऽन्ये च याचकाः ॥ त्वं भर्त्ताऽन्ये च भर्त्तव्याः । सर्वं पुण्यफलं ह्यदः ॥४३॥ स्फुरन्ति वेस्मन्यभितः श्रियोऽर्थिता । मुखे गिरः श्लाघ्यतमा धियो हृदि ॥ तनौ च सौभाग्यरमां–सयोर्बलं । यशांसि दिक्ष्वार्हतधर्मतः सताम्॥४४॥ वसूनि पृथ्व्यः खनयो मणीन् द्रुमाः फलानि मुक्ताः किल ताम्रप–र्णिका ॥ लताः प्रसूनानि गजांश्च विन्ध्यभूः । पुण्यात्मनां बिभ्रति भुक्तयेऽङ्गिनाम् ॥ ४५ ॥ भवन्ति शिल्पानि कृतानि

१शिल्पिनां । विशिष्टकर्माण्यपि २कर्मकारिणां॥सुशिक्षिताश्चाऽपि कलाः कलावतां । श्रेयस्विनामेव सुखोपभुक्तये ॥४६॥ नीचैः कुले जनिरपादरिद्रभावो । दौर्भाग्यमामयततिः कुकुटुम्बयोगः । वाग् निष्ठुरा वधपराभवदुर्यशांसि । स्वेष्टैर्वियुक्तिरिति पापतरोः फलानि ॥४७॥ अधीनग्रामः सुकुलोद्भवोऽस्यहो! । विवेकिधुर्यो विपुलाशयोऽसि च ॥ राजन्! कृतार्थं कुरु जन्म मानुषं । हितादिहाऽमुत्र च धर्मतस्ततः ॥ ४८ ॥ तवेदं दर्शितं पुण्या । साक्षात्पुण्यफलं च यतः । आपदि क्षिप्यमाणाऽपि । संपद्यारुह्यतेस्म सा ॥४९॥ ततो दृष्टफले धर्मे । को नु मन्दायते सुधीः ? । तदुक्तमुपकर्ण्येवं । राजा पद्मरथोऽब्रवीत् ॥ ५० ॥

कुमार प्रतिबुद्धोऽस्मि । धर्मं जाने च शाश्वतः ॥ गुरुपार्श्वे ग्रहीष्ये च । मा कृथाश्चाऽत्र संशयम् ॥ ५१ ॥ कुमारः स्माह धन्योऽसि । स्वल्पादपीत्यबुध्यथाः ॥ आपद्यपि चिरेणाऽपि । न बुध्यन्ते च दुर्धियः ॥ ५२ ॥ ततश्च स्नेहहर्षाभ्यां । क्ष्मापालः कमलप्रभः ॥ महता गौरवेणैतं । नृपतिं भगिनीपतिम् ॥ ५३ ॥ परिच्छदयुतं स्नान–भोजनादि व्यदीधपत् ॥ सत्कृत्य बहुधा वस्त्रा–लंकारादिप्रदानतः ॥५४॥ युग्मम्॥ कुमारानुमतश्चैष। प्रैषीच्छत्राद्यलङ्कृतं॥ अथ पद्मरथं भूपं । तत्सैन्याऽन्तः सगौरवम् ।५५। अभ्यर्थ्य मानपित्रा च । तदेकान्तानुरागिणीं ॥ सुमुहूर्त्ते कुमारेण । स तां कमलसुन्दरीम् ॥ ५६ ॥ कमलप्रभभूमीन्द्रः । कुर्वन् हर्षोत्सवाद्भुतं ॥ कर्तभोगवतीराख्या । मंगलैः पर्यणीनयत् ॥५७॥ युग्मम् ॥ ददौ देशं कुमाराय । बलात्कारादिलाधिपः ॥ सोऽपि नव्यप्रियागारं । चक्रे नेच्छद्व्रजादि च ॥ ५८ ॥ आवासे भूभुजा दत्ते । प्रियाभ्यां विलसत्ययं । प्राग्वन्नित्यागमैः रत्नै–र्दानादि सुकृतं सृजन् ॥ ५९ ॥

---

१ चित्रकारादीनां  २ कृषिकारादीनां

अथ पद्मरथो भूपो । जामातुरखिलां व्यधात् ॥ प्रतिपत्तिं सुतायाश्च । विवाहसमयोचिताम् ॥ ६० ॥ देशमेकं ददौ चाऽस्मै । कुमारश्च तमग्रहीत् ॥ नृपखेदभिया पूर्व-प्रेयसीसाचकार च ॥ ६१ ॥ युग्मं ॥ कमलाऽनुमता भ्रात्रा । सस्नेहं सत्कृताऽथ च ॥ सन्मान्य शिक्षयित्वैव-मापृच्छ्य च वधूवरम् ॥ ६२ ॥ अनुनीता भृशं भर्त्रा । [1]स्वागःक्षामणपूर्वकं ॥ मिथः स्नेहाऽतिरेकेण । मुदिताऽनुससार तम् ॥ ६३ ॥ युग्मं ॥ कमलप्रभभूपाल-कुमाराभ्यां नृपोऽर्चितः ॥ ससैन्यः सप्रियश्चाऽऽप । निजं पद्मरथः पुरम्॥६४॥ समये सद्गुरोः प्राप्तात् । प्रपेदे शुद्धभावतः ॥ मत्वा तदुपदेशेन । श्राद्धधर्मं यथाविधि ॥६५॥ चिन्तामणिमिव प्राप्तं । मन्यमानश्च दुर्लभं ॥ सम्यग्वाक्कायचेतोभि-रनुतिष्ठति सुष्ठुधीः ॥६६॥ युग्मं ॥ नरकप्रदनास्तिक्य-त्यागात्सद्धर्मलाभतः ॥ [2]तद्वन्धाद्यापदं लेभे । तत्त्वतः सम्पदं नृपः ॥६७॥ स्नेहयौवनरम्याभ्यां । रमणीभ्यां सह कामवत् ॥ रतिप्रीतिसमानाभ्यां । क्रीडत्येव कुमारराट् ॥६८॥ यश्चाऽस्य वेत्ति मौलाह्वां । स कोऽप्यत्र न लभ्यते॥ स्वयं न चाऽयं तां वक्ति । गौणाख्याऽऽख्यायतेऽस्य तत्॥६९॥ दानलीलाधनैश्वर्य-बलरूपकलागुणान् ॥ अत्युत्कृष्टतमांस्तेजः । क्षात्रं च प्रेक्ष्य विस्मिताः ॥७०॥ क्षत्रवैश्रवणेत्याह्वा-मस्य राजादयोऽवदन् ॥ एतत्प्रभावतो राज्यं । वव्रृधे च समन्ततः ॥ ७१ ॥ त्रिभिर्विशेषकं ॥ परिच्छदस्तस्य बहुः सुभक्तः । स्निग्धाश्च नैके सुहृदो बभूवुः ॥ तत्राऽन्वरज्यन्त जनाश्च सर्वे । परोपकारादिगुणैरतुल्यैः ॥ ७२ ॥ गृहे रमा सर्वजनाननेषु । गुणस्तुतिर्दिक्षु यशश्च भेजे ॥ स्फातिं जयश्रीः समरे च तस्य । कुमारनेतुः सुकृताऽनुभावात् ॥ ७३ ॥

इति श्रीमत्तपागणेन्द्रपूज्यश्रीदेवसुन्दरसूरिश्रीज्ञानसागरसूरिशिष्यः श्रीमुनिसुन्दरसूरिभिर्विरचिते श्रीजयानन्दराजर्षिकेवलिच-

१ मिथः स्निग्धेन चेतसा । राज्ञी प्रपन्नाऽऽस्तिक्येन २ नास्तिकाग्रहात्

त्रिे जयश्रीके गगनगतिपल्यङ्कचलसकलत्रकमलपुरप्राप्ति–कमलप्रभभूपपुत्राद्युपकार–स्वपत्नीविजयसुन्दरीपितृपभरथजय-पूर्वप्रतिबोध–कमलसुन्दरीपरिणयनवर्णनो नाम नवमः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रन्थाग्रं श्लोकसंख्या ७८५ ॥

## ॥ अथ दशमः सर्गः प्रारभ्यते ॥

भुङ्क्ते तृप्यति चाऽन्य एव नियतं, मिथ्याऽपि सत्यैव गी–र्यः प्राग्धन्यभवे ह्यदात् सुगुरवे शुद्धं हविः श्रद्धया ॥
चित्रं तन्न निपु त्रयोदशसु बद्धायुस्तदेवाऽजनि । प्रत्येकं सुखबोधिवुद्धिमहसां सार्वप्रभोऽव्यात्स वः ॥ १ ॥

अन्यदा चैत्रमासेऽथ । क्रीडोद्याने स सप्रियः ॥ कुमारः सहमित्रोऽगात् । चिक्रीड च यथारुचि ॥ २ ॥ ततः स दृष्टवान् देवा–निव विद्याधरान् बहून् ॥ मानाऽतीतविमानर्द्ध्या । गगने गच्छतस्तदा ॥ ३ ॥ यान्ति दिव्यर्द्धयः क्वैते । यावच्चिन्तयतीत्ययं ॥ तावदुत्तीर्णवानेको । वाप्यां खेटः प्रियान्वितः ॥ ४ ॥ तत्र गत्वा कुमारोऽथ । पाययन्तं जलं प्रियां ॥ तमप्राक्षीद् व्रजन्त्येते । किमर्थं क्व च खेचराः ? ॥५॥ ततः खेटो जगौ चैत्रा–ष्टाहिकाऽर्चामहोत्सवं ॥ कर्त्तुं नन्दीश्वरे यान्ति । शाश्वताऽर्हतसद्मसु ॥ ६ ॥ शाश्वताऽष्टाहिकापर्व । धन्या ह्याराधयन्त्यमी ॥ क्रीडया गमयाम्येतत् । किमित्यथ स दध्यिवान् ॥७॥ ततो गत्वा गृहे पत्न्यो–र्जगौ विद्याधरैः सह ॥ नत्वा नन्दीश्वरे देवान् । सद्यो यावदुपैम्यहम् ॥ ८ ॥ युवाभ्यां वृद्धनारीभिः । सह धर्मकथादिभिः ॥ चित्तं समाधयन्तीभ्यां । तावत्स्थेयं यथासुखम् ॥ ९ ॥ सभक्तिविनयं ताभ्यां । पत्यादेशे मतेऽथ सः ॥ पल्यङ्केनाऽचलत्सार्द्धं । खेटैर्नन्दीश्वरं प्रति ॥१०॥ जम्बूद्वीपजगत्यां च । पल्यङ्कोऽस्याऽस्खलत्पुनः ॥ शक्त्यभावाद्गतावुच्चै–र्जग्मुः प्रोच्चैश्च खेचरा॥११॥

खिन्नो धर्मान्तरायेण । कुमारो ववले ततः ॥ काङ्क्षन् खगामिनीं विद्यां । स्वेष्टसिद्ध्यै कुतश्चन ॥ १२ ॥
अथ काऽपि पुरोद्याने । हैमं चैत्यं ददर्श सः ॥ अभ्रंलिहशिरोदीप्र-मणिकलशमण्डितम् ॥ १३ ॥ स तीर्थलङ्घनोद्भूताऽशातनाया भयादिव ॥ कुमारोऽथोत्ततारोर्व्यां । चैत्ये च विधिनाऽविशत् ॥ १४ ॥ नत्वा स्तुत्वा च नाभेय-प्रतिमां रत्ननिर्मितां ॥ हर्षरोमाञ्चिताङ्गोऽथ । निर्ययौ चैत्यतो बहिः ॥ १५ ॥ अपश्यद्राजपुत्रान् स । रूपयौवनशालिनः ॥ कृतहस्तान् स्वहस्तात्त-वीणावंशाद्युपस्करान् ॥१६॥ गीतनृत्यकलाभ्यास-रसिकान् रसकोविदान् ॥ प्रत्यक्षानिव गन्धर्वान् । प्रकुर्वाणान् गतागती ॥१७॥युग्मं॥
ततः पुरः पुरं दृष्ट्वा । नरं पौरं च कञ्चन ॥ तत्स्वरूपं पुरादेश्चा-ह्वादि सोऽपृच्छदच्छधीः ॥ १८ ॥ पुरं लक्ष्मीपुरं ह्येतद्धत्ते यदुपमानतां ॥ स्वर्गादीनां श्रियो नैवो-पमेयत्वं तु कैश्चन ॥ १९ ॥ अस्ति श्रीपतिनामाऽत्र । राजा राजत्पराक्रमः ॥ बुधा वीक्ष्य यदैश्वर्यं । महेन्द्रे बिभ्रते घृणाम् ॥२०॥ कन्याऽस्तिस्रोऽभवंस्तस्य । पृथग् राज्ञीत्रयोद्भवाः ॥ त्रैलोकीस्त्रैणरूपेभ्यः । सारैर्धात्राऽणुभिः कृताः ॥२१॥ तासां सुभगतां प्राप्तुं । देव्यस्तप्तुं तपः पुनः ॥ काङ्क्षन्ति मानुषं जन्म । प्रागतपोन्यूनताविदः॥२२॥ ताश्च जैनादुपाध्यायात् । कलावेदिष्वनुत्तरात् ॥ विप्रात्कलाविलासाह्वा-द्गाम्भीर्यादिगुणोत्तरात् ॥ २३ ॥ अध्यैषन्त कलाः सर्वा । नृपदत्तमहाधनात् ॥ स्वल्पैरपि दिनैः प्रज्ञाऽ-तिरेकाद्भाग्यसंभवात् ॥२४॥ ताः पित्रोरार्हतत्वेन । पाठकादपि चाऽर्हतात् ॥ बभूवुः परमार्हत्यो । धर्मानुष्ठानतत्पराः ॥२५॥ तासु चाऽऽद्यां भृशं नाट्ये । वैशारद्यं रुचिं तथा ॥ बिभ्राणां भूपतिर्नाट्य-सुन्दरीत्याह्वयाऽह्वयत् ॥ २६ ॥ यो मां जेष्यति नाट्येन । जैनधर्मक्रियारुचिः ॥ तमेवाऽहं वरिष्यामि । प्रतिज्ञामिति साऽकरोत् ॥ २७ ॥ द्वितीया चाऽधिकं गीत-कलायां रुचिनैपुणे ॥ दधत्याभिदधे गीत-सुन्दरीति महीभुजा ॥ २८ ॥ जैनो जेष्यति यो गीत-कलया

मां स एव हि ॥ वरिष्यते मया भर्ता । [1]प्रतिज्ञेति तया कृता ॥ २९ ॥ भृशं वीणादिनादेषु । दधती रतिकौशले ॥ सा नादसुन्दरीत्याह्वां । तृतीयाऽधान्नृपोदिताम् ॥ ३० ॥ यो नादकलया जैनो । जेता मां स वरो मम ॥ भविता नाऽपरश्चैवं । प्रत्यज्ञास्त च सा मुदा ॥ ३१ ॥

एतत्कन्यास्वरूपं च । पटहेन न्यवेदयत् ॥ निजे राज्ये नृपो दूतै-स्तथा राज्याऽन्तरेष्वपि ॥ ३२ ॥ सर्वोत्तमानि कन्यानां श्रुत्वा रूपाणि विष्टपे ॥ आजग्मुर्बहवः क्षत्र-कुमारा गुणशालिनः ॥ ३३ ॥ ते च नाट्यगीतवाद्य-कलाः स्वाः स्वा अदर्शयन् ॥ न कोऽप्याभिः कनीनां तु । समतामात्रमप्यधात् ॥ ३४ ॥ ततो धनं ददद्भूरि । तानध्यापयितुं कलाः ॥ नृपः कलाविलासाह्व-मुपाध्यायं समादिशत् ॥३५॥ ततः क्षत्रकुमारांस्ता-नुद्याने सोऽत्र निर्जने ॥ अध्यापयति नाट्यादि-कला नित्यं भृशाऽऽदरात्॥३६॥ मासे मासेऽत्र भूपाल-स्तान् कनीश्च परीक्षते ॥ अथ यावदजैषीत्ताः । कलाभिर्न च कश्चन ॥३७॥ ततः केऽपि हतोत्साहा । यान्त्यायान्ति च केचन ॥ स्वरूपं च यदप्राक्षी-स्तत्सर्वं विद्धि मद्गिरा ॥ ३८ ॥

आकर्ण्यैवं नरात्तस्मात् । कुमारोऽथ सविस्मयः ॥ पल्यङ्कं क्वाऽपि संगोप्य । मुक्त्वा वज्रादि चाऽऽयुधम् ॥ ३९ ॥ औषध्या वामनीभूय । रूपं हास्यास्पदं दधत् ॥ दिव्यालङ्कारनेपथ्यो । गत्वा पाठकमाऽऽनमत् ॥ ४० ॥ कस्त्वं? कुतः किमर्थं वाऽऽगात्तेनेत्युदिते च सः ॥ वामनः साह नेपाल-देशे विजयपत्तने ॥४१॥ भूपप्रसत्तिपात्रस्य । क्षत्रियस्याऽङ्गजोऽस्म्यहं ॥ नाम्ना कुङ्कणकः कर्म-वशादीदृक्कुरूपभाक् ॥ ४२ ॥ पित्रा मदेकपुत्रेण । धनाढ्येनाप्तयौवनः ॥ वर्यालङ्कारनेपथ्यै-र्दत्तैरिष्टोऽस्म्यलङ्कृतः ॥ ४३ ॥

---

1 समगीर्ष्टेति- साऽपि च प्रत्यन्तरे ।

खिन्नो धर्मान्तरायेण । कुमारो ववले ततः ॥ काङ्क्षन् खगामिनीं विद्यां । स्वेष्टसिद्ध्यै कुतश्चन ॥ १२ ॥
अथ क्वाऽपि पुरोद्याने । हैमं चैत्यं ददर्श सः ॥ अभ्रंलिहशिरोदीप्र-मणिकलशमण्डितम् ॥ १३ ॥ स तीर्थलङ्घनोद्भूताऽशातनाया भयादिव ॥ कुमारोऽथोत्ततारोर्व्यां । चैत्ये च विधिनाऽविशत् ॥ १४ ॥ नत्वा स्तुत्वा च नाभेय-प्रतिमां रत्ननिर्मितां ॥ हर्षरोमाञ्चिताङ्गोऽथ । निर्ययौ चैत्यतो बहिः ॥ १५ ॥ अपश्यद्राजपुत्रान् स । रूपयौवनशालिनः ॥ कृतहस्तान् स्वहस्तात्त-वीणावंशाद्युपस्करान् ॥१६॥ गीतनृत्यकलाभ्यास-रसिकान् रसकोविदान् ॥ प्रत्यक्षानिव गन्धर्वान् । प्रकुर्वाणान् गतागती ॥१७॥युग्मं॥
ततः पुरः पुरं दृष्ट्वा । नरं पौरं च कश्चन ॥ तत्स्वरूपं पुरादेशा-ह्वादि सोऽपृच्छदच्छधीः ॥ १८ ॥ पुरं लक्ष्मीपुरं ह्येतद्धत्ते यदुपमानतां ॥ स्वर्गादीनां श्रियो नैवो-पमेयत्वं तु कैश्चन ॥ १९ ॥ अस्ति श्रीपतिनामाऽत्र । राजा राजत्पराक्रमः ॥ बुधा वीक्ष्य यदैश्वर्यं । महेन्द्रे बिभ्रते घृणाम् ॥२०॥ कन्याऽस्तिस्रोऽभवंस्तस्य । पृथग् राज्ञीत्रयोद्भवाः ॥ त्रैलोकीस्त्रैणरूपेभ्यः । सारैर्धात्राऽणुभिः कृताः ॥२१॥ तासां सुभगतां प्राप्तुं । देव्यस्तप्तुं तपः पुनः ॥ काङ्क्षन्ति मानुषं जन्म । प्राग्तपोन्यूनताविदः॥२२॥ ताश्च जैनादुपाध्यायात् । कलावेदिष्वनुत्तरात् ॥ विप्रात्कलाविलासाह्वा-द्गाम्भीर्यादिगुणोत्तरात् ॥ २३ ॥ अध्यैषन्त कलाः सर्वा । नृपदत्तमहाधनात् ॥ स्वल्पैरपि दिनैः प्रज्ञाऽ-तिरेकाद्भाग्यसंभवात् ॥२४॥ ताः पित्रोरार्हतत्वेन । पाठकादपि चाऽर्हतात् ॥ बभूवुः परमार्हत्यो । धर्मानुष्ठानतत्पराः ॥२५॥ तासु चाऽऽद्यां भृशं नाट्ये । वैशारद्यं रुचिं तथा ॥ बिभ्राणां भूपतिर्नाट्य-सुन्दरीत्याह्वयाऽह्वयत् ॥ २६ ॥ यो मां जेष्यति नाट्येन । जैनधर्मक्रियारुचिः ॥ तमेवाऽहं वरिष्यामि । प्रतिज्ञामिति साऽकरोत् ॥ २७ ॥ द्वितीया चाऽधिकं गीत-कलायां रुचिनैपुणे ॥ दधत्यभिदधे गीत-सुन्दरीति महीभुजा ॥ २८ ॥ जैनो जेष्यति यो गीत-कलया

मां स एव हि ॥ वरिष्यते मया भर्ता । [1]प्रतिज्ञेति तया कृता ॥ २९ ॥ भृशं वीणादिनादेषु । दधती रतिकौशले ॥ सा नादसुन्दरीत्याह्वां । तृतीयाऽधान्नृपोदिताम् ॥ ३० ॥ यो नादकलया जैनो । जेता मां स वरो मम ॥ भविता नाऽपरश्चैवं । प्रत्यज्ञास्त च सा मुदा ॥ ३१ ॥

एतत्कन्यास्वरूपं च । पटहेन न्यवेदयत् ॥ निजे राज्ये नृपो दूतै-स्तथा राज्याऽन्तरेष्वपि ॥ ३२ ॥ सर्वोत्तमानि कन्यानां श्रुत्वा रूपाणि विष्टपे ॥ आजग्मुर्बहवः क्षत्र-कुमारा गुणशालिनः ॥ ३३ ॥ ते च नाट्यगीतवाद्य-कलाः स्वाः स्वा अदर्शयन् ॥ न कोऽप्याभिः कनीनां तु । समतामात्रमप्यधात् ॥ ३४ ॥ ततो धनं दददूभूरि । तानध्यापयितुं कलाः ॥ नृपः कलाविलासाह्व-मुपाध्यायं समादिशत् ॥३५॥ ततः क्षत्रकुमारांस्ता-नुद्याने सोऽत्र निर्जने ॥ अध्यापयति नाट्यादि-कला नित्यं भृशाऽऽदरात्॥३६॥ मासे मासेऽत्र भूपाल-स्तान् कनीश्च परीक्षते ॥ अथ यावदजैषीत्ताः । कलाभिर्न च कश्चन ॥३७॥ ततः केऽपि हतोत्साहा । यान्त्यायान्ति च केचन ॥ स्वरूपं च यदप्राक्षी-स्तत्सर्वं विद्धि मद्गिरा ॥ ३८ ॥

आकर्ण्यैवं नरात्तस्मात् । कुमारोऽथ सविस्मयः ॥ पल्यङ्कं क्वाऽपि संगोप्य । मुक्त्वा वज्रादि चाऽऽयुधम् ॥ ३९ ॥ औपध्या वामनीभूय । रूपं हास्यास्पदं दधत् ॥ दिव्यालङ्कारनेपथ्यो । गत्वा पाठकमाऽऽनमत् ॥ ४० ॥ कस्त्वं ? कुतः किमर्थं वाऽ-गास्तेनेत्युदिते च सः ॥ वामनः साह नेपाल-देशे विजयपत्तने ॥४१॥ भूपप्रसत्तिपात्रस्य । क्षत्रियस्याऽङ्गजोऽस्म्यहं ॥ नाम्ना कुङ्कणकः कर्म-वशादीदक्कुरूपभाक् ॥ ४२ ॥ पित्रा मदेकपुत्रेण । धनाढ्येनाप्तयौवनः ॥ वर्यालङ्कारनेपथ्यै-र्दत्तैरिष्टोऽस्म्यलङ्कृतः ॥ ४३ ॥

---

1 समगीर्ष्टेति, साऽपि च प्रत्यन्तरे

परमेवं कुरूपत्वा–न्निष्कलत्वाच्च कोऽपि मे ॥ न दत्ते तनयां तेन । निर्विण्णो निरगां गृहात् ॥४४॥ कलानां पिपठीर्भ्राम्य–न्नाना-देशपुरादिषु ॥ श्रुत्वा च त्वां कलाचार्यं । कन्याश्चाऽत्राऽऽगमं ततः ॥४५॥ अतः पाठय नाट्यादि–कला मामाऽऽदराद्गुरो ! ॥ जित्वा राजकनीस्ताभि–र्यतः परिणयाम्यहम् ॥ ४६ ॥ उपकर्ण्येति राजादि–कुमारा जहसुस्ततः ॥ अहो कलागुरोर्भाग्यं । छात्रोऽयं यदुपस्थितः ॥ ४७ ॥ पाठकः पाठयित्वैनं । कन्याभर्तृप्रदानतः ॥ तोषयित्वा धराधीशं । लब्धा चाऽप्रमितं धनम् ॥४८॥ कन्या-नामपि भाग्येन । वरोऽयं समुपस्थितः ॥ नहीदृग् रूपवान् क्वाऽपि । लभ्यो विश्वे यथा तथा ॥ ४९ ॥

इति नर्मगिरः श्रुत्वा । छात्राणां लज्जितो गुरुः ॥ तमुवाच कुमार ! त्वं । कलाः कन्याश्च नाऽर्हसि ॥५०॥ सपादलक्षमूल्यं स । गुरोः पूजाकृते ततः ॥ उत्तार्य कङ्कणं पाणे–र्लीलया श्रीदवद्ददौ ॥५१॥ सानन्दः सचमत्कार–स्ततः शिक्षयते गुरुः ॥ नाट्यं यत्नात्परं वेत्ति । न पदन्यासमप्ययम् ॥ ५२ ॥ कुम्भकारवदुच्चैश्च । मृत्तिकां मर्दयन्निव ॥ दृढं कठोरवक्राङ्घ्रि–घातैः कम्पयति क्षमाम् ॥ ५३ ॥ उच्छलन् गोलवद्भूमौ । गिरिप्रस्तरवत्पतन् ॥ बाढं धबकानिर्घोषै–र्हासयत्यभितो जनान् ॥ ५४ ॥ कृत्वा द्वित्रान् दिनानेवं । तस्य शिक्षां प्रयत्नतः ॥ पदन्यासेऽप्यनायाते । ततो निर्विविदे गुरुः ॥ ५५ ॥

अन्यदा गुरुरूचे च । नाट्यं नाऽऽयाति वत्स ! ते ॥ पठ गीतं ततः सोऽवक् । पुराप्याऽऽयाति तन्मम ॥५६॥ पठ कीदृग् किमायातीत्युक्तेगुरुभिस्ततः ॥ विकृतध्वनिः सोऽपाठी–चेष्टा वैदूषिकीः सृजन् ॥ ५७ ॥ तथाहि—पंच[1] नियट्ठा हु वणं पविट्ठा । कविट्ठस्स हेट्ठा तउ संन्निविट्ठा ॥ पडिअं कविट्ठं भग्गं एगस्स सीसं । अच्चो हसन्ती किल तेह सेसा ।५८।

१ पञ्च निकृष्टाः खलु वने प्रविष्टाः । कपित्थस्याऽधस्ततः संनिविष्टाः ॥ पतितं कपित्थं भग्नमेकस्य शीर्षम् । अहो ! हसन्ति किल ते शेषाः ॥१॥

श्रुत्वेदमखिलाश्छात्रा । जहसुर्जगदुस्तथा ॥ अद्भुतत्वमहो! गीत–स्याऽहो! गानस्य सौष्ठवम् ॥५९॥ अनेनैव हि गीतेन । परिणेष्यति भूपजां ॥ किं करोत्यधिकेनाऽयं । गीतेन पठितेन तत् ॥६०॥ तथाऽप्यद्भुतदानेन । प्रीतस्तं पाठको रहः ॥ यत्नात् शिक्षयते गीतं । ग्रामरागादि बोधयन् ॥ ६१ ॥ भूयसाऽपि प्रयत्नेन । न च किञ्चन वेत्त्ययं ॥ निर्विण्णः पञ्चषैर्घस्रै–स्ततो गुरु-रुवाच तम् ॥ ६२ ॥ न त्वं गीतकलायोग्यः । पठ वीणाकलां ततः ॥ आनाय्य चाऽर्पयद्वीणां । तस्य वादयितुं गुरुः ॥ ६३ ॥ यावद्वादयितुं तां तं । किञ्चित् शिक्षयते गुरुः ॥ तन्त्रीमतुत्रुटत्तस्याः । स तावत्पाणिलाघवात् ॥ ६४ ॥ ततोऽन्यामार्पिपद्वीणा–मानाय्याऽस्मै कलागुरुः ॥ तामादाय मुदा प्राग्वत् । स तत्तुम्बं बभञ्ज च ॥ ६५ ॥ पुनस्तदर्पितायाश्च । परस्या दण्डमप्ययं ॥ पाठमर्हसि नो वत्स! । खिन्नः स्माहेति तं गुरुः ॥ ६६ ॥

श्रुत्वेति कौतुकी सोऽपि। गत्वा गेहे कलागुरोः ॥ आर्पयत्कङ्कणं पत्न्या । द्वितीयं साप्यमोदत ॥६७॥ तद्दानविस्मिताऽप्राक्षी–त्सा भक्तिः किमियं मम ॥ स स्माहैवं पतिं ब्रूया । मां यथा पाठयत्ययम् ॥ ६८ ॥ अदृष्टाऽश्रुतपूर्वेण । तद्दानेन वशीकृता ॥ सा स्माहैवं करिष्यामि । नूनं सोत्तारकेऽगमत् ॥ ६९ ॥ भाटकोपात्तसौधे स । तिष्ठन् कृतपरिच्छदः ॥ जिनाद्यर्चापरः पाठ–कालेऽभ्येत्युपपाठकम् ॥७०॥ गृहाऽऽगतं पतिं चाऽख्यत् । साऽपि पाठयसि प्रिय! ॥ न किं वामनमेवैकं?। यस्यैतद्दानमद्भुतम् ॥७१॥ छात्रा सन्त्यप्यनेकेऽत्र । दाता कोऽपि न चेदृशः ॥ संभूयैतद् द्वितीयं मे । सर्वे ददतु यद्यलम् ॥ ७२ ॥ बहुभिः पाठितैस्तात्कि–मयमेव हि पाठ्यतां ॥ उपाध्यायस्ततोऽवादी–न्नास्तीदृक् कङ्कणं भुवि ॥ ७३ ॥ अनेनैवार्पितं चाऽस्ति । गृहाण तदिदं प्रिये! ॥ इत्युक्त्वा सोऽर्पिपत्तस्यै । प्राक्तनं तत्तदर्पितम् ॥ ७४ ॥ करद्वयेऽपि तत्क्षिप्त्वा । सा स्वं मेनेऽप्सरोऽधिकं ॥ उपाध्यायः पुनः

स्माह । प्रियेऽमुं पाठयाम्यहम् ॥७५॥ कृते बहौ प्रयत्नेऽपि । परं किञ्चिन्न वेत्त्यसौ ॥ साऽप्युवाचाऽऽङ्गलालित्या–न्नाद्यं साध्यं भवेत्प्रिय ! ॥ ७६ ॥ सौष्ठवाच्च ध्वनेर्गीतं । दैवान्नास्त्यस्य तद्द्वयं ॥ सुखसाध्यां ततो वीणां । किमु नाऽध्यापयस्यमुम् ? ॥७७॥ ततो वीणात्रयीभङ्ग–स्वरूपे तेन भाषिते ॥ साऽथाऽख्यद्दुर्बला तन्त्री । जीर्णं तुम्बकमप्यभूत् ॥ ७८ ॥ दण्डश्च शटितस्तासु । सबलैव त्वया ततः ॥ वीणाऽस्याऽर्प्या करिष्येऽदः । पाठकोऽप्येवमब्रवीत् ॥ ७९ ॥ छात्रोपहासभीत्या च–रहस्तं पाठयत्ययं ॥ एवं पूर्णेऽथ मास्यागात् । परीक्षासमयः क्रमात् ॥ ८० ॥

परीक्षामण्डपेऽथाऽगा–द्भूपालः सपरिच्छदः ॥ पौराश्च मिलिता नैके । विविधाश्च कलाविदः ॥ ८१ ॥ भूपादेशादुपाध्याय–स्तत्र छात्रगणैः सह ॥ यावच्चलति तं ताव–दुज्जगारेति वामनः ॥ ८२ ॥ महाकार्योऽहमप्यत्राऽ–भ्यासनीयः स्वसंनिधौ ॥ आदेष्टव्यश्च नाट्यादि–कलां दर्शयितुं क्षणे ॥ ८३ ॥ गुरुराऽऽख्यत्कुरूपत्वाल्लज्जे संनिहिते त्वयि ॥ उपहासपदं ते च । कला तत्राऽऽदिशामि किम् ? ॥ ८४ ॥ कोटिमूल्यमदाद्धारं । पाठकायाऽथ वामनः ॥ प्रत्यपद्यत तत्सर्वं । स स्तुत्या मुखरस्ततः ॥ ८५ ॥ बहून् पाठयता छात्रान् । यदवापि मया न हि ॥ जन्मनाऽपि धनं तन्मे । तेनाऽदायीति को न्वयम् ? ॥ ८६ ॥

इति चिन्तामुदाऽऽश्चर्य–व्याकुलो वामनान्वितः ॥ परीक्षामण्डपे गत्वा । सोऽध्यास्तोचितमासनम् ॥ ८७ ॥ कुमाराश्च नृपादीनां । सर्वेऽपि सपरिच्छदाः ॥ परेऽपि राजवर्ग्याद्या । यथास्थानमुपाविशन् ॥ ८८ ॥ राजादेशात्प्रतीहारो । निवार्य तुमुलं ततः ॥ उच्चकैर्भुजमुत्क्षिप्य । जगाद वदतां वरः ॥८९॥ भो भोः क्षत्रांगजा नाट्य–कलां दर्शयताऽऽत्मनः ॥ पाणौ कुर्यात्तया जित्वा । काश्चिचाद्यां नृपाङ्गजाम् ॥ ९० ॥ गीतवाद्यादिसामग्र्या । कुमारा बहवस्ततः ॥ चटत्प्रकर्षविज्ञाना । ननृतुर्बहुधा क्रमात् ॥ ९१ ॥

कश्चिचापगुणेऽनृत्यद् । बाणाग्रे कोऽपि कोऽप्यसेः ॥ धारायां कोऽपि भल्लाग्रे । विविधैः करणादिभिः ॥ ९२ ॥ शीर्षस्थिताम्बुपात्रोऽन्य-श्चालयन् करगोलकान् ॥ पादाभ्यां भ्रमयंश्चक्रा-ण्यनर्त्तीत् हस्तकादिभिः ॥ ९३ ॥ रदैर्गृहीत्वा त्रीन् खड्गान् । कराभ्यां चतुरः स्वयं ॥ भ्रमन् ननर्त्त करणै-र्भ्रमयंस्तानलातवत् ॥ ९४ ॥ कोऽपि चाधोमुखः प्रोच्चैः । पादाभ्यां मुशलौ दधत् ॥ पाणिभ्यां रमयन् गोलान् । ननर्त्त शिरसा भुवि ॥ ९५ ॥ स्थितश्च कश्चित्पाणिभ्यां । युताभ्यां भ्रमयन्नसीन् ॥ चक्राण्यङ्घ्र्यङ्गुलीभिश्च । दधत् शीर्षेऽम्बुभाजनम् ॥ ९६ ॥ भुङ्गलां वादयन्नाभौ । स्कन्ध-बाहुस्थदीपकः ॥ जिह्वाप्रोतमणिव्रातो । नृत्यतिस्म त्वनुत्तरम् ॥ ९७ ॥ युग्मं ॥

नाट्यान्येवं कुमाराणां । वीक्ष्य भूपादयोऽखिलाः ॥ पृथग् पृथग् प्रशंसन्त-श्चित्रैः शीर्षाण्यधूनयन् ॥ ९८ ॥ दर्शयन्ती परं नाट्य-सुन्दरी हस्तकादिषु ॥ तदैवेषु विपर्यासान् । सर्वेषां तान्यदूषयत् ॥ ९९ ॥ मोटयन् वामनोऽप्यास्यं । दोषेषु स्मेरयंश्च तत् ॥ गुणेषु कैश्चित्कन्याद्यैः । समभावि विदांवरः ॥ १०० ॥ कैश्चिद् घुणाक्षरन्याया-त्तथात्वं तस्य कल्पितं ॥ रूपे ज्ञत्वमसम्भाव्यं । तस्मिन्नैष्फल्यदर्शिभिः ॥ १ ॥

अथ भूपाऽऽज्ञया तादृग्-वेषसर्वाङ्गसंवृता ॥ प्रारेभे शुद्धसामग्र्या । नर्त्तनं नाट्यसुन्दरी ॥२॥ हरन्ती विश्वचेतांसि । दमयन्ती विदां मदान् ॥ रम्भाद्याश्चानुकुर्वन्त्य-नर्त्तीत्सा विविधं चिरम् ॥ ३ ॥ कुमारकृतनाट्येषु । विषमा या भिदोऽभवन् ॥ सर्वास्ताः साऽपि नर्त्तित्वा । नृत्यतिस्माऽथ हस्तकैः ॥ ४ ॥ शास्त्ररीत्या चतुःषष्टिं । हस्तकान् सा विधाय च ॥ चलत्कपोल-नासाऽक्षि ताराऽधरपयोधरान् ॥ ५ ॥ विपर्यस्तौ कपोलाऽक्षि-तारभङ्गौ ततो व्यधात् ॥ वामनस्तौ तथा दृष्ट्वा । निषिद्धतुमुलोऽवदत् ॥६॥

भद्रे! पूर्वं यथास्थानं। शास्त्ररीत्या त्वया कृताः ॥ हस्तका भ्रूकपोलादि-भङ्गाश्च निखिला अपि ॥ ७ ॥ सम्प्रत्येतौ तु हे सुभ्रु! । वितथावकृथाः कथं? ॥ शास्त्राऽनुक्तौ कपोलाऽक्षि-तारभङ्गौ विदांवरे ॥८॥ अस्ति वैपोऽपि किं भावः। शास्त्रे क्वाऽपि प्ररूपितः? ॥ चमत्कृताऽथ सा स्माह। भरतेऽस्त्येष वामन! ॥ ९ ॥

सोऽथ स्माहेति मा वादीः। कण्ठस्थं भरतं हि मे ॥ न भावं क्वाऽपि तत्रैवं। जागद भरतो मुनिः ॥ १० ॥ श्लोकांस्त-स्याऽधिकारेऽस्मिन्। वामनोऽथोदचीचरत् ॥ भ्रान्ता तर्हि भविष्यामि। कन्याप्येवं ततोऽवदत् ॥ ११ ॥ वामनः स्माह नेदृक्ष-विज्ञाने भ्रान्तिसम्भवः ॥ मन्ये सभापरीक्षार्थं। त्वयैतद्विदधे परम् ॥ १२ ॥ परमत्र मृगा एव। सभायां सन्ति केवलं ॥ नहीदृ-शस्य सूक्ष्मस्य। विज्ञाता कोऽपि संभवी ॥ १३ ॥ दध्युः सभ्या निशम्यैतद्। गुरुः शिष्याद्यनुग्रहात् ॥ अवीवददिमं त्वेतद्। ज्ञानं त्वस्मिन्नसंभवि ॥ १४ ॥ कन्या स्वस्खलितस्यैवं। तत्समर्थनयाऽतुषत् ॥ ननर्त्त चाऽग्रतः कृत्वा। सनर्ममुखमोटनम् ॥१५॥ भल्लाऽग्रन्यस्तपुष्पस्यो-परि वामेतरैरियं ॥ ननर्त्त करणैर्दक्षा। ततो द्वादशभिः स्फुटम् ॥ १६ ॥ अजैपीच्चाऽखिलान् राज-कुमारान् कलयाऽनया ॥ अभूज्जयजयारावो। वाद्यनादोल्वणस्ततः ॥ १७ ॥ वरचिन्तातुरो भूप-स्तूपाध्यायमभाषत ॥ कोऽप्यद्याप्य-वशिष्येत। त्वच्छात्रेष्वपरीक्षितः ॥ १८ ॥

उपाध्यायोऽथ तद्दान-प्रीणितो वामनं ततः ॥ अदीदृशद्यतो दानं। वशीकरणमग्रिमम् ॥ १९ ॥ सम्भवित्री कुरूपेऽस्मिन्। न कला ह्यतिशायिनी ॥ संभवेऽपि च मा जैषी-त्तयाऽयं तनयां मम ॥ २० ॥ माभूद्वामनेनाऽस्याः। कन्याः पत्या विडम्बना ॥ तथापि वर्द्धतां चित्रं। सन्देहः शल्यतीह यत् ॥ २१ ॥ शल्यं वा शक्यते सोढुं। न संदेहस्त्वसम्भवे ॥ विज्ञोक्तसंभवोत्थोऽय-

मिति ध्यात्वा नृपोऽवदत् ॥२२॥ यदि वेत्सि ततो नाट्य–कलां दर्शय वामन ! ॥ सोत्कण्ठास्तव तां द्रष्टुं । सर्वे ह्येते सभासदः॥२३॥ सक्षुधः परमान्नेन । निमन्त्रणसमात्ततः ॥ नृपादेशान्मुदोच्चस्थौ । वामनो नर्त्तितुं जवात् ॥ २४ ॥ प्रागप्यैधि कला ते तां । कां नवां दर्शयिष्यसे ? ॥ मृत्स्ना नास्त्यत्र दक्षो य–न्मर्दनेऽसि कुलालवत् ॥ २५ ॥ तमित्युपाहसंश्छात्राः । केऽप्यूचुः किं निषिध्यते ? ॥ विगुप्यतामयं लोके–ऽप्यूपहासश्च वर्द्धताम् ॥ २६ ॥

इति च्छात्रविचित्रोक्ती–रवज्ञायाऽथ वामनः ॥ ससज्ज नर्त्तितुं नत्वा । पश्च श्रीपरमेष्ठिनः ॥२७॥ परीक्ष्याऽसज्जयत् स्वाभि–मतान् गायनवादकान् ॥ ननर्त्त सर्वसामग्र्या । ततो विश्वैकमोहनम् ॥ २८ ॥ न च कुत्राऽपि तन्नाट्ये । हस्तकादिषु दूषणं ॥ किञ्चित्केऽप्यशकन् प्राप्तुं । सेर्ष्यादोषदृशोऽप्यहो ! ॥ २९ ॥ सभासदश्च तन्नाट्यं । पश्यन्तोऽनन्यचेतसः ॥ देवानामपि नाट्येषु । सुधियो दधिरे घृणाम् ॥ ३० ॥ नृत्तैः कुमारनाट्यानां । नर्त्तित्वाऽथ ननर्त्त सः ॥ भल्लाग्रन्यस्तपुष्पस्थ–सूच्यग्रकुसुमोपरि ॥३१॥ ददौ च करणान् वामे–तरान् द्वादश तत्र सः ॥ कुसुमं चाददेऽक्ष्णा तत् । जगुः सभ्या जितं जितम् ॥३२॥ विसृष्टे च ततो नाट्ये । जनैर्जयजयध्वनिः प्रहृष्टैर्विदधे वाद्य–नादकोलाहलस्तथा ॥ ३३ ॥ वन्दिनस्तद्गुणान् पेठु–रगायन् गायका मुदा ॥ ददौ तेभ्योऽर्थितं दानं । ततो विश्वाद्भुतं स च ॥३४॥ जगदद्भुतया नाट्य–कलया रञ्जिता तया ॥ हर्षाश्चर्यवशाद्येन–मवृणोन्नाट्यसुन्दरी।६५। वृत्तं साधु वृत्तं साधु । जुघोषेति च देवता ॥ वाद्यादितुमुलश्चाऽत्रा–ऽभून्नभोव्यापकः परः ॥ ३६ ॥

धिग्दैवमभवत्पुण्या । एकस्या वामनो वरः ॥ उभयोः शेषयोश्चाऽथ । भूयात्कोऽपि नृपाङ्गजः ॥३७॥ खेदादिति नृपो ध्यात्वा । प्रतिहारमथाऽऽदिशत् ॥ निषिध्य तुमुलं सोऽपि । प्राग्वदुच्चैर्जुघोष च ॥३८॥ भो भो राजाङ्गजा गीत–कलया गीतसुन्दरीं ॥

जित्वा पाणौ क्रियात्कश्चि–द्युष्मास्वेकस्तपोनिधिः ॥ ३९ ॥ ततो गीतकलाविज्ञा । जिनधर्मानुसारतः ॥ कुमाराः स्वस्वसामग्र्या । क्रमाद्गीतान्यगासिषु ॥ ४० ॥ यं यं ते पुपुषुर्गीतैः । रसं चारु यदा यदा ॥ सर्वे तन्मयतां प्रापु–स्तद्भावज्ञास्तदा तदा ॥ ४१ ॥ तद्गीतरसलीना ज्ञाः । क्षुत्तृट्शीतातपादिजां ॥ वेदयन्तेस्म नो बाधां । ह्येकसंवेदनी रसः ॥ ४२ ॥

रसैश्चटत्प्रकर्षैस्ते । गीत्वा च व्यरमन् क्रमात् ॥ भूपादिष्टा स्वसामग्र्या–थाऽगायद्गीतसुन्दरी ॥ ४३ ॥ गायन्त्यां च रसैस्तस्यां । निद्राणेवाऽभवत्सभा ॥ पूर्वसङ्केतिता दास्यः । पिहितश्रुतयस्ततः ॥४४॥ भूपादीनां करादिभ्यः । खड्गादीन्यायुधान्यपि ॥ गृहीत्वा व्यमुचन् क्वाऽपि । किञ्चित् कोऽप्येष न त्ववैत् ॥ ४५ ॥ गीत्वाऽस्यां विरतायां च । तेषां मार्गयतां त्वदुः ॥ ह्रीणानां सस्मितास्तानि । मानयित्वा धनानि ताः ॥ ४६ ॥ जिताः सर्वेऽनया राज–कुमारा इति सभ्यगीः ॥ प्रासरज्जयघोषश्च । वाद्यनिर्घोषयुक् ततः ॥ ४७ ॥ भूपः खिन्नो वराऽप्राप्त्याऽ–प्राक्षीत् प्राग्वच्च पाठकं ॥ वामनं वरमालाढ्यं । सादरं सोऽप्यदीदृशत् ॥ ४८ ॥ प्राग्वद् ध्यात्वा नृपोऽवादीद् । गीतं चेद्वेत्सि वामन ! ॥ तर्हि सर्वोत्तमं गाय । तत्स्वरूपं निवेद्य नः ॥ ४९ ॥

वामनः स्माह तत्किञ्चित् । प्रसादाद्वेद्मि सद्गुरोः ॥ तत्स्वरूपं तु संक्षेपा–द्वच्मि राजन्निशम्यतां ॥ ५० ॥ तथाहि—

"गांधर्वं त्रिसमुत्थानं । [1]तंत्री–[2]वेणु–[3]नरोद्भवं ॥ वीणा त्रिसरिका सार–ङ्ग्याद्या तन्त्रीस्त्वनेकधा ॥ ५१ ॥
रागो विजृम्भमाणो नु–र्हृदि मन्द्रादिभेदतः ॥ तस्याश्छिद्रकसंस्पर्श–वशेनोत्पद्यते किल ॥ ५२ ॥
एवं वंशेऽपि वीणायां । नालशुद्धिस्तु वर्जनात् ॥ शल्यादीनां तथा तुम्ब–शुद्धिर्वृत्तादिकैर्गुणैः ॥ ५३ ॥
तन्त्रीशुद्धिर्वलिस्नायु–वालाद्युज्झिततत्कृतैः ॥ इत्यादि वेणु–सारङ्गी–त्रिसर्यादिष्वपीष्यते ॥ ५४ ॥"

इत्यादि विस्तरो लक्ष-मितैः शास्त्रैः प्ररूपितः ॥ कियान् कथयितुं शक्यो । राजनौत्सुक्यतोऽधुना ॥ ५५ ॥ अथ गन्धर्वमु-मुच्येत । किञ्चिन्मानुपसंभवं ॥ गाता स्यादकृशोऽस्थूलो । गले स्यादामयोज्झितः ॥ ५६ ॥ सर्वथा वाऽपि नीरोगो । मुदितो यौवनान्वितः ॥ तिलयुक्तैलकुलमाप-गुडाद्याहारवर्जकः ॥ ५७ ॥ शर्करामधुयुग्दुग्ध-पानीयात्युष्णशीतभुक् ॥ तांबूलसुविशुद्धास्यो । नरो नार्यपि वेदृशी ॥ ५८ ॥ प्रयत्नप्रेरितस्तस्य । नाभिना वायुरुत्थितः ॥ अयं गीतकलाविज्ञैः । प्राणाह्वः कथितः पुनः ॥ ५९ ॥ मूर्ध्न्युत्थितो मुखे भ्राम्य-जिह्वादन्तोष्ठतालुनि ॥ परावर्त्तवशाद्वर्णा-न्नादं च जनयेत्ततः ॥ ६० ॥

स मन्द्रमध्यताराह्वः । स्थानादिवशतः पुनः ॥ सप्तधा स्वरभेदेन । भिद्यन्ते ते स्वराः पुनः ॥ ६१ ॥

सामान्यतो विशेषाच्च । त्रयो ग्रामा भवन्ति च ॥ स्वरग्रामेष्वथो संमू-र्च्छनाश्चैष्वेकविंशतिः ॥ ६२ ॥

उत्पद्यन्ते स्वरेष्वेषु । रागास्ते सप्त षड्गुणाः ॥ तेषु गीतं द्विधा चाऽऽग-मिकं स्याद्देशजं तथा ॥ ६३ ॥

यदुक्तं—तेसुय सरेसु बायालीसं रागा उपज्जंति, तेसुय रागेसु दुहा गीयं उपज्जइ, तं जहा-आगमियं देसिजं च. तत्थाऽऽगमियं सत्तसीगडा सत्त भाणियाओ भाणय भाणय दुविलियाओ य, तत्थ देसिजं च एला-माहियदुवईभेयमणेगविहं इत्यादि.—रागाश्च पंचाशत् द्विचत्वारिंशद्वा लोकप्रसिद्धा एव, तथाहि—

[1]श्रीरागो [2]वसंतश्च । [3]पंचमो [4]भैरवस्तथा ॥ [5]मेघरागस्तु विज्ञेयः षष्ठो [6]नट्टनरायणः ॥ ६४ ॥

[1]गौरी [2]कोलाहला [3]धारी । [4]द्रविडी [5]मालकैशिकी ॥ षष्ठी [6]स्याद्देवगांधारी । श्रीरागस्य विनिर्गताः ॥ ६५ ॥

[1]हिंडोला [2]कौशिकी चैव । [3]रामग्री [4]द्रुममंजरी ॥ [5]गुंडकृतिर्हि [6]देशाखीः । संवदान्ति वसंतके ॥ ६६ ॥

[1]भैरवी [2]गुर्जरी चैव । [3]भाषा [4]वेलाकुला तथा ॥ [5]कर्णाटी [6]रक्तहंसा च । षडेता पञ्चमे स्मृताः ॥ ६७ ॥
[1]त्रिगुणा [2]स्तंभतीर्था च । [3]आभीरी ॥ [4]ककुभा तथा ॥ [5]विप्परीडी [6]वसंवेरी । षडेता भैरवे मताः ॥ ६८ ॥
[1]बंगाला [2]मधुरी चैव । [3]कोमोदा [4]दोषशाटिका ॥ [5]देवग्री चैव [6]देवाला । षडेता मेघरागतः ॥ ६९ ॥
[1]तोडी [2]मोटकरी चैव । [3]श्रीभूपालप्रिया तथा ॥ [4]नट्टा [5]धनाश्री [6]मल्ली च । षडेताश्च नरायणात् ॥७०॥ इति ३६

श्रीरागे मालवो [1]गुरु, वसंते [2]बाणगुरु, पंचमे [3]पूर्विओगुरु, भैरवे [4]केदारओगुरु, मेघरागे [5]सालिगुरु, नट्टनरायणे [6]कल्याणगुरु इति. गुरुषट्कं ॥

एतत्कालेन चाऽधीतं । वक्तुं कालेन शक्यते ॥ राजन्! स्तुतिश्च निन्दा च । प्रायो गीते प्रवर्त्तते ॥ ७१ ॥ न सज्जनमुखान्निदा । निर्यातीति न वच्मि तां ॥ स्तुतिः पुनर्भवेद् द्वेधा । सदसद्गुणकीर्त्तनात् ॥ ७२ ॥ असद्गुणा विवाहादौ । नीचैरन्यत्र चेष्यते ॥ मृषावादी तु दोषाढ्यः । सद्भिस्तु क्रियते न सा ॥ ७३ ॥ सन्तोऽपि द्विविधाः साधा-रणाऽसाधारणा गुणाः ॥ साधारणा जनेष्वाप्याः । प्रायः सर्वेष्वपीह ये ॥ ७४ ॥ तद्यथा—

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तकं-व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायतां ॥
स्पर्द्धाबंधसमिद्धयेव सुदृढं रूढा यया नेत्रयोः । कांतिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥७५॥ इति. का. प्र.
तथा—परिहाणवसणकट्टण । करकमलनिहित्तअच्छिजुअलस्स ॥ रुद्दस्स तइयनयणं । पावइपरितुंबिअं नमह ॥७६॥
इत्यादि. ईदृग्रागादिचेष्टा हि । सर्वस्मिन्नाऽऽप्यते जने ॥ तस्याः स्तुत्या विशेषः को । देवस्य कथितो भवेत् ॥७७॥ दोषाः प्राणा-

विपाताथा। निन्द्या येऽष्टादशोत्तमैः ॥ स्तुतिस्तैरेव देवादौ। या सा निन्दैव तत्त्वतः ॥ ७८ ॥ अचमत्कारिणी या सा। काचित्त-न्नेष्यते बुधैः ॥ अप्यसाधारणा द्वेधा। कल्पिताऽकल्पिता गुणैः ॥ ७९ ॥ कल्पितास्ते ह्यसन्तोऽपि। ये शास्त्रादौ प्ररूपिताः ॥ रागद्वेषविमोहादि–दोषैर्व्यामूढबुद्धिभिः ॥ ८० ॥ तद्यथा–

गिरिसिन्धुवारिधिवन–ग्रामाकरनगरसंगता वसुधा ॥ उदरे निवसति यस्य। प्रणमत तं देवमथ भक्त्या ॥८१॥
तथा चोक्तं–कृष्णेनांबुगतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया। सत्यं कृष्णक एवमाह मुशली मिथ्यास्व पश्याननं॥
व्यादेहीति विकाशिते शिशुमुखे माता समस्तं जगत्। दृष्ट्वा यस्य जगाम विस्मयपदं पायात्स वो माधवः॥८२॥
संहारसृष्टिसत्ताः। प्रजापतिर्यः करोति जगतोऽपि ॥ हरिनाभिकमलानिलयं। तं सावित्र्याः पतिं प्रणुमः ॥ ८३ ॥
तथा—विधेरगस्त्योऽगस्तिस्थ–स्वकमंडलुगे वटे ॥ दलसुसहरेः कुक्षौ। नष्टां सृष्टिमदर्शयत् ॥ ८४ ॥
तथा चोक्तं मुरारिनाटके—विरमति महाकल्पे नाभिपथैकनिकेतन–स्त्रिभुवनपुनःशिली यस्य प्रतिक्षणमात्मभूः॥
किमधिकरणा कीदृक् क्वाऽस्य व्यवस्थितिरित्यसा–वुदरमविशद् द्रष्टुं तस्मै जगन्निधये नमः ॥८५॥ इत्यादि—
एवं समुद्रमथनरामधनुरादिष्वपि ज्ञेयं

स्तुतिरेषाऽपि नो सद्भिः। कार्या मिथ्योक्तिपापतः ॥ को हि मुह्यति मिथ्यादृग्। शास्त्रैर्जैनोक्तितत्त्ववित् ॥ ८६ ॥ यत्तक्ष्य-माणं सहते न युक्ती–र्विरुध्यते वाऽनुभवप्रमाणैः ॥ स्वदृष्टिरागग्रहिलान् विमुच्य। रमेत कस्तत्र सुधीर्हितार्थी ॥ ८७ ॥ ततोऽसा-धारणाः स्तुत्या। गुणा ये स्युरकल्पिताः ॥ ते च संसारिजीवेषु। मिथ्यादृक्षु विशिष्य च ॥ ८८ ॥ असन्तः परमब्रह्म–दोषत्यागा-

दयो मताः ॥ लभ्यास्तेऽर्हति सङ्के वा । प्रायो नाऽन्यत्र कुत्रचित् ॥ ८९ ॥ युग्मं ॥ कृपा षड्विधजीवेषु । सम्यग्ज्ञानमरागिता ॥ त्यागोऽष्टादशदोषाणां । कुतोऽर्हच्छासनं विना ॥ ९० ॥ तद्राजन् ! जिनगुर्वादि-गीतं गायन् पुनाम्यहं ॥ रसनां स्वां सदस्यानां । श्रुतीश्च शृणुताऽऽदरात् ॥ ९१ ॥ इत्युक्त्वा मत्सरग्रस्त-कुमाराणां समन्ततः ॥ उपहासगिरो नाना-भिदोऽवज्ञाय पूर्ववत् ॥ ९२ ॥ स्वप्राग्दानवशाऽशेष-सामग्र्या स्वेष्टया ततः ॥ यत्नादवहितो गातु-मुपाक्रमत वामनः ॥ ९३ ॥ गायत्यस्मिन् सदस्याश्च । हाहा-हूहादिगायनान् ॥ न तृणायाऽप्यमन्यन्त । तद्गीःश्रोतॄन् सुरानपि ॥ ९४ ॥ न कश्चिद्भाषते किञ्चि-न्नेक्षते चित्रमप्यथ ॥ न ध्या-यतीति तत्सभ्याः । श्रुत्येकाक्षा इवाऽभवन् ९५ ॥ कोटिप्राप्तेऽथ तद्गीत-रसे सर्वाऽतिशायिनि ॥ सुप्तेव निखिला जज्ञे । शापसुप्तेव सा सभा ॥ ९६ ॥

नृपादीनामथाऽस्त्राणि । दास्योऽलंकरणानि च ॥ गृहीत्वा मुमुचुः क्वाऽपि । प्राग्वच्छन्नश्रुतिद्वयाः ॥ ९७ ॥ प्राक्संकेताद-थाऽऽगत्य । वामनोऽत्युपहासिनां ॥ मौलीन् पञ्चकुमाराणां । क्षुरिणो द्रागमुण्डयन् ॥९८॥ कश्चित्किञ्चित्परं नैव । तदा चेतयतेस्म च ॥ स हि नाम रसो यत्र । न वेद्यान्तरवेदनम् ॥ ९९ ॥ स्थिते तस्मिन् प्रगायाऽथ । सभ्या मत्वाऽखिलं च तत् ॥ हृष्टा जुघुषु-रित्युच्चै-र्वामनेन जितं जितम् ॥ १०० ॥

घोषोऽभूज्जयतूर्याणां । स्फीतो जयजयारवैः ॥ स्वजैत्रं वामनं मत्वाऽथाऽवृणोद्गीतसुन्दरी ॥ १ ॥ प्राग्वज्जुघोष च व्योम्नि । नरेन्द्रकुलदेवता ॥ पुष्पवृष्टिं वितन्वाना । मौल्योर्वामनकन्ययोः ॥२॥ नष्टेषु क्षुरिषु च्छन्न-कर्णेषु प्राक् कुमारकाः ॥ जनहासैः स्वशी-र्षाणि । तथा मत्वाऽनशन् ह्रिया॥३॥प्राग्वद्राजादयोऽप्यस्त्राऽ-लङ्कारान् जगृहुर्धनैः॥ दास्योऽप्यर्थागमप्रीता॥वामनायाऽऽशिषो ददुः ॥४॥

दध्यौ नृपोऽथ कन्ये द्वे । वामनः परिणेष्यति ॥ दैवाद्विडम्बना चाऽगा–देतयोर्लघिमा च मे ॥५॥ एकाऽपि राजपुत्रेण । परिणीयेत केनाचित् ॥ कथञ्चिद्यदि पुत्री मे । निर्वृतिः स्यात्ततो हृदि ॥ ६ ॥ ध्यात्वैवं भूभुजाऽऽदिष्टो । वेत्री प्राग्वज्जुघोष च ॥ निषिध्य बहुधा कोला–हलमुच्चैस्तरामिति ॥७॥ भोभोः ! शृणुत भूयांसो । भवन्तो नृपनन्दनाः ॥ कन्ये द्वे वव्रतुः संधा–वशात्तं वामनं पतिम् ॥ ८ ॥ एवं चोऽभिभवव्रीडे । तत्कश्चिन्नादसुन्दरीं ॥ भवत्तु वृणुतां नाद–कलयाऽस्या विजित्वरः ॥ ९ ॥

वामनेनाऽथ घृष्टं स्वं । मन्यमाना विशिष्य ते ॥ दास्याद्याऽवीवदन् वीणा । नानारागैरनुक्रमात् ॥ १० ॥ तत्रादेश्च सभा सर्वा । स्तब्धेव समजायत ॥ परिहृत्याऽखिलाश्चेष्टा–स्तदेकलीनमानसा ॥ ११ ॥ सर्वोत्तमकलेष्वेषु । कस्मिंश्चिद्वादयत्यमुं ॥ अन्तिमेऽवसरे प्राप्ते । पूर्वपूर्वजयक्रमात् ॥१२॥ पूर्वसङ्केतितैराधो–रणैर्मुक्ते महागजे ॥ सगर्जे धावमानेऽत्र । क्रुद्धे निकटमागते ॥ १३ ॥ महाभयङ्करे भीत्या–ऽखिलास्त्रेसुः सभासदः ॥ वल्लभं सर्वनादादि–रसेभ्यो जीवितं यतः ॥ १४ ॥

अथ भूपाऽऽज्ञया वीणां । नादसुन्दर्यवीवदत् ॥ कर्णाऽमृतकिरा तस्या । नादेन प्रसरीसृता ॥१५॥ स्तब्धः सोऽपि गजः सर्वे । स्तम्भिताश्च सभासदः ॥ तया विरमिते नादे । गजे चात्ते निषादिभिः ॥ १६ ॥ युग्मम् ॥ कन्यया जितमित्यादि । प्राग्वज्जज्ञे जयरवः ॥ अप्राक्षीत्पूर्ववत् खिन्न–उपाध्यायं ततो नृपः ॥१७॥ वरमालाद्वयीरम्यं । वामनं सोऽप्यदर्शयत् ॥ ध्यात्वा प्राग्वन्नृपो वीणा–वादनाय तमाऽदिशत् ॥ १८ ॥ मुदितः स नृपादेशा–द्वीणां वादयितुं ततः ॥ अयाचत नरैरार्पि । सैका भूपाऽऽज्ञयोत्तमा ॥ १९ ॥ तां विलोक्याऽवदत् सोऽस्या । दण्डान्तः कीटकोऽस्ति भोः ! ॥ राज्ञा कौतुकिनाऽऽदिष्टो । भङ्क्त्वा तं तमदर्शयत् ॥ २० ॥ ततः पराऽर्पिता तस्याः । कटुतुंबमयं जगौ ॥ तत्खण्डं च मुखे क्षिप्त्वा । कश्चित्तत्समवीवदत् ॥ २१ ॥ अन्यस्यां

स च तन्त्र्यन्तः । सूक्ष्मवालमदर्शयत् । परस्यां चाऽब्रवीद्दण्डं जलमध्ये स्थितं चिरम् ॥ २२ ॥
वह्नीश्च दूषयित्वैवं । ताः काञ्चन परीक्ष्य च ॥ सुविशुद्धामथाऽऽदाय । वीणां सम्यगवीवदत् ॥२३॥ किमिदं सुखसर्वस्वं । स्वर्गलोकादुपागमत् ॥ किं श्रवस्सु सुधावृष्टि–रित्यौह्यत तद्ध्वनिर्जनैः ॥ २४ ॥ किमयं प्रेषि शक्रेण । तपस्तुष्टेन वादकः ॥ सुखा· कर्तुं महीलोकं । वामनश्चोहितो बुधैः ॥ २५ ॥ प्राप्ते नादरसे चाऽस्मिन् । प्रकर्षं परमं क्रमात् ॥ लयानन्दसुखाऽद्वैता । निदद्रौ सकला सभा ॥ २६ ॥ पूर्वसङ्केतितैर्बाढं । पिहितश्रवणैरथ ॥ पीतमद्यो महामात्रैः । प्रेर्याऽमोचि सरुड् गजः ॥ २७ ॥ स प्राप्तोऽपि सभासत्तौ । केनाऽपि विविदे न तु ॥ स्तब्धश्चाऽऽसीत्तथाऽज्ञासीद् । घातान्नऽङ्कुशजान् यथा ॥ २८ ॥ घातं घातं च निर्विण्णै–स्ततो जयजयारवः ॥ चक्रे हस्तिपकैः पूर्वं । सर्वैरपि जनैस्ततः ॥ २९ ॥ वाद्यैर्ध्वनति खे मुक्त–विपञ्चीवादनं मुदा ॥ अबूणोद्वा· मनं नाद–सुन्दर्यप्याशु तज्जिता ॥ ३० ॥ जुघोष पूर्ववद्देवी । वर्षन्ती कुसुमोच्चयं ॥ स्तुवद्भ्यो याचकेभ्यश्च । वामनः प्रार्थिता–न्यदात् ॥ ३१ ॥ अहो! कला अहो! दानं । लीलाचातुर्यमप्यहो! ॥ इत्यादिवामनस्तुत्या । मुखरा जनताऽभवत् ॥ ३२ ॥ पुमानी–दृग्गुणाधारो । वामनत्वेन दूषितः ॥ किं ब्रूमस्तदनौचित्यं । हतकस्य विधेरिति ॥ ३३ ॥ यदुक्तं—

शशिनि खलु कलङ्कः कण्टकाः पद्मनाले । प्रिययुवतिवियोगो दुर्भगत्वं सुरूपे ॥
जलधिजलमपेयं पण्डिते निर्धनत्वं । धनवति कृपणत्वं रत्नदोषी कृतान्तः ॥ ३४ ॥

अथवा वामनत्वेनाऽ–न्तर्हितः कोऽपि संभवी ॥ दिव्यमूर्तिरयं नून–मभ्रच्छन्नाऽर्कवत्पुमान् ॥ ३५ ॥ विश्वोत्तरान् गुणान् ह्येतान् न कुर्याद्वामने विधिः । मृद्दामभाजने कश्चिदमृतं प्रक्षिपेत किम् ? ॥३६॥ स्वरूपं गहनं ह्यस्य । वेत्ति सर्वविदेव वा ॥ इत्यादि

विविधाऽऽलापान् । मिथो विदधिरे जनाः ॥ ३७ ॥ अर्थतः पञ्चभिःकुलकं ॥ धिक्कनीनां प्रतिज्ञानं । धिग्विधिं गर्हितक्रियं ॥ धिक्कुमारान् कलान्यूनान् । धिग्मामादिष्टवादिनम् ॥ ३८ ॥ न्यक्कृताऽप्सरसां रूपैः । कनीनां तिसृणामपि ॥ ममाऽसुभ्योऽप्यभीष्टानां । वामनोऽयमभूद्वरः ॥३९॥ प्रारब्धमन्यथा कार्य-मिदं निर्व्यूढमन्यथा ॥ तद्धवेद्यदसंभाव्यं । दैवं को लङ्घितुं क्षमः ॥४०॥

तदुक्तं—अवश्यभव्येष्वनवग्रहग्रहा । यया दिशा धावति वेधसः स्पृहा ॥

तृणेन वात्येव तयाऽनुगम्यते । जनस्य चित्तेन तथा भृशाऽवशात्मना ॥ ४१ ॥

तथा—यन्मनोरथशतैरगोचरो । यत्स्पृशन्ति न गिरः कवेरपि ॥

स्वप्नवृत्तिरपि यत्र दुर्लभा । हेलयैव विदधाति तद्विधिः ॥ ४२ ॥

इति चिन्तातुरो भूपः । पप्रच्छाऽथ कलागुरुं ॥ किंदेशो ? वामनः कोऽयं ? । किंकुलश्चेति मे वद ॥ ४३ ॥ व्याजहार गुरुर्मासा-न्न्यूनात्प्रागयमागमत् ॥ पृष्टः स्वरूपमित्याख्य-दहं नेपालदेशतः ॥ ४४ ॥ कलार्थमागमं क्षत्र-पुत्रो विजयपत्तनात् ॥ स्वरूपं नाऽधिकं त्वस्य । वेत्ति कोऽपि सुधीरपि ॥ ४५ ॥ युग्मं ॥ दिव्यालङ्करणो दिव्य-दानोऽयं पाठितः कलाः ॥ प्रयत्नेन मया सौव-मूर्खिमाणं प्रदर्शयन् ॥ ४६ ॥ इयन्तं समयं नाऽवेत् । कलानामाप्ययं पुनः ॥ साम्प्रतं युगपत्सर्वाः । कला दिव्यास्त्वदर्शयत् ॥ ४७ ॥ तदलक्ष्यस्वरूपोऽयं । कश्चित्संभाव्यते पुमान् ? ॥ गुरोरिति गिरा भूभृ-द्विकल्पान् बहुधा दधौ ॥ ४८ ॥

अथ राजकुमारास्ते । भृशं खिन्ना व्यचिन्तयन् । अहो मायाविनाऽनेन । धृष्टाः स्मो वामनेन ही ! ॥ ४९ ॥ मूर्खत्वं दर्शयित्वैत-त्कालमेकपदेऽधुना ॥ कलास्त्वेष प्रदर्श्यैव-मग्रहीच्च कनीत्रयम् ॥ ५० ॥ अमुमोघदथाऽस्माक-मियत्पाठश्रमादि च ॥

प्रागित्यज्ञास्यथेमं चेत् । तत्तदैवाऽहनिष्यथ ॥ ५१ ॥ सम्प्रत्यप्यथवा हत्वा । रङ्कमेतं निराश्रयं ॥ कनीर्ग्रहीतुं दातुं च । शक्नुमः स्वेच्छया न किम् ? ॥५२॥ अज्ञातकुलशीले हि । कुरूपेऽस्मिन् कनीत्रयीं ॥ न सहामोऽन्यथा हास्या–भिभूती नः सुनिश्चिते॥॥५३॥ सबलानां बहूनां च । किं नः क्ष्माभृत्करिष्यति ॥ न रङ्कस्याऽपि पाते तु । दोषो मायाकृताऽऽगसः ॥ ५४ ॥ यद्वा घातोद्यतान्न-श्चेद् । दृष्ट्वा नंक्ष्यति वामनः ॥ न रङ्कहतिदोषश्च । भावी कार्यं च सेत्स्यति ॥ ५५ ॥

विमृश्यैवं मिथः सर्वा–नुमतिग्रहणादथ ॥ सूरपालाभिधस्तेषु । मुख्यः स्माह कुमारराट् ॥ ५६ ॥ वामनैकगुरुत्वेन । स्वोऽसि तद्धितमुच्यते ॥ सुलभं संभवेन्नाटयं । केकिमर्कटकादिषु ॥ ५७ ॥ गीतं कोकिलचाण्डाला–दिष्वपि प्राप्यते वरं ॥ चाण्डालैरपि वीणादि–नादः साधु विधीयते ॥ ५८ ॥ न च राजकनीस्तेषु । कश्चिदर्हति वामन ! ॥ तथा त्वमपि नाऽर्होऽसि । तासां किं नेति बुध्यते ? ॥ ५९ ॥ न खरोऽर्हति रैघण्टां । न च श्वा क्षीरभोजनं ॥ नोष्ट्रश्च मणिहारं त्वं । ताश्च नाऽर्हसि भूपजाः ॥ ६० ॥ इमास्त्यक्त्वानुरूपां त–द्रामां तां भज काञ्चन ॥ सुखं कलार्जितैर्द्रव्यै–राजीवं च नटादिवत् ॥ ६१ ॥ मरिष्यस्यन्यथेत्युक्ते । वामनोऽप्यब्रवीत्क्रुधा ॥ निर्भाग्यं निष्कलं स्वं रे ! । किमद्याऽपि न बुध्यसे ? ॥ ६२ ॥ अनायिध्वं कलावादे । न किञ्चित्करतां यथा ॥ तथैव प्रापयिष्यध्वे । रणे निर्जीवतां मया ॥ ६३ ॥ यः कटाक्षयिताप्येता । मत्प्रियास्तु भवत्सु भोः ॥ नेतुं द्राग् स्वालयं नूनं । यमेन स कटाक्षितः ॥६४॥ यद्येवं तद्गृहाणाऽस्त्रं । चेद्युद्धेऽपि प्रागल्भसे ? ॥ इत्युक्ते सूरपालेन । वामनोऽवज्ञयाऽब्रवीत्॥६५॥
दैत्यारिर्वा हरो वा सुरपतिरपि वा संभृतः स्वास्त्रपंक्त्या॥विश्वस्याप्यंतकृद्वा स महिषगमनोऽन्योऽपि वा लोकपालः॥
तिष्ठेचेत्संख्यसंख्यावदतुलबलतां ख्यापयन् मद्दृगग्रे । गृह्णीयां किंचिदस्त्रं तादिह भुजयुगस्योर्जितं दर्शये च॥६६॥

अस्त्रस्तोमपरिश्रमश्रमभरैर्निर्विश्रमं काम्यथाऽ-स्मादृग्युद्धजिगीषयाऽतिविकटैः किं रे भटा दुर्घटैः ॥ नास्माकं प्रकटं च पादमपि यत्सोढुं सुरेंद्रोऽप्यलं । तद्युष्मासु शशेषु मे गजपतेः शस्त्रग्रहः कीदृशः ॥ ६७ ॥ तद्भुजावेव मे शस्त्रं । विक्रमश्चैव कङ्कटः ॥ भाग्यमेव सहायश्च । किं रे ! नाद्याप्यलक्षिपि ॥ ६८ ॥ सन्नह्यत ततः सर्वे । संभूयाऽस्त्राणि संयुगे ॥ यूयमादद्ध्वमेतद्वः । कौतुकं दर्शये पुनः ॥ ६९ ॥ दुर्लक्ष्यं तं गिरा मत्वा । समनह्यन्ते तेऽखिलाः ॥ परीक्षाऽवसरे चाऽऽका-रितैः स्वस्वबलैः सह ॥ ७० ॥ प्रक्रमन्ते परेऽप्येत्य । यावद्योद्धुं रणावनौ ॥ तावन्मुण्डितशीर्षास्ते । टोपाच्छादितमौलयः ॥ ७१ ॥ ज्वलत्क्रोधाग्रयः पश्चा-त्प्याकर्ण्यायोधनोत्सवं ॥ स्वहस्तेन हनिष्यामो । वामनं दुष्टचेष्टितम् ॥ ७२ ॥ प्रतिज्ञायेति दर्पाद् द्रा-गग्रसैन्ये समापतन् ॥ वामनस्तानथो वीक्ष्याऽ-वादीदुपहसन्मुदा ॥७३॥ किं नु भो मुण्डितैः शीर्षै-र्लज्जमाना इहाऽऽगताः ॥ साध्वेतदपनेष्यामि । लज्जां छित्वैव तान्यहम् ॥ ७४ ॥ इत्युक्त्यात्युद्धतक्रोधा-स्तेऽमुञ्चन् बाणधोरणीं ॥ शेषा अपि व्यधुर्व्योम । शरापूर्णं समन्ततः ॥ ७५ ॥

अथो वामनसिंहोऽपि । स्मृत्वा श्रीपरमेष्ठिनः ॥ उन्मूल्यैकं महास्तम्भं । दधावे तान्मृगान् प्रति ॥ ७६ ॥ अपातयद्गजानद्रि-शृङ्गाणिव वपुष्मतः ॥ सादिनोऽभ्रमयत् खे चो-च्छाल्य पारापतानिव ॥ ७७ ॥ उदलालयदुच्चैश्च । पत्तीन् दन्तीव गोलकान् ॥ अजिघांसन् कृपालुत्वाद्भटान् कांश्चिदमूर्च्छयत् ॥ ७८ ॥ पर्पटानिव केषांचि-दभाङ्क्षीच्च रथांस्तथा ॥ धनुर्मुद्गरभल्लाऽसि-गदाऽस्त्राण्यचूर्णयत् ॥७९॥ क्षणाद्भुवि तथाऽऽकाशे । सैन्यस्याऽग्रे क्षणाद् भ्रमन् ॥ क्षणान्मध्ये क्षणादन्ते-ऽप्याजघान रिपूनपम्॥८०॥ स्तम्भेन मुष्टिभिः पादा-घातैश्चाऽऽहत्य सर्वतः ॥ निषादिसादिपदाति-रथथट्टान्यपातयत् ॥ ८१ ॥ नोत्पतन्निपतन् दूरा-दायान्

यांश्च स लक्षितः ॥ पतितानेव तद्घातै-र्वीरांश्च ददृशुर्जनाः ॥८२॥ मृद्वाहत्याऽथ दण्डेन । सोऽजिघांसुरमूर्च्छयत् ॥ सूरपालान्वितान् पञ्च-कुमारान् मुण्डमुण्डकान् ॥ ८३ ॥ कक्षयोः स्कन्धयोः पाद-द्वयान्तस्तानुभावुभौ ॥ क्षिप्त्वोत्प्लुत्य च पत्नीनां । स द्राग् न्यासमिवाऽपर्यत् ॥८४॥ ताश्च तान् प्रेष्यदासीभि-र्बन्धयित्वा दृढं जवात् ॥ पत्यादेशात्कृतैः शीतो-पचारैरुदजीवयन्। ८५। तेषु चैवं गृहीतेषु । रिपुसैन्यानि सर्वतः ॥ अभज्यन्त प्रणेशुश्च । सर्वेषां ह्यसवः प्रियाः ॥ ८६ ॥ कनीनां तादृशा पत्या । खिन्नः श्रीपतिभूपतिः ॥ उपैक्षिष्ट कुमारान् प्राग् । निघ्नतो वामनं भटम् ॥ ८७ ॥ भग्नेष्वेषु च सेनान्यं । स्थितं शस्त्रैर्भृते रथे ॥ सारसेनान्वितं त्वेषां । सैन्यैः स स्वं व्यमिश्रयत् ॥ ८८ ॥ कुमारा अपि तद्दत्ता-वष्टंभाः स्वबलान्विताः ॥ चंडपालादयः क्रुद्धाः । पुनर्योद्धुं डुढौकिरे ॥ ८९ ॥ वामनोऽप्यभितः स्वाङ्गे । स्तम्भमभ्रमयत्तथा ॥ नटो मल्लमिवार्यस्त्रं । नैकमप्यलगद्यथा ॥९०॥ निघ्नन् शस्त्राणि सेनान्यं । यावद्धत्वा तमंघ्रिणा ॥ गृहीत्वा भ्रमयित्वा चाऽ-लातवत्क्वाऽप्युदक्षिपत् ॥९१॥ दूरे तं पतितं क्वाऽपि । भूम्याऽऽहत्या च मूर्च्छितं ॥ आनाय्य पुरुषैर्भूयो । द्राक्किञ्चिदचिकित्सयत् ॥ ९२ ॥ आस्थाय तद्रथं शस्त्र-भृतमात्तशरासनः ॥ वामनोऽभ्रमयद्वैरि-सैन्ये सारथिना जवात् ॥ ९३ ॥

कुर्वन्तोऽथ शरासारं । चंडपालादयो रयात् ॥ तमरुत्सन्त गर्जन्तो । बलदर्पोत्कटा भटाः ॥ ९४ ॥ शरैर्निरन्तरैर्दूरा-पातिभिर्वामनोऽभितः ॥ गजांश्च भटसंघातान् । द्राग् विध्यन् युयुधे चिरम् ॥९५॥ उरस्योरव्यपथ्यैश्च । तद्बाणैर्व्रणिता द्विपः ॥ तस्मिन् हास्तं श्रयत्याशु । बार्करं शिश्रियुर्भटाः ॥ ९६ ॥ भङ्क्त्वा रथं धनुश्छित्वा । क्षुरप्रेणाऽथ वामनः ॥ चंडपालकुमारस्य । तुण्डमुण्डममुण्डयत् ॥९७॥ तथापि सोऽपि शूरत्वात् । खड्गमादाय वामने ॥ तद्घातं मुमुचे वेगा-दुत्प्लुत्याऽऽगत्य तद्रथम् ॥९८॥ वामनो

वञ्चयित्वा तं । खड्गं चाऽऽच्छिद्य तत्करात् ॥ मुष्टिघातान्मूर्च्छयित्वा । तद्वस्त्रैस्तमबन्धयत् ॥ ९९ ॥

अथो दृढरथो वीरो । युद्धायाऽऽह्वास्त वामनं ॥ युयुधाते चिरं तौ च । तिरयन्तौ मिथः शरैः ॥१००॥ वामनोऽथ क्षुरप्रेण । मुण्डं तस्याऽप्यमुण्डयत् ॥ लज्जयाऽस्मिंस्ततो नष्टे । योद्धुं रणबलोऽलगत् ॥१॥ गतिं तस्याऽपि तामेव । कृतवानथ वामनः ॥ ससैवमनया रीत्या । प्राणशंस्ते कुमारकाः ॥ २ ॥ वामनेन हतानां नः । पाश्चात्येषु न संभवः । ग्रासघृद्धेर्न च प्राप्या । कीर्त्तिरप्यनु तादृशी ॥ ३ ॥ मुधा म्रियामहे तत्कि-मित्यालोच्याऽपरेऽप्यथ ॥ कुमाराः सबलास्त्रेसुः । सर्वे जीवितमिच्छवः ॥ ४ ॥ तान् ससैन्यान् समग्रांश्च । वामनः समधीरयत् ॥ पुष्पवृष्टिरभूचाऽसिन् । रणदृग्व्यन्तरैः कृता ॥ ५ ॥

तथा दृष्ट्वा नरेन्द्रोऽथ । श्रीपतिः स्वैरधीः कुधीः ॥ यावत्सर्वाभिसारेण । स्वयं सज्जति संयति ॥ ६ ॥ आगत्य धीसखास्ताव-त्समूचुर्हितकाङ्क्षिणः॥ राजन्! किमिदमौद्धत्य-मसमीक्ष्य विधानतः ॥७॥ किं मुमूर्षसि ? मूर्खिम्णा । निशुंभयसि किं चमूं ॥ पुरो हि वामनस्याऽस्य । जगतोऽपि भटास्तृणम् ॥ ८ ॥ का ससैन्यस्य कीर्तिश्च । वामनेन हतस्य ते ? ॥ जीवन्मुक्तोऽप्यस्याऽऽस्यं । किं जामातुर्दर्शयिष्यसि ? ॥९॥ एकेनाऽपि निरस्त्रेण । क्रुद्धेनैवं विडम्बिताः ॥ कुमाराः सबला येन । शक्रोऽप्यस्य पुरो नु कः?॥१०॥ ईदृक्कलाबलाभोगः । कनीनां लभ्यते वरः ॥ भाग्यैरेवेति किं मोहात् । हर्षस्थाने विषीदसि ? ॥ ११ ॥ किञ्च-शौर्यमेतत्कलाश्चैता-स्ते च दानकृपादयः ॥ वामने संभवेयुर्न । न गुणा ह्याकृतिं विना ॥ १२ ॥ तद्दिव्यप्रकृतिः कश्चि-दयं विद्यादिशक्तिभिः यथाकामं कृतै रूपैः । क्रीडत्युर्व्यां महान् पुमान् ॥१३॥ वर्षन्ती चाऽसकृत्पुष्पा-ण्यासींस्त्वत्कुलदेवता ॥ उद्घोषन्ती तथा चैव । नूनमर्थं समर्थयेत् ॥ १४ ॥

अथाऽर्थितो हि दाक्षिण्यात् । सहजं रूपमप्ययं ॥ कला इव स्फुटीकर्त्ता । ततस्तद्विषयेऽर्थ्यतां॥१५॥ नयमार्गानुगास्तेषां । परिणामहिता गिरः ॥ प्रतिपद्य नृपः सद्यो । जयतूर्याण्यवीवदत् ॥१६॥ सहाऽऽमात्यादिभिर्यावत् । सोऽभियाति च वामनं ॥ वन्द्युद्घोष्यगुणस्तावद् । गीयमानश्च गायनैः ॥१७॥ ददत्तेभ्यो महादानं । सोऽप्येत्योत्तीर्णवान् रथात् ॥ प्राणमत् श्वसुरं राजा–प्याशीर्वादालिलिङ्ग तम् ॥ १८ ॥ हैमासनमथाऽध्यास्ता–ऽध्यासयद्वामनं च सः । आसीनेऽर्हं समाजे चाऽ–प्राक्षीत्सुखजयं नृपः ॥१९॥ तं वामनः स्माह कलासु वादात् । रणं हि नाजैषमहं महीन्द्र ! ॥ किन्तु स्थितो मे हृदि यः प्रभुः सो–ऽजैषीदिमान् श्रीपरमेष्टिमन्त्रः ॥ २० ॥ ग्रहा प्रसन्नाः स्युरथामरा वशा। दुष्टा न भूपा न खलाः प्रभूष्णवः ॥ नश्यन्ति विघ्ना विलसन्ति संपदो । हृदि स्थिते श्रीपरमेष्ठिपञ्चके ॥ २१ ॥

श्रुत्वैवं पार्षदा जैनं । तुष्टुवुस्तमगर्वितं ॥ तथा दृष्टप्रभावं च । श्रीमन्त्रं परमेष्ठिनम् ॥२२॥ बद्धानमूमुचद्वीरां–स्तत्राऽऽनाय्याऽथ वामनः ॥ दृष्ट्वा ते प्राग्मुण्डमुण्डा–श्चण्डपालमुपाहसन् ॥ २३ ॥ सोऽपि तान् प्रहसन् स्माह । न दुःखं पञ्चभिः सह ॥ प्रावर्त्तत तदाद्येप । श्लोकपादो जनेष्वपि ॥ २४ ॥ अथौषधीजलात्सर्वं । भटेभाश्वादि वामनः ॥ अपि कण्ठगतप्राणं । घातार्त्तमुदजीवयत् ॥ २५ ॥ स हि प्रायः कृपालुत्वा–दजिघांसुर्भटादिषु ॥ सापेक्षो व्यमुचद् घातान् । बहवो न मृतास्ततः ॥ २६ ॥ भूपाद्याश्च जगुर्वत्स ! । यथा प्रादुष्कृता गुणाः ॥ तथा प्रादुष्कुरुष्वादो–ऽनुरूपं रूपमप्यहो ! ॥ २७ ॥ तद्दाक्षिण्यात्स चौषध्या । दधौ रूपमकृत्रिमं ॥ चित्रानन्दमयाश्चासन् । सर्वे तद्वीक्ष्य विश्वजित् ॥ २८ ॥

जयकोलाहलश्चासी–द्वाद्यगीतादिनादयुक् ॥ उपलक्ष्याऽथ तं कश्चिद् । वन्दी दूरागतोऽपठत् ॥२९॥ दिष्ट्या दृष्टोऽस्यये ? भ्राम्यन्

क्षत्रवैश्रवणोऽद्भवत् ॥ स्वर्णश्रीसारवर्षेण । प्रीणन् सर्वजनान् भुवि ॥ ३० ॥ क्षत्रवैश्रवणः कोऽय-मिति पृष्टोऽथ भूभुजा ॥ वन्दी पद्मरथोर्वीश-पुत्रीपाणिग्रहादितः ॥ ३१ ॥ कमलप्रभभूपाल-सुतापरिणयाऽवधि ॥ प्रौढाऽवदातचित्रं त-च्चरित्रं सकलं जगौ ॥३२॥ युग्मं ॥ श्रुत्वा तच्च विशिष्याऽभू-न्मुदाश्चर्यमयी सभा ॥ न सामान्यो जिगायाऽस्मान् । कुमाराश्चेति हर्षिताः ॥ ३३ ॥ सर्वे संभूय ते चेत्य-चदन् विश्वाऽद्भुतोऽपि यत् ॥ अज्ञानादपराद्धोऽसि । क्षमस्वाऽलक्ष्यरूप ! तत् ॥ ३४ ॥ सोऽपि चाऽक्षमयत्स्वाग-स्तान् प्रीतिश्च मिथोऽभवत् ॥ कन्याश्च मत्वा तत्सर्वे । स्वसंवेद्यां मुदं दधुः ॥ ३५ ॥

कियत्कृतपरीवार-मस्थापयदथो नृपः ॥ स्वावासे चित्रशालायां । कुमारं बहुमानतः ॥ ३६ ॥ भूपोऽभ्यर्थयताऽन्येद्युः । कन्यापाणिग्रहाय तं ॥ सोऽवग् नार्थः कलत्रैर्मे । सन्ति तानि पुराऽपि हि ॥ ३७ ॥ कलारणजयस्त्वेप । केवलं कौतुकाय मे ॥ अज्ञातकुलशीलाय । दातुं पुत्रीश्च नाऽर्हसि ! ॥ ३८ ॥ केभ्यश्चिद्राजपुत्रेभ्यः । कलावद्भ्यः प्रयच्छ ताः ॥ कृतार्थय श्रमं चैषां । कलासु विहितं चिरम् ॥३९॥ राजाऽवादीद्वृतं साध्वि-त्युक्त्वा तेऽदात्कनीः सुरी ॥ आख्यच्च कुलशीले ते । मा कृथास्तद्वृथाऽऽर्थनाम् ॥ ४० ॥ प्रतिपाद्य बलात्तेन । भूपोऽथ विविधोत्सवैः ॥ तदेकरागिणीः पुत्रीः । सुलग्ने पर्यणीनयत् ॥ ४१ ॥ यौतके च ददौ देश-दन्तिपत्तिरथार्चणः ॥ प्रासादं सुन्दरं चाऽस्मै । सर्वोपस्करसंयुतम् ॥ ४२ ॥ नवोढाभिर्नवस्नेह-रम्याभिस्ताभिरेप च ॥ वसंस्तस्मिन् सुखं स्वैरं । प्रियाभिः सह खेलति ॥ ४३ ॥ दत्ते च गुरुदेवादि-सप्तक्षेत्र्यां तथार्थिषु ॥ यथेष्टद्रविणं ताद्द-ग्यायं युक्तो ह्ययं व्ययः ॥ ४४ ॥ अस्य भाग्यबलादिभ्यो । राज्यं राज्ञोऽप्यवर्द्धत ॥ अवर्द्धन्त च लोकेषु । सर्वतोऽस्य गुणस्तवाः ॥ ३५ ॥

एवं विदेशेऽपि नरोऽसहाये। भजति सर्वत्र जयश्रियं यत् ॥
पुण्यश्रियां पूर्वविनिर्मितानां। स्फुटोऽनुभावस्तदहो विभाव्यः ॥ ४६ ॥

इति श्रीतपागच्छाधिराजपूज्यश्रीदेवसुन्दरसूरिश्रीज्ञानसागरसूरिशिष्यश्रीमुनिसुन्दरसूरिविरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे नाट्यसुन्दरी-गीतसुन्दरी-नादसुन्दरीपरिणयननामा दशमः सर्गः समाप्तः ॥ श्रीरस्तु ॥

## ॥ अथैकादशमः सर्गः प्रारभ्यते ॥

वितरतु शिवशर्मापूर्वधन्वंतरिश्री-स्त्रिजगति फलिनीवच्छ्यामलः पार्श्वनाथः ॥
समपनयति बाह्याभ्यन्तरानामयौधान् स्मृतिमपि गमितो यः सर्वविघ्नापहारी ॥ १ ॥

अथाऽयं श्रीजयानन्दः। क्रीडन् क्रीडावनादिषु ॥ धर्मशर्ममयं निन्ये। कियन्तं समयं सुधीः ॥२॥ व्रजन्नन्येद्युरुद्याने। कुमारः क्रीडितुं हयैः ॥ पराङ्मुखं खरारूढं। मुण्डमुण्डं च सप्तधा ॥ ३ ॥ आक्रोशमुखरैस्ताड्य-मानं पुम्भिर्मुहुर्मुहुः ॥ कोलाहलकरैर्डिम्भै-श्चाऽपि कर्करधूलिभिः ॥ ४ ॥ भस्मना गुण्ठितं मष्या। लिप्ताऽऽस्यं व्रणजर्जरं ॥ पुरः कटुध्वनिकारि-काहलं क्षामकुक्षिकम् ॥ ५ ॥ वर्णिकां नरकस्येव। काश्चित्पापमिवाऽङ्गवत् ॥ नीयमानं नरं हन्तु-मद्राक्षीद्वध्यभूमिकाम् ॥ ६ ॥ पप्रच्छ च तलारक्षान्। कोऽयं? किं वा विडम्ब्यते ॥ तेऽप्यूचुर्निश्चयं दस्यु-रीश्वरश्रेष्ठिनो गृहे ॥ ७ ॥ खात्रेणाऽऽदाय सर्वस्वं। नश्यन् जागरितैर्जनैः ॥ कृते कोलाहलेऽस्माभि-र्धृतो लोप्त्रं च मोचितः ॥८॥ वधोर्व्यां नीयते हन्तुं। नृपादेशात्ततोऽधुना ॥ गतिरेषैव चौरस्य।

पापस्येदृक्फलं न यत् ॥९॥ मय्यत्र वहमानेऽपि । दातृशब्दं यदेष कः ॥ कुरुते व्यथितो दौःस्थ्या–चौर्यं दोषो ममैव सः॥१०॥ इति ध्यात्वा कृपापूर्णो । राजपुंस्यो विमोच्य तं ॥ कुमारः स्वगृहे नीत्वा । स्नानभुक्त्याद्यचीकरत् ॥११॥ क्षणेनाऽऽकार्य पमच्छ । कस्त्वं? चौर्यं करोषि किं? ॥ कुमारं चोपलक्ष्यैष । नीचास्यो वक्ति नो भिया ॥ १२ ॥

दत्ताऽभयः कुमारेण । सोऽथ गद्गदवागवक् ॥ पाप्मनश्चरितं श्रव्यं । न मेऽस्त्याख्यामि किं ततः? ॥ १३ ॥ कुमारः स्वरूपाख्या-मुपलक्ष्याऽथ तं जगौ ॥ अये! सिंहकुमारोऽसि । वन्धोऽवस्था किमीदृशी? ॥ १४ ॥ स्नेहात्किञ्चिदथाऽऽलिङ्ग्यो–पवेश्य च तमभ्यधात् ॥ पल्लीराज्यं कथं तेऽगात्? । कथं च व्रणिता तनुः? ॥१५॥ निगूहन् स्वापराधं सो–ऽप्युवाच कपटे पटुः ॥ कुमार! मन्दिरे देव्या–स्त्वयि सुप्ते तदा निशि ॥ १६ ॥ यामिकत्वमहं बिभ्र–दायान्तं सिंहमैक्षिषि ॥ तं वित्रासयितुं दूर–मगां तद्रक्षणोद्यतः ॥ १७ ॥ युग्मं ॥ प्रत्यागच्छंस्ततो भ्रान्तो । नैवाऽध्वानमलप्सि च ॥ भ्रान्त्वा भ्रान्त्वा दिने जाते । देव्यालयमुपागमम् ॥ १८ ॥ चिन्तामणिमिव न्यासं । त्वामद्राक्षं न तत्र तु ॥ अशुधाम तच्छैले–ऽखिलेऽहं पत्तयोऽपि मे ॥ १९ ॥ अलभामहि न त्वां तु । भ्रष्टं रत्नमिवाऽम्बुधौ ॥ पल्लीं न पालयामि त्व–द्वियोगार्त्तोऽप्यहं ततः ॥ २० ॥ त्वां विनाऽथ महासेनः । क्रमाद्व्यापन्ममाऽवनीं ॥ अन्धकार इवोद्योत–मन्तरेणांऽशुमालिनः ॥२१॥ ततश्चेर्ष्यावशात्सर्व–बलस्तन्निजिघृक्षया ॥ गत्वा पल्लीममुष्याऽनु । युयुधेऽहं सहाऽमुना ॥ २२ ॥ बलेनाऽमुष्य भग्ने मे । सैन्ये संग्रामयन्नहं ॥ प्रहारजर्जरो बध्वा । तेनाऽक्षेपि च चारके ॥ २३ ॥ ततः पल्लीद्वयं राज्यं । निरातङ्को भुनक्ति सः ॥ चर्मणा च मढित्वा मा–मद्रिशृङ्गादधोऽक्षिपत् ॥ २४ ॥ पलाशपर्णजाले च । कर्मणा न्यपतन् क्वचित् ॥ नाऽम्रिये तच्छिलाघर्षै–र्व्रणिताङ्गोऽपि सर्वतः ॥२५॥ मेघो भाग्यवशाद्रात्रा–वकाले-

ऽपि ववर्ष च ॥ तदा तच्चर्मोत्थगन्धा–दागतैः क्रोष्टुभिस्ततः ॥ २६ ॥ तच्चर्माऽभक्षि वातैश्च । चेतनां मूर्च्छितोऽप्यगाम् ॥ अभाग्याद्धाविदुःखानां । यन्मृत्युरपि दुर्लभः ॥ २७ ॥

क्रमादुल्लङ्घ्य तं शैलं । भ्राम्यन् ग्रामपुरादिषु ॥ इहाऽऽगां भिक्षया जीवन् । कालेन व्रणजर्जरः ॥ २८ ॥ पुरेऽस्मिन् स्वःपुराभेऽपि । नाऽऽपं भिक्षामपि त्र्यहं ॥ अकार्षं निशि चौर्यं तत् । किं न कुर्यात्क्षुधातुरः ? ॥ २९ ॥ अग्रतो विदितं ते चाऽसकृज्जीवितदायिनः ॥ कथं स्यामनृणो ! भ्रात–र्दास्येनाऽप्याऽभवं ततः ॥ ३० ॥ वाचामगोचरं किञ्चि–द्धिग्मे पापं पुरार्जितं ॥ पदं दुरापदां येन । भवाम्येवं पदे पदे ॥ ३१ ॥ अधमसंगतिदुर्मतिदुःस्थताः । प्रतिपदं वधबन्धपराभवाः ॥ प्रियावियुक्त्यरिभीतिदुरापदः । खलु फलानि हि दुष्कृतशाखिनः ॥ ३२ ॥

आकर्ण्यैवं कुमारोऽथ । तं कृपालुतयाऽवदत् ॥ भ्रातर्मा विषीद का हि ? । केषां स्युर्नाऽऽपदो भवे ? ॥३३॥ राज्यं चैतद्धनं चैतद्यन्ममाऽस्ति तवैव तत् ॥ इति जानीहि लक्ष्मीर्हि । सैव या भोज्यते निजैः ॥३४॥ कुमारोऽथौषधीनीरै–स्तद्व्रणानि व्यपानयत् ॥ कल्पद्रुरिव तुष्टोऽदा–द्वस्त्रालंकरणानि च ॥ ३५ ॥ भ्रातृत्वं ख्यापयन् लोके । स्वपार्श्वेऽस्थापयच्च तं ॥ मानयन् सर्वकार्येषु । मराल इव मौकुलिम् ॥ ३६ ॥ धनाद्यैः प्राप्यते सर्वं । न तु भ्राता कथञ्चन ॥ ध्यात्वेत्यनुमतो दारैः । स्वदेशेऽध्यकरोच्च तम् ॥ ३७ ॥ कुमारदत्तमानाच्च । विलसन् स धनादिभिः ॥ मनस्यतीव दूनोऽभूत् । शृङ्गाल इव पाशितः ॥३८॥ तथा स्वस्याऽऽपदः स्मृत्वा । कुमारस्य च संपदः ॥ दर्शं दर्शं स शुष्येत्तु । वारीवाऽब्दं यवासकः ॥ ३९ ॥ स्वयं स कीकटं सर्वाङ्गीणतेजोऽतिभास्वरं ॥ कुमारं वीक्ष्य तस्याऽस्त–मीहतेऽर्कस्य घूकवत् ॥ ४० ॥ स दध्यौ यन्न मे संपत् । तद्धराम्यस्य किं न तां ? ॥ द्विषं को नाम विश्वस्त ।

वर्द्धमानमुपेक्षते ? ॥४१॥ घात्यश्चाऽयं तथोपाया-र्यथाऽस्य निखिलेन्दिरा ॥ ममैव स्यात् सका प्रायः । साध्या भूपालसेवया ॥४२॥

स ध्यात्वैवं कुमारेण । सह यान् भूभुजं तथा ॥ अप्रीणाद्याति तस्याऽग्रे । यथैकोऽपि यथा तथा ॥ ४३ ॥ दुष्टस्यैतानभिप्राया-न्न वाऽवैत्तस्य कश्चन ॥ निगूढान् कर्दमस्याऽन्तः । को हि जानाति कण्टकान् ॥ ४४ ॥ विज्ञास्त्वज्ञासिषुस्तस्य । दुष्टत्वं चेष्टितैः प्रियाः ॥ कुमारस्तु तदुक्तं न । श्रद्दधौ स्वाऽनुरूपदृग् ॥ ४५ ॥ शिष्टदुष्टा हि मन्यन्ते । गुणदोषवतः परान् ॥ पश्यत्यालोकमेवाऽर्कः । काकाऽरिस्तम एव च ॥४६॥ दध्यौ लोकश्च चौरस्याऽ-प्येवं मानं कुमारराट् । दत्ते किं वाऽसादृश्याद्वि । भ्राताऽयं संभवेन्ननु ? ॥४७॥

कुमारमन्यदाऽप्राक्षी-द्भूपोऽनेकान् गुणाधिकान् ॥ त्यक्त्वैवं मानयस्येनं । किं शृंगालमिव द्विपः ॥ ४८ ॥ भ्रातृत्वादथ सोऽप्यूचे । भूनेता तच्च लोकवत् ॥ अश्रद्दधद्रहोऽप्राक्षीत् । कौतुकात्सिंहमन्यदा ॥ ४९ ॥ स चाप्ताऽवसरो मायी । जगाद स्वाशयाऽनुगं ॥ मयोपकारि बह्वस्य । प्राक् तन्मां मानयत्ययम् ॥ ५० ॥ वक्तुं विशेषहेतुं तु । नार्हः शपथदानतः ॥ कुमारेण निषिद्धत्वाद् । दुःखकृत्त्वात्तवाऽपि च ॥५१॥ ततो राजाऽधिकाऽऽक्षेपा-दाशंकाशतसंकुलः ॥ वदैतदपि चेत्किञ्चि-न्मन्यसे मामपीत्यवक् ॥ ५२ ॥ आज्ञातो हि कुमारस्य । तवाऽऽज्ञा बलवत्तरा ॥ स्वामिद्रोहो महत्पाप-मुभाकर्णी ततः शृणु ॥ ५३ ॥

विजयादिपुरे राज्ञो । जयनाम्नः सुतोऽस्म्यहं ॥ द्यूतेऽतिव्यसनी तेन । कुर्वे चौर्यादिकं नृप ! ॥ ५४ ॥ नृपो दध्यावहो! सत्य-वाग् न स्वसाऽप्यपह्नुते ॥ दोषमेष ततोऽवादीत् । सोऽग्रतो भूधवाऽऽज्ञया ॥ ५५ ॥ राज्ञः प्रसादपात्रं च । मधुगीतोऽस्ति गायकः ॥ चण्डालकुलभूर्गीत-कलाविच्छार्करस्वरः ॥ ५६ ॥ तस्याऽऽस्ते सुरगीताह्वः । सुतः पुण्याऽनुभावतः ॥ बाल्यतः सुभगः

शूरः । प्रश्लिः सुस्वराग्रणीः ॥ ५७ ॥ क्रमात्कुकुलजेऽप्यसिन् । सौभाग्यादिगुणोच्चयः ॥ सर्वातिशायितां प्रापत् । सौगन्ध्यमिव पङ्कजे ॥ ५८ ॥ तमध्यजीगपत्प्रीतः । कलां सर्वोत्तमां पिता ॥ गायत्येष मदग्रे च । दानं चाऽस्मै ददेऽर्थितम् ॥ ५९ ॥ अन्या-सामपि नाट्यादि-कलानां पिपठीर्बहून् ॥ सोऽभ्यर्थयत नो कश्चि-दकुल्यं पाठयेत्तु तम् ॥ ६० ॥ ततो देशान्तरेऽध्येतुं । कला जिगमिषन्नयं ॥ विना द्रव्यं न पाठः स्या-दिति तन्मामयाचत ॥ ६१ ॥ ममैव ह्युपयोगिन्यो-ऽनेनाऽधीताः कला ध्रुवं ॥ विचि-न्त्यैवं मया चाऽस्मै । ददे कोटिमितं धनम् ॥ ६२ ॥ ततो देशान्तरे प्राप्तः । स विशालपुरे क्रमात् ॥ ततो विद्याविलासाह्व-स्यो-पाध्यायस्य सन्निधौ ॥ ६३ ॥ मद्दत्तधनदानेन । वशितस्योपचारवित् ॥ क्षत्रत्वं ख्यापयन् लोके । स्वस्याऽल्पैरपि वासरैः ॥६४॥ तीव्रप्रज्ञावशात्सम्यक् । पपाठ सकलाः कलाः ॥ दुःसाध्यं धनधीदम्भैः । किं विदेशे विशिष्य च ॥६५॥ त्रिभिर्विशेषकं ॥ तदुक्तं-

दम्भस्याऽर्द्धं षड् मृषाभाषणादेः षड्धाष्टर्यस्य द्वौ क्रियावैद्ययोश्च ॥
एको भागो भण्डतायाश्च देयः पृथ्वीं वश्यामेष योगः करोति ॥ ६६ ॥

दाक्ष्यात्कस्माच्चिदाराद्धा-दिष्टरूपादिकारिणीः ॥ सौषधीः कतिचिच्चाप । भ्राम्यतां किं न सिध्यति ? ॥ ६७ ॥ ततो भ्राम्यन् विदेशेषु । कलौषध्यादिभिर्जनान् ॥ रञ्जयन्नुपकुर्वंश्च । लभते सोऽर्थितं धनम् ॥ ६८ ॥ कथञ्चन विमोह्यैष । नृपती अपि तत्सुते ॥ परिणिन्ये कलाभाग्य-गुणा नो हि कुलेक्षिणः ॥ ६९ ॥ दानं दत्ते च मत्सङ्गा-च्छन्नं तेनाऽपि दुष्कुलं ॥ मालिन्यं चिन्त-यत्यब्दे । स्वर्णश्रीवर्षुके हि कः ? ॥ ७० ॥ यच्चाऽस्याऽत्रागतस्याऽऽसी-त्तत्सर्वं ज्ञातपूर्व्यसि ॥ अभाग्योऽथ स्ववृत्तान्तं । व्रीडा-करमपि ब्रुवे ॥ ७१ ॥

अन्येद्युरस्य भूपस्य । देशोपद्रवकारिणं ॥ पल्लीराजं महासेनं । मबलं गिरिगं रिपुम् ॥ ७२ ॥ निग्रहीतुं प्रयान्तं तं । निवार्य
रिनपादहं ॥ ससैन्योऽद्रितटे गत्वा । संगराय तमाह्वयम् ॥ ७३ ॥ सोऽप्युत्तीर्य गिरेर्भिल्ल-सेनायुक् गर्वितश्चिरं ॥ युयुधे च मया
शृंग-नादैर्धनादिवन् गुहाः ॥ ७४ ॥ स भग्नश्च मयाऽनेशत् । पल्लीं ज्वालयितुं ततः ॥ मौग्ध्यायावद्दिशाम्यद्रि-कटके विषमोपले
॥ ७५ ॥ गाढगुहानिलीनोऽरि-रकस्मान्निःसृसैन्ययुक् ॥ समुत्तस्थौ शरासारं । कुर्वन् क्रूरः कृतान्तवत् ॥ ७६ ॥ अत्रसन्मे बलं
सर्वं । विधौ भज्यते न कः ? ॥ प्रहारजर्जरो बद्ध्वा । पल्लीं नीतोऽमुना त्वहम् ॥ ७७ ॥ अन्यदा गिरिशृङ्गाच्च । पातितश्चर्म-
नाऽमुनाः ॥ अत्राऽऽगां यावदित्यादि । श्रुतं भावि त्वया प्रभो ! ॥ ७८ ॥ मोचितोऽनुपलक्ष्य प्राग् । नीतो धाम्न्युपलक्षितः ॥
मत्कृत्य धनदानाद्यै-र्बहुधा बहुमानितः ॥ ७९ ॥ मत्कुलादि प्रकाश्यं न । क्वाऽपीति शपथैर्दृढैः ॥ अस्थां नियन्त्रितोऽनन्य-
गतित्वादृपतत्पदम् ॥ ८० ॥ बहु मां मानयत्येषो-ऽप्यविश्वासाच्च सर्वदा ॥ स्थापयन् स्वसमीपस्थ-मेव सूपक्रियावशम् ॥ ८१ ॥
इति गोप्यमपि स्वामिं-स्त्वदाज्ञैकवशोऽवदं ॥ कार्योऽस्मिन्नाऽप्रसत्तिस्तु । कुलं नेक्ष्यं हि सद्गुणे ॥ ८२ ॥

इति श्रुत्वा नृपः खेद-विस्मयक्रोधसंकुलः ॥ न्यस्ताक्षीद्वहुमानाच्चं । हर्षितं स्वेष्टसिद्धितः ॥ ८३ ॥ तस्मिन् दुर्बलकर्णत्व-
मविमृश्यविधायिता ॥ स्वैरित्वं चेति जैनेऽपि । सन्ति दोषास्त्रयो नृपे ॥८४॥ दध्यौ ततो नृपः क्रुद्धो । ही ! जामात्रा विटालितं ॥
मदादीनामनेकानां । कुलमेतेन पापिना ॥ ८५ ॥ अकृत्वैवं कुलादीनां । निर्णयं रभसान्मया ॥ दत्ताः स्वपुत्र्यस्तत्पंक्तौ । बुभुजे
चाऽस्य हा ! कथम् ? ॥ ८६ ॥ क्षत्रवैश्रवणं स्वं च । माध्ययं ख्यापयन् नृपौ ॥ तौ पद्मरथपद्माभा-ववञ्चयत धूर्त्तवत् ॥ ८७ ॥
प्रगरिष्यति चेद्वार्ता । निन्द्या राज्यान्तरेष्वियं ॥ तन्मां भूपा हसिष्यन्ति । कुलं त्यक्ष्यन्ति वा मम ॥ ८८ ॥ घात्यस्ततस्सद्य एवा-

ऽयं । रहोऽद्यैव निशि ध्रुवं ॥ ध्यात्वेत्याकार्य भूमिभृ-दाप्तं पत्तिद्वयं जगौ ॥ ८९ ॥ निशीथेऽद्य हयारूढो । राजाऽध्वन्येति यः पुमान् ॥ हन्तव्यः स भवद्भ्यां द्राक् । प्रकाश्यं क्वाऽपि न त्विदं ? ॥ ९० ॥ प्रतिपद्य तमादेश-मविचारं शुनाविव ॥ तस्थतुस्तौ यथास्थानं । राजाध्वेऽवहिताविथ ॥ ९१ ॥

किञ्चिन्न्यूने निशीथेऽथ । कुमारं भूभृदेककं ॥ आलोचकार्यमुद्दिश्य । नरेणाऽऽजूहवज्जवात् ॥९२॥ सरलः सोऽपि भूपाले । विश्वासविनयादिभृत् ॥ सद्यो विहाय शय्यां यान् । वेश्यातपत्नीभिरौच्यत ॥ ९३ ॥ स्वामिंस्तवर्जिमा कोऽयं ? । नीतिशास्त्रविदोऽप्यहो ॥ आलोचाऽवसरः कोऽयं ? । कोऽयं चाऽऽकारणक्षणः ? ॥ ९४ ॥ एकान्तसरलत्वं हि । नुर्नार्याश्च न शस्यते ॥ कार्यसिद्धिर्न तेन स्यात् । पश्चात्तापस्तु निश्चितः ॥ ९५ ॥ अकालाऽऽकारणं राज्ञो । न विना दुष्टकारणं ॥ किमरिष्टमृते पुष्पो-द्गमः स्याद्भूरुहां क्वचित् ॥ ९६ ॥

अन्यच्चित्तं वचश्चाऽन्यत् । क्रियाऽन्याऽन्यच्च तत्फलं ॥ वेश्याजन इव क्ष्माभृद् । दुर्ज्ञानचरितो जने ॥ ९७ ॥

विश्वासं तन्नृपे कर्त्तुं । विशिष्याऽस्मिंस्तु नाऽर्हसि ॥ अस्मत्ताते त्रयो दोषाः । ख्याताः सर्वगुणेऽपि यत् ॥ ९८ ॥ सिंहं प्रेषय तन्मान्यं । तव सर्वत्र सोऽन्यथा ॥ पोष्यमाणः सदाऽप्येवं । कस्मिन् कार्ये समेष्यति ? ॥ ९९ ॥ ध्रियते ह्यनुगस्तादृग्-प्रस्तावार्थं यथा पुरः ॥ घातरक्षाकृते दाहा-पोहार्थं दारुहस्तकः ॥१००॥ नयमार्गानुगाभिस्त-द्गीर्भिः प्रीतः कुमारराट् ॥ आकारयति भूपस्त्वा-मित्युक्त्वा[स मुमोच] प्रजिघाय तम्॥ १ ॥ घातोपायं कुमारस्य । नूनं प्रक्ष्यति मां नृपः॥ वक्ष्ये स्वेष्टमिति हर्षाद् । हयारूढः स जग्मिवान् ॥ २ ॥ अर्द्धमार्गे गतस्ताभ्यां । पुंभ्यां बाणद्वयेन सः ॥ पपात युगपद्विद्धो । भ्रातृद्रोहफलं ह्यदः ॥ ३ ॥ तत्कार्यं

कृतमस्तीति। गत्वा ताभ्यां निवेदिते ॥ जहर्ष च नृपः प्रायो। विवेकः क्ष्मापतौ न यत् ॥ ४ ॥ यदुक्तं—विवेको दुर्लभः प्रायो, विशिष्य महतामिह। धनाढ्यनृपदैवेषु, स मनागपि नेक्ष्यते ॥ ५ ॥

तद्वचकमथाऽऽकर्ण्या–ऽधावन्ताऽऽरक्षा नराः ॥जातं कोलाहलं श्रुत्वाऽप्रैपीच्च व्याहर्तां नृपः ॥ ६ ॥ नरैः कैश्चित्कुमारस्य। तत्स्वरूपे निवेदिते ॥ जगुः पत्न्यः प्रभोऽदर्शि। नृपे विश्वासजं फलम् ॥ ७ ॥ नाऽकरिष्यस्तदा स्वच्छ–प्रकृतेऽस्मद्वचो यदि ॥ अभविष्यत्ततोऽस्माक–मधुना का गतिर्हहा! ॥ ८ ॥ स्थेयं नाथाऽवधानेन। तदतःपरमप्यलं ॥ प्रविष्टो हि खलः कश्चि–द्राज्ञः को वेत्ति वाऽऽशयम् ॥९॥ कुमारोऽवक् सजातित्वाद्। [1]ब्राह्मी वो हृत्सु खेलति ॥ परं पुंस्पर्शभीतेव। मां च सा नो स्पृशत्यपि ॥१०॥ यूयं तन्मे प्रमाणं यत्। स्त्रियो दक्षाः पतिव्रताः ॥ सहचर्यः श्रियः पुंसां। सदा रक्षा धृतिर्मति ॥११॥ इत्युक्त्याऽऽनन्द्य ताः सोऽथ। सिंहो जीवन् भवेद्यदि ॥ आनीयतां तदा चाऽत्रे–त्युक्त्वाऽप्रैषीन्निजान्नरान् ॥ १२ ॥ श्वसन्तं ते तमानिन्युः। कुमारश्चौषधीजलैः ॥ उदजीवयदेवं हि। कृपालुत्वं परीक्ष्यते ॥१३॥ यदुक्तं—उपकारिणि वीतमत्सरे वा। सदयत्वं यदि तत्र कोऽतिरेकः ॥ [2]आहृते सहसाऽपराधलुब्धे। सदयं यस्य मनः सतां स धुर्यः ॥ १४ ॥

दध्यौ सोऽथापदो ही! मे। मृत्स्वंताः स्युर्मुहुर्मुहुः ॥ हरते चैप एवैताः। कोऽभिभूतिरतः परम् ॥ १५ ॥ तन्मन्येऽन्यत्पदं धाता–ऽनाप्य सर्वान् पराभवान् ॥ न्यास्थन्मय्येव निष्पुण्ये। सच्छिद्रा वा कृशा दृतिः ॥ १६ ॥ अस्यैव वा प्रपञ्चोऽय–मेतदर्थैव सत्क्रिया ॥ चिन्त्यो धूर्तोऽतः परं तु। मा मां च च्छलतु ह्ययम् ॥१७॥ नीचः सोऽथ कुमारस्यो–पक्रियां वेत्त्यपक्रियां[3] ॥ भास्वरा

[1] सरस्वती [2] शत्रौ [3] अपकारम्

अपि भार्भानो-र्घूकः पश्येत्तमोमयीः ॥१८॥ तमुज्जीव्याऽथ निश्चिन्तः। कुमारोऽशेत निर्भयः॥ शयानोऽपि हि सिंहः किं। मृगेभ्यो बिभयीति वा ॥ १९ ॥ तस्य पत्न्यस्तु साशङ्का। आहूय कियतो भटान् ॥ तदावासप्रतोल्यादि। सुरक्षितमकारयन् ॥ २० ॥

अथाऽपात्यरिणा सिंहः। केनाऽपि व्याहरागतैः॥ कैरपीत्युदिते भूपः। खेदसंभ्रमसंभृतः ॥ २१ ॥ दध्यौ किमेतत्संजात-महो! दैवं पराङ्मुखं ॥ प्रारब्धमन्यथा कार्यं। दैवेनाऽकारि चाऽन्यथा ॥ २२ ॥ युग्मं ॥ घात्यो नैवाऽऽययौ धूर्त्तः। पाल्योऽम्रियत मे हितः॥ गोप्योद्घाटो जने जज्ञे। न च कार्यं ममाऽसिधत् ॥२३॥ उक्तं च-विहितो गोत्रविध्वंसो। राज्यं च रिपुभिर्हृतं॥ अभक्ष्यव्रतलोपोऽभू-न्न च शान्तिं ज्वरोऽगमत्॥२४॥ दाहोऽभूत्करयोर्भ्रष्टाः। पूपकाश्चाऽपि निश्चितं॥ अथोद्घाटस्य जातत्वाद्। घात्योऽयं स्फुटमेव हि ॥ २५ ॥ नृपो ध्यात्वेति सन्नद्धान्। शूरान् प्रैषीत् सहस्रशः॥ सुप्तोऽसुप्तोऽपि वा घात्यो। जामातेति च तान् जगौ ॥ २६ ॥ ततस्ते सर्वसामग्र्या। कुमारावासमभ्ययुः॥ प्रतोलीं चाऽस्य भञ्जन्ति। यावदायसमुद्गरैः॥ २७ ॥ कुमारस्य भटैस्ताव-त्तामुद्घाट्य बलोत्कटैः॥ युध्यमानैर्न्यरुध्यन्त। महेभैरिव [1]सैरिभाः ॥ २८॥ योधयित्वा च तैर्भग्ना। नंष्ट्वा नृपभटाः प्रगे॥ प्राविशन्नृपगेहान्तः। कुञ्जान्तरिव [2]फेरवः ॥२९॥ स्वामिन्! दैववशाद्भग्नाः। कुमारस्य भटैर्वयं ॥ अंधकारान्न किं घ्नन्ति। भास्करस्य करा अपि ॥३०॥ तैरित्यावेदिते क्रुद्धो। युद्धभेरीमवीवदत्॥ मेलयित्वाऽखिलं सैन्यं। युद्धे चाऽसज्जयन्नृपः॥३१॥

प्रबुद्धोऽथ कुमारोऽपि। प्रातःकृत्यान्यचीकरत्॥ प्रारेभे देवितुं शारैः। सह दारैर्दरोज्झितः[3] ॥ ३२ ॥ श्रुत्वा पत्न्यः श्रुतिस्फोटं। [4]कटकस्य कटुं ध्वनिं ॥ ससैन्यं भूपमायान्तं। सम्भाव्याऽथ भिया जगुः ॥३३॥ नाऽयं केलिकलाकाल-स्तद्बलं मेलयाऽ-

१ महिषाः  २ शृगालाः  ३ भयरहितः  ४ सैन्यस्य

खिलं ॥ कलयाऽस्त्रं च दुष्काल-करं वैरिश्रियां प्रिय ! ॥ ३४ ॥ निग्रहीतुमुपैति त्वां । कोपाटोपकदुर्नृपः ॥ त्वद्भटैस्तद्भटा भग्ना । दुर्भङ्गः सैन्ययुक् स्वयम् ॥३५॥ भीतानां च तदस्माकं । न केलौ रमते मनः । इत्याकर्ण्य कुमारोऽपि । सलीलः सस्मितं जगौ ।३६। विनाऽस्त्रं विजिता याम्यां । कुमाराः प्रबला बलैः ॥ प्रगल्भेते भुजौ तौ मे । निर्भया दीव्यत प्रियाः ॥३७॥ ततस्ता अपि दीव्यंति । स्त्रीस्वभावात्तु मानसे ॥ शंकां जहति नो तद्भ्रू-संज्ञयाऽसज्जयद्बलम् ॥३८॥ अथ संग्रामसामग्र्या । नृपं कौमारमन्दिरं ॥ वीक्ष्याऽभियान्तं कालेच्छु-गोधावत् [1]प्लवपाटकम् ॥३९॥ आगत्य सचिवाः सद्यो । भूपं नत्वा व्यजिज्ञपन् ॥ ससैन्यः प्रस्थितः कस्मात् ? । क्वाऽसि हन्तुं च कं द्विपम् ? ॥ ४० ॥

सिंहोक्ते स्वाशये चोपा-कर्ण्य राज्ञाऽथ शंसिते ॥ तेऽप्यूचुः किमिदं स्वामिन् ! । खलगीरवधारणम् ? ॥४१॥ खला हि निःकारणवैरिणः सतां । भवन्ति दोषानसतोऽपि मत्सरात् ॥ स्वाभाविकः सोऽपि परर्द्धिपूल्लसन् । ग्रासे हि हेतुस्तमसोऽस्ति भास्वतः ॥४२॥ शृणोति तस्मात्परदूषणानि यो । [2]वक्त्रा समं सोऽपि पतत्यधोंऽहसा ॥ तत्राऽपि दोषान्महतां तु वक्ति य-स्ततोऽप्ययं पापतमः शृणोति ॥ ४३ ॥ खलो मत्सरमात्राऽऽर्त्तो[र्थो] । महतां व्यसनीयति ॥ मक्षिकोद्वेजितः कुष्ठी । नाऽर्कस्याऽस्तं किमीहते ॥४४॥ महतस्तद्विरुद्धस्य । वक्तुर्भञ्ज्यान्मुखं सुधीः ॥ उपानत्कण्टकस्यैव । नृरत्नं तुदतः पदोः ॥ ४५ ॥ तदुक्तं—कंटकानां खलानां च । सद्दश्येव प्रतिक्रिया ॥ उपानद्मुखभङ्गो वा । दूरतो वा विसर्जनम् ॥ ४६ ॥ शृणुयान्न खलोक्तं तत् । श्रुतं या नाऽवधारयेत् ॥ भुजगानां गरैः किं वा । घटवद्भाव्यते सरः ॥ ४७ ॥ पूज्यस्तेजोमयोऽप्यग्नि-स्ताड्योऽयःसंगतो

१ प्लवपाटकम् २ वाचकेन

यथा ॥ मृल्लेपसंगमात्तुम्बं । यथा चाऽम्भसि मज्जति ॥ ४८ ॥ महानप्यापदां पात्रं । खलसंगात्तथा भवेत् ॥ यात्यतः श्रीश्च वारीव । कर्करच्छिद्रिताद् घटात् ॥ ४९ ॥

तन्न वाच्यमसंभाव्यं । न चोक्तं शृणुयाद्बुधः ॥ न चाऽवधारयेत्तद्वा । युक्ताऽयुक्तं विचारयेत् ॥५०॥ ईदृग्गुणोऽपि जामाता। दुष्कुलः सुकुलः पुनः ॥ वध्यश्चौरोऽपि सिंहोऽयं । कः श्रद्दध्यात्सचेतनः ॥ ५१ ॥ वासुदेवः समो वाऽस्य । कोऽप्ययं संभवी ध्रुवं ॥ गुणलक्षणभाग्यानी–त्येतस्य ब्रुवते प्रभो! ॥५२॥ समवीवददर्थं च । तवैतं कुलदेवता ॥ पुष्पवृष्टिं तथा घोषं । कृत्वा मा तां वृथा कृथाः ॥ ५३ ॥ यथा नरेषु राजा त्वं । विवेको हि गुणेष्विति ॥ अविवेकश्च दोषेषु । किं मुह्यसि मुहुर्मुहुः ॥ ५४ ॥ अविवेकः किमारब्ध–स्तद्राजन्नसमञ्जसं ॥ अविमृश्य कृतं कार्यं । दुःखकृज्जीवितावधि ॥५५॥ यदुक्तं—सगुणमपगुणं वा कुर्वता कार्य जातं । परिणतिरवधार्या यत्नतः पण्डितेन ॥ अतिरभसकृतानां कर्मणामाविपत्ते–र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥५६॥ सहसा विदधीत न क्रिया–मविवेकः परमापदां पदं ॥ वृणुते हि विमृश्यकारिणं । गुणलुब्धाः स्वयमेव संपदः ॥ ५७ ॥ इति

त्वं च संरभसे बाढं । स च खेलति लीलया ॥ तद्भटैस्त्वद्बलं भग्नं । भाग्यं निर्णय तस्य तत् ॥ ५८ ॥ त्वया वीराग्रणी-श्चैष । ससैन्येनाऽपि दुर्जयः ॥ इभाऽरिः किं महेभेन । सयूथेनाऽपि जीयते? ॥५९॥ तथा चोक्तं—हेलाऽपि कस्यचिदचिन्त्य-फलप्रसूत्यै । कस्याऽपि नाऽलमणवेऽपि फलाय यत्नः ॥ दिग्दन्तिदन्तचलनं धरणीं धुनोति । खात्संपतन्नापि लतां चलयेन्न भृङ्गः ॥६०॥ इममर्थं कुमाराणां । त्वत्सैन्यसजुषां रणे ॥ नाऽभून्वः किं तथा दृष्ट्वा । स्वसेनाग्र्यं चमूपतिम् ।६१।

कृपां यद्येप नाऽधास्यत् । जीवंथैतेषु कस्तदा ॥ आयास्यदभविष्यंश्च । राजंस्त्वं राज्यभास्करः ॥ ६२ ॥ विडम्बनां कुमाराणां । दृष्ट्वा श्रुत्वा च वन्दितः ॥ भूरिकोटिभटस्याऽपि । राज्ञः पद्मरथस्य च ॥ ६३ ॥ अनेन चद्गुरूपेण । कृतं जानन्नपि प्रभो ! ॥ एवं विचेष्टमानोऽनु–करोष्यश्रुतिहृत्खलम् ॥ ६४ ॥ युग्मं ॥ यदुक्तं—आगतश्च गतश्चैव । दृष्ट्वा सिंहपराक्रमं ॥ अकर्णहृदयो मूर्खो । यो गत्वा पुनरागतः ॥ ६५ ॥ गर्हां प्राप्स्यसि भूपेषु । हतेऽनेनाऽखिले बले ॥ क्रुद्धेऽस्मिन् जीविते तेऽपि । मनः संदेग्धि नः पुनः ॥६६॥ स्वस्याऽऽस्माकं च तत्क्षेमं । कांक्षन् कर्मेदकं त्यज ॥ हते स्वामिनि भक्ता हि । किं जीवन्त्यनुजीविनः ।६७।

इति तेषां गिरा भीत्या । विस्मृताऽनुशयाशयः ॥ आरेकयन्नृपा सिंह–प्रोक्तं भूपो जगाद तान् ॥ ६८ ॥ यद्यथ सचिवा वाचं । स्वामिभक्ता नयानुगां ॥ इमां युक्तां हि वः सम्यक् । श्रोतुमर्हामि चाऽप्यहम् ॥६९॥ तथापि तेन पापेन । तथोक्त्या मे विनाशितं ॥ स्नेहं धत्ते मनो नाऽस्मिन् । पयोगत्येव बभ्रुणा ॥ ७० ॥ तद्यदि स्वामिभक्ताः स्थ । पृष्ट्वा जामातरं ततः ॥ ब्रूत सम्यक्कुलाद्यस्य । मनो यन्मे विशुद्धयति ॥ ७१ ॥ उत्तमाः स्वस्य नामाऽपि । स्वयमाख्यान्ति नैव ये ॥ कथं कुलादि ते ब्रूयुः । शूराश्चैवं विशेषतः ॥ ७२ ॥ गत्वा तथाप्यनुल्लंघ्या–त्त्वादेशात्प्रयत्नतः ॥ कुलाद्यस्य वदिष्यामः । पृष्ट्वा वक्ष्यति यद्ययम् ॥७३॥

इत्युक्त्वा ते नृपं नत्वा । कुमारस्याऽन्तिकेऽगमन् ॥ विनयात्तं प्रणम्यैत–मवोचन् रचिताञ्जलि ॥ ७४ ॥ दुर्विनीतद्विषां शास्ता । द्विधा गुरुषु भक्तिमान् ॥ प्रणम्रेषु कृपालुस्त्व–माश्रितेष्वतिवत्सलः ॥ ७५ ॥ सर्वं सर्वार्थिनां दत्से । कल्पद्रुरिव जङ्गमः ॥ ब्रूहि तातकुलादि स्वं । मा भाङ्क्षीः प्रार्थनां च नः ॥७६॥ दुरात्मा कोऽपि भूपस्य । विश्लेषमुदपीपदत् ॥ त्वयोक्तेऽस्मिन् । गते तस्मिन् । शर्मण्येधामहे वयम् ॥७७॥ कुमारः स्माह नाऽकार्षं । न करिष्ये च कस्यचित् ॥ सचिवाः प्रार्थनाभङ्गं रङ्गं धत्त निजे हृदि ॥ ७८ ॥

कुलं मे वक्ष्यतः [युद्धे] संख्ये । छिण्मूललविनौ भुजौ ॥ ब्रुवते हि फलेनैव । सन्तः कण्ठेन तन्नतु ॥७९॥ क्षेप्स्यन्ते वैरिणः सर्वे । वर्द्धिष्यन्ते भवादृशाः ॥ सुहृदः शर्मणा चैवं । कर्मैतद्धर्म्यमेव यत् ॥८० ॥ सज्जीभूय तदभ्येतु । पार्थिवः सैन्यशस्त्रयुक् ॥ भुजावेव तु मे सैन्य-शस्त्रे सज्जोऽसि तत्सदा ॥ ८१ ॥

इत्याकर्ण्य सकर्णास्ते । नत्वा तं भूपमभ्ययुः ॥ तदुक्तमखिलं चाऽऽख्यन् । विपसाद नृपस्ततः ॥ ८२ ॥ इत्याद्याडम्बरं कृत्वा । लज्जे मुञ्चन् यथातथा ॥ न युद्धे कार्यसिद्धिं तु । यशो वाऽपि विभावये ॥ ८३ ॥ कुर्वे किमुभयभ्रष्टो । गतिं कामप्यनाप्नुवन् ॥ इति चिन्तातुरं बुध्वा । धीसखा नृपमभ्यधुः ॥ ८४ ॥ अयं वज्रिणमप्याजौ । तृणायाऽपि न मन्यते ॥ आक्रान्तस्तत्किमाख्याति । स्वकुलाद्यकुतोभयः ॥८५॥ कुलस्य पृच्छया किं वा ? । गुणैराख्यातमेव तत् ॥ मह एव मणीनां यद् । ब्रूते रत्नाकरोद्भवम् ॥ ८६ ॥ ततो यथादिशेद्देवः । साम्नैवाऽदीर्घरोपणं ॥ तं प्रसाद्यानयामोऽत्र । कुमारं जगदुत्तमम् ॥ ८७ ॥ वक्ति यावत्ततः किञ्चि-न्नानाचिन्ताकुलो नृपः ॥ कुमाराऽनुमतिं प्राप्य । पुत्र्यस्तावदुपागमन् ॥ ८८ ॥ ताः प्रणम्य पितुः पादौ । संभ्रान्ता निपुणं जगुः ॥ तात! सैन्यस्य संरम्भः । कोऽयमाकस्मिको युधे? ॥ ८९ ॥

राज्ञाऽथाऽऽरभ्य सिंहोक्ताद् । वृत्तान्ते ज्ञापितेऽखिले ॥ प्रोचुस्ताः कोऽप्ययं दिव्य-प्रकृतिर्जगदुत्तमः ॥ ९० ॥ संपन्नः सकलैः सत्य-शौर्यस्थैर्यादिकैर्गुणैः ॥ वाह्वीकाऽभ्यन्तरैश्चक्रि-लक्षणैर्लक्षितो यदि ॥ ९१ ॥ अकुलीनो भवेद्विश्वे । कुलीनः कोऽपि नास्ति तत् ॥ तच्चौरखलवाचैवं । किं मूर्खिम्णा मुमूर्षसि? ॥ ९२ ॥ नरचिन्तामणिं भाग्यात् । प्राप्य सर्वार्थसाधकं ॥ प्रतिकूलयसि क्ष्मापा-ऽविवेकाद्ग्रहिलोऽसि किम्? ॥९३॥ दुरात्मा दुर्जनः सिंहो । ज्ञातोऽस्माभिः पुराऽप्ययं ॥ ज्ञापितश्च कुमाराया-ऽसकृ-

द्विनयभक्तितः ॥ ९४ ॥ परं स्वाजन्यतः किञ्चि-द्भद्रभावं समाश्रितः ॥ कुमारो न त्यजत्येनं । कलङ्कमिव चन्द्रमाः ॥ ९५ ॥ त्वयाऽपि मानितस्त्वाम-प्येवमापद्यपीपतत् ॥ किल शुष्यति सा शाखा । यां [1]कपोतोऽधिरोहति ॥ ९६ ॥ तदिच्छन् स्वपरक्षेमं । सान्त्वयैनं नरोत्तमं ॥ विमृश्य विविधं तत्ते । भक्त्यैव हितमुच्यते ॥ ९७ ॥ कटवोऽपि हि गिरो मान्या । आयतौ हि हितावहाः ॥ सेव्यान्याऽऽमयहारीणि । कटून्यप्यौषधानि यत् ॥ ९८ ॥

पार्थिवः स्माह सरम्भं । सहसा कृतमप्यमुं ॥ मोक्तुं लज्जामि मानाद्यै-रेवमेव न हि क्षमे ॥९९॥ तत्पुत्र्यो यदि भक्तिर्व-स्ताते पत्युः कुलादि तत् ॥ पृष्ट्वा कथञ्चनाख्यात । सर्वं साधु भवेद्यतः ॥२००॥ ऊरीकृत्य वचः पैत्रं । ताश्च गत्वा कुलाद्यथ ॥ पप्रच्छुः स्वं पतिं गाढ-विनयस्नेहभक्तिभिः ॥ १ ॥ सोऽप्युवाच मम भ्राता । सिंहस्तत्कथयिष्यति ॥ ताश्च प्रोचुरनेनैवाऽकारी-दमसमञ्जसम् ॥ २ ॥ नाम गृह्णासि तत्पाप-स्याऽस्याऽश्रव्यं किमु प्रिय ! ॥ ततस्ताः पार्थिवाद् ज्ञातं । तदुक्तमखिलं जगुः ॥ ३ ॥

तत् श्रुत्वाऽचिन्तयद्राय-माः ! किमीदृग्खलोऽस्त्यसौ ॥ एवं सत्क्रियमाणोऽपि । दुष्टोऽचेष्टिष्ट किं न्विति ? ॥ ४ ॥ तदयं दूरतस्त्याज्यो । मान्याः पत्नीगिरश्च ताः ॥ ध्यात्वैवमवदत्कान्ता ! । एवं चेद्दूयते खलः ॥५॥ गृह्यतामौषधी चैषा । पुत्रिकायाः शिरस्यमुं ॥ न्यस्य पृच्छत तामिष्टं । सम्यग् सा वक्ष्यतेऽखिलम् ॥ ६ ॥ साश्चर्यास्तां मुदादाय । पतिदत्तां महौषधीं ॥ उपभूप-मथाऽऽगत्य । समक्षं सर्वपर्षदः ॥ ७ ॥ पप्रच्छुः पुत्रिकां तस्या । न्यस्य शीर्षे महौषधीं ॥ कुमारकुलपित्रादि । मानुपीवाऽथ सा जगौ ॥८॥ तद्यथा—[2]विजयपुराहिवविजयसुअ । सिरिजयानंदाभिहाणुं ॥ वरखत्तिअनिववंसमणि । गुणनिहि महि-

---

[1] 'होलो' भाषायां  [2] विजयपुराधिपविजयसुतः श्रीजयानन्दाभिधानः । वरक्षत्रियनृपवंशमणिः गुणनिधिर्महिमनिधानम् ॥ १ ॥

मनिद्दाणुं ॥ ९ ॥ श्रुत्वैवं जहृषुः सर्वे । पार्थिवाद्याश्चमत्कृताः ॥ आसन्मंगलतूर्याणां । नादा जयारवोऽध्धुराः ॥१०॥ सरम्भं तं नृपो मुक्त्वा । कुमारेन्द्रमचिक्षमत् ॥ पुत्र्योऽपि क्षमिता जग्मुः । स्वं पदं मुदिता हृदि ॥ ११ ॥

अथाऽन्तरं सदोऽध्यास्त । नृपोऽप्राक्षीच्च मन्त्रिणः ॥ किमेतदिन्द्रजालं? किं । काऽपि पाञ्चालिका वदेत्? ॥ १२ ॥ तेऽप्यवोचन् कुमारस्य । भाग्यादाप्तौषधीबलात् ॥ देवतानुप्रवेशाच्च । निगदन्त्यप्यचेतनाः ॥ १३ ॥ तथापि यदि सन्देग्धि । दुर्विदग्धं मनस्तव ॥ मन्त्रिणः शतबुद्धेस्त-च्चंद्रबुद्धिं सुतं द्विजम् ॥ १४ ॥ ज्योतिषादिषु मर्मज्ञं । निपुणं त्वयि भाक्तिकं ॥ विजयादिपुरे प्रेष्य । सम्यग् सर्वं विनिर्णय ॥ १५ ॥ युग्मं ॥ श्रुत्वेति मुदितः शिक्षा-पूर्वं तं प्राहिणोन्नृपः ॥ नवमेऽह्नयागमं सोऽपि । प्रतिज्ञायाऽचलद् द्रुतम् ॥ १६ ॥ सप्तभिः पुरुषैर्युक्तः । करभैर्वेगवत्तरैः ॥ स योजनशताऽग्रस्थे । पुरेऽगात्तत्र सत्वरम् ॥ १७ ॥ नैमित्तिकस्य वेषेण । स हस्तन्यस्तपुस्तकः ॥ वेत्रिणा पार्थिवाऽऽदेशा-द्राजसद्म प्रवेशितः ॥ १८ ॥

सभायामथ सौधर्म्या-मिव रत्नमयाऽवनौ ॥ स्फटिकोद्दीप्रकुड्यायां । सर्वतः सुषमाजुषि ॥ १९ ॥ मन्त्रिसामन्तसेनानी-महेभ्यश्रेष्टिपंक्तिभिः ॥ सेव्यमानौ सुपर्वाभैः । सारालङ्करणाऽऽयुधैः ॥ २० ॥ मणिसिंहासनासीनौ । चामरच्छत्रराजितौ ॥ अभितोऽप्यङ्गरक्षैश्च । रक्ष्यमाणावुदायुधैः ॥ २१ ॥ मिलिताविव सौधर्मे-शानेन्द्रौ दिव्यभूषणौ ॥ नानादेशान्तरागच्छ-त्माभृतौ संभृतौ श्रिया ॥ २२ ॥ सोऽपश्यद्भ्रातरौ राज-युवराजौ महाशयौ ॥ पिण्डिताविव सूर्येन्द्रो-र्जयाह्वविजयाह्वयौ ॥ २३ ॥ वीक्षितुं नु तदैश्वर्यं । वह्वङ्गो भित्तिसंक्रमात् विस्मयस्मेरनेत्रोऽर्हा-माशिषं स ददाविति ॥२४॥ सर्वज्ञः शिवमातनोतु सविता चाऽऽरोग्यमिन्दुः श्रियं । भौमः शत्रुजयं बुधश्च विशदं बोधं धियं गीष्पतिः ॥ सौभाग्यं भृगुजः शनिश्च विभुतां राहुः

प्रतापोच्चयं । केतुः कीर्त्तितती: सुखानि च गुरुस्तुभ्यं सदा भूपते ते? ॥ २५ ॥

ततो भ्रूसंज्ञया राज्ञा । दापितेष्वासनेषु सः ॥ आसांचक्रे परीवार–युतोऽपृच्छि च भूभुजा ॥ २६ ॥ क्व वासी? त्वं कुतश्चागाः ? । क्व गन्ता ? किं च वेत्सि भोः? ॥ आचचक्षेऽथ विप्रोऽयं । सुरङ्गपुरवास्यहम् ॥ २७ ॥ भ्रमन्नैमित्तिको देशान्तरे वां द्रष्टुमागमं ॥ यथा कलार्थमेताऽस्मि । कृतार्थो युष्मदीक्षणात् ॥ २८ ॥ सर्वं शास्त्रोदिताऽष्टांग–निमित्तादिबलेन च ॥ अतीताऽनागताद्यर्थं वेद्मि प्रायो यथातथम् ॥ २९ ॥ ततो भूपः फलाद्यस्मै । ढौकयन् बहुमानतः ॥ छि त्राणि यानि तानि प्राग् । पृष्ट्वा पप्रच्छ तात्त्विकम् ॥३०॥ आवयोः स्तः सुतौ भ्रात्रो–र्देहमात्रेण भिन्नयोः ॥ प्रथमः सिंहसारोऽन्यः । श्रीजयानन्दनामकः ॥३१॥ प्राच्यो दुर्नयकारित्वाद् । बलान्निष्कासितो मया ॥ स्वाङ्गोद्भवोऽपि किं नैव । दुर्गन्धस्त्यज्यते मलः ॥ ३२ ॥ परो नैमित्तिकेनोक्तो । राज्यार्हः सर्वसद्गुणः ॥ आवयोरपरेषां च । जीवितादपि वल्लभः ॥३३॥ प्ररोह इव कल्पद्रो । रक्ष्यमाणोऽपि यत्नतः ॥ मिथ्या दर्शयता प्रेम । भ्रात्रा मायाविना ऋजुः ॥ ३४ ॥ वञ्चितोऽसौ समं तेन । केनाऽप्यविदितोऽगमत् ॥ भृशं गवेषणाद् ज्ञातौ । श्रीविशालपुरे च तौ ॥३५॥ श्रुत्वा तत्र कलापाठं । कियत्कालमुपेक्षितौ ॥ कालान्तरे च तौ क्वाऽपि । जग्मतुस्तन्न बुध्यते ॥३६॥ नाऽर्थस्तु सिंहसारेण । सर्वतः शोधितोऽपि यत् ॥ कुमारः श्रीजयानन्दो । न लेभेऽब्धौ तु रत्नवत् ॥ ३७ ॥ तेनाऽऽवां दुःखितौ बाढं । निमित्तज्ञादिभाषितैः ॥ जीवावः श्वासमात्रेण । भवत्तन्मिलनाऽऽशया ॥ ३८ ॥ सर्वं निमित्तं शकुन–स्वप्नाङ्गस्फुरणादि यत् ॥ देवतादीन्यपि ब्रूयु–स्तत्क्षेममिलनादि नः ॥ ३९ ॥ न स चाऽऽयाति नाऽद्याऽपि । शुद्धिमात्रमवाप्यते ॥ यद्यायाति तदा राज्ये । न्यस्य कुर्वो वने तपः ॥ ४० ॥ सहैवेच्छंस्तपः स्नेहाद् । भ्राता राज्यं न लात्ययं ॥ तपोवयसि यात्यस्मिन् । विषीदाव-

स्ततोऽन्वहम् ॥ ४१ ॥ गतमप्येति यद् द्रव्यं । कुटुम्बं सपरिच्छदं ॥ गजाश्वाद्यपि न त्वेति । कथंचिन्मानुषं वयः ॥ ४२ ॥ तद् ज्ञानिन्! श्रीजयानन्दो । जीवन्नस्ति न वास्ति चेत्? ॥ क्व? कथं वा? कदा चैते–त्यादि सम्यग् वदाऽखिलम् ॥ ४३ ॥

इत्युक्त्वा तावरोरुत्तां । स्मृतपुत्रवियोगतः ॥ पुनर्धूमायते किं न । दग्धोऽप्यनलयोगतः ॥ ४४ ॥ चन्द्रबुद्धिस्ततो लग्न–ध्यानाद्याडम्बरं क्षणं ॥ मत्वा राजकुले मान्यं । ताद्विधायाऽवदन्नृपौ ॥ ४५ ॥ प्राकृताविव पुत्रार्त्या । महान्तौ किं विषीदथः ॥ अचला हि न चल्यन्ते । वायुना पादपा इव ॥ ४६ ॥ किञ्चेत्यज्ञासि हे स्वामिन्! । लग्नात्पुत्रोऽस्ति वां सुखी ॥ स्वामी योगा–त्तुरीयस्य । भवनस्येति निश्चितम् ॥४७॥ दशमस्येशदृष्टित्वा–द्राज्यवान् सप्तमस्य च ॥ तादृग्ग्रहत्रयीदृष्टे–र्नृपपुत्रीत्रयीपतिः ॥४८॥ एवं भ्रातृयुगित्यादि । श्रुत्वा भूपो मुदाऽवदत् ॥ तर्हि क्वाऽस्तीत्यभिज्ञाय । मुदा वद विदांवर! ॥ ४९ ॥ स्फुरदोष्ठं वदन् श्लोका–न्मेषराश्याद्यनुक्रमात् ॥ कुर्वन्नाडम्बरं लक्ष्मी–पुरेऽस्तीत्यूचिवान् स च ॥५०॥ पुत्रिकाभूपवाचां च । संवादात्तस्य निर्ण–यात् ॥ वयःसंस्थानवर्णाद्यं । सोऽभिज्ञानाय चाऽब्रवीत् ॥ ५१ ॥ ततो हर्षमयीभूय । तस्मिन् वप्रपतुर्नृपौ ॥ फलपुष्पमणिस्वर्ण–वस्त्रैर्नव्याविवाऽम्बुदौ ॥ ५२ ॥

चंद्रबुद्धिरथैताभ्यां । विसृष्टो निरगात्ततः ॥ श्लाघमानस्तदौदार्यं । स्वभाग्यं तत्र चाऽऽगमे ॥ ५३ ॥ वाचः शौर्यादहो प्राप महद्दृष्टयादद्भुतां श्रियं ॥ पिको मधुरगीर्ह्यपि । पक्ष्यपीन्द्रादलङ्कृतिम् ॥ ५४ ॥ इत्यादि स्वानुगान् जल्पन् । प्रत्यागच्छत्तथैव च ॥ सोऽनमत् श्रीपतिं लक्ष्मी–पुरेऽह्नि नवमे नृपम् ॥ ५५ ॥ भूभुजा बहुमानाच्च । पृष्टो हर्षोल्लसत्तनुः वृत्तान्तं तं जगौ सर्वं । तद्दानं च पृथक् पृथक् ॥५६॥ केचिज्जगुः कुमारस्य । दानलीला न चित्रकृत् ॥ सूनवोऽनुसरन्ते हि । पैतृकं प्रायशो यतः ॥५७॥

सहासं केनचिदाख्यत्सुः संरम्भोऽयं किलाऽखिलः ॥ बभूव कर्मभिश्चन्द्र-युद्धेरेवाऽर्थहेतवे ॥ ५८ ॥

भूपोऽथ विसयानन्द-खेदाद्यैर्बहुभी रसैः ॥ भवद्हृदयसङ्कल्पो । यावद्वक्ति न किञ्चन ॥ ५९ ॥ तावत् श्रीजयराजस्य । कुमाराह्वानहेतवे ॥ प्रधानपुरुषाः प्राप्ताः । सन्ति ते गोपुरे प्रभो! ॥६०॥ इति द्वाःस्थेन विज्ञप्तो । मुञ्चेति स्माह भूपतिः ॥ दिव्यालंकारनेपथ्या-स्तेऽथाऽऽजग्मुः सवेत्रिकाः ॥ ६१ ॥ युग्मं ॥ भूपं नत्वोपदां कृत्वा । तद्दिष्टेष्वासनेषु ते ॥ आसामासुर्निजाकारादिभिः पार्षदमोदिनः ॥ ६२ ॥ श्रीराजयुवराजादि-क्षेमप्रश्नेन मोदिताः ॥ राज्ञा दर्शयता प्रीतिं । तेऽप्येवं तं न्यजिज्ञपन् ॥६३॥ राजंस्त्वत्सुहृदोर्भद्रं । सपरिच्छदपौरयोः ॥ ज्ञापितं वाचिकं ताभ्यां । शृणु स्नेहरसायनम् ॥ ६४ ॥ कुमारः श्रीजयानन्दो-ऽस्माकं जीवितसन्निभः ॥ निर्निभप्रतिभाभाजा । त्वयाऽनायि महोन्नतिम् ॥ ६५ ॥ नैमित्तिकगिरेत्यावा-मज्ञास्वहि ततस्त्वया ॥ सहाऽसत्कुलजैः प्रीति-राचंद्रार्कं स्थिरीकृता ॥ ६६ ॥ अथाऽयं प्रेष्यतां प्रीति-क्षीरे यत्स्यात् सिताऽन्वयः ॥ वियोगाऽर्त्तिप्रतप्तानां । तत्पानान्नश्च शीतिमा ॥ ६७ ॥ तवोपकाराऽलङ्कारो । यावज्जीवमविच्युतिः ॥ कुमारोपममाणिक्य-योगात्प्राप्तो ह्यनर्घ्यताम् ॥ ६८ ॥ आवयोस्त्वं तृतीयोऽसि । भ्रातैवं च विनिश्चिनु ॥ ततोऽस्मत्सदृशं कार्यं । निवेद्यं सर्वदाऽखिलम् ॥ ६९ ॥

इत्याकर्ण्याऽवदद्भूभृद् । भोभो! भवत्कवाक्सुधा ॥ नव्या या पिबतां स्वास्मिं-स्तृष्णां वर्द्धयते सताम् ॥७०॥ कुमारप्रेषणाद्यर्थे । सर्वं साधु भविष्यति ॥ इत्युक्त्वा साररत्नाद्य-मलात्तड्ढौकनं च सः ॥ ७१ ॥ कृत्वाऽथैपोत्तारकादि-चिन्तां सन्मान्य वेत्रिणा ॥ समं प्रैषीत्कुमारस्य । सौधे तान् मिलनोत्सुकान् ॥७२॥ गत्वाऽन्तःसदसं सद्यः । प्रतिहारनिवेदिताः ॥ आनन्दमेदुरस्वान्ता । यावत् प्रणिपतन्ति ते ॥७३॥ कुमारस्तावदुत्थायो-पलक्ष्य च पृथक् पृथक् ॥ नुदन् रोमाञ्चदण्डैस्ता-नाऽऽलिलिङ्ग मुदा-

कुलः ॥ ७४ ॥ धौतान् धारालहर्यासै–रासनेषूपवेश्य च ॥ भद्रं पितृव्यपित्रादि–वर्गायाऽप्रश्नयत्स च ॥ ७५ ॥ भद्रं श्लिष्यति सर्वास्तां–स्त्वद्वियोगस्तु बाधते ॥ एवं लेखेन जानीही–त्युक्त्वा तस्मै तमार्पयन् ॥ ७६ ॥ मूर्ध्नारोप्य तमुन्मुद्य । कुमारः समवाचयत् ॥ पितृवर्गवियोगादि–स्मृतिदुःखाश्रुभिः प्लुतम् ॥ ७७ ॥ तथाहि—

स्वस्ति श्रीसर्वविद्देवं । नत्वा विजयपत्तनात् ॥ श्रीजयः पृथिवीभर्त्ता । भ्रातृश्रीविजयादियुक् ॥७८॥ पुरे लक्ष्मीपुरे लक्ष्मीविलासप्रौढमन्दिरे ॥ कुमारं श्रीजयानन्दं । स्नेहादालिङ्ग्य सस्मयम् ॥ ७९ ॥ आदिशत्यत्र कल्याणं । सौवं ज्ञाप्यं च तन्मुदे ॥ कार्यं चाऽस्माकं राज्यस्य । वत्स ! त्वमसि जीवितम् ॥ ८० ॥ समं यत्सिंहसारेण । केनाऽप्यविदितोऽगमः ॥ खरेणेव हरिस्तत्ते । न युक्तः खलसङ्गमः ॥८१॥ यच्च स्मरसि नाऽस्माक–मधिरूढोऽपि सम्पदं ॥ जगतोऽपि स्वभावोऽयं । महतां तु न युज्यते ।८२। महत्त्वं हि महान् प्राप्य । प्रीणयत्यधिकं पितॄन् ॥ विधुः किमुदयं प्राप्य । नोल्लासयति सागरम् ॥८३॥ नयामः कष्टतो कालं । वयं तव वियोगतः ॥ जरद्गवा इवाऽर्हामो । वोढुं राज्यधुरां न च ॥ ८४ ॥ महोक्ष इव वत्साऽत्र । साहाय्यं कर्त्तुमर्हसि ॥ यदि भक्तिस्तवाऽस्मासु । दृष्ट्वाऽस्मांस्तत्पयः पिबेः ॥ ८५ ॥

इति लेखस्य तत्वार्थ–मवबुध्य कुमारराट् ॥ दध्यौ सुदुःखितोऽहं ही ! ॥ पितृदुःखाकरोऽभवम् ॥ ८६ ॥ वरं ह्यचेतना वृक्षाः सच्छायाः पत्रपल्लवैः ॥ पान्थान् प्रीणन्ति ये ग्रीष्मे । चण्डांशुकरतापितान् ॥८७॥ अहं तु संपदाढ्योऽपि । स्वपितॄनपि वार्द्धके ॥ न सुखाकरवं किन्तु । दुःखाऽकार्षं वियोगतः ॥८८॥ तत्संप्रत्यपि गत्वाऽऽशु । सुखाकुर्वे पितॄनिति ॥ ध्यात्वा स्नानादिकृत्यानि । निर्ममेऽतिथिभिः सह ॥ ८९ ॥

वेत्रिणाऽथ स्वरूपेऽस्मि-न्निखिलेऽपि निवेदिते ॥ दध्यौ राजा कुमारो द्रा-ग्गन्ता स्वमिलनोत्सुकः ॥९०॥ चन्द्रप्रद्युद्धयुक्तिः संवादि-वाग्भिर्निजनरैरयं ॥ कथं पितृव्यताताभ्या-माहूतोऽप्यत्र तिष्ठति ॥९१॥ अयं च मम राज्यस्य । वृद्धिशोभाकरोऽभवत् ॥ न जानेऽतः परं वैरी । स्वजनो वा भविष्यति ॥ ९२ ॥ सर्वाङ्गसुभगस्याऽस्य । दर्शनप्रणयोक्तिभिः ॥ सुखाकृतकर्मभिश्चाऽभूद् । या मे प्रीतिः पुनः क्व सा ? ॥ ९३ ॥ ही ! ही ! चिन्तामणिः प्राप्तो । हारितो दुर्धिया मया ॥ अज्ञानादमृतं चौज्झि । यदीदृग् प्रतिकूलितः ॥ ९४ ॥ अहो ! महाप्रभावं यं । पुत्रिका स्तौत्यचेतना ॥ तमप्यज्ञासिषं नाऽहं पुंरत्नं विश्वभूषणम् ॥ ९५ ॥ बहुराज-विरोधादि-पुत्रीवैधव्यजापदः ॥ पुंचिन्तामणिहानिं चो-पेक्ष्य ही ! किं कृतं मया ? ॥ ९६ ॥ इत्यादिचिन्तासन्ताप-दुःखसङ्घट्टना-वशात् ॥ आसनात्सहसाऽपसत् । मूर्च्छितः क्षितिपः क्षितौ ॥ ९७ ॥ व्याकुलैर्मन्त्रिभिः शीतो-पचारैः सोऽथ साज्जितः ॥ पृष्टस्ता-दृक्कुकर्म स्वं । सुदुःखकृदजीहि तत् ॥ ९८ ॥ जगाद च स पार्षद्या-नहो ! क्रूरः कुकर्मकृत् ॥ अविवेकः कृतघ्नश्च । मत्तो नाऽन्यो जगत्यपि ॥ ९९ ॥ तदीदृक्कर्मणः कर्त्तुः । शुद्धिर्मृत्युं विना न मे ॥ इत्युक्त्वा खड्गमाकृष्या-मुञ्चच्छेत्तुं निजं गले ॥ ३०० ॥ लब्धलक्षाश्च तं वेगा-दुद्दाल्य सचिवा ऊचुः ॥ शतबुद्धिस्त्ववक् राजन् ! । किमेतदसमञ्जसम् ॥ १ ॥ जीवातुरसि विश्वस्याऽप्या-धारो नयसम्पदां ॥ धर्मस्याऽप्युन्नतेः कर्त्ता । किं मुमूर्षसि मोग्ध्यतः ? ॥ २ ॥ कस्य भ्राम्यति नो बुद्धिः ॥ कर्मणा को न खण्डितः ? ॥ नाऽमुञ्चद् भ्रातरं हन्तुं । चक्रं किं भरताधिपः ? ॥३॥ शास्त्रज्ञोऽपि विविक्तोऽपि । को न मुह्यति कर्मणा ॥ तस्यैव हि वशाद्विश्वं । निन्द्याऽनिन्द्यप्रवृत्तिभाक् ॥४॥ मृत्युना न च पापस्य । शुद्धिः स्यात्तपसा हि सा ॥ पापमात्मगतं कर्म । मृत्युश्च तनुमात्रहृत् ॥ ५ ॥ तदात्मानं गुरूक्तेन । प्रायश्चित्तेन शोधय ॥ तच्च जीवत एव स्या-त्ततो जीव चिरं प्रभो ! ॥ ६ ॥

इत्युक्तोऽपि नृपः किञ्चित् । स्वस्थीभूतोऽपि दुःखतः ॥ रुदन्नानाविकल्पार्त्तो । भोजनाद्यपि नेच्छति ॥ ७ ॥

तत्स्वरूपमथो ज्ञात्वा । पुत्र्यस्तस्यैत्य तत्र च ॥ तातपादौ प्रणम्योचुः । कैषा तेऽनौचितिः पितः ! ॥ ८ ॥ नाऽतिहर्षविपादौ हि । युज्येते महतां क्वचित् ॥ वार्द्धयुल्लाससङ्कोचौ । चयाऽपचयजौ न हि ॥ ९ ॥ न च तेऽल्पोऽपि दोपोऽत्र । खलस्यैव त्वयं प्रभो ! ॥ दृढोऽपि भिद्यते ह्यद्रिर्नित्यं प्रवहताऽम्बुना ॥१०॥ नीचैर्वक्त्रो नृपोऽवादी–न्नास्यं दर्शयितुं क्षमे ॥ भवतीनां न च द्रष्टुं । तत्पुत्र्यो ! ब्रूत दूरगाः ॥ ११ ॥ योऽहं स्वपुत्रीवैधव्य–मुपेक्ष्याऽऽरप्सि कर्म तत् ॥ जामातुर्भवतीनां च । किमास्यं दर्शयामि सः ? ॥ १२ ॥ व्याजह्रुस्ता मुधा तात ! । कोऽयं खेदः पुनः पुनः ॥ त्वयैव सम्पदां प्रौढि–मेवमारोपिता वयम् ॥ १३ ॥ नाऽकरिष्यो यदि च्छात्र–पाठनादि धनव्ययात् ॥ तत्कोऽन्वतारयिष्यन्नः । सन्धासिन्धूः सुदुस्तराः ॥ १४ ॥ विश्वोत्तमस्य नः पत्यु–र्दानान्मोदस्व तात ! तत् ॥ खिद्यसे हृदि कृत्वैकं । स्खलितं किं विधेर्वशम् ॥ १५ ॥ प्रजाः स्युः कुप्रजाः किन्तु । पितरः कुत्सिता न हि ॥ इति व्यत्यासयन्तीभि–र्युष्माभिस्तोपितोऽस्म्यहम् ॥१६॥ लज्जे तथापि जामातु–रित्युक्ते भूभुजाऽथ ताः ॥ गत्वा स्वरूपं तत्सर्व–माख्याय प्रैपयन् पतिम् ॥ १७ ॥

उदारचरितः स द्रा–गागत्याऽऽनत्य भूपतिं ॥ लज्जानम्राऽऽननस्याऽस्य–वैलक्ष्यं हर्तुमब्रवीत् ॥१८॥ राजन् ! कन्यात्रयीराज्य–दानप्रौढिप्रथाऽमयः ॥ मयि त्वदुपकारोऽयं । महाम्बुधिरिवाऽधुना ॥१९॥ स्खलितादेककादस्माद् । विधिनुन्नखलोत्थितात् ॥ धत्ते कलुषतां धूली–मुष्टेरिव कदापि किम् ? ॥२०॥ युग्मं ॥ विज्ञा अपि न के भ्रान्त्या । स्खलन्ति भविनो भवे ॥ लोकेऽपि श्रूयते शम्भु–र्भ्रान्त्या सूनोः शिरोऽच्छिदत् ॥२१॥ विलीयतेऽनुतापाद्यै–श्चित्तोपक्रमजं ह्यघं ॥ भ्रात्रोरन्योन्यमार्पभ्यो–र्घातोपक्रमजाऽघ-

वत् ॥ २२ ॥ मुधा ताम्यसि किं राजन्! । स्वकार्याणि कुरुष्व तत् ॥ सुस्थिते त्वयि सर्वाः स्युः । सुस्थिता हि प्रजा अपि ॥ २३ ॥ इति तद्वचनैः किञ्चि–ज्जातानन्दो नृपोऽवदत् ॥ वत्स! त्वद्वाक्सुधावर्षाद्–दुःखतापोऽगमन्मम ॥ २४ ॥ स्युर्मनोवाणिकर्माणि । द्विरूपाणि तवैव चेत् ॥ भवेयुः सोपमानानि । तन्मिथो नाऽन्यथा भुवि ॥ २५ ॥ मत्समोऽस्त्यविवेकी न । त्वत्समो भाग्यवान्न च ॥ तथाऽपि खलसंसर्गं । मा कार्षीरित्यनर्थदम् ॥२६॥ ओमित्युक्त्वा नृपं नत्वा । कुमारोऽथ स्वधाम्न्यगात् ॥ अकामोऽपि नृपः स्नान–पूजाभुक्त्यादि चाऽकरोत् ॥ २७ ॥ अकुर्वन् राज्यचिन्तादि । शुद्धिमिच्छन् स्वपाप्मनः ॥ नृपः प्रतीक्षमाणोऽस्थाद् । गुर्वागममसक्तधीः ॥ २८ ॥ खरारोहादिना स्तेन–रीत्या सिंहवधाय च ॥ आदिदेश भटांस्तेऽपि । तथैवोपाक्रमन्त च ॥ २९ ॥ महाकुलजतातात–दुःखितासम्भवादिभिः ॥ विज्ञाप्य धीसखैर्भूपं । कुमारस्तममूमुचत् ॥ ३० ॥

अन्येद्युश्च पितृव्यादि–मिलनोत्कण्ठुलो भृशं ॥ प्रधानैः प्रेरितो गन्तु–मापपच्छ धराधवम् ॥ ३१ ॥ सोऽप्यूचे यास्यसि त्वं चे–त्तन्मे प्राणैः समं व्रज ॥ विना त्वां ते न तिष्ठन्ति । मत्पापोद्वेजिता इव ॥ ३२ ॥ ततो भीतः कुमारोऽवक् । मुक्त्वा त्वामसमाहितं ॥ न यास्यामि विशेष्यन्ते । त्वत्तः पित्रादयो हि न ॥ ३३ ॥ तं नत्वा चाऽऽगतः सौधे । दध्यौ संप्रति यामि चेत् ॥ तदयं म्रियते स्नेहा–द्विशिष्य नवदुःखभाक् ॥ ३४ ॥ स्पृहा राज्येऽपि नैवास्या–ऽधुना तादृग् विभाव्यते ॥ परं मद्गुणवार्त्ताभि–स्तिष्ठत्येष समाहितः ॥ ३५ ॥ तन्नैतं मोक्तुमर्हामि । स्निह्यन्तमधुनाधिकं ॥ सिंहसारस्तु राज्यार्थ–मेवैवमकरोदघम् ॥ ३६ ॥ पितू राज्यस्य पुत्रोऽर्हः । पराभाव्यं किमाददे ॥ प्रेषयाम्यमुमेवेति । दूनोऽयं मुदितो भवेत् ॥ ३७ ॥ ध्यात्वैवं सिंहमाचख्यौ । भ्रातस्त्वं याहि पैतृकीं ॥ भुंक्ष्व राज्यश्रियं नैष्या–म्यहं तत्राऽस्पृहोऽधुना ॥३८॥ इत्युक्त्वा व्यसृजत्तं स । प्रधानानपि युक्तिभिः ॥ प्रज्ञाप्या-

ऽऽवर्ज्य विज्ञप्तिं । पितृव्याऽर्हां समर्प्य च ॥ ३९ ॥ कुमारऋद्धिसत्कार–स्नेहवाग्वाचिकादिभिः ॥ प्रीताः सिंहयुता जग्मु–स्तेऽथो विजयपत्तने ॥ ४० ॥ नत्वा नृपौ कुमारस्य । वाचिकानि च तेऽवदन् ॥ तदनागमहेतुं च । श्रीपतिक्ष्माधिपाऽऽग्रहम् ॥ ४१ ॥ ततश्च सिंहसारोऽर्हं । ताभ्यामालाप्य मोदितः ॥ प्रधानार्पितविज्ञप्तिं । राजाथोच्चैरवाचयत् ॥ ४२ ॥ तथाहि—

स्वस्तिश्री जिनमानम्य । विजयादिपुरे वरे ॥ भूपालं पूज्यमाराध्यं । पितृव्यं श्रीजयाभिधम् ॥ ४३ ॥ निषेव्यं परिवारेण । पितृश्रीविजयादिना ॥ पुराल्लक्ष्मीपुराह्वात् श्री–जयानन्दः कुमारकः ॥४४॥ भक्त्या प्रणम्य साष्टाङ्गं । मौलिविरचिताञ्जलिः ॥ विधिना विनयान्नम्रो । मुदा विज्ञपयत्यदः ॥ ४५ ॥ श्रेयो मे पूज्यपादानां । प्रणिधानाऽनुभावतः ॥ [1]प्रसादो भवतां मे हृ–द्वारिधावैन्दवं महः ॥ ४६ ॥ भवतामद्य लेखाब्दो । विप्रयोगाऽग्नितापितं ॥ स्नेहोक्त्यमृतवर्षेण । सिक्त्वा मामुदजीवयत् ॥४७॥ यच्चाऽग्रतोऽपि जीवामि । प्रभावोऽत्र प्रगल्भते ॥ हृदयस्थितपूज्यांघ्रि–पद्मशैत्याऽनुभावजः ॥ ४८ ॥ मद्वियोगाऽक्षमं भूपं । प्रज्ञाप्यं स्वल्पतोऽ-[2]क्षरैः ॥ प्रणंस्याम्यर्च्यपादाऽब्जां–स्तदेकध्यानलीनहृत् ॥४९॥ तावत्तत्स्थानमुद्दिश्य । जातभाग्योदयोऽधुना ॥ कुमारः सिंहसारोऽस्ति । प्रहितो गुणसंपदे ॥५०॥ प्रसाद्या सततं शिक्षा । पित्रादीनां च मे नतिः ॥ शुभंयुः परिवारः श्री–पूज्यान्नौतीति मङ्गलम्॥५१॥ कुमारस्येति विज्ञप्त्याऽ–नागमेन च बन्धवौ ॥ युगपत्प्रापतुर्हर्ष–खेदौ तौ सपरिच्छदौ ॥ ५२ ॥

अथ ते भूभुजा पृष्टाः । प्रधानपुरुषा जगुः ॥ श्रीपद्मरथभूपाल–पुत्रीपाणिग्रहादितः ॥ ५३ ॥ चरित्रं तत्कुमारस्य । धीरोदात्ताऽऽवदातयुक् ॥ तादृग्दुःखादि सिंहस्य । यथाज्ञातं परिच्छदात् ॥ ५४ ॥ युग्मं ॥ श्रुत्वैतत्तौ सपार्षद्यौ । चित्रानन्दमयौ नृपौ ॥ एकं

१ 'स्वं प्रसाद्यं च तन्मे' इति प्रत्यन्तरे । २ क्षीणैः

शशंसतुः मोच्चै-र्मनसाऽन्यं निनिन्दतुः ॥५५॥ सन्मान्याऽथ विसृष्टास्ते । ससिंहाः स्वगृहाण्यगुः ॥ समयार्हाणि कृत्यानि । भूपालावपि चक्रतुः ॥५६॥ अन्येद्युर्जयराद् दध्यौ । तपोऽर्हं याति मे वयः ॥ भ्राता गृह्णाति राज्यं न । नाऽदोऽर्हस्त्वाययौ सुतः ॥ ५७ ॥ स्वभुजोपार्जितश्रीयुक् । स राज्यार्थं किमेति वा ॥ न परोपार्जितं मांसं । भुङ्क्ते सिंहो हि फेरुवत् ॥५८॥ स एवाऽत्राऽथवा भावी । राजा पश्चादपि ध्रुवं ॥ न ज्ञान्युक्तं विसंवादि । तच्चरित्राऽनुवादि यत् ॥ ५९ ॥ सिंहो राज्यार्थमेवाऽत्र । प्रहितस्तेन संभवी ॥ पापस्तदर्थमेवाऽस्मिन् । तथा यद्दुरचेष्टत ॥६०॥ असकृन्मरणान्ताभि-रापद्भिश्च प्रघट्टितः ॥ भावी किञ्चिच्चदोपस्त-द्राज्यमस्मै ददेऽधुना॥६१॥ तावदस्य सुशिक्षार्थं । स्थापयामि च बान्धवं ॥ चेत्प्रजान्यथको भावी । तन्न सोढा कुमारराट् ॥ ६२ ॥ राजेत्युरसि सन्ध्याय । सिंहं राज्ये न्यवीविशत् ॥ अभ्यर्थ्याऽस्थापयत् प्राग्व-द्भ्रातरं च कियद्दिनम् ॥ ६३ ॥ सिंहोऽपि राज्यछत्रार्थ-मभ्यर्थ्य तमतास्थपत् ॥ तस्थौ सोऽपि च दाक्षिण्यात् । सूनोश्च मिलनाऽऽशया ॥ ६४ ॥ श्रीमान् जयनृपो गत्वा । वनेऽभूत्तापसव्रती ॥ महाजटगुरोः पार्श्वे । कृतरत्नजटाह्वयः ॥ ६५ ॥

अथ श्रीपतिभूमिभृ-द्राज्याचिन्तापराङ्मुखः ॥ समयं गमयामास । कियन्तं धर्मकर्मभिः ॥ ६६ ॥ अन्येद्युर्वनपालस्तं । प्रणम्यैवं व्यजिज्ञपत् ॥ स्वामिन्! धर्मप्रभः सूरि-स्तवोद्याने समाऽगमत् ॥६७॥ राजा प्रागपि संवेगी । मत्वा गुर्वागमं मतं ॥ शर्कराक्षेपवत्क्षीरे । ददेऽस्मै पारितोषिकम् ॥ ६८ ॥ कृत्वा सकलसामग्रीं । गजारूढो महेन्द्रवत् ॥ कुमारश्रेष्ठिसामन्त-मन्त्र्यादिपरिवारितः ॥ ६९ ॥ धृतच्छत्रश्चलच्चारु-चामरो नागरैः सह ॥ अगात्सान्तःपुरो नन्तु-ममुं वाद्यैर्नदन्नभः ॥ ७० ॥ युग्मं ॥ गजादुत्तीर्णवान् दृष्टौ । पञ्चधाऽभिगमादिकृत् ॥ स त्रिःप्रदक्षिणीकृत्य । तं नत्वा सपरिच्छदम् ॥७१॥ सपौरः सपरीवारो । यथास्था-

नमुपाविशत् ॥ धर्मलाभाऽऽशिषानन्द्य । तं गुरुर्धर्ममादिशत् ॥ ७२ ॥ युग्मं ॥

" दायकं सकलसौख्यसंपदा—मापदां भवभुवां विनायकं ॥ हे जना! भजत धर्ममार्हतं । तेन चाऽऽशु शिववासमर्हत ॥७३॥ विद्विषां सुहृदां चाऽपि । विभागो यत्र नाप्यते ॥ बाह्यानामान्तराणां वा । भवे तत्र कुतः सुखम्? ॥७४॥ अन्तर्द्विपो हि मोहाद्या । जनकाद्याश्च तद्वशात् ॥ भवेऽत्राऽन्येषु चैषु स्यु—स्तत्तान् विजहितोत्तमाः! ॥७५॥ संवेगाद्याश्च मित्राणि । सुगुर्वाद्याश्च तद्वशात् ॥ भवेऽत्राऽन्येषु चैषु स्यु—स्तत्तान् भजत सत्तमाः ॥ ७६ ॥ एवं दुःखमयोऽयं स्या—न्न भयाय भवो रिपुः ॥ निर्ममस्त्यक्तसंगश्च । शिवशर्मणि लीयते ॥ ७७ ॥ "

इत्यादिदेशनां श्रुत्वा । ज्ञानत्रयनिधेर्गुरोः ॥ प्रबुद्धा बहवो भव्या । जिनधर्मं प्रपेदिरे ॥ ७८ ॥ केचित्तत्र श्राद्धधर्मं । यतिधर्मं परे पुनः ॥ भेजुः सम्यक्त्वमेवैके—ऽन्ये तु कन्दाद्यभिग्रहान् ॥७९॥ भूपश्चाऽत्यन्तसंवेगा—द्ध्यौ बाह्योऽपि ही! मया ॥ द्विपन् सुहृच्च नाऽबोधि । कथं लक्ष्यौ तदन्तरौ? ॥८०॥ ततः सर्वं परित्यज्य । बाह्याऽन्तरपरिग्रहं ॥ जैनीं दीक्षां गृहीष्ये यद् । विमुच्येऽखिलशात्रवात् ॥८१॥ विचिन्त्येति गुरुं स्माह । प्रव्राजिष्यामि वोऽन्तिके ॥ राज्यसूत्रं विधायाऽऽशु । गुरुः साहेष्टकृद्भव ॥८२॥

ततोऽसौ सौधमागत्य । राजवर्ग्यान् प्रबोध्य च ॥ पुत्राऽभावात्कुमारेन्द्रं । बलाद्राज्ये न्यवीविशत् ॥८३॥ शिक्षयित्वा च तं तेन । कृतनिष्क्रमणोत्सवः ॥ मासं चाऽमारिमुद्घोष्य । सङ्घं नाना [सुष्ठुः] प्रपूज्य च ॥८४॥ चैत्येष्वष्टाह्निकापूजां । कृत्वा दीनान् प्रतर्प्य च ॥ वैराग्यैकमयैः सूरे—र्देशनावचनैश्च तैः ॥८५॥ प्रबुद्धै राजपुत्राद्यैः । सहितः पञ्चभिः शतैः ॥ प्रबुद्धानां च राज्ञीनां पञ्चशत्या समन्वितः ॥ ८६ ॥ निर्ममो राज्यदारादौ । विषयादिषु निःस्पृहः ॥ हृदुद्गतविवेकार्क—प्रास्तमोहतमश्चयः ॥८७॥ स्नाना-

दिमङ्गलाचार–पूर्वं सर्वाङ्गभूषितः ॥ गजारूढः सितच्छत्र–चामरश्रेणिराजितः ॥ ८८ ॥ पदे पदे ददद्दानं । वाघनादनदन्नभाः ॥ प्रशंसामुखरैः सर्वैः । स्वजनैः परितो वृतः ॥ ८९ ॥ गीयमानो मृगाक्षीभिः । कलैर्धवलमङ्गलैः ॥ गजाऽश्वभटकोटिभिः । सर्वतः सुपमान्वितः ॥ ९० ॥ पठ्यमानगुणो वन्दि–गायकैर्विविधं पुरः ॥ वीक्ष्यमाणः समन्ताच्च । संस्तुवज्जनकोटिभिः ॥ ९१ ॥ स्तूयमानोऽपि गीर्वाणै–र्महासत्त्वचमत्कृतैः ॥ गोत्रवृद्धनरस्त्रीभि–राशीभिरभिनन्दितः ॥ ९२ ॥ गत्वोद्याने क्षमयित्वा । सर्वान् लोचं विधाय च ॥ गुरुं व्यजिज्ञपन्नत्वा । भवाब्धेस्तारयाऽऽशु नः ॥९३॥ गुरुणाऽथाऽऽगमोक्तेन । भव्यभव्यासहस्रयुक् ॥ विधिना दीक्षितः शिक्षां । ग्राहितश्चोपदेशतः ॥९४॥ श्रीजयानन्दभूपाद्या । गुरुं नव्यमुनींश्च तान् ॥ नत्वा जग्मुर्यथास्थानं । मुखरास्तद्गुणस्तवैः ॥९५॥

अधीयन् सोऽथ सिद्धान्तांस्तपो द्वादशधा सृजन् ॥ विहरन् गुरुणा साकं । गीतार्थोऽभूत्क्रमान्मुनिः ॥ ९६ ॥ योग्यं मत्वाऽन्यदा सूरि–पदे न्यास्थद्गुरुश्च तं ॥ ददौ परिकरे चाऽस्मै । सहप्रव्रजितान्मुनीन् ॥ ९७ ॥ ततोऽयं बोधयन् भव्यान् । विहरत्यभितो भुवि ॥ योगप्रभावतो लब्ध–बहुलब्धिसमृद्धिभिः ॥९८॥ सूरिः प्रभावयन् जैनं । शासनं योगशुद्धितः ॥ उत्पन्नकेवलो भोक्ता । क्रमाच्छिवसुखश्रियम् ॥ ९९ ॥ युग्मम् ॥ अथाऽयं श्रीजयानन्द–नृपतिर्नृपसेवितः ॥ साधयन् विविधान् देशान् । वर्द्धते राज्यसंपदा ॥ ४०० ॥ प्रौढिं परमां प्रौढै–श्चर्योऽर्हद्धर्ममानयत् ॥ भयाभावकरालपत्व–नयदानावनादिभिः ॥ १ ॥ प्रजास्तथा सुखाकार्षी–द्यथा स्वर्वासिनोऽप्यमूः ॥ स्वःपतिं च न मन्यन्ते । तृणायाऽपि सदोन्मुदा ॥ २ ॥ युग्मम् ॥

अन्यदोद्यानपालस्तं । भूपं नत्वा व्यजिज्ञपत् ॥ पितरौ ते नृपोद्याने । प्राप्तौ स्तोऽल्पपरिच्छदौ ॥ ३ ॥ श्रुत्वेत्याकस्मिकाऽनभ्र–वृष्टिन्यायात्तदागमं ॥ मन्वानोऽस्मै ददौ दानं । महद्धर्षोच्छ्वसत्तनुः ॥४॥ ततोऽचालीदथो भूपः । पद्भ्यां तद्दर्शनोत्सुकः ॥

प्रत्यैक्षिष्ट यथा नेभं । नाऽश्वं न च परिच्छदम् ॥ ५ ॥ गत्वोद्याने ऽनमद्वप्तु–र्हर्षास्रैः क्षालयन् पदौ ॥ उत्थाप्य दृढमालिङ्ग्य । घ्रातवान्मूर्ध्नि सोऽपि तम् ॥ ६ ॥ जनन्यप्येवमेवाऽस्मै । शतशोऽप्याशिषो ददौ ॥ सर्वेऽप्यानन्दमापुश्च । क्षेमप्रश्नादिभिर्मिथः ॥७॥ मत्वैतद् द्रुतमागत्य । वध्वास्तिस्रोऽप्यथाऽनमन् ॥ मुदा श्वसुरयोः पादान् । सभक्तिसपरिच्छदाः ॥८॥ ता वीक्ष्य गुणखानीस्तौ । यमानन्दमवापतुः ॥ तस्य कोट्यंशमप्यावि–श्चक्रतुर्नाऽऽशिषां शतैः ॥ ९ ॥

अथाऽऽगतवलो भूप–स्तातमारोह्य सिन्धुरे ॥ वधूभिः पर्युपास्यांऽघ्रिं । मातरं तु सुखासने ॥१०॥ तं स्वहस्तधृतच्छत्रं । महेन्द्रमिव गौरवात् ॥ पुरे जितस्वरि श्रीभिः । सौधे प्रावेशयन्निजे ॥ ११ ॥ सिंहासने तमभ्यास्य । पादपीठे स्थितः स्वयं ॥ उत्सङ्गे तत्पदौ न्यस्य । भृशं सभ्यानरञ्जयत् ॥ १२ ॥ अथो कृतोपदान् राज–वर्ग्यान् पौरान् परानपि ॥ सदालापार्हदानाद्यैः ॥ सत्कृत्याऽलं विसृज्य च ॥ १३ ॥ विज्ञप्तेऽवसरे तात–सुतौ तदधिकारिणा ॥ चक्रतुः स्नानजैनार्चा–भुक्त्यादि सपरिच्छदौ ॥ १४ ॥

सुतोऽथावसरेऽप्राक्षीत् । पितरं स्नेहभक्तितः ॥ किमित्याकस्मिकस्ताता–गमोऽल्पर्द्धिपरिच्छदः ॥ १५ ॥ दुःखाश्रुमिश्रदृक् साह । जनकः शृणु वत्स हे ! ॥ राज्यं प्रदाय सिंहाय । भ्राता मे तापसोऽभवत् ॥१६॥ तेनैव सह यान्तं मां । राज्यस्त्रार्थ-मात्मनः ॥ सिंहोऽभ्यर्थ्य भृश भक्ति–विनयाभ्यामतास्थपत् ॥१७॥ स च दर्शयते भक्तिं । मयि वात्सल्यधारिणि ॥ कालेनाऽपि तु नाऽजानां तस्य मायाविनो मनः ॥१८॥ स मामन्येद्युरालोच–मिषादाजूहवद्ग्रहः ॥ एक एवाऽगमं चाऽहं । विश्वासान्निजकर्मभिः ॥ १९ ॥ स प्राग् रचितसामग्र्या । भटैर्माऽद्रागुदायुधैः ॥ बन्धयित्वाऽक्षिपद् गुप्तौ । तत्रैव च तवाऽम्बिकाम् ॥२०॥ मद्भक्तांश्च भटान् कांश्चि–च्चारकेषु पृथक् पृथक् ॥ विश्वास्याऽचिक्षिपद्बध्वा । नंष्ट्वा केऽपि त्वगुः क्वचित् ॥ २१ ॥ सोऽलुलुण्टन्ममाऽऽवासं । देशं चक्रे तथाऽऽ-

तमसात् ॥ तिष्ठामिं च्छोटितस्तत्र । रक्ष्यमाणोऽभितो भटैः ॥२२॥ धियाऽजानां च तद्धेतुं । प्रजां मय्यनुरागिणीं ॥ स विभाव्य स्वराज्यश्री–भ्रंशभीत्या तथाऽकरोत् ॥ २३ ॥

अथास्ति शूरदत्तो मे । वीरदत्तश्च सेवकौ ॥ अत्यन्तं मयि तौ भक्तौ । तदा नंष्ट्वा कथञ्चन ॥ २४ ॥ सुहृदो धीरराजस्य । सेवकस्य महीभुजः ॥ तदज्ञातं दधानस्य । भक्तिमेकान्तिकीं मयि ॥२५॥ धाम्न्यस्थातां परीक्ष्येत । मैत्री काले हि तादृशां ॥ अदापयन् सुरङ्गां ते । यावद् गुप्तिं च तद् गृहात् ॥ २६ ॥ त्रिभिर्विशेषकं ॥ सप्रियोऽहं तया नीत–स्तैर्गृहे निशि नैपुणात् ॥ स्वामिभक्तिर्हि सा काले । या प्राणाद्यनपेक्षिणी ॥ २७ ॥ प्रागेव कृतसामग्र्या । सर्वे नंष्ट्वाऽगमाम च ॥ सुस या हि क्रियाः सर्वाः । ससत्त्वैर्विषमा अपि ॥ २८ ॥ यदुक्तं—रथस्यैकं चक्रं फणिनियमिताः सप्त तुरगा । निरालम्बो मार्गश्चरणरहितः सारथिरपि ॥ रविर्यात्येवाऽन्तं प्रतिदिनमपारस्य नभसः । क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे॥२९॥इति.

सकुटुम्बैस्ततो धीर–शूरवीरैर्भटैः सह ॥ सङ्केतान्मिलितैः क्वाऽपि । कैश्चिदन्यैरपि द्रुतम् ॥३०॥ पूर्वसज्जितवाहादि–सामग्र्याऽत्रैवमागमं ॥ सुखेनैव च यद्भक्ताः । प्रायः सर्वत्र सन्ति मे ॥३१॥ केचित्त्वद्यापि मे सन्ति । गुप्तिषु स्वजनादयः ॥ तेषां सारामथो कर्तुं । त्वं वत्स! प्रभुरर्हसि ।३२। इति श्रुत्वा कुमारोऽपि । खेदाश्चर्यप्रमोदभाक् ॥ ऊचे सिंहस्य दौर्जन्य–महो अप्युपकर्त्तरि ॥३३॥ प्रायः पायपिताऽम्भोऽपि । पितेवाऽऽराध्यते सता ॥ असकृत्प्राणदाताऽपि । खलैर्वैरीव दृश्यते॥३४॥ किञ्च–धूमः पयोधरपदं कथमप्यवाप्य । वर्षाम्बुभिः शमयति ज्वलनस्य तापं ॥ दैवादवाप्य खलनीचजनः प्रतिष्ठां । प्रायः स्वबन्धुजनमेव तिरस्करोति ॥ ३५ ॥ मा विषीदस्ततः पुत्रे । त्वदाज्ञैकवशे सति ॥ सारां साधु करिष्यामि । धूतानां सत्वरं पितः! ॥ ३६ ॥

अपकर्तुश्च दास्यामि । शिक्षां भिक्षां च नीःकृतेः ॥ प्रसादं चोपकर्तृणां । महासन्मानदानतः ॥ ३७ ॥ इत्युक्त्या तातमानन्द्य । त्रीनाऽऽहूयाऽथ तान् भटान् ॥ तत्सत्त्वस्वामिभक्त्यादि–गुणांस्तुष्टाव बन्दिवत् ॥ ३८ ॥ सत्कृत्य सकुटुम्बांस्तान् । वस्त्रालंकरणादिभिः ॥ प्रत्येकं देशदानैश्च । तुष्टः प्रभुरपिप्रिणत् ॥ ३९ ॥ यदुक्तं–सुवर्णपुष्पां पृथिवी–मुच्चिन्वन्ति नरास्त्रयः ॥ शूरश्च कृतविद्यश्च । यश्च जानाति सेवितुम् ॥ ४० ॥ ततस्तुष्टा विसृष्टाश्च । गत्वा राज्ञा भटैः सह ॥ देशांस्तेऽप्यात्मसात्कृत्वा । भूपौ तौ पर्युपासते ॥ ४१ ॥ अन्येषामपि भूपोऽदाद् । ग्रासं पित्रा सहेयुषां ॥ निग्रहीतुं सिंहसारं । स्वांश्च मोचयितुं ततः ॥४२॥ विजयादिपुरे गन्तु–कामश्चैवं व्यचिन्तयत् ॥ राज्यभ्रंशभिया दुष्टः । पितर्येवमचेष्टत ॥ ४३ ॥युग्मम्॥ मयैवाऽस्थाप्यसौ राज्ये । सम्प्रत्येव ततः कथं ॥ निगृह्णामि द्रुतं दाना–ऽऽदानाभ्यां स्यां हि निष्कलः ॥४४॥ लेखेन ज्ञापयित्वा त–न्मोचये स्वजनादिकान् ॥ शक्तः स्थापयितुं फेरु–र्हरेर्हत्वा किमाऽऽमिषम् ॥ ४५ ॥ स न मुञ्चति चेत्तत्तं । निगृह्णन् स्यां न दोषभाक् ॥ श्वानोऽपि ताड्यते स्वोऽपि । न किं क्षीरे विटालयन् ॥ ४६ ॥

ध्यात्वैवं मत्पितुः प्रेष्यं । सर्वं यल्लुण्टितं त्वया ॥ विमुच्य द्राक् प्रहेयाश्च । सत्कृत्य स्वजनादयः ॥ ४७ ॥ नो चेत्त्वां निग्रहीष्यामि । स्थेयं सज्जतया युधि ॥ इति लेखेन सिंहस्य । दूताऽऽस्येनाऽप्याजिज्ञपत् ॥ ४८ ॥ ज्ञात्वा तल्लेखदूतोक्तं । सिंहसारस्ततो भिया ॥ सर्वं श्रीविजयस्य स्वं । सत्कृत्य स्वजनादि च ॥ ४९ ॥ प्रैषीत्सप्राभृतं सद्यो । देशं विजयभूभुजः ॥ तत्सात्कृत्वा च विज्ञप्ति–दूताभ्यां तद्व्यजिज्ञपत् ॥ ५० ॥ युग्मम् ॥ दृष्ट्वागतं च तत्सर्वं । पितापुत्रावहृष्यतां ॥ प्राच्यं स्वं स्वजनादिभ्यो । देशं श्रीविजयस्त्वदात् ॥५१॥ सुतोऽन्येद्युः पितृभ्यां च । प्रोचे विजयपत्तनात् ॥ आरभ्य निर्गमाद्वत्स ! । वृत्तं स्वं ब्रूह्यशेषतः ।५२॥

मूलतोऽथ चरित्रं स्व–मविवक्षुरपि स्वयं ॥ पित्राऽऽज्ञोल्लङ्घनभीरुः । कुमारोऽवग् यथायथम् ॥ ५३ ॥ नानाप्रौढावदाताढ्यं । चह्वाश्चर्यरसाञ्चितं ॥ निशम्य पितरौ तच । तमानन्दमवापतुः ॥ ५४ ॥ अमांस्तद्दहृदयाम्भोधौ । तद्वृत्तोक्तिप्रणालकैः ॥ उद्-भ्रान्तो यः पुरे देशे । पृथिव्यामपि विस्तृतः ॥ ५५ ॥ ततः श्रीविजयस्तत्र ॥ पुत्रभक्त्या चमत्कृतः ॥ सत्कृतः सर्वराजन्यैः । सुखमास्ते महीश्वरः ॥ ५६ ॥ तदङ्गजस्तु भूजानि–र्जयत्यानन्दितप्रजः ॥ ससाङ्गराज्यं सुप्राज्यं । भुञ्जानः स्वभुजार्जितम् ॥ ५७ ॥ धवलो यशःपुञ्जो । रञ्जिताऽशेषभूतलः ॥ सर्वोत्कृष्टनयैश्वर्य–प्रभूतो विस्तृतो भुवि ॥ ५८ ॥

अन्यदा सुविनीतत्वाद् । भक्त्या प्रीत्या च पूरितः ॥ स्वपित्रे तन्निजं राज्य–माग्रहाद्व्यतरत्स च ॥ ५९ ॥ उत्तमत्वात्त्रिरी-हत्या–द्गुणिनामग्रणी मणिः ॥ पुत्रैकप्रेमदाक्षिण्या–दुल्लंघयितुमक्षमः ॥ ६० ॥ राजा श्रीविजयस्तस्याऽनिच्छयाऽपि प्रपद्य तत् ॥ कुमारं श्रीजयानन्दं । बलादेकान्तवत्सलम् ॥ ६१ ॥ प्रत्यपादयदानन्दा–द्यौवराज्यमखण्डितं ॥ सर्वथाऽपि परैः सर्वै–रनुलंघित-शासनम् ॥ ६२ ॥ समसिंहासनासीनौ । समवेषविभूषणौ ॥ समानरूपसौन्दर्यौ । समाननयतेजसौ ॥ ६३ ॥ भीमकान्तोन्नतत्वाद्यैः । सर्वलोकोत्तरैर्गुणैः ॥ समौ समौनौ पापोक्तौ । युक्तौ सर्वयशःश्रिया ॥ ६४ ॥ कृताद्रिरूपदेवेन्द्रा–र्केन्दुस्मरसुराऽरिवत् ॥ युग्मि-सौन्दर्यसङ्गाढ्यौ । दृश्येते युगपज्जनैः ॥ ६५ ॥ त्रिभिर्विशेषकं ॥ एवं द्वयोर्महैश्वर्य–लक्ष्मीलालितपादयोः मिथः पृथुतमस्नेहो-ऽलौकिकोऽवर्द्धताऽनिशम् ॥ ६६ ॥ अन्येद्युर्विजिगीषुत्वाद् । राजचूडामणिर्युवा ॥ चिन्तां न्यस्य पितर्यस्य । राज्यस्य निखिलस्य च ॥ ६७ ॥ स्वयं च श्री जयानन्दः । शक्रजिद्विक्रमो नृपः ॥ भूपान्मध्यमखण्डस्थान् । लीलयाऽसाधयद्बहून् ॥ ६८ ॥ राजा चक्रपुराधीश–श्चक्रसेनोऽति-विक्रमी ॥ जयी जयपुरक्ष्माभृ–द्विपक्षक्षोददक्षिणः ॥ ६९ ॥ जयन्तीनगरीनेता । जयन्तः शात्रवाऽन्तकृत् ॥ पुरन्दरपुरत्राणं । नरेन्द्रो

नरकेसरी ॥ ७० ॥ शूरः सूर्यपुरस्वामी । नन्दो नन्दिपुरेशिता ॥ भीमो भोगवतीभर्त्ता । कोशलेशः सुमङ्गलः ॥ ७१ ॥ अन्येऽपि पृथिवीचन्द्र–कलाचन्द्रकृपादयः ॥ भूभुजः साधितास्तेन । विहिताः स्वस्य सेवकाः ॥ ७२ ॥ पञ्चभिः कुलकं ॥

एवं प्रसाध्य भूपालान् । भूयसः सुमदोत्तमान् ॥ महासैन्याब्धिरागात्स । सोत्सवं स्वपुरेऽन्यदा ॥ ७३ ॥ प्रणम्य पितरं भक्त्या । सेवमानः सुमानसः ॥ स्वीकृत्य राज्यचिन्तां स्वं । राज्यमुन्नतिमानयत् ॥ ७४ ॥ युग्मं ॥ ततोऽसौ राजराजेति । नृपेषु बिरुदं वहन् ॥ प्रसिद्धिं परमां प्राप । गीयमानगुणो भुवि ॥ ७५ ॥ श्रीविशालपुरेशाद्याः । क्रमात्तद्वृत्तसंश्रुतेः ॥ जामातरमभिज्ञानै–स्तं विज्ञाय मुदं दधुः ॥ ७६ ॥ कुमारः श्वसुरेभ्योऽथ । परिणीताः पुरा निजाः ॥ प्रेष्य लेखानभिज्ञान–गर्भानानाययत् प्रियाः ॥७७॥ प्रभुत्वेनाऽपि सेव्योऽयं । स्वाजन्यात्सेवितो वरं ॥ ध्यात्वेत्यानीय ते पुत्री–रार्पिपन् विहितोपदाः ॥७८॥ तथाहि–श्रीविशालपुराधीश–स्तनयां मणिमञ्जरीं ॥ श्रीविशालजयः सान्तःपुरोऽभ्येत्य समार्पिपत् ॥ ७९ ॥ एवं हेमपुराद्धेम–प्रभः सौभाग्यमञ्जरीं ॥ तथा पद्मरथः सान्तः–पुरो विजयसुन्दरीम् ॥८०॥ कमलप्रभभूपश्चाऽ–नैषीत्कमलसुन्दरीं ॥ ताः सोऽप्याश्वास्य तद्योग्या–वासग्रासैरपिप्रिणत् ॥ ८१ ॥ राज्यं स्वं पितृसात्कृत्वा । स कुमारनराधिपः ॥ इष्टैः कलाविलासाद्यै । रमते रमणीयुतः ॥ ८२ ॥ श्वसुराः सपरीवारा । जामातृश्रीचमत्कृताः ॥ ताभ्यां सत्क्रियमाणाः स्व–र्निभेऽस्थुस्तत्पुरे कियत् ॥ ८३ ॥

अन्येद्युः श्रीजयो भूपः । सह पित्रादिभिर्नृपैः ॥ अध्यास्त बहिरास्थानी–सभां सभ्यालिसुन्दराम् ॥ ८४ ॥ तत्र देशान्तरात्किञ्चि–दागाद्गायनपेटकं ॥ सुकण्ठस्तत्र मुख्योऽस्ति । गाताऽतिमधुरध्वनिः ॥८५॥ तस्य रूपाऽतिरम्भाऽस्ति । प्रिया सर्वकलोत्तरा ॥ विशिष्य चाऽऽशु सङ्गीत–कृतिगाढविचक्षणा ॥८६॥ सा पद्मरथभूपाल–द्विकन्याचरिताऽनुगं ॥ गीतं कृत्वा तदा भर्त्रा । सह

गातुं प्रचक्रमे ॥ ८७ ॥ लब्ध्या भिल्लप्रदानादि । ज्यायस्याऽस्तु करग्रहात् ॥ आरभ्य चरितं पुत्र्या । जगौ गात्रग्रहावधि ॥ ८८ ॥ ततः प्राक् सुखदुःखौघ-संस्मृत्यार्त्ता रुरोद सा ॥ तद्गीतरसभङ्गं च । सुकण्ठो वीक्ष्य तां जगौ ॥८९॥ तुहगीअगुणेण रंजिआ । सुचिरं सुंदरि! कामदा पया ॥ कह रोइसि दुत्थिया खया । वसरे नो सुलहो खणो पुणो ॥९०॥ निरुध्य रुदितं साऽपि । कथञ्चिद्गद्गदध्वनिः ॥ गीतगानच्छलादेवे-त्यगायज्जनाचित्रकृत् ॥ ९१ ॥ तथाहि—किह पउमपुरं किह पउमरहु-किह पिअडाभंगिण भिल्लगहु ॥ जयसुंदरि गायणघरिहिं गया । हह! गायइ घणकाज्जि दइवहया ॥ ९२ ॥

श्रुत्वैतत् स्वधवाह्वादि । पद्मा राज्ञी सविस्मया ॥ यावत्तां वीक्षते तावत् । स्वामुपालक्षयत् सुताम् ॥९३॥ वत्से! वत्से! कथं क्वाऽसी-त्यादि सा ब्रुवती द्रुतं ॥ तामुपागात्ततः साऽपि । तत्पदोरुत्थिताऽपतत् ॥ ९४ ॥ उभे अपि मिथः कण्ठे । विलग्याऽ-रुदितां च ते ॥ राजा पद्मरथोऽप्येता-मुपलक्ष्य सुतामुपैत् ॥ ९५ ॥ एषाऽपि रुदतोऽस्याऽपि । गृहित्वांऽघ्रि ततोऽरुदत् ॥ तेषां च रुदितैर्जज्ञे । कारुण्यैकमयी सभा ॥ ९६ ॥ अयुभुत्सन्त तद्वृत्तं । सभ्याः सर्वे सविस्मयाः ॥ अप्राक्षीत्तानथाऽऽकार्य । किमेतदिति भूपराट् ॥ ९७ ॥ निरुध्य रुदितं धैर्या-त्ततः पद्मरथोऽवदत् ॥ कन्ये स्वामिन्नभूतां मे । समस्तां चाऽर्पयं तयोः ॥ ९८ ॥ मच्चित्तप्र-तिकूलार्थ-तत्पूर्व्यादिक्रुधा तदा ॥ प्रादां ते कूटभिल्लाय । लघ्वीमित्यादि ते स्फुटम् ॥९९॥ स्वाऽभिप्रेतसमस्यार्थ-कथनादिजतु-ष्टितः ॥ नरकेसरिभूपाङ्ग-भुवेऽदां जयसुन्दरीम् ॥ ५०० ॥ स्थापितः कियतो घस्रान् । जामाता नरकुञ्जरः ॥ सप्रियः सत्कृतोऽथ स्वे । पुरन्दरपुरेऽगमत् ॥ १ ॥ उपालक्ष्यऽधुना चैषा । गायन्ती जयसुन्दरी ॥ जाने गीताऽनुसारेण । दुखाऽवस्थामगात्सुता ॥२॥ व्यक्तं वृत्तान्तमस्या न । वेद्म्येषैव हि वक्ष्यति ॥ ततस्तातेन पृष्टाऽऽख्यत् स्ववृत्तं जयसुन्दरी ॥ ३ ॥ तथाहि—

तदा तात ! समं भर्त्रा । प्राप्ताऽहं श्वासुरे कुले ॥ मत्पतिश्च मदासक्तो । रमते भोगशर्मसु ॥४॥ अन्यदा स वसन्तर्तौ । कुसुमाकरनामनि ॥ क्रीडोद्याने पुरात्क्रोश-द्वयस्थे नन्दनोपमे ॥ ५ ॥ विधाय विविधान् केलि-गृहान् वालुकभित्तिकान् ॥ सच्छन्नान् कुसुमस्रग्भी-रम्भास्तम्भालिबन्धुरान् ॥६॥ कामस्येव गृहेष्वेषु । मासद्वयविवत्सया ॥ सर्वाङ्गभोगसामग्र्या । प्रविवेश मया समम् ॥७॥ दूरस्थैः सुभटै रक्ष्य-माणश्चेटीगणैर्वृतः ॥ वारस्त्रीगीतनाट्यादि--लीनश्चिक्रीड सोऽन्वहम् ॥८॥ नारीकुञ्जरवन्नारी-गणैस्तस्येति खेलतः॥ भोगासक्तस्य यद्दैवा-दन्यथाऽजनि तत् शृणु ॥ ९ ॥ सहस्रकूटशैलेशो । महासेनाह्वपल्लिराट् ॥ पुरं लुण्टायितुं किञ्चि-दचलद्भिल्लसैन्ययुक् ॥ १० ॥ हेरिकेभ्यः सुरक्षं त-द्विज्ञाय व्यर्थफेरकः ॥ वलमानः कुमारं तं । ज्ञात्वा वनमवेष्टयत् ॥ ११ ॥ त्वज्जामाता ससैन्यस्ता-[1]न्नाहलान्निश्चययोधयत् ॥ शृङ्गनादनदद्दिक्कै-र्भग्नस्तैः प्रवलैस्ततः ॥ १२ ॥ नष्टे चाऽस्मिन् ससैन्ये ते । केलिगेहानलुण्टयन् ॥ श्येनेन कलविङ्कीव । भिल्लेशेनाऽहमादिषि ॥१३॥ मुदा पल्लीं ससैन्योऽगा-द्विपण्णां स जगौ च मां ॥ प्रबले मयि पल्लीशे पत्यौ क्रीड यथारुचि ॥ १४ ॥ शीलभ्रंशभियाऽरौत्सं । ततस्त्र्यहमुपोषिता ॥ अतः स स्माह भुंक्ष्व त्वां । दास्ये पत्ये धनेन यत् ॥ १५ ॥ किञ्चिज्ज्ञातसमाधाना । भोजनादि व्यधां ततः ॥ अशङ्कत सपत्न्याश्च । शल्यं भिल्लपतेः प्रिया ॥ १६ ॥ नगालिसुलभौषध्या-श्चूर्णं सा भोज्यगं ददौ ॥ तज्जलोदरिणी जाता । प्रापं जीवितसंशयम् ॥ १७ ॥ वैद्यौषधाद्यभावेन । [2]कल्या नैषाऽत्र भाविनी ॥ इति ध्यात्वा सुकण्ठाय । तत्र चाऽऽजग्मुषेऽन्यदा ॥१८॥ ददौ मामुपचर्यायै । प्रीतिदानाधियाऽपि च ॥ तद्गीतरञ्जितो भिल्ल-पतिः पत्नीकृतं विदन् ॥ १९ ॥ युग्मं ॥ रूपलुब्धोऽग्रहीत्सोऽपि । सुवैद्यात्कल्यताशया ॥ साऽहं विजयखेडाह्वे । पत्तने च

१ भिल्लान्   २ नीरोगा

समागमम् ॥ २० ॥ सोऽस्मिन् सुमतिर्वैद्येन । द्रव्यैर्मामचिकित्सयत् ॥ रोगमूलानि स ज्ञात्वा । विरेचाद्यैरपीपटत् ॥ २१ ॥ तं सत्कृत्य सुकण्ठो मां । चक्रे प्रणयिनीं मुदा ॥ विशिष्याऽध्यापयद्गीतं । प्रागप्यात्तां कलोच्चयम् ॥ २२॥ गायामि सह पत्याऽहं । लभे सोऽनर्गलं धनं ॥ भूपादीन् रञ्जयन्नेवं । सुकण्ठो धनवानभूत् ॥ २३ ॥ मत्वाऽथ श्रीजयं भूपं । प्रौढं बहुनृपाऽन्वितं ॥ उपस्थिताऽद्य गानार्थं । लब्ध्वा बहुदिनैः क्षणम् ॥ २४ ॥ तातादीनत्र मत्वाच । जिज्ञापयिषयाऽऽत्मनः ॥ स्वचरित्रात्मकगीत-मगायं निर्मितं स्वयम् ॥ २५ ॥ विदितं तेऽग्रतः सर्व-मथो विजयसुन्दरी ॥ तादृग्भिक्षाय या दत्ता । कथमासीत्क्व चाऽस्ति च ॥२६॥

ऊचे पद्मरथो भिक्षो । न सः किन्तु नृपाऽत्मजः ॥ निजभाग्यपरीक्षार्थं । तादृग् रूपं तथा व्यधात् ॥२७॥ कृतपूर्वाऽवदाताऽलि-र्मद्वन्धादिर्जगज्जयी ॥ राजेन्द्रः श्रीजयः सोऽय-मेव श्रीविजयाङ्गजः ॥ २८ ॥ इयं च वामपार्श्वस्था । भूपस्य स्नेहमानभूः ॥ सर्वपत्न्युत्तमा सा ते । स्वसा विजयसुन्दरी ॥ २९ ॥ अङ्गुल्या दर्शितामेषा । यावत्तामभ्युपागमत् ॥ साऽपि चोत्थाय तावच्च । कण्ठलग्नाऽरुदत्स्वसुः ॥३०॥ निरुद्धय रुदितं चाख्य-द्गाढं तां जयसुन्दरी ॥ स्वसर्धन्यासि या शुद्ध-शीलैवं प्राप च श्रियः ॥३१॥ श्रीदेवगुरुधर्माणां । माहात्म्योक्त्यां त्वयैव च ॥ समस्या पूरिता तात्त्वि-क्यलम्भि च फलं तथा ॥ ३२ ॥ मया नास्तिकवादोपहतया तु यथातथा ॥ अपूरि पितृचाटूक्त्या । तदभूवं विपत्पदम् ॥३३॥ न प्रसादाऽप्रसादाभ्यां । राजादेः सुखदुःखभाक् ॥ किन्तु स्वपुण्यपापाभ्यां । सर्वोऽत्राऽऽवां निदर्शनम् ॥ ३४ ॥ इति श्रुत्वा नियुद्ध्यैत-दुवृत्तं सर्वं तयोर्नृपः ॥ श्रीजयोऽबूबुधत्सभ्यान् । धर्माधर्मनिदर्शनात् ॥ ३५ ॥ तुष्टुवुश्चार्हतं धर्मं । जनाः सर्वेऽपि विस्मिताः ॥ सुकण्ठायाऽर्थितं दत्वा । श्रीजयोऽमूमुचच्च ताम् ॥ ३६ ॥ पित्रे समर्प्य पुत्रीं तां । स्वगृहान्तर्विवेश सः ॥ शास्त्रोक्तविधिना चैतां । संशोध्याऽस्थापयत्पिता ॥ ३७ ॥ नरकुञ्जरमाकार्य ।

समये तत्पुरादथ ॥ सोपालम्भं ददौ तस्मै । नृपेन्द्रो जयसुन्दरीम् ॥ ३८ ॥ सोऽपि च श्वसुरादिभ्यो । लज्जमानः प्रियान्वितः ॥ वीराभिधे पुरे स्वेऽगात् । पत्नीप्राप्त्या मुदा द्रुतम् ॥३९॥ मिथः सत्कारसंवृद्ध-प्रीतयोऽन्येऽप्ययुर्नृपाः ॥ नरेन्द्रानुमताः स्वस्व-पुरं पद्मरथादयः ॥४०॥ राज्यं स्वं पितृसात्कृत्वा । कुमारोऽप्यथ सप्रियः ॥ कलाभिः क्रीडति स्वैरं । निश्चिन्तो धर्मकर्मकृत् ॥ ४१॥

धर्मशर्ममयेऽथैवं । भूभुजोर्यात्यनेहासि ॥ इमौ व्यजिज्ञपन्नत्वाऽ-न्यदा काननपालकः ॥४२॥ युवाभ्यामिव भूपाभ्या-मलं-चक्रे वसुन्धरा ॥ [1]इष्यदक्षिणवाताभ्यां । वनलक्ष्मीस्तथा प्रभू ॥ ४३ ॥ अत्र वसंतवर्णनं-विलसत्कोकिलारावा । चन्दनामोद-नोदिनी ॥ चञ्चच्चंपकपुष्पाभा । पुन्नागश्रेणिमोहिनी ॥ ४४ ॥ रम्यरम्भोरुलक्ष्मीका । सानन्दोल्लासिविभ्रमा ॥ मञ्जुलस्थलजोत्फुल्ल-पद्मनेत्रा कलालिभृत् ॥४५॥ जाता द्वितीयमाल्लूरा । वर्णिनीव नवोदया ॥ भोगक्रीडाऽर्हतां धत्ते । वनश्रीरधुना प्रभू ॥ ४६ ॥ व्याजहार निशम्यैवं । भूपः श्रीविजयः सुतं ॥ नैवाऽर्हामो वनक्रीडां । यतो नो मध्यमं वयः ॥ ४७ ॥ तद्वत्स! क्रीडितुं याहि । वने सुरभिपावने ॥ त्वां विना हि न खेलन्ति । नागराः सागराः श्रियाम् ॥ ४८ ॥ ताताऽऽदेशमवाप्यैव-मनुल्लङ्घ्यं कुमारराट् ॥ वनेऽगात्सर्वसामग्र्या । सान्तःपुरपरिच्छदः ॥४९॥ मिथः शोभामहाचौराः । पौराश्चाऽपि तमन्वगुः ॥ क्रीडोद्यानेऽर्हसामग्र्या । स्वस्वऋद्ध्यनुरूपया ॥ ५० ॥

वाद्यन्ते वेणुवीणादी-न्यथो वाद्यानि लक्षशः ॥ मृदंगपटहाद्यानि । चाऽत्र प्रतिपदं जनैः ॥ ५१ ॥ ददते चच्चरीर्नार्य-श्चारु गायन्ति गायनाः ॥ मञ्जु नृत्यन्ति नर्तक्यः । खेलैः खेलंति खेलकाः ॥५२॥ कलयंति कलाकेलीः । किल केलिकिला जनाः ॥

[1] वसन्त-दक्षिणवायुभ्यां

भिलन्ति च मिथो हेलि–हिला लीलालयाः श्रियाम् ॥५३॥ स्वादन्ति स्वाद्यस्वाद्यानि । पानकानि पिबन्ति च ॥ युवानो वल्गु वल्गंति । लगन्ति रतिकेलिषु ॥ ५४ ॥ शेरते केलिगेहेषु । रंभौकस्सु च केचन ॥ सपत्नीका रतिश्रांता । निश्चिन्ताः सुखनिद्रया ॥ ५५ ॥ भान्ति पौष्पैरलंकारै–र्युवानः केऽपि सप्रियाः ॥ रूपैर्निर्जित्य पुष्पेषु–मात्तैरिव तदायुधैः ॥ ५६ ॥ उच्चिन्वन्ति च पुष्पाणि । युवानः प्रतिपादपं ॥ पुष्पेषोरुपदीकर्त्तुं । स्वरूपसुहृदः किल ॥ ५७ ॥ आच्छिन्दन्ति युवत्योऽपि । पुष्पाणि प्रतिवल्लरि ॥ एभिर्नः पुष्पबाणो मा । वधीदसमये न्विति ॥५८॥ कासांचिद्भ्रान्त्युरोजेषु । पतिन्यस्ताः सुमस्रजः । विशन्तुरोन्तरस्त्राणि । पुष्पास्त्रो न्वमुचद्बहिः ।५९। दासीभिर्भूपतिः पुष्प–गृहिकाभिरथो कृते ॥ रम्भापुष्पगृहे चारु–ण्यासीनः कौसुमासने ॥ ६० ॥ नानापुष्पपरिस्कारैः । सर्वाङ्गे समलङ्कृतः ॥ मूर्त्यन्तरमिव प्राप्तो । देवः पुष्पायुधः स्वयम् ॥ ६१ ॥ युग्मं ॥ प्रियाभिस्तिसृभिर्नाट्य–गीतनादकलारसैः ॥ रज्यमानः कियत्कालं । तस्थौ नवनवैर्भृशम् ॥ ६२ ॥ क्रीडित्वा विविधैरन्ये–रपि केलिरसैरिह ॥ अप्सरोनिभनारीभिः । महेन्द्र इव नन्दने ॥ ६३ ॥ पद्मिनीनां ससौरभ्ये । परागैः पिञ्जराम्बुनि ॥ क्रीडासरसि सस्त्रीको । जगाम जलकेलये ॥६४॥ तत्र सिञ्चन्नपि स्वर्ण–शृङ्गीनीरैरहो प्रियाः ॥ साम्बुजैरपि चाबृण्वं–श्चक्रे कामोपतापिनीः ॥ ६५ ॥ वाद्यमानेऽभितो वार–स्त्रीभिर्मधुकरीगणे ॥ गीयमानेषु शृङ्गार–गीतेषु सुभगं स्मितैः ॥ ६६ ॥ आहत्य पद्मिनीपत्रै–राच्छोत्थाऽञ्जलिगैर्जलैः ॥ भूपनार्यः सनर्माश्रि । व्याकुलं तं वितन्वते ॥ ६७ ॥ क्रीडित्वैवं सहैताभिः । करेणुभिरिवेभराट् ॥ मिथस्ताः क्रीडन्तीर्मुक्त्वा । सोऽभूत्पालेरलङ्कृतिः ॥ ६८ ॥ वसानो व्याघ्रचर्माणि । कुण्डलीकृतकार्मुकः ॥ रज्ज्वा बद्धं दधत् श्वानं । तूणीरोद्भासिपार्श्वकः ॥ ६९ ॥ शिखिपिच्छावृतो मौलौ । भिल्लस्तत्रैत्य कश्चन ॥ प्राणमन्नृपतिं तेन । पृष्टः कस्त्वं? ततो जगौ ॥ ७० ॥

नरेन्द्र! यमदुर्गाद्रौ। पल्ल्यां भिल्लाधिपोऽभवत् ॥ चण्डसिंहाऽभिधस्तस्य। सिंहव्याघ्रौ सुतौ पुनः ॥ ७१ ॥ पितर्युपरते राज्यं। भुञ्जाते तौ विभज्य च ॥ ललौ व्याघ्रस्य सिंहोऽथ। राजपत्न्यौ बलोत्कटः ॥ ७२ ॥ ततश्च दुःखितो व्याघ्रो। भ्राम्य-न्नेको वनादिषु ॥ जीवन्मृगयया‌ऽत्रागा-दद्य सोऽहं महीपते! ॥ ७३ ॥ मद्भ्राता स च सिंहोऽपि। पुरऋद्धिदिदृक्षया ॥ आगतः कौतुकादत्रै-वाऽऽसन्ने वनगह्वरे ॥ ७४ ॥ निःशङ्कं सह मत्पत्न्या। रमते दुर्जयो मया ॥ दुर्बलस्य बलं राजे-त्यहं तु त्वामुपागमम् ॥ ७५ ॥ युग्मं ॥ भटकोलाहलं श्रुत्वा। नंक्ष्यत्येष क्वचित्कुधीः ॥ ततः शक्नोपि चेद्राज-न्नेकाक्येवैत्य तज्जवात् ॥ ७६ ॥ प्रियां मोचय मे दुष्टं। हत्वा राज्यं च देहि यत् ॥ निसर्गाद्वत्सला सन्तो। विशिष्य शरणागते ॥७७॥ यदुक्तं—विपदि परेषां सन्तः। समधिकतरमेव दधति सौजन्यं ॥ ग्रीष्मे भवन्ति तरवो। घनकोमलपल्लवच्छायाः ॥७८॥ एतं प्रति कृपां कृत्वा। भूपतिः कुपितोऽवदत् ॥ रे! रे! दर्शय तं दुष्टं। निगृह्णामि रयाद्यतः ॥७९॥ मद्भूमावप्यनीतिं यः। करोत्येवं दुराशयः ॥ न क्षमे क्षणमात्रं तं। सौजन्यस्य कलङ्कदम् ॥८०॥ राजेत्युक्त्वा समं तेन। साऽसिः केनाऽप्यलक्षितः ॥ अगाद्दुर्गेऽपि कार्ये हि। विचारो नैव सात्विके ॥८१॥ निकुञ्जस्य मुखे गत्वा। स भिल्लो व्याहरन्नृपं ॥ इहैवाऽन्तर्वणं सोऽस्ति। बिभेम्यायांस्ततोऽग्रतः ॥८२॥ ततस्तत्रैव तं मुक्त्वा। निकुञ्जे प्राविशन्नृपः ॥ व्यलोकत च सर्वत्र। न पुनः कञ्चनैक्षत ॥ ८३ ॥ व्यावृत्तस्तत्र तं भिल्ल-मपि नैक्षिष्ट भूपतिः ॥ मन्वानोऽथेन्द्रजालं त-द्यावदेति पुरं प्रति ॥८४॥ तावद्व्योम्नोऽवतीर्णो द्राग्। विमानात्कोऽपि निर्गतः ॥ प्रणम्य खेटो भूपालं। विनयेन व्यजिज्ञपत् ॥ ८५ ॥ विकल्पान् हृदि मा कार्षी-र्भिल्लरूपादिमायया ॥ मयैवाऽऽनिन्यिषेऽत्र त्वं। तत्र हेतुं शृणु प्रभो! ॥ ८६ ॥ तथाहि—

वैताढ्ये दक्षिणश्रेण्यां । पश्चात्नगराऽग्रिमं ॥ रथनूपुरचक्रादि–वालाह्वं वर्त्तते पुरम् ॥८७॥ दक्षिणश्रेणिगैः प्रायो । मान्यो विद्याधरैरिह ॥ ईशः पवनवेगोऽहं । वज्रवेगश्च मत्सुतः ॥८८॥ साधिताऽनेकविद्योऽयं । कृतकन्याकरग्रहः ॥ हेमशृङ्गगिरौ रम्ये । न्यास्थद्धेमपुरं मुदा ॥ ८९ ॥ तत्र च क्रीडति स्वैरं । बहुविद्याबलोन्मदः ॥ सपौरः सपरीवारः । कैलासे धनदो यथा ॥ ९० ॥ अथाऽस्ति योगिनीवास–स्थानं तत्पीठमण्डितं ॥ जालन्धराभिधं रम्यं । पत्तनं रैमणिगृहम् ॥९१॥ कामाक्षा स्वामिनी तस्य । महा-ऋद्धिपरिच्छदा ॥ पूज्याऽस्ति योगिनीवृन्दे–स्तन्मध्ये भवने स्थिता ॥९२॥ आस्ते च तत्पुरः पीठं । रम्यं स्वर्णमणीमयं ॥ ध्याने-नाऽऽराधका यत्राऽऽराध्यंत्येतां सयोगिनीम् ॥९३॥ वसन्ति परितस्तस्य । हरित्सु चतसृष्वपि ॥ योगिन्यः सपरीवारा–श्चतुःष-ष्ठिर्महर्द्धयः ॥९४॥ इमानि च तासां नामानि, तद्यथा—वाराही १ वामनी २ गरुडी ३ इन्द्राणी ४ आग्नेयी ५ व्यामा ६ नैऋत्या ७ वारुणी ८ वायव्या ९ सौम्या १० ईशानी ११ ब्राह्मणी १२ वैष्णवी १३ माहेश्वरी १४ वैनायकी १५ शिवा १६ शिवदूती १७ चामुण्डी १८ जया १९ विजया २० अजिता २१ अपराजिता २२ हरसिद्धि २३ कालिका २४ चंडा २५ सुचंडा २६ कनकदंता २७ सुदंता २८ उमा २९ घंटा ३० सुघंटा ३१ मांसप्रिया ३२ आशापुरी ३३ लोहिता ३४ अंबा ३५ अस्थिभक्षी ३६ नारायणी ३७ नारसिंही ३८ कौमारी ३९ वानरती ४० अंगा ४१ वंगा ४२ दीर्घदंष्ट्रा ४३ यमदंष्ट्रा ४४ प्रभा ४५ सुप्रभा ४६ लंबा ४७ लंबोष्ठी ४८ भद्रा ४९ सुभद्रा ५० काली ५१ रौद्री ५२ रौद्रमुखी ५३ कराला ५४ विकराला ५५ साक्षी ५६ विकटाक्षी ५७ तारा ५८ सुतारा ५९ रजनीकरी ६० रंजना ६१ श्वेता ६२ भद्रकाली ६३ क्षमाकरी ६४ एवं—

चतुःषष्टिः समाख्याता । योगिन्यः कामरूपिकाः ॥ पूजिताः प्रतिपूज्यन्ते । भवेयुर्वरदाः सदा ॥९५॥ अणिमालघिमैश्वर्य–

वशिता गरिमादयः ॥ विविधाः शक्तयस्तासां । कोपतोषादिकर्म च ॥९६॥ रम्याद्रिवनकासार–महासिंधुहृदादिषु ॥ ता द्वीपेषु समुद्रेऽपि । रमन्ते दिव्यशक्तयः ॥९७॥ नृलोके कुर्वते क्रुद्धा। मरकादीनुपद्रवान् ॥ नाशयन्ति च तास्तुष्टा। दद्युश्चाऽनेकसम्पदः॥९८॥ भापयन्ति वराकांश्च । महतो मोदयन्ति च ॥ तादृग्रूपक्रियोक्त्याद्यै–स्तासां क्रीडा ह्यसौ सदा ॥९९॥ स च क्रीडापदं तासां । हेमशृङ्गगिरिः सदा ॥ तदज्ञात्वा तु मत्पुत्रः । पुरं तत्र न्यवेशयत् ॥६००॥ ततस्ताः कुपिताः क्लृप्त–मरकोपद्रवादिभिः ॥ भापयित्वा जनान् सर्वान् । पुरं तदुदवासयन् ॥ १ ॥ वज्रवेगस्ततो विद्यां । तद्वशीकारकारणं ॥ ऐच्छत्साधयितुं ज्वाला–मालिनीमिष्टसिद्धिदाम् ॥ २ ॥ सा च श्रीपर्वते देवी । महाज्वालादृशोः पुरः ॥ बिल्वलक्षस्य होमेन । ध्यानैर्जापैश्च सिद्ध्यति ॥ ३ ॥ तत्र देवीगृहे गत्वा । वज्रवेगो यथाविधि ॥ तां साधयितुमारेभे । सामग्र्या सर्वयाऽन्वितः ॥ ४ ॥ तच्च विज्ञाय योगिन्यः । कुपिताः सप्तमेऽहनि ॥ तत्राऽऽगत्योपसर्गैस्तं । प्रतिकूलैरचुक्षुभन् ॥ ५ ॥ सत्त्ववांस्तैर्न स क्षुब्धः। प्रादुर्भूय ततोऽवदन् ॥ दिव्यालङ्कृतरूपाणि । दर्शयन्त्यो निजानि तम् ॥ ६ ॥ अहो! साहसिकोऽसि त्वं । तुष्टास्तुभ्यं ततो वयं । नेष्यामस्त्वां पतीकृत्य । रूपलक्ष्मीं कृतार्थताम् ॥७॥ उपासिष्यामहे नाथं । त्वां च दास्य इवाऽन्वहं । भुङ्क्ष्व भोगान् नृरूपोऽपि । दैवतांस्तत्सुदुर्लभान् ॥ ८ ॥ तपोध्यानादिभिः क्लेशैः । किं वृथाऽतःपरं कृतैः ॥ क्लिश्यते वह्निपाकाद्यैः । को हि प्राप्तेऽपि मोदके ॥ ९ ॥ तदुत्थाय द्रुतं नाथाऽऽलिङ्गाऽस्माननुरागिणीः ॥ क्षारस्यैवाम्बुनोऽज्ञासी–रसं सौधं त्ववेह्यथ ॥ १० ॥ इत्युक्त्वा ता न्यधुर्नाट्यं । क्वणत्कङ्कणनूपुरं ॥ गायन्त्यो मोहनं गीतं । कामोद्दीपनचेष्टिताः ॥११॥ श्रुत्वा तांस्तान् ध्वनीन् क्षुब्ध–स्तद्रूपाणि निरूपयन् ॥ जातस्मरहृतध्यानः । स यावद्वक्ति किञ्चन ॥१२॥ तावन्मिथो हसन्तीभि–स्ताभिर्निन्ये स्वपत्तने ॥ विडम्ब्यतेऽथ केलिभि–मन्त्रैर्निगडितः स च ॥ १३ ॥

मयैवं तज्जनैर्ज्ञात्वा । नानापूजास्तवादिभिः ॥ तोष्यमाणा अपीमं ता । न मुञ्चन्ति कथञ्चन ॥ १४ ॥

अथो वैताढ्यभूमीभृ-त्युत्तरश्रेणिभूषणं ॥ पौराणां वल्लभं सारं । पुरं गगनवल्लभम् ॥ १५ ॥ तत्र चक्रायुधश्चाऽस्ति । सर्व-विद्याधरेश्वरः ॥ राजाऽपि कुरुते यश्नो-ल्लासं योऽहर्निशं जने ॥१६॥ बिभ्रतस्तत्पदाब्जेऽलि-भूयं [य] सर्वे नृपाः परं ॥ प्राप्नुवन्ति श्रियं युक्तावर्णौज्ज्वल्यं च चित्रकृत्॥१७॥ज्योतिष्केष्विव चण्डांशो।रत्नसानोर्नगेष्विव पादपेष्विव।कल्पद्रो-र्भृगेष्विव मृगद्विपः।१८। समो वाऽभ्यधिको वाऽस्य । विद्यैश्वर्यबलर्द्धिभिः ॥ विद्याभृत्सु न कोऽप्यस्ति । कियन्मात्रास्तु भूचराः ॥ १९ ॥ सेव्यते सोऽधुना खेटै-रुभयश्रेणिगैरपि ॥ सर्वैरप्यसमैश्वर्यो । महेन्द्र इव निर्जरैः ॥ २० ॥ स्वप्रभुत्वादहं तस्य । कार्यमेतन्न्यवेदयं ॥ मोचयिष्याम्यमुं ह्येतत् । कियदित्याद्युवाच सः ॥ २१ ॥ विज्ञप्तोऽप्यसकृत् किन्तु । नैव तं मोचयत्ययं ॥ विषयादिप्रमादित्वं । हेला वाऽपि महीयसः ॥ २२ ॥ प्रभूष्णोस्तस्य सर्वत्र । हेतुर्न ज्ञायतेऽत्र तु ॥ शक्त्यशक्ती तु को वेदाऽलक्ष्यशक्तेश्च मादृशः ॥ २३ ॥ मम चाऽस्ति सुता वज्र-सुन्दरी सुरसुन्दरी ॥ याः समा अपि रूपाद्यै-रियता व्यत्परेचयन् ॥ २४ ॥ ताः स्वयं निर्निमेषाक्ष्यः । स्वस्य दृष्टुनियं पुनः ॥ कुरुते निर्निमेषाक्षान् । नरयोपिद्गणान् सदा ॥२५॥ युग्मं ॥ अनुजा सा च पुत्रस्य । तस्य सर्वगुणोत्तरा ॥ जैनधर्मरुचिः काले । जग्राह सकलाः कलाः ॥२६॥ अभूत्सर्वोत्तमा नाट्य-कला चाऽस्यां विशेषतः ॥ बहुद्रुमयुजि स्वर्द्रु-राजिवन्नन्दनावनौ ॥ २७ ॥ अन्यदाऽथ गुणांस्तस्या । नृपश्चक्रायुधोऽशृणोत् ॥ अयाचत च तां दूत-मुखेन प्रभुरेष माम् ॥ २८ ॥ त्रिगुणाऽधिकवर्षत्व-बहुपत्नीकतादिभिः ॥ न चाऽस्मै दातुमीहेऽहं । तामिष्टां जीवितादपि ॥ २९ ॥ यदुक्तं—वपुः शीलं कुलं वित्तं । वयो विद्या सनाथता ॥ एतानि यस्य विद्यन्ते । तस्य देया निजा सुता ॥ ३० ॥ मूर्खनिर्धनदूरस्थ-बहुभार्येशि-

वार्थिनां ॥ त्रिगुणाधिकवर्षाणां । चाऽपि देया न कन्यका ॥ ३१ ॥ यथा तथा निषेद्धुं स । न शक्यश्च भुवि प्रभुः ॥ ततो व्यज्ञापयं दूत-मुखेनोत्तरमित्यहम् ॥ ३२ ॥ योगिनीभिर्धृतो मेऽस्ति । तनयो भृशदुःखितः ॥ तद्दुःखेन विवाहादि कर्मणां न सराम्यहम् ॥ ३३ ॥ ततो मोचय तं स्वामिन्! । सर्वं साधु भवेद्यतः ॥ गत्वा दूतेन तत्सोऽपि । विज्ञप्तो नोत्तरं त्वदात् ॥३४॥

सर्वाङ्गसुखलीनस्य । तस्य हेला हि तादृशि ॥ अन्यदाऽथ सभायां मे । कश्चिदागान्निमित्तवित् ॥३५॥ सापेक्षं तं च सत्कृत्य । फलपुष्पादिढौकनैः ॥ अप्राक्षं हे निमित्तज्ञ! । वद कार्यद्वयं मम ॥३६॥ योगिनीभिर्धृतं को नु? । मोचयिष्यति मे सुतं ॥ अनुरूपो गुणैः पुत्रीं । कश्च हस्ते करिष्यति? ॥ ३७ ॥ सोऽप्यूचे द्वयमप्येत-देक एव करिष्यति ॥ मयोचे स कथं लक्ष्य-स्ततः स्माह निमित्तवित् ॥ ३८ ॥ बध्ध्वा पद्मरथं भूपं । यो धर्मं बोधयिष्यति ॥ श्रीपतिक्ष्मापतेर्यश्च । निर्जित्य स्वकलागुणैः ॥ ३९ ॥ परिणेता कनीस्तिस्रो । जित्वा च स्पर्द्धतो भटान् ॥ मोचयित्वा स ते पुत्रं । पाणौ कर्त्ता सुतां भटः ॥ ४० ॥ युग्मम् ॥ श्रुत्वेत्यमन्दमानन्दं । प्राप्तः सत्कृत्य तं भृशं ॥ फलाऽलङ्कारवस्त्राद्यै-र्व्यसृजं गदिताऽऽशिषम् ॥ ४१ ॥ ततोऽहं शोधयित्वाऽऽशु । सर्वतः प्रहितैर्नरैः ॥ विज्ञाय ज्ञानिना ज्ञप्तै-र्लक्षणैस्त्वामुपाऽऽगमम् ॥४२॥ यदि जानन्ति पित्राद्या । न तत्त्वां प्रेषयन्ति ते । इत्येकाक्येव निन्येऽत्र । मया भिक्षादिमायया ॥ ४३ ॥ ततो मोचय मे पुत्रं । यदि शक्नोषि भूपते! ॥ जगतो ह्युपकारार्थ-मेव सृष्टिर्भवादृशाम् ॥ ४४ ॥ यतः—वहन्ति नद्योऽम्बु पिबन्ति न त्विदं । फलानि वृक्षा दधते त्वदन्ति न ॥ वसूनि खान्यः सुवते न भुञ्जते । परोपकृत्यै हि सतां विभूतयः ॥ ४५ ॥ सन्तः परोपकाराय । स्वक्लेशं गणयन्ति न ॥ कुर्युर्नान्येषु किं छाया-माऽऽतपस्थाः स्वयं द्रुमाः ॥ ४६ ॥

दुःखितोऽहं भृशं त्वं च । परदुःखक्षयक्षमः ॥ आवयोश्चाऽभवद्देवा-द्योगस्तत्त्वोचितं कुरु ॥ ४७ ॥ निशम्यैवं नृपो दध्या-वुत्साहोत्कण्टकाङ्गभृत् ॥ दिष्टया परोपकारस्याऽवसरोऽयं ममाऽगमत् ॥ ४८ ॥ शूराणां हि रणस्तर्क-विदां वादिसमागमः ॥ करो मुग्राहादिषु स्वामि-निदेशश्च निदेशिनाम् ॥ ४९ ॥ दुर्भिक्षे क्षुधितानां च । सत्राऽगारनिमन्त्रणं ॥ भिषजां च यथा प्रौढाऽऽतुराह्वानसमागमः ॥ ५० ॥ रोगिणां च भिषक्प्राप्ति-र्दुःस्थानां च निधिस्तथा ॥ क्षणः परोपकारस्य । महतां ह्युत्सवायते ॥५१॥ एकतोऽन्योपकृतिजं । सर्वपुण्यानि चाऽन्यतः ॥ देवताः फलयाञ्चक्रु-स्तत्राऽऽद्यं तु विशेषतः ॥ ५२ ॥ परोपकारपुण्याऽन्न-संविभागमितम्पचाः ॥ प्रायः सन्तो भवन्तीति । करिष्याम्येकमेव तत् ॥ ५३ ॥ पक्ष्मादीनीव तारायाः । वेष्टनादि श्रुतेरिव ॥ शोभामात्रं हि शूराणां । तथा सैन्याद्युपस्कृतम् ॥ ५४ ॥ विचिन्त्यैवं पतिः क्ष्मायाः । हर्षोत्कर्षाज्जगाद तं ॥ एकोऽपि प्रभुरेवाऽस्मि । परोपकृतिकर्मसु ॥ ५५ ॥ इत्युक्त्वा सह खेटेन । तं विमानमिलापतिः ॥ आरुह्य श्रीनगेऽयासी-न्न सन्ताश्चिरयतीदृशे ॥ ५६ ॥ खेटं पवनवेगश्च । सलेखं प्रेष्य कञ्चन ॥ तत्राऽऽगत्यादि भूपस्य । पित्रे धृत्यै न्यवेदयत् ॥ ५७ ॥

खेटेशोऽथ जगौ भूप ! । योगिनीवशताकृते ॥ विद्यामादाय तां ज्वाला-मालिनीं साधय प्रभो ! ॥५८॥ सा हि क्रमाऽऽगता मेऽस्ति । नेशे साधयितुं तु तां ॥ वादृक्षसाहसाऽभावा-द्बहूपक्रमसाधनाम् ॥५९॥ ततस्तस्मात्कुमारस्तां । विनयादिविधेरलात् ॥ साधनाविधिसंयुक्तां । जगौ विद्याभृतं त्विति ॥ ६० ॥ बिल्वहोमादि सावद्यं । कः करिष्यति लक्षशः ॥ विद्याः सत्त्वेन सिद्ध्यन्ति तद्देवाऽस्तु साधनम् ॥ ६१ ॥ कृत्वा स्नानादि भूपोऽथ । विधेः शुचिरुपोषितः ॥ अभ्यर्च्य विविधं देवीं । भक्त्या साधर्मिकीयिया ॥ ६२ ॥ क्षेत्राऽधिष्टायकादीनां । कायोत्सर्गान् विधाय च ॥ कृत्वाऽन्यमपि निःशेषं । विधिं पूर्वामुखः सुधीः ॥ ६३ ॥

विधाय स्वस्य रक्षां च। परमेष्ठिपदादिभिः॥ पुरो देवीदृशोर्दर्भा–ऽऽसने पद्मासनस्थितः॥६४॥ प्रारेभे जपितुं विद्यां। ध्यानलीनमनाः स्थिरः॥ द्वितीयेऽह्न्यथ योगिन्यो। विज्ञायैतदिहागमन्॥ ६५॥ तद्विद्यासिद्धितो भावि–स्ववशीकारशङ्कया॥ प्रतिकूलोपसर्गै-स्त–त्क्षोभार्थं चोपचक्रमुः॥ ६६॥ तथाहि—

महाकायाः सफूत्कारा–स्तत्कृताः शतशोऽहयः॥ वेष्टं वेष्टं नरेन्द्रं तं। दंशं दंशं च सर्वतः॥ ६७॥ निर्विण्णा भग्नदंष्ट्राऽस्थि–मणयोऽपासरन्न तैः॥ बिभिदे चाऽस्य रोमाऽपि। जैनरक्षानुभावतः॥६८॥ ततो गर्जद्गजा मुक्ता। विविधं विव्यधूरदैः॥ करैः पद्भिश्च जघ्नुस्तं। न च ध्यानादचीचलत्॥ ६९॥ एवं घोररवा व्याघ्रा–स्तीक्ष्णदंष्ट्रा नखैरिमं॥ घातं घातं च निर्विण्णा। न तं रोम्णाऽप्यचुक्षुभन्॥७०॥ प्रज्ज्वलन्तं ततो वह्निं। त्रटत्कारभयङ्करं॥ ज्वालाऽऽकुलं विचक्रुस्ता। धूमाऽन्धितहरिद्गणम्॥७१॥ महातापेन तेनाऽभू–न्निगीर्ण इव सर्वतः॥ न च ध्यानक्षतिं निन्ये। मनागपि महीपतिः॥ ७२॥ घोररूपास्ततो भूत्वा। प्रज्ज्वलद्ग्रीष्मलोचनाः॥ वर्षन्त्यो ज्वलनं वक्त्रै। रौद्रैर्नगगुहानिभैः॥ ७३॥ डमड्डमरुकध्वानै–र्घोषयन्त्यो गिरेर्दरीः॥ अट्टहासैः सफूत्कारैः। स्फोटयन्त्यो नभस्तटम्॥ ७४॥ नर्त्तयन्त्यो ज्वलद्भल्ल–खड्गतोमरमुद्गरान्॥ कम्पयन्त्यः पदाघातै–र्नादयन्त्यश्च मेदिनीम्॥ ७५॥ अरे! रेऽस्माननभ्यर्च्य। विद्यां ध्यायसि मूढ! किं॥ तदुत्तिष्ठ द्रुतं गच्छ। नष्ट्वा नो चेन्मरिष्यसि?॥ ७६॥

इत्यादि प्रवदन्त्य–स्तं हन्तुं प्रदधाविरे॥ जघ्नुश्च विविधैरस्त्रै–र्घाताः प्राबोभवुर्न च॥ ७७॥ जैनरक्षास्थिरध्यान–साहसत्वाऽनुभावतः॥ तादृशे हि न देवोऽपि। प्रभूष्णुस्ताः पुनः कियत्॥ ७८॥ एवं नानाविधान् कृत्वो–पसर्गांस्ता दिनत्रयं॥ असिन् रोम्णाऽपि चाऽक्षुब्धे। खिन्ना निरविदुर्भृशम्॥ ७९॥

ततो दिव्याङ्गनारूपाः । सर्वाङ्गालंकृतियुताः ॥ रूपयौवनरम्यास्ताः । सलीलं तमुपागमन् ॥ ८० ॥ पूर्णेन्दुवदनाः पद्म-दलाक्ष्यः कनकप्रभाः ॥ सर्वाङ्गसुभगाकारा । लावण्याऽमृतसंयुताः ॥८१॥ विश्वस्त्रीसारसौभाग्याऽ-णुभिरात्तैर्नु निर्मिताः ॥ मरालगतयः कम्बु-कण्ठ्यः पीनस्तनद्वयाः ॥ ८२ ॥ वसाना दिव्यवासांसि । कुर्वन्त्यो विभ्रमाऽवलिं ॥ पिकवन्मधुरारावा । मन्मनध्वानमभ्यधुः ॥ ८३ ॥ चिरं जयजय स्वामि-न्नहो ! ते सत्वमद्भुतं ॥ अहो ! धैर्यमहो ! शौर्य-महो ! ते गुणवैभवम् ॥८४॥ क्षमस्व यदकार्ष्मैता-नुपसर्गान् सकारणान् ॥ विशेषेणचिकित्साव-त्सह्यं स्वाङ्गे हि कर्त्तनम् ॥ ८५ ॥ हेतुश्चाऽत्र नरं युक्तं । रूपयौवनसाहसैः ॥ भोगासक्ताः पतीकृत्य । क्रीडामस्तद्वशा वयम् ॥८६॥ तत्सुरूपं युवानं त्वां । वीक्ष्य सत्त्वं परीक्षितं ॥ कृत्रिमैरुपसर्गैस्ते । न राज्यामो ह्यसात्त्विके ॥ ८७ ॥ तदूरीकृत्य नः कान्ता । भुङ्क्ष्व भोगान् सुदुर्लभान् ॥ दैवतान्मनुजात्माऽपि । क्रीड स्वैरं च विष्टपे ॥ ८८ ॥ मा क्लेशिष्ठाश्च विद्यायाः । सिद्ध्यै ध्यानतपोजपैः ॥ सतीष्वस्मासु कान्तासु । सिद्ध्यत्येषा यतः स्वयम् ॥ ८९ ॥ पाठसिद्धाः प्रदास्यामो । विद्याश्चाऽन्या अपि हिताः ॥ ताभिर्विश्वं वशीकृत्य । भव चक्रिसमो नृपः ॥ ९० ॥ यथाभिरुचितं नारीः । पाणौ कुरु परा अपि ॥ आकर्षामो वयं दूरा-दपीष्टमखिलं यतः ॥ ९१ ॥ न चैष्यति जरा नाऽक्ष-ग्लानिर्नैवाऽमयश्च ते ॥ भावी बलक्षयश्चाऽपि । नाऽसद्भोगाऽनुभावतः ॥९२॥ युगपद्बहुभी रूपैः । क्रीड चासाभिरित्यहो ! ॥ कामसौख्यं तदाऽऽप्ताऽसि । यच्छक्रस्याऽपि दुर्लभम् ॥९३॥ इत्यादिविविधास्तासां । जगन्मोहकिरो गिरः ॥ भृतकुम्भे जलक्षेप-मनुचक्रुः क्षमाभृति ।९४। ततः स्तनोरुनाभ्यादि । स्फुटयन्त्यो मिषैर्मुहुः ॥ चुम्बनाऽऽलिङ्गनादीनि । कुर्वत्यश्चान्तरान्तरा ॥९५॥ मृदङ्गपटहध्वान-वीणावंशादिनादतः ॥ नर्तितुं प्राक्रमन्तैता । गायन्त्य इति मोहनम् ॥ ९६ ॥ तथाहि—

अम्हें आवी चउसठि जोगिणी । नित विलसो नव नव भोगिणी ॥ हुअ काममहाज्वररोगिणी । रात न लहें तुम्ह वियोगिणी ॥ १ ॥ इम गावे रंगें कामिणी । नवजुव्वण नचइ जोगिणी ॥ अम्हें रंभा गोरी अंगिणी । नर सोहगसुंदरी रंगिणी ॥ जग जोइअ जोगिणी लिंगिणी । सवि सुरनर जीतु रंगिणी ॥ इम गा० ॥२॥ तव रूपसुहागिहिं राचती । इहां आवी हरखें नाचती ॥ तुंह पियतम पांमी मलपती । नवि मूकुं कहमवि जीवती ॥ इम गा० ॥३॥ वर चंपक सोवन गोरडी । गुण गाती भांभर भोलडी ॥ पयसेव करेस्युं तोरडी । अम्हें छइयें सोहग ओरडी ॥ इम गा० ॥४॥ अम अंग सुगंधिहिं महमहिं । दिसि परिमल तेहतणो पसरे ॥ नवपउमिणी मालती केवडी । हिमवालुअ मृगमद वेवडी ॥ इम गा० ॥५॥ अम्ह पाइं नेऊर रणझणें । करे कंचन कंकण रणरणें ॥ उरि मोतीहार सुलहलहें । तुम देखी हयडां गहगहें ॥ इम गा०॥६॥ अम्ह कानें कुंडल झलहलें । तणु मनमथकंडु भलहलें ॥ अम्ह माथे झलकें राखडी । गालिं झबकत माणिकपदकडी ॥ इम गा० ॥७॥ अति सोहति निलवटितिलकडी । मणिमेहलि मोहइं कडितडी ॥ भुजि अंगदजुअलि मणिजडी । अम्ह सांभल पिउडा वातडी ॥ इम गा० ॥८॥ अम्ह अंगुली दीपइं मुंद्रडी । तुम्ह विरहें नावे निंद्रडी ॥ माणि–सोवन खलकत चूडला ॥ प्रिय पांमी पुण्यें सुअडला ॥इम गा०॥९॥ उतकंठें आवी वहेलडी । घणे लाडे प्रेमें घेलडी ॥ रंगें नाचुं लोडत बांहडी । तुम करिस हुं हाथे छांहडी॥इम गा०॥१०॥ अम्हें कंथ तुमारी दासडी । सिर वहेस्युं तूम्हरी खासडी ॥ तुम्ह लोपुं

आण न लीहडी । उरि घरस्युं तोरी सीखडी॥इम गा०॥११॥अम्ह सामुं जो ने सामिआ । [1]पूरवपुण्यें तुम पामीआ ॥ अम्हें देवि हंसगामिणी । तुमपासें आवीउं कामिणी ॥ इमगा० ॥१२॥ उठ उठ ने कंथ करी कृपा । अम परणी [2]तुम हवे नहीज तृपा ॥ अम्हें तेवडि तेवडि बेनडी ।.सवि एकमनी सवि नान्हडी ॥ इम गा० ॥ १३ ॥ अम्हें कालविलंबण नवि सहुं । तुज आगल ए परमार्थ कहुं ॥ अम्ह जीव अने धरी हाथडी । कर तेडीने आपण साथडी ॥इम गा० ॥१४॥ सुरसुंदरि चंग सोहागिणी । कंथ कांय उवेखे सुरागिणी ॥ अम्हें जीवीयें सरणे तूज तणे । हवें पडिवज्ज जोइणी इम भणे ॥ इम गा० ॥ १५ ॥

एतत्कौतुकमात्रात् । सुस्वरकुतुकार्थिजनहितं विहितं ॥ नृपशीलगुणद्रढिम–ख्यात्यै जिनधर्मदीप्तये च परम् ॥ ९७ ॥ वाच्यमपेक्ष्यैव सभां । सर्वत्र यथा तथा च न तु विज्ञैः ॥ रागाश्चाऽत्र वसन्ता–दयो विचित्रास्तथा ढालाः ॥ ९८ ॥ हावभावादिभिर्विश्व–मोहनैरित्यहस्त्रयं ॥ उज्जीवनैर्मृतस्याऽपि । श्रीभुवः सर्वशक्तितः ॥ ९९ ॥ नर्त्तं नर्त्तं तथा गायं–गायं निरविदुश्च ताः ॥ रोमाऽपि नाऽचलत्त्वस्य । वज्रे टङ्का लगन्ति किम् ? ॥७०० ॥युग्मं॥ ततः प्रादुरभूत्तुष्टा । सप्तमेऽह्न्यरुणोदये ॥ देवी पुष्पाणि वर्षन्ती । महाज्वालाऽस्य मूर्द्धनि ॥ १ ॥ मूर्त्तया द्योतयन्त्याभ्रं । सिद्धया विद्यया सह ॥ भासयन्त्यर्कजिद्देह–भाभिर्दशऽदिशोऽभितः ॥ २ ॥ नेशुस्तां वीक्ष्य योगिन्यो । घूक्यो भानुप्रभामिव ॥ देवी च मधुरध्वान–मभ्यधाद्धरणीधवम् ॥ ३ ॥ तुष्टाऽहं वत्स ! ते शील–ध्यानस्थैर्याञ्जगज्जितः ॥ परं दातुं वरं नाऽस्मि । प्रभविष्णुर्विधिं विना ॥ ४ ॥ तत्कुरुष्व विधिं वत्स ! । मत्तश्चेदीहसे

---

१ तं अलवि अम्हि सवि पाविआ । अम्हें देवहं देवीहं सामिणी, तुंह आवी सयंवर कामिणी इति पाठान्तरे   २ न मेलिइ न हविं त्रपा इति प्रत्यन्तरे

वरं ॥ भूपोऽप्यानम्य तामूचे । वद स्वामिनि! को विधिः? ॥ ५ ॥ साऽप्याख्यद्देहि मे प्रीत्यै । मांसमेकस्य देहिनः ॥ स चोचे
हन्मि नैवाऽहं । जैनो जन्तुं निरागसम् ॥ ६ ॥ चेत्तुष्यस्याऽऽमिषेणैव । छित्वा स्वं तद्ददाम्यहं ॥ देव्युवाच भवत्वेवं । ततः ख-
ड्गेन भूपतिः ॥ ७ ॥ यावत्सौवौ छिनत्त्यूरू । तावत्सा खड्गमाच्छिदत् ॥ उवाच च जगद्वीर! । नार्थो जैन्याः पलेन मे ॥ ८ ॥
दयासत्वाऽऽर्हतत्त्वानि । तव पर्यैक्षिपीत्यहं ॥ साधर्मिकाय तत्तुष्टा । पाठसिद्धामिमां ददे ॥ ९ ॥ विद्यामाकर्षिणीं योगि-न्याद्याऽऽ-
कर्षाय लाहि तत् ॥ ततो भूपो मुदोत्थाय । भक्त्या देवीं प्रणम्य च ॥ १० ॥ प्रदायाऽर्घं च तां विद्या-माददे विधिपूर्वकं ॥
अङ्गदावपि दैवादि-त्रैधोपद्रवहारिणौ ।११। सूर्यहासमसिं चक्रं । रिपुचक्रतमोऽपहं ॥ तस्मै शक्तिं च दत्वैषा । तद्दत्ताऽर्घा तिरोदधौ ।१२।

दिव्यमूर्त्तिरथो राज्ञाऽ-भ्यर्चिता प्रणता स्तुता ॥ सा ज्वालामालिनी विद्या । जगाद शृणु वत्स! हे! ॥ १३ ॥ लक्षादिज-
पहोमाद्यैः । सुकृच्छ्रैर्बहुनेहसा ॥ सिद्ध्यामि कस्यचिद्याहं । तव शीलगुणेन सा ॥१४॥ सिद्धाऽस्म्यल्पप्रयासेन । स हि धर्मेष्वनु-
त्तरः ॥ आकृष्यन्ते सुरास्तेन । विद्याः सिद्ध्यन्ति चाऽखिलाः ॥१५॥ युग्मं॥ इत्युक्त्वा भूभुजस्तन्वां । दत्तार्घा तेन साऽविशत् ॥
संस्मृता या ददातीष्टान् । सर्वार्थान् विश्वमोहिनी ॥१६॥ देवीमूर्त्तिं ततोऽभ्यर्च्य । सुरान् संनिहिताऽऽदिकान् ॥ बल्याद्यैः प्रीणयि-
त्वा च । निरगाद्देवतागृहात् ॥ १७ ॥

अथैत्य सपरिवारो । नत्वाऽप्राक्षीत्स खेटराट् ॥ तं विद्यासुखसिद्ध्यादि । भूपोऽप्यूचे यथातथम् ॥ १८ ॥ ततश्चमत्कृतैः
सर्वैः । स्तूयमानस्तदाग्रहात् ॥ जिनमभ्यर्च्य नत्वा च । गुरून् गाम्भीर्यवारिधिः ॥१९॥ ततो विद्याधरैः पक्कै-राहारैरमृतोपमैः ॥
पारणं विधिनाऽकार्षी-दष्टमेऽहनि खेटयुक् ॥ २० ॥ विद्या पवनवेगोऽस्मै । नृरत्नाय परा अपि ॥ सुमुहूर्त्ते ददौ व्योम-गामि-

न्याद्या यथाविधि ॥२१॥ पाठसिद्धा इमा भूमान् । यामादिभिरसाधयत् ॥ अपि मासादिसाध्यास्ताः । शीलसत्त्वाऽनुभावतः॥२२॥
अथ भूपोऽगमज्जाल–न्धरे पवनवेगयुक् ॥ पत्तने तत्र पीठस्थः । स्मृतविद्याऽनुभावतः ॥ २३ ॥ आकृष्य योगिनीः सर्वाः । जगौ रे! रे! विमुञ्चत ॥ सुतं पवनवेगस्य । न मोक्ष्याम्यन्यथा तु वः ॥ २४ ॥ युग्मं ॥ ततो विद्याऽनुभावेनाऽप्रभवन्त्योऽथ ता जगुः ॥ मोक्ष्यामो मुञ्च नः स्वामिं–स्तन्मुक्तास्तास्ततोऽगमन् ॥ २५ ॥ द्रुतमानीय तं भग्न–निगडं पवनात्मजं ॥ तास्तयोरुपदीचक्रु–स्तत्पादेपु च सोऽपतत् ॥ २६ ॥ पवनोऽपि तमालिङ्ग्याऽऽरभ्य तद्योगिनीग्रहात् ॥ सर्वं वृत्तान्तमाचख्यौ । भूपस्याऽऽनयनादि च ॥२७॥ जगौ च त्वं न केनाऽपि। मोचितो योगिनीग्रहात्॥ अयं तु राजराजोऽदात् । प्राणांस्ते वत्स! मोचनात्॥२८॥ निशम्यैवं मुदा वज्र–वेगस्तुष्टाव भूमिपं ॥ अथ ते यान्ति यावत् खे । योगिन्यस्तावदूचिरे ॥ २९ ॥ अस्माकं प्राप्तवान् भाग्यैरद्य राजन्! भवाऽतिथिः ॥ भूपस्तत्प्रार्थनाभङ्ग–भियाऽस्थाच्च स तद्द्वयः ॥ ३० ॥ योगिन्यस्तान् स्वहस्तेन । स्नानादिविधिना ततः ॥ भोजयित्वा सुधाहारान् । गीतनाट्यैरपिप्रिणन् ॥ ३१ ॥ वाराह्या भवने भूपं । खेटौ ब्राह्म्याश्च तौ निशि ॥ सुगंध्यतिमृदुस्पर्श–दिव्यशय्यास्वशाययन् ॥ ३२ ॥ कामाक्षायाश्च ता गत्वा । स्वामिन्यास्तं पराभवं ॥ हठात्स्वाकर्षतत्खेट–मोचनादिभवं जगुः ॥३३॥ साऽप्यवादीत् क्रुधा शीला–द्भ्रंशयित्वा नियम्य च ॥ भवतीभ्योऽर्पयिष्ये तं । क्रियासुः स्वेप्सितं ततः॥३४॥ हरिब्रह्मेशदेवेन्द्रा । अपि मे रूपदर्शनात् ॥ मुह्यन्त्यस्य नृमात्रस्य । किं शीलं मत्पुरस्तदा ॥३५॥ आश्वास्यैवं विसृज्यैताः । कामाक्ष्युपनृपं ययौ ॥ प्रादुष्कृत्य निजं दिव्यं । रूपं विश्वैकमोहनम् ॥ ३६ ॥ योगिनीव कृताऽनेक–स्मरोज्जागरचेष्टिता ॥ भोगाय प्रार्थयन्ती तं । सर्वरात्रमचुक्षुभत् ॥ ३७ ॥ तां स भोज्यमिवोच्छिष्टं । नैच्छच्छीलाऽमृताऽशितः ॥ किं रज्यन्ति परस्त्रीषु । सन्तो जै-

नोक्तिभाविताः ॥३८॥ निर्विण्णा सा ततः प्रातः । स्तुत्वा शीलचमत्कृता ॥ तुष्टा चाऽसौ ददौ लोह-मुद्गरं वज्रसन्निभम् ॥३९॥ अक्षय्येषू च तूणीरौ । वज्रपृष्ठं धनुस्तथा ॥ आग्नेयनागपाशादि-दिव्यास्त्राण्यप्यनेकशः ॥ ४० ॥ शीततपजलक्लेद-वह्निदाहव्रणा-दयः ॥ कुष्ठकण्डुज्वराद्याश्च । यस्मिन् परिहिते न हि ॥ ४१ ॥ सर्वाङ्गसुखदस्पर्श-मभङ्गुरमनश्वरं ॥ सदोद्योतिमम्लास्नु । नेपथ्यं तच्च सा ददौ ॥ ४२ ॥ युग्मं ॥ मरकाद्यपहृन्मौलिः । कुण्डले च ज्वरापहे ॥ कुष्ठादिव्याधिहृत्कण्ठ-भूषा मुद्रा गरापहा ॥ ४३ ॥ शाकिनीव्यन्तरादीनां । केयूरे दोषहारिणी ॥ घातादिव्रणपीडाघ्नाः । माणिक्यकटकाः पुनः ॥ ४४ ॥ हारः सर्ववशीकारः । कटी-सूत्रं च सुखकृत् ॥ सर्वाङ्गालङ्कृतीरेवं । सप्रभावाश्च सा ददौ ॥ ४५ ॥ तुष्टा देवा न किं दद्यु-स्तत्रोपः शीलतः पुनः ॥ दत्वैवं नृपदत्तार्घा । कामाक्षाऽथ तिरोदधौ ॥ ४६ ॥ गत्वा च योगिनीः सोचे । भोभोः! सुपक्रमाऽप्यहं ॥ शीलाचालयितुं तं न । क्षमे वात्येव भूभृतम् ॥४७॥ आराध्यस्ततस युष्माभिः । [1]सत्कारैर्विविधैर्ध्रुवं ॥ अयं नरोत्तमो लोके । भाग्यलभ्योऽतिथिर्यतः ॥ ४८ ॥

योगिन्योऽथ पुराप्यस्य । शीलस्थेमाऽनुभूतितः ॥ चमत्कृताश्च तुष्टाश्च । संभूय तमुपागमन् ॥ ४९ ॥ क्षमयित्वा ददुश्चा-ऽस्मै । सर्वाः स्वाः स्वाः पृथग् पृथग् ॥ नेपथ्यालंकृतीर्दिव्याः । शुद्धान्तललनोचिताः ॥५०॥ अंतर्धानादिशक्तीश्च । बह्वीर्दिव्याऽऽ-युधानि च ॥ अथैता वज्रवेगेन । पूजास्नात्राऽर्चनादिभिः ॥ ५१ ॥ किञ्चिद्विमत्सरा राज्ञो । दाक्षिण्याद्वचसाऽप्यदुः ॥ हेमकूटगिरिं तस्मै । दत्तार्घाश्च तिरोदधुः ॥ ५२ ॥ युग्मं ॥ चरित्रं तत्कुमारस्य । सरसै रासकादिभिः ॥ बध्ध्वा गायन्ति योगिन्यः । क्रीडन्त्यो

---

1 सत्कारैः स्वहितेच्छुभिः । द्राग् बीजानीव सत्क्षेत्रे ॥ फलन्तीदम् गुणे हि ते ॥ ७२ ॥

ओमित्युरीकृते ताभिः । कामाक्षा स्वपदं ययौ ॥ भूपोऽथ सह खेटाभ्यां । क्षणं पीठमुपास्थितः ॥ ७३ ॥ इति प्रत्यन्तरे

ऽद्रिवनादिषु ॥ ५३ ॥ ताभ्योऽधीत्य च खेचर्य–स्ताभ्यश्चोर्वीचराङ्गनाः ॥ एवं तच्चरितं जज्ञे । प्रसिद्धं भुवनेऽप्यहो ! ॥ ५४ ॥ त्रयोऽपि मुदितास्तेऽथ । हेमकूटाद्रिमाययुः ॥ प्राग्वद्धेमपुरं तत्रा–ऽवासयन् सुस्थिताशयाः ॥ ५५ ॥

एवं शीलगुणेन भूपतिरयं विद्यौषधीदेवता–सत्कारस्तवनान्यवाप विपदं चैतं विना खेटभूः ॥
मत्वैवं सुधियस्तमेव दधतामत्राऽप्यमुत्राऽपि च । श्रेयःसर्वसुखप्रदं निखिलदुर्विद्विड्जयश्रीकरम् ॥ ५६ ॥

इति तपागच्छाधिराजपूज्य–श्रीदेवसुन्दरसूरिशिष्यैः श्रीसोमसुन्दरसूरिप्रतिष्ठितैः श्रीमुनिसुन्दरसूरिभिर्विरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे जयश्रृङ्के श्रीजयानन्दराज्यावाप्ति–विद्यासिद्धि–योगिनीदेवीप्रसाद योगिनीवशीकार-दिव्यास्त्रादिसमृद्धिप्राप्ति-निदानशीलावदातवर्णननामैकादशः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रन्थाग्रं ८०६

## ॥ अथ द्वादशः सर्गः प्रारभ्यते ॥

भवतु विभवशर्मादीप्सितार्थप्रदायी । सकलभयभिदे श्रीपार्श्वनाथः प्रभुर्मे ॥
व्रजति खलु यदाह्वाजाङ्गुलीतः फणाभृ–द्व्रज इव दुरितौघद्विप्रराशिसुदूरम् ॥ १ ॥

अथ स श्रीजयानन्द–नृपो गन्तुं निजे पुरे ॥ कृतार्थं मन्यमानः स्वं । तमापृच्छत खेटपम् ॥२॥ स तु दध्यौ कनीपाणिग्रहायाऽयं तु नैष्यति ॥ उपकृत्य कृतार्थत्वा–द्भीरुः प्रत्युपकारतः ॥३॥ यदुक्तं—इयमत्र सतामलौकिकी । महती काऽपि कठोरचित्तता ॥ उपकृत्य भवन्ति दूरतः । परतः प्रत्युपकारभीरवः ॥ ४ ॥

तदुपायन्तरेणैष । नेयो देयाऽस्य वै कनी ॥ भाग्यैर्ज्ञानिगिराऽऽप्तस्य । नेदृग् ह्यन्योऽस्ति विष्टपे ॥ ५ ॥ ततः सोऽवक् कृतार्थोऽपि । परोपकृतिकर्मणा । वैताढ्ये विविधाः सिद्ध-जिनार्चा नन्तुमर्हसि ॥ ६ ॥ श्रुत्वेत्येति मुदा याव-त्तत्र नन्तुं जिनान्नृपः ॥ विमानात्तावदुत्तीर्य । खेटः कश्चिन्ननाम तम् ॥७॥ ततस्तं श्रीजयोऽप्राक्षी-त्कस्त्वं ? भोः किमिहाऽऽगमः ? ॥ यावत्स चोत्तरं वक्ति । पवनस्तावदब्रवीत् ॥८॥ अये! चन्द्रगते बन्धो! । चिराद् दृष्टोऽसि खेटराट् ॥ सशोक इव किं लक्ष्यो । दक्षाऽचक्ष्वाऽस्य भूपतेः ॥ ९ ॥ अयं वीरो हि सर्वेषां । दुखहृत्प्रार्थितार्थकृत् । श्रुत्वेति स नृपं समाह । वृत्तान्तं मे शृणु प्रभो! ॥१०॥ तथाहि-

वैताढ्ये दक्षिणश्रेण्या-महं चन्द्रपुराधिपः ॥ नाम्ना चन्द्रगतिः खेट-श्चन्द्रमाला च मे प्रिया ॥ ११ ॥ यद्रूपनिर्मदा गौरी । विरूपाक्षेऽपि रज्यते ॥ कौशिकेऽपि धवे रम्भा । लक्ष्मीश्चाऽपि जनार्द्दने ॥ १२ ॥ भुञ्जानस्य तया साकं । भोगान्मे तनयाऽभवत् ॥ चन्द्रसुन्दर्यभिख्या सा । क्रमादध्रेऽखिला कलाः ॥ १३ ॥ सा प्राप यौवनं स्वस्य । नाऽनुरूपं वरं पुनः ॥ तद्रूपादिगुणैर्धत्ते । नेन्द्रोऽपि ह्यनुरूपताम् ॥१४॥ इत्थं तस्या वरं वीक्षे । कुमारांश्च महीभृतां । विद्याभृतां परेषां च। प्रापमहं न तं पुनः ।१५। अन्यदा मानसे गत्वा । स्निग्धया भियया सह ॥ यावत्क्रीडामि संसार-सुखगृद्ध्यम्बुकेलिभिः ॥ १६ ॥ तावत्तत्र सुरः कश्चिद्विमानादवतीर्णवान् ॥ स्नात्वा वीक्ष्य च मत्पत्नीं । रूपेणाऽतिसुराङ्गनाम् ॥१७॥ दीप्तकामो गृहीत्वा तां । स श्येन इव वर्त्तिकां ॥ आरुह्य च विमाने स्वे । जगाम गगने जवात् ॥ १८ ॥ आकृष्टाऽसिः क्रुधाऽऽक्रुश्य-न्नहं तं चाऽन्वधाविषं ॥ आसन्नागतमालेक्य । स मां क्रोधोद्धुरः सुरः ॥१९॥ विमानाद् द्रुतमागत्य । मुष्टिना मूर्ध्न्यताडयत् ॥ तद्घातव्यथितो वात-वित्रुट्यन्नालिकेरवत् ।२०। अपप्तं पद्मिनीजाले । क्वचित्सरसि मूर्च्छितः ॥ जलाब्जशीतवातैश्च । गतमूर्च्छो व्यलोकयम् ॥ २१ ॥ युग्मम् ॥ न चैक्षिपि क्वचि-

धात-मलक्ष्यं तं सुराधमं ॥ ततः प्रियावियोगार्त्तो । विलक्षो न्यलपं बहु ॥ २२ ॥ अगां च गतचैतन्य । क्व धाम्नि कथञ्चन ॥ तत्स्वरूपमथो पृष्टो । मन्त्र्यादीनां न्यवेदयम् ॥ २३ ॥ तेऽपि चाऽऽश्वास्य मां पत्नी–शुद्धये प्रैषयन् भटान् ॥ ते च नानासरःसिन्धु–वनद्वीपनगादिषु ॥ २४ ॥ शोधयित्वा चिरं पत्नीं । विलक्षास्तदनासितः ॥ न्यवेदयन् स्वरूपं मे । तत्ततो मूर्च्छितोऽपतम् ॥ २५ ॥ युग्मं ॥ सज्जितो बोधितश्चाऽहं । सूपदेशैस्तु मन्त्रिभिः ॥ प्रभुर्विद्यावलैर्ज्ञात्वा । कदाचिन्मोचयेत्प्रियाम् ॥ २६ ॥ इत्याशावशगोऽन्येद्यु–र्गत्वा विद्याधरेशितुः ॥ चक्रायुधस्य दुःखार्त्तः । स्वामिनस्तन्न्यवेदयम् ॥२७॥ न च किञ्चित्परित्राणं । समर्थोऽपि चकार सः ॥ पुंसां फलन्ति भाग्यानि । स्वामिसेवादयो न तु ॥ २८ ॥

तोपं नयेन्द्रमपि चक्रधरं भजस्व, मन्त्रान् प्रसाधय वशीकुरु चेटकादीन् ॥ दुर्गाण्यटाऽतिविकटांस्तर वारिराशीन्, भाग्यं विना न हि तथाऽपि समीहिताऽऽप्तिः ॥ २९ ॥ विलक्षः स्वपुरोद्याने । ततो यावदुपैम्यहं ॥ चारणश्रमणं ताव–त्तत्र ज्ञानिनमैक्षिपि ॥ ३० ॥ ततो मुदोल्लसच्चित्त–स्तं नत्वा सपरिच्छदः ॥ उपाविशं मुनिश्चाशीः–पूर्वकं धर्ममादिशत् ॥ ३१ ॥ तथाहि—देवो जिनेन्द्रो गुरवश्चरित्रिणो।धर्मस्तदुक्तश्च दयादिपावनः ॥ सुता विनीताः प्रणयी परिच्छदो । मनोऽनुगाः स्युर्ललनाश्च पुण्यतः ॥३२॥ नीचैःकुले जनिरपारदरिद्रभावो । दौर्भाग्यमामयततिः कुकुटुंबयोगः ॥ वाग् निष्ठुरा वधपराभवदुर्यशांसि । प्रेष्टवियुक्तिरिति पापतरोः फलानि ॥ ३३ ॥ तस्मात्पापं परित्यज्य । धर्मे कार्या रतिर्बुधैः ॥ इष्टार्थप्राप्तयेऽनिष्टवियुक्त्यै च सदार्हते ॥ ३४ ॥

आकर्ण्यैवं मुनेर्वाच–मवोचं भगवन्न मे ॥ चित्ते पत्नीवियोगार्त्त्या । स्वास्थ्यं धर्मो न तद्विना ॥ ३५ ॥ तत्प्रसीद वद

ज्ञानिन्! । केन किं मे हृता प्रिया? ॥ कुत्र चाऽस्ति? कथं चैतां? । लप्स्ये लब्धा न वा पुनः? ॥३६॥ मत्पुत्र्याश्च वरः कोऽर्हः? । किं च त्वां वीक्ष्य हृन्मम? ॥ मुदाऽत्युल्लसतीत्यादि । ब्रूहि प्राप्तोऽसि भाग्यतः ॥ ३७ ॥ जगादाऽथ मुनिर्भद्र! । शृणु पूर्वभवादि नः ॥ ज्ञास्यसि येन सर्वं त्वं । यत्पृष्टं तत्सहेतुकम् ॥ ३८ ॥ तथाहि भरतेऽत्रैव । पुरे सिद्धपुरेऽभवत् ॥ पूर्णभद्राभिधः श्रेष्ठी । जिनधर्मरतो धनी ॥ ३९ ॥ तस्याऽभूतामुभौ पुत्रौ । नाम्ना कोशलदेशलौ ॥ बाल्येऽपि जैनधर्माढ्यौ । सम्यक्त्वव्रतशालिनौ ।४०। अथाऽत्र गुणदत्तोऽभूत् । श्रेष्ठी श्राद्धगुणाग्रणीः ॥ गुणमाला प्रिया जाता । सुताऽस्य गुणसुन्दरी ।।४१।। साऽतिरूपा कलाऽभिज्ञा । गुरुदेवादिभक्तिभृत् । बाल्यादप्यर्हतो धर्मा–नुष्ठानैकरताऽभवत् ।।४२।। देवराजनृपस्याऽथ । सचिवः सागरोऽन्यदा ॥ ययाचे श्रेष्ठिनं तां तु । वीक्ष्य चैत्येऽनुरागतः ॥ ४३ ॥ स तु मिथ्यादृशे तस्मै । न दित्सति नियोगिने ॥ ते हि पापार्जितद्रव्याः । प्रायः स्युर्गत्वरश्रियः ॥ ४४ ॥ कोशलोऽथ व श्राद्ध–सुतां गुणवतीं द्विधा ॥ परिणिन्ये ततः पूर्ण–भद्रोऽगाद्विधिना दिवि ।।४५।। कियत्स्वहस्सु यातेषु । भ्रात्रेऽथ कोशलः कनीं ॥ श्रेष्ठिनं गुणदत्तं तां । ययाचे गुणसुन्दरीम् ॥ ४६ ॥ गुणैः साधर्मिकत्वाद्यै–र्देशलाय ददौ च सः ॥ जातोद्वाहौ च तौ प्रीत्या । सुखायेते सधर्मकौ ॥ ४७ ॥ साचिवस्तच्च विज्ञाय । वीक्षते तां यथा यथा ॥ देशले द्वेष्ट्यसौ रागी । खिद्यमानस्तथा तथा ॥ ४८ ॥

अथ तत्राऽभवत् श्रेष्ठी । श्राद्धो वैश्रमणो धनी ॥ चत्वारस्तनयास्तस्य । बभूवुर्गुणशालिनः ।।४९।। [1]धनो [2]धनपतिश्चाऽपि । [3]धवलः [4]सुयशास्तथा ॥ जातपाणिग्रहाः पित्रा । परिणामहितार्थिना ॥ ५० ॥ स्वयं चिकीर्षुणा धर्मं । निश्चिन्तं व्यापृतिष्वमी ॥ यथार्हं विनियुक्तास्ते । धनमर्जन्ति सादरम् ॥ ५१ ॥ युग्मम् ॥ एवं काले बहौ याते । श्रेष्ठी प्रान्तेऽथ धर्मवित् ॥ कृत्वा मृत्यु-

नितं कृत्य-माकार्य स्वजनान् सुधीः ॥ ५२ ॥ सप्तक्षेत्र्यां व्ययायेभ्यः । सप्तलक्षीं मुदा ददौ ॥ स जगौ च सुतान् प्रीत्या । वर्त्तितव्यं सदा मिथः ॥ ५३ ॥ ज्ञेयं शताङ्कचोद्गूणां । घृपादीनां निदर्शनं ॥ दैवात् कदाचिदप्रीत्या । भूयते चेत्पृथग् पृथग् ॥ ५४ ॥ तदा गृहचतुष्कोण्या-मीशान्यादिविदिक्क्रमात् ॥ कलशा निहिताः सन्ति। समभागधना मया ॥५५॥ युग्मम् ॥ तानादाय क्रमाद्धाव्यं । पृथक् कार्यः कलिर्न तु ॥ धनाय तं च कुर्वाणा । वार्यास्तु स्वजनैरिमे ॥ ५६ ॥ तनयान् स्वजनांश्चैवं । प्रतिपाद्य इदं सुधीः ॥ विधिना धर्ममाराध्य । श्रेष्ठी स्वःसुखमासदत् ॥ ५७ ॥

तनयाश्च चिरं प्रीत्या । प्रावर्त्तन्त पितुर्गिरा ॥ अन्यदा प्रेरिता दारैः । पृथगेते बुभूषवः ॥५८॥ कलशान् स्वस्व नामांकानीशान्यादिक्रमादिमे ॥ कृष्ट्वा भूमेर्व्यलोकन्त । निरीक्षिपत तेषु ते ॥ ५९ ॥ क्रमान्मृतखंडं १ मस्थीनि २ । लेख्यकस्य च कागदान् ३ ॥ रैमर्णांश्च ४ ततः खिन्ना-स्त्रयः पूर्वे व्यचिन्तयन् ॥ ६० ॥ त्रिभिर्विशेषकं ॥ धर्मस्थेनाऽपि तातेन । वञ्चिताःस्मः कथं हहा ! ॥ कृत्वैकत्रार्ऽपि सर्वाः श्रीः । प्रेयसेऽस्मै कनीयसे ॥ ६१ ॥ आच्छिद्याऽस्माद् ग्रहीष्यामः । प्रसह्यैतां विभज्य च ॥ चत्वारोऽपि समैर्भागै-र्न प्रमाणं हि वञ्चना ॥ ६२ ॥ ततस्ते तामयाचन्त । विभक्त्यै भ्रातरं लघुं ॥ न दत्ते स पितुर्वाचा । स्वांस्तत्प्रतिभुवोऽवदत् ॥ ६३ ॥ ततस्तत्कलहं मत्वा । स्वजनाः समुपागमन् ॥ भ्रातरश्च चतुष्कुम्भी-स्वरूपं तानजिज्ञपन् ॥ ६४ ॥ एकतः प्रतिभूत्वं स्वं । तेषां तातोक्तकारणे ॥ स्वरूपमन्यतश्चेदृक् । मत्वा ते संशयेऽपतन् ॥ ६५ ॥

तैरभग्ने विवादेऽथ । भ्रातरः स्वजनैः सह ॥ गत्वा राजकुले भूपं । तत्स्वरूपं व्यजिज्ञपन् ॥ ६६ ॥ नरेन्द्रः सागरादींश्चैकोनपञ्चशतीमितान् ॥ आदिशद्धीसखान् कर्त्तुं । तन्न्यायं स्वयमक्षमः ॥६७॥ बहुबुद्ध्या विमृश्याऽपि । न शेकुस्तेऽपि तद्विधौ ॥

ततः पुरे नृपोऽप्येवं । पटहेनोदघोषयत् ॥ ६८ ॥ भनक्त्येतं विवादं य–स्तं कुर्वे मन्त्रिणां धुरि ॥ तदर्थं कोशलः श्रुत्वा । पस्पर्श पटहं सुधीः ॥ ६९ ॥ ततो राज्ञः पुरो गत्वा । भ्रातॄन् प्रपच्छ तानिति ॥ ब्रूत जीवति ताते भोः । कः कं व्यापारमादधौ ॥७०॥ आद्योऽवोचदहं क्षेत्र-धान्यादिव्यापृतिं व्यधां ॥ श्रेष्ठ्यप्राक्षीत्कियत् सस्य–मभवत् समये पितुः ॥७१॥सोऽवक् सर्वाऽग्रतो लक्ष-सङ्ख्य मूटकसन्मितं ॥ लक्षाः पञ्चदशैतस्य । मूल्यं चक्रुश्च तद्विदः ॥ ७२ ॥ द्वितीयोऽवक् सहस्राणि । दश वाज्यादिकान् पशून् ॥ अपणायं च तन्मूल्यं । लक्षाः पञ्चदशाऽभवन् ॥७३॥ तृतीयः स्माह वृद्ध्यादि–व्यवहारमहं व्यधां ॥ लक्षा माण्डलिकेभ्यश्चा-लभ्याः पञ्चदशाऽमुना ॥७४॥ तुर्योऽवादीच्च कोशेऽहं । तातेनाऽधिकृतोऽभवं ॥ भागस्त्वस्याऽप्यभून्मूल्या–ल्लक्षाः पञ्चदशैव तु ॥७५॥ कोशलोऽथ नृपं स्माह । दक्षो यो यत्र कर्मणि ॥ पिताऽदात्सममेवांऽशं । तस्मै तदनुगा श्रियः ॥७६॥ तथाहि–मृदाऽदात्क्षेत्रसस्याद्य–मस्थिभिश्च चतुष्पदान् ॥ लेख्यकैश्च धनं लभ्यं । साक्षात्तुर्यस्य च श्रियः ॥७७॥ कोशमात्राऽधिकारित्वात् । स हि कर्मादि वेत्ति न ॥ तत्समेष्वपि भागेषु । विवदन्ते मुधा जडाः ॥७८॥ भ्रातरस्ते निशम्यैवं । तत्त्वं मत्वा प्रमोदिनः ॥ नृपं नत्वा गृहे जग्मुः । शंसन्तः कौशलीं धियम् ॥७९॥ वहमाना मिथः प्रीतिं । ताते भक्तिं च धीनिधौ ॥ स्वं स्वं भागमुपादाय । प्रावर्त्तन्त यथासुखम् ॥ ८० ॥

जगाद कोशलं भूप–स्तद्बुद्ध्याऽतिचमत्कृतः ॥ नय मुद्रां भवाऽऽमात्यै–कोनपञ्चशतीधुरि ॥८१॥ सोऽप्यूचे नाऽऽददे मुद्रां श्राद्धधर्मोररीकृतौ ॥ प्रत्याख्यायि नियोगादि । खरकर्मतया मया ॥ ८२ ॥ ततो मुद्रां विनाऽपीमं । मंत्रिमुख्यं नृपोऽकरोत् ॥ पृष्ट्व्यं सर्व कार्येषु । दत्ते चाऽस्मै गृहव्ययम् ॥८३॥ ईर्ष्यन्ति मन्त्रिणश्चाऽस्मै । सागरस्तु विशेषतः ॥ ईर्ष्या हि भवति प्राय । एक-द्रव्याभिलाषिणाम् ॥ ८४ ॥

अन्यदा मन्त्रिणः स्माहु-र्नृपं देवगिरौ बली ॥ भूपस्त्वामवजानाति । दुर्दमो रिपुमर्दनः ॥ ८५ ॥ प्रेष्यतां कोशलस्तत्र । सन्ध्यादि कुरुते यतः ॥ ग्रासदानं फलत्येवं । बुद्धिश्चाऽपि परीक्ष्यते ॥ ८६ ॥ तदर्हं प्राभृतं देही-त्युक्ते राज्ञाऽथ सागरः ॥ तद्देशापूर्वं तद्भूपो-पभोग्यं च सुवस्तुवत् ॥ ८७ ॥ कियत्तदपि जात्याश्व-वस्त्राद्यैः सहितं तथा ॥ सामत्यान्मंत्रिवर्गस्ये-र्ष्यया तस्य वधार्थिनः ॥ ८८ ॥ ददौ करण्डकं चान्त-र्धूलीभरितैरघटं ॥ दत्ततालमथो सर्व-मार्जवाच्च यथार्पितम् ॥ ८९ ॥ गृहीत्वा कोशलोऽचाली-न्नृपादेशवशंवदः ॥ गत्वा देवगिरौ भूप-स्याऽग्रेऽमुञ्चच्च ढौकनम् ॥ ९० ॥ त्रिभिर्विशेषकं ॥ क्षेमप्रश्नादिना राज्ञा । मोदितः कोशलो जगौ ॥ सन्धित्सता त्वया सार्द्धं । देवराजेन भूभुजा ॥ ९१ ॥ स्वमित्रे त्वय्यतिप्रीतिं । बिभ्रता बहुमानतः ॥ प्रैषीदं प्राभृतं चित्तं । प्रमाणं ते त्वतः परम् ॥९२॥ युग्मं॥ ततस्तत्पुरुषैः कुम्भे । तस्मिन्नुद्घाटिते सति ॥ दृष्ट्वा धूलिं नृपः क्रुद्धो जगाद प्रति कोशलम् ॥ ९३ ॥ उन्मत्तस्तव रे! स्वामी । मृत एव न संशयः ॥ उपहारपदे धूलिं । मेषयन्मेऽप्यवज्ञया ॥ ९४ ॥ क्रोधरक्षोबलिं कुर्वे । त्वां तु प्राक् सपरिच्छदं ॥ अवध्योऽसि परं राज-प्रधानत्वात्करोमि किं? ॥ ९५ ॥ तद्गत्वा त्वरितं ब्रूहि । स्वप्रभोरिति वाचिकं ॥ प्राप्त एवाऽस्मि हन्तुं त्वां । दुर्मदं सज्ज तद्युधे ॥ ९६ ॥ दध्यौ च कोशलो धिग्मां । विश्वस्तं नीतिलङ्घनात् ॥ ईर्ष्यया कुधियश्चक्रु-र्मद्वधायेति मन्त्रिणः ॥९७॥ चतुर्बुद्धिनिधिर्द्राक् चो-त्पन्नधीः स हसन् जगौ ॥ अहो! ते नृप। भाग्यं य-द्वत्से राज्यं धियाऽनया ॥९८॥ राजोचे रे! वदस्येवं । किं सोऽप्याख्यद्रजः किमु? ॥ क्षिपेत्कोऽपि घटे हैमे । वेत्सि नेयदपीश! किम्? ॥९९॥ भूपोऽवदत्ततः कोऽत्र। हेतुरूचे च कोशलः ॥ स्वामिन्! यदि प्रसन्नोऽसि। शृणु तत्त्वं वदामि तत् ॥१००॥तथाहि-

आसीत्सिद्धपुरे भूपान् । मरकोपद्रवोऽन्यदा ॥ राज्ञा चान्धलरेल्याह्वा । देव्यसाधि प्रयत्नतः ॥१॥ तुष्टया च तयाऽदायि ।

धूलिर्वह्वी चतुष्पथात् ॥ अनया [1]कृतपुंड्राणां । मरकोपद्रवा भुवम् ॥ २ ॥ शाकिनीव्यंतराद्याश्च । प्रभविष्यन्ति केऽपि न ॥ इत्यू-चुष्या नृपस्तस्याः । पूजां कृत्वाऽग्रहीदिमाम् ॥३॥ [2]तया स्वान्तःपुरादीनां । पौराणामपि भूभुजा ॥ कृत्वा पुंड्राण्यनीयन्त । क्षयं सर्वेऽप्युपद्रवाः ॥ ४ ॥ कियत्येपोपदीचक्रे । तेन ते नृपसत्तम! ॥ वस्तुनो हि गुणा मृग्या । नान्यन्मृगमदादिवत् ॥५॥ ततो राजा भृशं प्रीतो । लज्जितश्च जगाद तं ॥ भोभो! राभसिकं नैतत् । प्रकाश्यं मे त्वया क्वचित् ॥ ६ ॥ चक्रे राजा तया पुण्ड्रं । स्वस्य स्वान्तःपुरस्य च ॥ अप्रीत्परिच्छदायाऽपि । ददौ तामंशशो मुदा ॥७॥ तुष्टश्च कोशलं स्माह । भो भो! त्वया निजं प्रभुं ॥ प्रीति-रेवाऽऽवयोर्जज्ञे । यावज्जीवमखण्डिता ॥८॥ कार्यं तदुचितं ज्ञाप्यं । निःशङ्कसुहृदा सदा ॥ अप्राक्षीच्च नृपः कीदृ-श्याज्ञाशक्तिस्तव प्रभोः ॥ ९ ॥ कोशलः स्माह तां वक्तु-मपीष्टे को नु भूपते! ॥ पशवोऽपि द्विपेन्द्राद्याः । स्तम्भ्यन्ते दत्तया यया ॥१०॥ ताव-त्कलकलं श्रुत्वा । राज्ञा पृष्टा नरा जगुः ॥ गजमुन्मूलिताऽऽलानं । पुरोपद्रवकारिणम् ॥ ११ ॥ यदि सत्यं वदस्येत-त्ततः स्तंभ तया गजं ॥ वाच्यवाचकयोर्योगे । क्रियैवार्हा न संशयः ॥ १२ ॥ इत्युक्ते भूभुजा सोऽपि । गत्वा भूपादिभिः सह ॥ मन्त्रेणेभं रहोऽस्तभ्नात् । स्फुटं स्वाम्याज्ञया च तम् ॥ १३ ॥

ततश्चमत्कृतो भूभृद् । व्याहार्षीत्कोशलं प्रति ॥ न त्वद्धूलिसमं मेऽस्ति । दिव्यं वस्त्वित्यति तद्ददे ॥ १४ ॥ इत्युक्त्वेभं तमे-वाऽस्मै । नृपार्होपायनाऽन्वितं ॥ दत्वा सत्कृत्य वस्त्रालं-कृत्याद्यैः सपरिच्छदः ॥१५॥ प्रेषितो भूभुजा प्राप-दुपसिद्धपुरं स च ॥ चैर्ज्ञात्वा च तद्धूली-प्राभृताऽर्पणभीरुभिः ॥ १६ ॥ तत्र संमुखमागत्य । मंत्रिभिः क्षामितो भृशं ॥ प्रसादितश्च सौवागो-ऽकथनं

[1] कृततिलकानां [2] स्वस्य प्रत्यन्तरे.

प्रतिपादितः ॥ १७ ॥ कोशलोऽथ पुरस्कृत्य । तद्गजेन्द्राद्युपायनं ॥ प्राणमद्भूपमप्राक्षी–त्स्वागतादि मुदा च सः ॥ १८ ॥ चतुर्भिः कलापकं ॥ स्वागतं त्वन्माहिम्नेत्या–द्युक्त्वा सर्वमजिज्ञपत् ॥ सोऽप्युदन्तं यथावृत्तं । धूलिवृत्तं त्वजोगुहीत् ॥१९॥ संधिं तथोपदाद्यं च । तस्मात् प्रौढोत्कटान्नृपात् ॥ असंभाव्यं विभाव्यैवं । विस्मयानन्दमेदुरः ॥ २० ॥ तुष्टस्तस्मै नृपो देश–मदित्सत् स च नाऽग्रहीत् ॥ पंचमाणुव्रते प्रत्या–ख्यातत्वात् श्राद्धपुंगवः ॥ २१ ॥ जगाम सत्कृतो धाम । कोशलः सचिवाऽग्रणीः ॥ भूशक्रः प्रेपयत्यस्य । सत्स्नेहादि बह्वपि ॥२२॥ निगूढमपि तेनाऽथ । धूल्युदन्तं कुतश्चन ॥ भूपोऽश्रौपीद्भवेत्पापं । स्फुटं दुर्गन्धिवस्तुवत् ।२३। तद्धूल्युपदयाऽप्येप । सुधीः कार्यमथो व्यधात् ॥ सर्वकोशप्रदानेनाऽप्यशक्यं यत्परैर्ध्रुवम् ॥२४॥ दानीयोऽपि न गृह्णाति । देशादि तु करोमि किं ॥ इति ध्यायन्नृपस्तस्मिन् । प्रसत्तिमधिकां दधौ ॥२५॥ दण्डितः सागरो मन्त्री । राज्ञा धूल्यर्पणाऽऽगसा ॥ देशलेन नृपस्याऽग्रे । मद्दोपः कथितः किल ॥२६॥ ध्यात्वैवं प्रागपि स्त्रीज–द्वेपस्तं द्वेष्टि सोऽधिकं ॥ आरोप्याऽगः परे स्वस्याऽप्यधमास्तं द्विपन्ति यत् ॥ २७ ॥

प्रीतिदानं नृपः प्रैपी–दन्येद्युः कोशलौकसि ॥ सहस्राणि दश स्नेह–कुम्भान् व्रीहेश्च मूटकान् ॥ २८ ॥ तान् व्रताद् द्विगुणान्मत्वा । धीमांस्तद्भङ्गभीरुकः ॥ देशलं कोशलः स्माह । कार्यौत्सुक्याद्व्रजन् क्वचित् ॥ २९ ॥ पंच पंच सहस्राणि । वत्स पश्चात्प्रहिण्विमान् ॥ सद्यो ददस्व धर्मे वा । मा भञ्ज व्रतमावयोः ॥ ३० ॥ इत्युक्त्वाऽस्मिन् गते धर्मा–द्दढो लुब्धोऽथ देशलः ॥ पश्चाद्राजकुले प्राप्ताः । पुनर्लभ्याः कथं न्विमे ॥ ३१ ॥ विमृश्यैवं ददौ स्वेभ्य–स्तान्न्यासं नियमाधिकान् ॥ भ्रातुः प्रत्ययहेतोरि–त्यकरोदन्यसाच्च सः ॥ ३२ ॥ व्रतं लुब्धोऽतिचर्यैवं । प्रपूर्यायुश्च देशलः ॥ अल्पर्द्धिव्यन्तरो जज्ञे । ततो रोरकुले द्विजः ॥ ३३ ॥

ततो दुःस्थो वाणिक् चाऽभूत् । क्लिश्यमानो धनाय सः ॥ बहूपायैर्न तत्प्राप । व्रतम्लानिफलं ह्यदः ॥३४॥ कोशलो निरतीचारं । श्राद्धधर्मं प्रपाल्य च ॥ धर्मगुप्तगुरोः पार्श्वे । संविग्नो व्रतमग्रहीत् ॥ ३५ ॥ त्रियोगी शुद्धमष्टाङ्गं । चिरं योगं प्रसाध्य च ॥ देवः सप्तदशाब्ध्यायुः।कल्पेऽभूत्सप्तमे महान्॥३६॥इत्याराद्धे विराद्धे चापंचमाणुव्रते फलं॥श्रुत्वा तत्सम्यगाराध्य-मिहाऽमुत्र च शर्मणे ॥३७॥

देवोऽथाऽवधिना ज्ञात्वा । भ्रातरं दुःखितं च तं ॥ ऋद्धिं प्रदर्श्य संविग्नं । भृशं दीक्षामजिग्रहत् ॥ ३८ ॥ चिरं सोऽपि तपस्तप्त्वा । तत्रैव त्रिदशोऽभवत् ॥ सौभ्रात्रं हि फलत्येवं । मिथो धर्मानुरागतः ॥ ३९ ॥ देवौ तौ प्राग्भवाभ्यासा-न्मिथःस्निग्धौ महासुखौ ॥ जिनेशतीर्थयात्रादि-पुण्यान्यसृजतां चिरम् ॥ ४० ॥ महासौख्यैः प्रपूर्यायु-श्च्युत्वाऽथो कोशलामरः ॥ पूर्वाऽवशिष्टपुण्येन । वैताढ्ये मणिमन्दिरे ॥ ४१ ॥ पुरे मणिधरस्याऽभू-द्विद्याधरनरेशितुः ॥ मणिमालाप्रियाजात-स्तनयो मणिशेखरः ।४२। सर्वविद्याकलापात्रं । यौवने परिणीय सः ॥ कन्या द्वात्रिंशतं रम्या । रमते भोगशर्मभिः ॥ ४३ ॥ च्युत्वा देशलजीवोऽथ । स त्वं चन्द्रगतिस्त्वभूः ॥ या ते पूर्वभवे चाऽऽसीत् । प्रेयसी गुणसुन्दरी ॥ ४४ ॥ सा त्वन्मृतेरथोद्विग्ना । प्रबुद्धा व्रतमग्रहीत् ॥ तपस्तप्त्वा चिरं घोरं । तुर्ये स्वरभवत्सुरः ॥ ४५ ॥ ततः श्रेष्ठिकुले पुत्रो-ऽभवचंद्रमुखाभिधः ॥ रूपश्रीगुणसंपन्नो । भोगांश्च बुभुजे चिरम् ॥ ४६ ॥ धर्मधीरगुरोः पार्श्वे । श्रुत्वा धर्मं प्रबुद्धधीः॥प्रव्रज्याऽधीत्य सिद्धान्तं । तप्त्वा च विविधं तपः ॥४७॥ देवोऽभूत्पञ्चमे कल्पे । ततश्च्युत्वा च ते प्रिया ॥ चन्द्रमालाऽभवत्पूर्वा-भ्यासात्स्नेहश्च वां भृशम् ॥ ४८ ॥ सागरः सचिवः सोऽथ । द्विपन्मिथ्यादृगग्रणीः ॥ दुर्व्यापारमहारंभा-न्नरके प्रथमेऽगमत् ॥ ४९ ॥ ततश्च्युत्वेभसारंग-हयादिषु भवेष्वयं ॥ असंख्येषु समुत्पद्य । जज्ञे रोराग्रणीर्द्विजः ॥ ५० ॥

पारिव्राज्यं प्रपद्याऽयं । यथोत्पन्नस्तथा शृणु ॥ वैताढ्याऽगाऽर्णवासन्ना । मनोहरवनावलिः ॥५१॥ वज्रकूटोऽद्रिरत्राऽस्ति । बहुदैवतकेलिभूः ॥ योजनत्रितयायाम–प्रथिमोच्छ्रयराजितः ॥५२ ॥ युग्मं ॥ तद्गर्भे भवनं चाऽस्ति । क्रोशौन्नत्यं प्रथायति ॥ सर्वं मणिमयं भाभि–र्नित्यालोकं रवीन्दुजित् ॥ ५३ ॥ आस्ते चाऽर्द्धे तदुन्नत्यां । भुवि शैलोदरे पुनः ॥ वनीवापीसरोरम्यं । सर्वेन्द्रियसुखाकरम् ॥ ५४ ॥ नरागम्ये वसत्यस्मिन् । प्रक्रीडन् व्यंतरामरः ॥ नाम्ना वज्रमुखो देवी–चतुष्कादिपरिच्छदः ॥५५॥ तन्नाम्नैव भवंत्यस्मि–न्नीशाः सर्वेऽपि सर्वदा ॥ पारिव्रज्याऽनुभावेन । मन्त्रिजीवः स च द्विजः ॥ ५६ ॥ तत्र वज्रमुखो जज्ञे । देवः क्रीडंश्च मानसे ॥ प्रियां वीक्ष्याऽपजह्रे ते । पूर्वाभ्यस्ताऽनुरागतः ॥५७॥ युग्मं ॥ दृढसंस्कारबीजा हि । जन्तून् जन्मान्तरेष्वपि ॥ अनुव्रजन्ति रागाद्याः । कर्पासे रक्तता यथा ॥ ५८ ॥ अथवा—विध्याता अपि रागाद्या । दृष्ट्वा सम्बन्धिनं पुनः ॥ अलार्कविषवन्मेघ–मुल्लसन्ति नवा इव ॥ ५९ ॥ स च त्वां द्विपमाहत्य । प्राप्तः स्वभवनं रयात् ॥ भोगं प्रार्थयते तस्या–श्चाटूनि शतशः सृजन् ॥ ६० ॥ अनिच्छती सती सा चा–ऽशुभाऽनेहोहृतीच्छया ॥ उवाच ब्रह्मचर्यं मे । मासं विद्याकृतेऽस्ति भोः ! ।६१। तावत्क्षमस्व चेच्छीलं । मम लोप्स्यसि दैवत ! ॥ ततो जिह्वां दन्तैश्छित्वा । मरिष्यामि न संशयः ॥६२॥ ततो भीतः सुरो मासं । भोगाऽऽशंसुः प्रतीक्षते ॥ जैन्यः सत्यो हि किं शीला–चाल्यन्ते त्रिदशैरपि ? ॥ ६३ ॥

कोशलामरजीवोऽथ । विद्याभृन्मणिशेखरः ॥ सर्वाङ्गभोगसौख्येषु । लीनः क्रीडति देववत् ॥ ६४ ॥ अन्येद्यू रन्तुमुद्याने । गतो धर्मरविं गुरुं ॥ नत्वा धर्मं ततोऽश्रौषीत् । संवेगाऽर्णववीचिभम् ॥ ६५ ॥ प्रबुद्धो लघुकर्मत्वात् । सद्यो दीक्षामुपाददे ॥ धीरा न धर्मकार्येषु । विमृशन्ति रणेष्विव ॥ ६६ ॥ सुव्रतागणिनीपार्श्वे । प्राव्रजंस्तत्प्रिया अपि ॥ क्रमान्मुनिश्च योगेन ।

चतुर्ज्ञानमवाप सः ॥ ६७ ॥ स चाऽहं स्त्रीवियोगार्त्त । ज्ञात्वा त्वां खेटभूपते ! ॥ प्रबोधयितुमत्राऽऽगां । प्राग्भवस्नेहतोऽद्य भोः ! ॥ ६८ ॥ ततो भवान्तराभ्यासा—न्मयि स्नेहस्तवाऽधिकः ॥ प्रबुध्यस्वाऽथ कामेभ्यो । विरज्य व्रतमाचर ॥ ६९ ॥ स्मरस्यये शक्रादिवि स्फुरन्मणी—गृहेषु देवीगणगो निवत्ससि ॥ कथं मनुष्याऽशुचिपिंडवर्ष्मसु । स्मरन्नपीदं लभसेऽधुना रतिम् ? ॥७०॥ न देवकामैः सुहितोऽर्णवोपमै—श्चिराय भुक्तैरपि यस्तृषार्त्तवत् ॥ स विंदुवद्भिर्नरभोगशर्मभिः । कथं त्वहो जंगाभिताऽऽशितंभवम् ॥७१॥ इत्याकर्ण्याऽऽचचक्षेऽहं । सुभ्रातृसदृशं मुने ! ॥ त्वमकार्षीरदाः स्वस्य । दर्शनं यत्सुरद्रुवत् ॥ ७२ ॥ प्रबुद्धोऽहं गिरा तेऽस्मि । परं परहृतां प्रियां ॥ एवमेवाऽऽशु न त्यक्तुं । प्राग्भवस्नेहतः क्षमे ॥७३॥ तत्तस्या वालनोपायं । कन्याहं च वरं वद ॥ येन स्थित्वा कियत्कालं । कृतार्थो व्रतमाददे ॥७४॥ मुनिराचष्ट यो वज्र—वेगं पवनवेगजं ॥ मोचयिष्यति भूनेता । स्वशक्त्या योगिनीग्रहात् ॥ ७५ ॥ स ते मोचयिता पत्नीं । प्रार्थितो बलिसत्तमः ॥ कन्यायाश्च वरो भावी । स एव भुवनोऽत्तरः ॥ ७६ ॥ कियद्वाद्यापि ते भोग—फलं कर्माऽवशिष्यते ॥ तद्भोगात्प्रव्रजेर्येन । यावो मुक्तिं सहैव यत् ॥ ७७ ॥

श्रुत्वैवं प्राग्भवस्मृत्या—ऽनासक्तोऽपि स्मरन् प्रियां ॥ मुनिं नत्वाऽऽगमं गेहे । व्यहार्षीत्सोऽपि चाऽन्यतः ॥७८॥ तदादि चाऽहमन्विष्यन् । वज्रवेगस्य मोचकं ॥ त्वां मत्वाऽत्र च खेटेभ्यः । स्वकार्यार्थमुपागमम् ॥७९॥ ततस्तत्प्रार्थनाभीरु—र्द्राग् जगाद कुमारराट् ! ॥ प्रार्थिताः कामकुंभाद्या । ददते ह्यप्यचेतनाः ॥ ८० ॥ भो भो मेऽद्योत्सवो द्वैधो । भाग्यादयमुपस्थितः ॥ एकः परोपकारोऽयं । परो दुष्टविनिग्रहः ॥ ८१ ॥ कार्यैर्नियोगी सल्लंचै—र्लोभी व्यवहृतेर्वणिग् ॥ वेश्या कामैर्नृपो द्रव्यै—र्द्वि-

जोऽन्याऽन्यैः खलश्छलैः ॥८२॥ आढ्यरोगिचिकित्साभिर्भिषक् द्रविणलोलुपः [स्त्री कलहैः पुनः]॥ यथा तृप्यति नैवाऽन्यो-पकारैरुत्तमस्तथा ॥ ८३ ॥ युग्मं ॥

किञ्च स्वायासमीरुत्वा-त्सुराणामपि दुर्णयं ॥ यः सहेत स किं भूपः? । किमाशास्तत्र च प्रजाः ॥८४॥ संचूर्ण्याऽद्रिं ततो. जित्वा । दैवतापसदं च तं ॥ प्रियां ते वालयिष्यामि । यदस्मि विजयात्मजः ॥ ८५ ॥ उक्त्वैवं पवनवेग--चन्द्रगत्यादिभिर्युतः ॥ वज्रकूटाद्रिशीर्षेऽगात् । सात्त्विकः सत्वरं नृपः ॥८६॥ उवाचोच्चैश्च रे देवा-धम! हृत्वा परस्त्रियं ॥ किं पातालेऽविशः सर्प । इव मुक्तासर्जं बिले ॥ ८७ ॥ यदि शक्तोऽसि तद्युद्धे । सन्नद्धो भव मे पुरः ॥ स्त्रियं वाऽर्पय नो चेत्त्वां । निग्रहीष्येऽद्रिचूर्णनात् ।८८। यावदेवं त्रिरुक्तेऽपि । प्रादुःष्यत्कोऽपि नाऽमरः ॥ तावच्चूर्णयितुं लग्नो । नगं भूमान् क्रुधोध्धुरः ॥ ८९ ॥ तथाहि—

कामाक्षीदत्तवज्रेण । मुद्गरेणाऽभिनच्छिलाः ॥ शृंगाण्यभ्रंशयद्भूरि । समूलांश्च महाद्रुमान् ॥९०॥ पतच्छिलौघशृंगद्रु-निर्घोषैरतिभीषणैः ॥ विश्वोत्त्रासकरैः सर्व-रोदसी प्रजगर्जतुः ॥ ९१ ॥ झलज्झलितपाथोधि-त्रसत्पाठीनपेटकैः ॥ उच्छलज्जल-कल्लोलै-र्ज्योतिष्काः सर्वतः प्लुताः ॥ ९२ ॥ महानद्यो हृदोन्मिश्रा । उन्मार्गगजलोच्चयाः ॥ अपुप्लवन् पुरग्राम-खेटादीनि समं-ततः ॥९३॥ वातोध्धूतैः शिलाक्षोदैः । सर्वा ध्यामलिता दिशः ॥ म्लानः सूर्योऽपि तद्भूप-प्रतापेन जितः किल ॥९४॥ तद्भंगे गिरयोऽन्येऽपि । जातिदुःखाद्भियाऽथवा ॥ अरुदन् वेपमानांगा। निर्झराऽश्रुजलप्लवैः ॥९५॥ भूधरे चूर्ण्यमानेऽस्मिन्। भृशं भूरप्य-कम्पत ॥ निजाधारक्षयाद्भावि-भ्रंशदुःखभयात्किल ॥ ९६ ॥ भ्रष्टतच्छृंगनिर्घोषैः । पृथ्वीं धडधडत्करीं ॥ शेषः फणासहस्रेण । भ्रश्यतीं कष्टतो दधौ ॥ ९७ ॥ पतत्तद्ग्रावसंचूर्ण्य-मानद्रुवनराजितः ॥ सिंहशार्दूलनागाद्याः ॥ सरावा लक्षशोऽनशन् ॥ ९८ ॥

तद्गुहाद्रुषु खेलन्तः । किन्नरव्यंतरादयः ॥ शक्रमुक्ताऽशनिभ्रांत्या । नेशुर्हाहेतिराविणः ॥९९॥ योगिनीव्यंतरप्रेत–भूतरक्षोऽङ्गना भिया ॥ तन्निर्घोषैः कृताऽऽक्रंदा । नश्यंत्योऽक्षोभयन् जगत् ॥२००॥ एवं तं चूर्णयन् यामा–ऽर्द्धेनाऽप्युपसुरालयं ॥ विद्याभाग्यबल-ब्रह्म–प्रौढो भूभुगधोऽगमत् ॥१॥ श्रुत्वाऽधो घोरनिर्घोषान् । वज्राऽस्रो वीक्ष्य चाऽलयं ॥ जरन्तमिव शीतेन । कंपमानं पतापतम् ॥२॥ किमेतदिति संभ्रांतो । विलोक्य द्राग् विभङ्गतः ॥ यन्नाऽभूद्भावि वेत्येत–न्मत्वा स प्राज्ज्वलत्क्रुधा ॥ ३ ॥ युग्मं ॥ अधावत्सप-रीवारः । स तत्रैत्य च सत्वरं ॥ भीष्मरूपो ज्वलन्नेत्रो । जगादोन्नादयन् दिशः ॥ ४ ॥ रे! रे! किमकृथा मूर्खा–ऽकाले किमु मुमू-र्षसि? ॥ ग्रावात्माऽभञ्जि शैलोऽय–महं त्वस्मिन् वसन्न किम्? ॥ ५ ॥

कुमारनृपतिः स्माह । मूर्ख! हृत्वा परस्त्रियं ॥ छुटिष्यसि प्रविष्टः किं! । विलेऽप्याखुरिवौपधीम् ॥६॥ रे! न किं सांप्रतं वेत्सि । मया राजन्वतीं भुवं ॥ दैवताऽधमकाऽन्यायं । यदेवं दुष्ट! चेष्टसे? ॥७॥ तदर्पय द्रुतं चंद्र–गतेः पत्नीं म्रियस्व वा ॥ कुण्ठो मे नाद्रिभंगेऽपि । मुद्गरस्तव चूर्णने ॥८॥ सुरोऽधिकक्रुधा साह । मृत एव नृडिम्भ! रे! ॥ त्वं मोचयिपुस्तां मत् । मृगः सिंहान्मृ-गीमिव ॥ ९ ॥ ततो मुद्गरमुत्पाट्याऽ–धावद्धन्तुं स भूपतिं ॥ भीताः पवनवेगाद्या । नृपपृष्टेऽविशन् पुनः ॥ १० ॥

भूपोऽपि विद्यया सद्यः । स्तब्ध्वा तस्य परिच्छदं ॥ वाज्रमुद्गरमुत्पाट्य । द्रुतं तं प्रत्यधावत ॥ ११ ॥ मिथश्च मुद्गराघात–निर्घोषप्रस्फुटन्नभः ॥ युयुधाते चिरं योधौ । मुद्गराऽमुद्गरि स्फुटम् ॥१२॥ स्वमुद्गरेण भूपेन । चूर्णितेऽमरमुद्गरे ॥ ज्वलन्तमसिमुद्ग-म्याऽ–धावत क्रोधतः सुरः ॥१३॥ भूपालः सूर्यहासेन । रंभास्तंभमिवाऽस्य तं ॥ लीलया खण्डशश्चक्रे । वक्रे धीरे हि किं सुरैः॥१४॥ ततो गदात्रिशूलाद्यै–र्दिव्यास्त्रैर्विविधैश्च तौ ॥ युध्येतेस्माऽहिपाशाद्यैः । सर्वत्र च जयी नृपः ॥१५॥ सम्यक्त्वं वरशीलं च । यत्राऽ-

स्ति परमार्हते ॥ प्रभविष्णुर्न शक्रोऽपि । तत्र तादृक् सुरस्तु किम्? ॥ १६ ॥ ततो दृढं नृपं मौलौ । जघान तरुणा सुरः ॥ कीर्णे-स्तत्कुसुमैस्तस्मिन् । पुष्पवृष्टिं सृजन्निव ॥ १७॥ नृपोऽपि तरुभिस्तस्य । पिपेषाऽनेकशस्तरून् ॥ ततो महाशिलाभिस्ता-वयुध्येतां चिरं भटौ ॥ १८ ॥ नृपो मुष्टिशिलाभिश्चाऽ-चूर्णयत्तच्छिलास्तथा ॥ यथाऽपप्तन्मुखे मौलौ । तद्धूलिस्तस्य दुर्धियः ॥१९॥ निर्वेदा-द्वज्रवक्त्रोऽथ । हित्वाऽस्त्राण्यखिलान्यपि ॥ मुष्टामुष्टि नृपं योध्धु-माह्वास्त प्रास्तधीर्मदात् ॥२०॥ युद्ध्यमानौ मिथो मुष्ट्या-घातै-र्निर्घोषभीषणं ॥ अकम्पेतां समं भूद्रु-भूध्राद्यैः परितोऽभयौ ॥२१॥ गर्जन्ति गर्जतोराशाः । पततोश्च पतंत्यगाः ॥ उत्पतन्त्युत्पत-तोश्च । दिवि देवाः सकौतुकाः ॥ २२ ॥ मिथोऽनुभ्राम्यतोः सद्यो-ऽनुभ्राम्यंतीक्षणान्यपि ॥ अनुवृत्तिं हीश्वरेषु । सुधियः के न बिभ्रते? ॥ २३ ॥

एवं युध्ध्वा चिरं भूप-स्ततस्तं दुर्णयं सुरं ॥ आदाय पादयोर्मौलिं । परितोऽभ्रामयत् क्रुधा ॥ २४ ॥ आस्फाल्य च शी-लापीठे । वस्त्रं रजकवद् दृढं॥ दत्वा तद्धृदि पादं च। जगाद जगदेकजित् ॥२५॥ रे! रे! तवाऽस्ति चेत्किंचि-द्बलमद्याऽपि तत्कुरु ॥ अन्यथा तु स्मरेरिष्टं । नो चेदर्पयतां स्त्रियम् ॥ २६ ॥ आक्रंदन्नवदत्सोऽपि । जगन्मल्ल! विमुञ्च मां ॥ दासोऽसि मे करिष्यामि । त्वदाज्ञां सकलां सदा ॥ २७ ॥ ततोऽमुञ्चत्कृपालुस्तं । जयानंदो धराधिपः ॥ देवैर्जयजयाराव-श्चक्रेऽस्मिन् पुष्पवृष्टियुक् ॥ २८ ॥

सुरः सोऽथ द्रुतं गत्वा । समानीय च तां स्त्रियं ॥ नृपायोपायनीचक्रे। नत्वा स्वागस्त्वचिक्षमत् ॥ २९ ॥ व्यधुः पवनवे-गाद्या । मुत्सांराविणमेव तत् ॥ सुरस्य स परीवारो-ऽप्युत्तब्धः प्राणमन्नृपम् ॥३०॥ जगाद च नृपं देव-स्त्वत्समो विक्रमी नयी॥ सुराऽसुरनरेष्वस्ति । दयालुश्च परो न हि ॥३१॥ विजितोऽहं न केनाऽपि । त्वया जिग्ये च लीलया ॥ मुक्तश्च कृपया तत्ते । कृतार्थः

स्वां प्रदाय किम्? ॥३२॥ व्याहार्षीत्तं नृपः किञ्चि–न्न मे भो! मृग्यते परं ॥ मिथ्यात्वादि त्यजाऽनन्त–भवदुःखनिबन्धनम्॥३३॥ मिथ्यात्वारम्भजैः पापै–रन्वभूस्त्वं यथा यथा ॥ नारकादिभवेषूग्र–दुःखराशींस्तथा शृणु ॥ ३४ ॥ ततो मुनिगिरा ज्ञात्वा । प्रोचे चन्द्रगतिर्यथा ॥ तथा तच्चरितं सर्वं । तद्गिताया ऽवदन्नृपः ॥३५॥ तदाऽऽकर्ण्य सुरः स्मृत्वा । भवान् कृच्छ्रमयान्निजान् ॥ जिज्ञासुर्धर्ममप्राक्षी–द्विशुद्धं दुःखभीच्छिदे ॥ ३६ ॥ तं देवगुरुधर्माणां । तत्त्वं भूपोऽप्यजिज्ञपत् ॥ प्रबुद्धः सोऽपि सम्यक्त्वं । तद्गिरा प्रत्यपद्यत ॥ ३७ ॥ देवगुर्वादिपूजां च । प्रपद्याऽथ नृपं जगौ ॥ कथमप्यनृणो न स्यां । धर्मबोधप्रदस्य ते ॥ ३८ ॥ यतः—

बोधिदानात्परं दानं । नास्त्येव दत्तया यया ॥ सर्वसौख्यश्रियां पात्रं । भवेच्छिवपदावधि ॥ ३९ ॥

तथाऽपि स्वानुरूपं ते । बोधेर्दातुर्ददाम्यहं । इत्युक्त्वा नररत्नाय । देवश्चिन्तामणिं ददौ ॥४०॥ रूपं स्वस्य परेषां च । स्यात्तादृग् यादृगिष्यते ॥ स्युर्बहून्यपि च स्वस्य । रूपाणि स्मृतया यया ॥ ४१ ॥ विद्यां कामितरूपां च । ससाधनविधिं ददौ ॥ भूपोऽपि विधिनादाय । तद्द्वयं तं मुदाऽस्तवीत् ॥ ४२ ॥ धन्योऽसि सुरराज! त्वं । योऽत्यजः परयोषितं ॥ प्राप्तोऽसि बोधिरत्नं च । स्वल्पादप्युपदेशतः ॥ ४३ ॥ स्तुत्वैवं क्षमितश्चंद्र–गतिमैत्रीं च कारितः ॥ राज्ञा सुरः सदत्तार्घ–स्तिरोऽभूत्सपरिच्छदः ॥ ४४ ॥ आर्पिपच्चन्द्रमालां च । तां चन्द्रगतये नृपः ॥ हृष्टः स साह नाथैहि । पाणौ कुरु कनीं मम ॥ ४५ ॥ इत्युक्त्वा श्रीजयानन्द–कुमारनृपतिस्ततः ॥ विसृष्टवांश्चन्द्रगतिं । सोऽपि नत्वा नृपादिकान् ॥ ४६ ॥ व्रजन् पवनवेगेन । कर्णमूलं जगे जवात् ॥ मित्र! स्वामानयेः कन्यां । मत्कनीपाणिपीडने ॥ ४७ ॥ नत्वा चन्द्रगतिर्भूपं । साप्रियः स्वगृहेऽगमत् ॥ श्रुत्वा तत्र नृपोदन्तं । सर्वे चक्रुर्महोत्सवान् ॥ ४८ ॥ श्रीजयोऽथ महीशक्रः । प्रैषीद्विज्ञप्तिकां पितुः ॥ धृतये योगिनीदत्ता–लङ्कृत्यादि च खेचरैः ॥४९॥ ततः

पवनवेगाद्यै-र्युतो वैताढ्यमूर्धि सः ॥ गत्वाऽवन्दत चैत्यानि । भावयुक्तहृदा मुदा ॥५०॥ ततः पवनवेगेन । गाढमभ्यर्थ्य भूपतिः ॥ नीतो निजपुरेऽस्यापि । दाक्षिण्याऽब्धिः सगौरवम् ॥५१॥ अथो द्रुतं चन्द्रगति-खेटेनाऽनीतया रहः ॥ अन्वितां चन्द्रसुन्दर्या । स्वसुतां वज्रसुन्दरीम् ॥ ५२ ॥ सुलग्ने गाढमभ्यर्थ्य । सोत्सवं परिणायितः ॥ चक्रायुधभयाच्चेन । खेटेशेनाऽल्पविस्तृति ॥५३॥ ददतुश्च गजाश्वादि । तस्मै तौ पाणिपीडने ॥ अथो पवनवेगस्य । विद्यास्ते शत्रुमर्दनीः ॥५४॥ दुःसाध्यत्वादथो तस्या । न प्रभूष्णुश्च साधने ॥ एष साधयिता भाग्य-शीलसत्त्वगुणोत्तरः ॥ ५५ ॥ इति सञ्चिन्त्य तां तस्मै । ससाधनविधिं ददौ ॥ तेनाऽर्पितमणीसौधे । नृपोऽस्थात्सवधूद्वयः ॥ ५६ ॥ ससैन्योऽप्याऽऽपतेः स्याच्चे-द्वज्रास्त्रेण सहाहवः ॥ इत्युक्त्वा पवनश्चंद्र-गतिं प्रैपीत्तदास्पदे ॥५७॥ जैनधर्मविभवानुभावतः । श्रीजयोऽथ सवधूद्वयो नृपः ॥ खेचरीविरचिते वनास्पदे । खेलति त्रिदशजैत्रविक्रमः ॥ ५८ ॥ पञ्चमव्रतविशुद्धितोऽभ्यगा-त्कोशलः शिवसुखावधिश्रियं ॥ श्रीजयोऽपि परदारनिःस्पृहः । संपदः प्रतिपदं समश्नुते ॥ ५९ ॥

इत्यवेत्य जिनधर्मजं फलं।प्रोच्चकैरिह यतध्वमुत्तमाः॥द्विधा वै विजयश्रिया यतः।प्राप्नुथाऽऽशु शिवशर्मसंपदः६०

इति तपागच्छनायक-पूज्यश्रीदेवसुन्दरसूरि-श्रीज्ञानसागरसूरि-श्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनिसुन्दर सूरिभिर्विरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे जयश्र्यङ्के पञ्चमव्रतनिरतिचार-सातिचारपालनविषय-कोशल-देशलनिदर्शनगर्भवज्रकूटगिरिचूर्णनवज्रमुखसुरविजय--तच्चिन्तामणिमहाविद्याप्रदान-वज्रसुन्दरी-चन्द्रसुन्दरी पाणिग्रहणवर्णननामा द्वादशः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रं० श्लोक २६६ ॥

# ॥ अथ त्रयोदशः सर्गः प्रारभ्यते ॥

शान्तिं प्रदेयादघविघ्नराशेः । श्रीशान्तिनेता स नवो विवस्वान् ॥
निहन्ति यो दुःखतमोवितानं । जगत्त्रयस्याऽप्यखिलं स्मृतोऽपि ॥ १ ॥

अथो पवनवेगेन । सहाऽष्टौ खेचराधिपाः ॥अन्यदाऽऽगत्य नेमुः श्री–श्रीजयानन्दभूपतिम् ॥२॥ आसीनेष्वासनेष्वेषु । क्षेम-प्रश्नादिमोदिषु ॥ ऊचे पवनवेगोऽथ । तत्स्वरूपं महीभुजे ॥ ३ ॥ अस्ति भोगपुरं १ वज्र–पुरं २ रत्नपुरं ३ तथा ॥ मणिधामपुरं ४ वीर–पुरं ५ रत्नालयं पुरं ६ ॥४॥ पुरं कनककूटाख्यं ७ । गिरिचूडपुरं ८ पुनः ॥ वैताढ्ये दक्षिणश्रेणिः । पुरैरेभिरलंकृता॥५॥ एतेषामधिपाश्चैते । क्रमाद्भोगरतिर्नृपः १ ॥ चन्द्रबाहु २ महाबाहु ३ श्चंद्रवेगो ४ रविप्रभः५ ॥६॥ रत्नचूड ६ स्तडिद्वेग ७–श्चं-द्राभ ८ श्चेति नामतः ॥ संति द्वात्रिंशदेतेषां । सर्वाग्रेण च पुत्रिकाः ॥ ७ ॥ ताश्चतस्रश्चतस्रश्चै–कैकशो भिन्नमातृकाः ॥ समानाः प्रायशो दैवाद् । वयोरूपकलागुणैः ॥८॥ रूपाण्यप्सरसस्ताश्चे–क्ष्यन्तेऽन्योऽन्यं यदा तदा ॥ आद्याः स्युर्निर्निमेषाक्ष्यः । सनिमेष-दृशः पराः ॥ ९ ॥ क्रीडाविद्याकलापाठान् । विदधत्यः सहैव ताः ॥ एकपत्यं मिथः प्रेम–वशेन प्रतिजज्ञिरे ॥ १० ॥ ज्ञात्वा स-र्वोत्तमाः स्त्रीषु । चक्रायुधनराधिपः अयाचत स्वपुत्रेभ्यो–ऽन्यदा दूतैश्च तत्पितॄन् ॥ ११ ॥ विलोक्य लभ्यदेयादि–मेलं विज्ञपयि-ष्यते ॥ तत्राऽऽगत्य नृपोऽस्माभि–रिति ते चोत्तरं व्यधुः ॥ १२ ॥ मिथस्ते सुहृदश्चाष्टै–कत्र भोगरतेः पुरे ॥ संभूय व्यामृशन्नेवं । परिणामहितावहम् ॥१३॥ दीयन्ते चक्रायुधस्यै–कस्मैचित्सूनवेऽखिलाः ॥ तदेर्ष्यन्ति परे कन्या । नेच्छन्ति च पृथक् पतीन्॥१४॥

अदाने सर्वथाऽप्यस्य । कुले चास्मान्नयत्ययं ॥ राज्यजीवितसन्देहं । किं कार्यं सङ्कटेऽत्र तत्? ॥१५॥ एवं विमृशतां तेषा–मागात्र निमित्तवित् ॥ सोऽपृच्छि बहुमानात्तैः । कार्येऽत्र विषमे गतिम् ॥ १६ ॥ निमित्तैः सोऽपि विज्ञाय । जगौ चक्रायुधस्य भोः॥ राज्यं स्वल्पाऽहमेवाऽस्ति । किं भोस्तस्माद्बिभीथ तत्॥१७॥ मृत्युना शत्रुणा वाऽपि। तस्य राज्यं हरिष्यते ॥ इति पृष्टे जगौ ज्ञानी । वीक्षेऽस्याऽरेः पराभवम् ॥ १८ ॥ असम्भाव्यमिदं श्रुत्वा । ते प्रोचुः कोऽस्य नु द्विषन्? ॥ ज्ञान्यूचे वज्रवेगं यो । मोचयेद्योगिनीगृहात् ॥ १९ ॥ संचूर्ण्य वज्रकूटाद्रिं । जित्वा वज्रमुखं सुरं ॥ वालयेद्यः पुनश्चन्द्रगतेः पत्नीं स तज्जयी ॥ २० ॥ तस्यैव च प्रदेया हि । कन्या योग्यवराय भोः! ॥ स हि विश्वम्भरी ज्ञेयो । भरतादिसमो नृपः ॥ २१ ॥ आकर्ण्येति मुदा ते तं । द्राक् सत्कृत्य विसृज्य च ॥ पृष्ट्वा चन्द्रगतिं त्वाऽत्र । ज्ञात्वाऽऽगुः स्वार्थसिद्धये ॥ २२ ॥ तदेतेषां कनीपाणि–ग्रहेणैतान् कृतार्थय ॥ तं चिकारयिपुंश्चक्रा–युधभीत्या रहस्त्विति ॥२३॥ उक्तः पवनवेगेन । जगुस्तेऽप्येहि नः पुरे ॥ उपयन्तुं कनीर्भाङ्क्षी–र्नोऽर्थनामर्थितप्रद ! ॥ २४ ॥ युग्मम् ॥ श्रीजयः स्माह यावद्व–श्चक्रायुधनृपाद्भयं ॥ रहस्तु तावदुद्वाहे । को रसस्तत्प्रतीक्ष्यताम् ॥२५॥ भूभुजैवं निगद्यैतान् । विसृष्टान् पवनः खगः ॥ कर्णजापं[हं]जगादैत । सानीकाश्चक्रभृद्रणे ॥२६॥ ओमिति प्रतिपद्यैते । हृष्टाः स्वं स्वं पुरं ययुः ॥ पवनवेगाऽनुमतः। सिद्धकूटे नृपोऽप्यगात् ॥२७॥ दत्ते सुरनभोगाभ्यां । श्रीसिद्धप्रतिमापुरः ॥ तत्र साधयितुं विद्ये । प्रारेभे विधिना नृपः ॥ २८ ॥ कालेन बहुना कृच्छ्रै–र्बहुभिर्ये तु सिद्धयतः ॥ विद्ये द्वे अपि ते सिद्धे । भाग्यात्तस्याऽल्पवासरैः ॥२९॥ सिद्धविद्यस्ततः प्राप । विद्याधरगणैर्वृतः ॥ पुरं पवनवेगस्य । खेचरीकृतमङ्गलम् ॥ ३० ॥

तत्र स्वैरं सभान्तर्वा । सौधान्तर्वा यथासुखं ॥ निषीदत्यथवा क्रीड–त्यास्ते वा सोऽपि संश्रियः ॥३१॥ द्वितीयेऽह्नि सभासीने ।

खेटेशे पवनाह्वये ॥ चक्रायुधनृपस्याऽऽगा–द्दूतो मितपरिच्छदः ॥ ३२ ॥ तमभ्युत्थाय खेटेशो–ऽप्यासयत्कनकासने ॥ क्षेमप्रश्नादिनाऽऽनन्द्याऽ–प्राक्षीचाऽऽगमकारणम् ॥ ३३ ॥ स स्माह खेटचक्री त्वा–माज्ञापयति भो नृप! ॥ प्रहिणु स्वकनीं वज्र–सुन्दरीं ते स्वयंवराम् ॥ ३४ ॥ क्षुभितोऽपि निशम्यैव–मवलम्ब्याऽथ साहसं ॥ ऊचे पवनवेगश्चे–दितीयत्किं विलम्बितम् ॥ ३५ ॥ श्रीजयेन यतः पुत्र–मोचनादुपकारिणा ॥ सप्रतिज्ञं मया दत्ता । परिणिन्ये पुराऽपि सा ॥ ३६ ॥ मया बह्वपि विज्ञप्तः । पुत्रं नाऽमूमुचत्प्रभुः ॥ ततोऽनन्यगतित्वेन । मोचयित्रेऽददां सुताम् ॥ ३७ ॥ दूतः स्माह कनीवेषां । प्रेषयोढामपि ह्यमूं ॥ अन्यथा बालिनि क्रुद्धे । जामातुस्ते च का गतिः? ॥ ३८ ॥ खेटोऽवादीत्करोम्येवं । प्राणान्तेऽपि न गर्हितं ॥ विद्याधरकुलं ह्येवं । लज्जते सोऽपि ते प्रभुः ॥३९॥ तत्स्वरूपमिदं गत्वा । साम्ना विज्ञपय प्रभोः ॥ तत्प्रसादनयुक्तीश्च । विमृशाम्यहमप्यथ ॥४०॥ गते दूतेऽथ पवनो । विमृश्य सचिवैः समं ॥ तत्पुरे वाक्पटुं प्रैषीत् । प्रधानैः सह पण्डितम् ॥४१॥ दूतेन तत्स्वरूपोक्त्या । कुपितं खेटचक्रिणं ॥ गत्वेतस्तेऽपि नेमुस्तं । व्याजहार च पण्डितः ॥ ४२ ॥

जय प्रभो! विश्वपते! कुलीन-धुर्येन्द्रजैत्राऽद्भुतबाहुवीर्य!॥त्वं सर्वदुर्नीतितमोऽर्कनीति-वल्लीवनांभोधर राजराजः
खेट-किन्नर-सुराऽसुरयुग्मै-र्गीयते कनकशैलवनेषु॥या[1]निरङ्कविधुरोचिरिमां किं।स्त्रीकृते मलिनयन्नासि कीर्त्तिम्।४४
आसते लवणिमाद्भुतरूपाः।कोटिशोऽधिभुवनं कुलकन्याः॥ता यथेच्छमुपयम्य रमेथा।मुञ्च कीर्त्तिहननीं परनारीम्
[2]बुद्धदेवगुरुधर्मसुतत्त्वः।शुद्धवंशजानितोऽवनिशक्र!॥लज्जसे कुलकलंककरीं किं।नैव तामभिलषन्नपरोढाम्? ४६

१ निष्कलङ्क चन्द्रकान्तिः   २ बुध्धानि–ज्ञातानि देवगुरुधर्मरूपाणि तत्त्वानि येन सः

हा! धिगस्तु मदनं [1]कदनं श्री-ज्ञान-धर्म-धृति-कीर्त्ति-सुखानां धीर्दधाति कुपथे पदमेवं।यद्वशाद् भुवनवीर! तवाऽपि तत्प्रशमितमधुरां धर धीमन्! । स्वां धियं नरपते! निजपत्नौ ॥ भक्तवत्सल! सकारणजातं । मर्षयैकमपराधममुष्य ॥४८॥ इत्यादिमृपदेशोक्ति-र्मधुरैस्तद्वचोभरैः ॥ किञ्चिच्छान्तप्रकोपाग्निः । खेटचक्री जगाद तम् ॥ ४९ ॥ मध्ये वयसि यावेऽहं । न कामादेव तां श्रियं ॥ सहे भङ्गं तु नाऽऽज्ञायाः । सोऽशस्त्रो हि वधः प्रभोः ॥ ५० ॥ ततः पवनवेगोऽयं । राज्यजीवितवाञ्छया ॥ करोत्वेव मदाज्ञां । जामाता च जिजीविषुः ॥ ५१ ॥ चक्रायुधस्य दासीति-वर्णमालाङ्किते सदा ॥ परिधापयतां पुत्र्याः । कङ्कणे करयोरियम् ॥ ५२ ॥ दास्याश्चक्रायुधस्यैष । पतिरित्यक्षराङ्कितं ॥ धत्तां तस्य च जामाता । मौलौ मौलिं मदर्पितम् ॥५३॥ अत्रागत्य न नाट्यं मे । पुत्रिकां चक्रसुन्दरीं ॥ अध्याप्य यातु मद्दत्त-कङ्कणा वज्रसुन्दरी ॥ ५४ ॥ राज्यजीवितसौख्यानि । सर्वेषामिति निर्मिते ॥ नाऽन्यथा माधिकं वादीः । सहे नाज्ञाधनो हि तत् ॥ ५५ ॥ पण्डितः स प्रधानानि । तानि श्रुत्वेति तद्गिरः ॥ प्रतिपद्यैव चाऽनन्य-गतीनि स्वपुरेऽविशन् ॥ ५६ ॥ इमं पवनवेगाय । श्रीजयाय च भूभुजे ॥ चक्रायुधस्य वृत्तान्तं । सर्वं तानि न्यवेदयन् ॥ ५७ ॥ ततः पवनवेगः श्री-श्रीजयानंदभूपतिः ॥ मंत्रिणश्च रहश्चक्रु-र्विचारं कार्यगोचरम् ॥५८॥ राजाऽवोचत्प्रपद्यं । सर्वं चक्रायुधोदितं ॥ कालं गोप्या कियन्तं चाऽत्रै-वेयं वज्रसुन्दरी ॥५९॥ तस्या रूपमहं कृत्वा । क्रियद्योपितपरिच्छदः ॥ उपचक्रायुधं गत्वाऽध्यापयिष्यामि तत्कनीम् ॥ ६० ॥ युग्मं ॥ अन्यदप्यखिलं साधु । करिष्यामि यथोचितं ॥ मिलिष्याम्यहमेवाऽत्र । कार्या चिन्ता न कैरपि ॥ ६१ ॥ एवं निर्णीय ते याव-त्पदं स्वं समियूति ॥ प्रधानपुरुषास्ताव-द्दैयरुः खेटचक्रिणः॥६२॥

---

१ कदनं—नाशनम्

प्रतिपत्त्या यथार्हं ता-नप्रीणात्पवनोऽखिलान् ॥ जगुः पवनवेगं ते । त्वामाऽऽदिशति चक्रभृत् ॥ ६३ ॥ आज्ञप्तं यन्मया सर्वं । तद्यद्येष प्रपद्यते ॥ प्रेष्यतां मे कनीनाट्या-भ्यासये वज्रसुन्दरी ॥ ६४ ॥ नो चेदाऽऽगत एवाऽहं । युद्धे सन्नह्यत द्रुतं ॥ त्यक्त्वा राज्यानि वा यात । गतिरन्याऽस्ति वो न यत् ॥६५॥ उचे पवनवेगस्तान् । स्वाम्याज्ञां को न मन्यते? ॥ प्रेषयिष्यामि सामग्रीं । कृत्वा वो वज्रसुन्दरीम् ॥६६॥ तस्मादद्य प्रतीक्षध्व-मित्युक्त्वा भोजनादिनाः ॥ युक्तिं कृत्वा कृताऽऽनन्दान् । प्रैषीदुत्तारके स तान्॥६७

नक्तं श्रीजयराजोऽथ । परीक्षापूर्वकं भटान् ॥ शस्त्रशास्त्रकलाभिज्ञान् । यूनः पञ्चशतीमितान् ॥ ६८ ॥ वीरांगद-महाबाहु-सुघोष-सुमुखादिकान् ॥ स्त्रीरूपान् विद्यया चक्रे । समानसदलङ्कृतीन् ॥ ६९ ॥ युग्मं ॥ स्वयं च वज्रसुन्दर्या । रूपं साऽलङ्कृति व्यधात् ॥ चिन्तारन्तानुभावाच्चा-लङ्कारादि न दुर्लभम् ॥७०॥ प्रातः पवनवेगोऽथ । गोपित्वा वज्रसुन्दरीम् ॥ प्रधानपुरुषाऽध्यक्षं । मायापुत्रीं समादिशत् ॥ ७१ ॥ वत्से! प्रीणय नाथं नस्तत्पुत्रीनाट्यशिक्षणात् ॥ तातादेशः प्रमाणं मे । सेत्युक्त्वा सपरिच्छदा ॥ ७२ ॥ विमानमारुरुहुस्त-दाद्याः शस्त्राणि चाऽखिलाः ॥ गुप्तमाददिरे नाट्य-सामग्रीं तत्र च स्फुटम् ॥ ७३ ॥ युग्मं ॥

प्रधानानां वधूनां च । विमानावथ चेलतुः ॥ प्रापतुश्च पुरोद्याने । तत्क्षणात्खेटचक्रिणः ॥ ७४ ॥ ताः संस्थाप्य च तत्रैव । प्रधानपुरुषा द्रुतं ॥ गत्वा न्यवेदयन् राज्ञ-स्तासामागमनं मुदा ॥७५॥ दासीवर्गं तदाहूत्यै । प्रैषीदाऽऽनन्दितः स च ॥ मायानार्यो नगेऽस्त्राणि । जुगुहुर्गह्वरे क्वचित् ॥ ७६ ॥ आहूताश्च भुजिष्याभि-राययुर्भूभुजः पुरः ॥ लज्जयाऽधोमुखी तस्थौ । सा मायावज्रसुन्दरी ॥ ७७ ॥ धाता न्वप्सरसो घाटं-घाटमभ्यासपाटवे ॥ जाते विज्ञानसीमानं । ससर्जेमां प्रयत्नतः ॥७८॥ एतद्रूपानुसारेण । भाविन्योऽस्यां कला अपि ॥ दृष्ट्वा तामिति निध्यायाऽऽदिशन्नाटचकृते नृपः ॥ ७९ ॥ साऽपि ताभिः समं स्त्रीभि-र्गीतवाद्य-

मनोहरं ॥ नाट्यं चक्रेऽद्भुतं सर्वे-ऽप्रीयन्त च नृपादयः ॥८०॥ नृपः समानसर्वाग्र-नेपथ्याऽलङ्कृतीश्च ताः ॥ विलोक्य विस्मितो वस्त्रा-कल्पदानेष्वमन्दत ॥८१॥ ग्रासदास्यादिसामग्रीं । स दत्वा बहुमानतः ॥ श्रैपीत्ताः स्वार्पिताऽऽवासे । समर्प्याधीतये सुताम् ॥८२॥ तिष्ठन्ती सपरीवारा । तत्र सा वज्रसुन्दरी ॥ नाट्यमध्यापयत्यात्म-सरूपां चक्रसुन्दरीम् ॥ ८३ ॥ विनीता सुभगा सर्व-गुणा सा मञ्जुभाषिणी ॥ अधीते दधती प्रीतिं । तस्यां प्रज्ञाऽस्तभारती ॥८४॥ गीतैः कुमारराजस्य । श्रीजयस्य स गायति ॥ चरित्रं योगिनीवद्धं । मायानारीपरिच्छदः ॥ ८५ ॥ प्रौढावदातसंबद्धं । गीतं श्रुत्वा च तत्कनी ॥ कुमारेऽत्राऽनुरज्यन्ती । ताः पप्रच्छाऽन्यदा सखीः ॥ ८६ ॥

कोऽयं श्रीश्रीजयानन्दो ? । युष्माभिर्गीयते सदा ॥ चक्री वा ? तत्समो वाऽपि ? । नावदाताः परेष्वमी ॥८७॥ जगुस्ताः केलिशैलेषु । गायतो योगिनीगणात् ॥ श्रुत्वैतत्पठितं गीतं । सम्यग्विद्मस्तु नैव तम् ॥ ८८ ॥ परं स वज्रसुन्दर्या । वरः संभाव्यते गुणैः ॥ तं हि सर्वोत्तमं ज्ञानी । जगाद भरतेऽधुना ॥८९॥ कलाप्रकृतिसौजन्या-दिभिः सा रञ्जिता भृशं ॥ ऐच्छत्तद्वज्रसुन्दर्याः । स्वसृत्वसहवासिते ॥ ९० ॥ दध्यौ च मम भाग्यानि । भवेयुस्तानि यैर्भवेत् ॥ पतिरीदृग्गुणश्चैषा । सदा संनिहिता स्वसा ॥९१॥ पर तं वज्रसुन्दर्या । हठपाणिग्रहाद् द्विषन् ॥ कथं दत्ते पिता तस्मै । ममाऽभाग्यानि तद् ध्रुवम् ॥९२॥ इति चिन्तातुरां वीक्ष्य । जगुस्तास्तां स्त्रियोऽन्यदा ॥ किं पतीयसि तं वत्से ? । श्रीरंभानृपपुरन्दरम् ॥९३॥ सा जगाद ग्रहीतुं या । चन्द्रमिच्छति पाणिना ॥ उपहासपदं सा स्या-त्तदसाध्ये वदामि किं ? ॥ ९४ ॥ ऊचुस्ता वज्रसुन्दर्या । नाऽसाध्यं किञ्चिदस्ति वै ॥ सा कलाभिर्जगज्जैत्री । यदेवं विक्रमादपि ॥ ९५ ॥ परं न ते मनःस्थैर्यं । सम्यग्जानीमहे वयं ॥ दृगुपान्तमिव प्राय-श्चपलं योषितां हि हृत् ॥ ९६ ॥

कश्चलाचलचित्तार्थ-विषमे यतते सुधीः? ॥ सा जगाद च वः संगा-दथ तद् दृढमेव मे ॥ ९७॥ यथा निःस्वो निधौ रोगी ।
पीयूषे सज्जले सतृट् ॥ भोगार्थं नाऽऽद्रिये तस्मिन् । कथं विश्वोत्तमे वरे? ॥ ९८ ॥

जगुस्ता इति तत्त्वं चे-त्तदा सज्जीभव द्रुतं ॥ सज्जीभूयाऽगमत्साऽपि । स्वाऽऽकल्पग्रहणादिना ॥९९॥ ता मायावज्रसुन्दर्याः ।
सर्वमेतन्न्यवेदयन् ॥ कृते महाविमाने सा । तास्तां चारोह्य खं ययौ ॥ १०० ॥ राजसौधोपरि स्थित्वा । जुघोष प्रोच्चकैश्च सा ॥
भो! भो! राजभटाः खेटाः । श्रूयतां वीरमानिनः ॥ १ ॥ चक्रायुधसुतामेता-मपहृत्य व्रजाम्यहं ॥ श्रीजयाय कुमाराय । स मोच
यतु यो बली ॥ २ ॥ छलकृन्नैव वाच्याऽह-मित्युक्त्वा पुरसीम्न्यगात् ॥ सा स्त्रीश्च कतिचित्प्रेष्य । गोपितास्त्राण्यनीनयत् ॥ ३ ॥
मत्वैतद्विसितो भूभृ-दहो! नार्यपि विक्रमं ॥ कुरुते दुर्णयं चेति । वदन् प्रैपीद्भटान् बहून् ॥४॥ प्रत्याहर्तुं कनीं भूपाऽऽ-दिष्टा युयु-
धिरेऽथ ते ॥ मायास्त्रीभी रयाद्भग्ना-स्ताभिः पश्चादपासरन् ॥ ५ ॥ व्रीडादवदतः स्त्रीभ्यो । भंगं तान् शोणितप्लुतान् ॥ वीक्ष्य
विसयरोपाभ्यां । प्रैपीत्सोऽथ महद्बलम् ॥ ६ ॥ विमानहस्तिवाजिस्थाः । पत्तयश्च महाभटाः ॥ सैन्ये तस्मिन्नयुध्यन्त स्त्रीभिः सह
महायुधैः॥७॥ भग्ना भटास्त्रियो वीक्ष्य पातुं ता खेटसेनया ॥ सह योद्धुं कुमारस्त्री । ढुढौके विविधायुधैः ॥८॥ गदयाऽचूर्णयत्तूर्णं ।
विमानान् पर्पटानिव ॥ गजानलोठयद्दण्ड-शैलानिव ससादिनः ॥९॥ अभ्रामयद्रथानभ्रे । भ्राम्यतो गरुडानिव ॥ पत्तीनपातयद्भूमौ
। चंचानूनिन लीलया ॥ १० ॥ रंभाखंडमिवेभेन । हिमेनेवाब्जिनीवनं ॥ स्त्रीरूपेण कुमारेणाऽ-भाज्जि खेटबलं क्षणात् ॥ ११ ॥
मुक्त्वा मानं गृहीत्वाऽस्त्र-भ्रष्ट्वा न्यस्तह्रियाऽविशन् ॥ कुमारस्त्रीप्रतापात्तु । स्रवदस्रा द्रुतं पुरे ॥ १२ ॥

स्त्रीभ्यो भङ्गह्रिया खेट-पतेर्दर्शयितुं मुखं ॥ अक्षमस्य चरैस्तस्य । स्वरूपेऽथ निवेदिते ॥१३॥ खेदह्रीविस्मयक्रोध-व्याकुलः

गेनरेश्वरः ॥ स्वयं युद्धे समुपस्थो । युतामत्याजिहीर्षया ॥ १४ ॥ युग्मं ॥ क्षुण्णखेटभटा बाणाः । स्त्रीषु पापतयो मम ॥ अपन्ते ही अपेन्द्रं ने-त्यालोच्योपाविशत्पुनः ॥ १५ ॥ द्विपज्जययशःसंवि-भागक्षुद्रस्य भूपतेः ॥ विनाऽप्यनुमतिं मायाा--स्त्रीभिराहूतिनिभिनैः ॥ १६ ॥ आगात्पवनवेगोऽथ । मानीकस्तत्र खेटराट् ॥ तदाहूताश्च तेऽप्यष्टौ । भोगरत्यादयो नृपाः ॥ १७ ॥ भूपश्चंद्रगतिर्भैमो । संबन्धात्सौहृदादिजात् ॥ परेऽपि बहवः खेट-राजास्तत्राऽऽययू रयात् ॥१८॥ त्रिभिर्विशेषकं ॥ प्रायो हि दक्षिणश्रेण्यां । मान्यः गेनरभूभुजां ॥ बहूनां पवनवेग-स्तदाहूत्याऽमिलन्नमी ॥ १९ ॥ समग्रयुद्धसामग्र्या । सैन्यैः प्लावयतो गिरिं ॥ तान् विलोक्य नभोगेन्द्रान् । वार्यैर्नादयतो दिशः ॥ २० ॥ चक्रायुधपुरे क्षोभं । महान्तं जनताखिला ॥ अत्राणेव भिया लेभे । शनाविव समपस्थिते ॥ २१ ॥ तथाहि—

अटन् अटन् प्रवाद्यन्ते । काहला भीषणस्वनाः ॥ सास्त्रा धुंकारवैर्घोरै-र्धावन्ति मुखरा भटाः ॥२२॥ भयकोलाहलाऽऽकीर्ण-मुखा नश्यंति कातराः ॥ तरलाक्ष्यो भियोत्त्रस्ताः । क्रन्दन्ति कटिगाऽर्भकाः ॥२३॥ त्रासप्रोन्मूलिताऽऽलाना । भ्राम्यंत्युच्छृंखला गजाः ॥ भीषणं हेषमाणाश्च । हयाः पातितसादिनः ॥२४॥ भ्रमन्ति भाङ्कृतैर्भीष्मा । गावस्त्रोटितरज्जवः ॥ उत्कटाक्ष्योच्चमुख्यश्च । महिष्यो भयविह्वलाः ॥ २५ ॥ त्रस्यद्भिः प्रतिरथ्यं च । पादाघातैः पशुव्रजैः ॥ कम्प्रोर्वीकैः प्रपात्यन्ते । भीरुस्त्रीपुरुषार्भकाः ॥२६॥ कम्प्राङ्गयो जलहारिण्यः । स्फोटयन्ति घटान् स्फुटं ॥ स्त्रियो जानन्ति नाङ्गेभ्यो । भ्रश्यंत्याभरणान्यपि ॥२७॥ त्रुट्यद्धारच्युताः स्त्रीणां । मुक्ताः पुञ्जीभवंति च ॥ आगच्छति कुमारेन्द्रे । किरु स्वस्तिकपूर्त्तये ॥२८॥ केऽप्याख्यान्ति स्त्रियोऽप्येत-न्नगरं क्षोभयन्त्यहो ॥ वदन्त्यन्ये स्त्रियो नामूः । स्त्रीरूपाः सुभटास्त्विह ॥ २९ ॥ केऽप्याहुः स्वर्विभुर्लोक-पालो वा कश्चिदाययौ ॥ द्विपन्

सकटकोऽन्यस्य । गम्यश्चक्रायुधो न यत् ॥३०॥ ब्रुवते केऽपि किं मुग्धा? । बिभ्यन्तीमे मुधा जनाः ॥ किं वीराः? किं द्विपः? किं चाऽनीकाश्चक्रभृतः पुरः? ॥३१॥ मत्वा चैवं पुरक्षोभं । परचक्रागमात्तथा ॥ क्रुद्धश्चक्रायुधः प्रोचे । क एते रे मुमूर्षवः? ॥३२॥ ततः पवनवेगादी-न्नामग्राहं जगुश्चराः ॥ चक्री प्रोचे पुरे स्वस्य । क्षोभं प्रेक्षेऽहमप्यहो! ॥३३॥ अहो रण्डाऽपि सैन्यं मे-ऽभनक् भापयते पुरं ॥ द्विपः सीमानमाक्राम-न्निति हास्याय जीवितम् ॥ ३४ ॥ चिरादोर्दण्डकंडूर्मे । प्रयातेत्युत्सवोऽथवा ॥ दीप्यतां वा प्रतापाऽग्नि-र्ममैभिद्विपदिन्धनैः ॥ ३५ ॥ ये वा नारीः पुरस्कृत्य । योत्स्यन्ते सुभटब्रुवाः ॥ तैः किं पूरयितुं शक्यं । ममाऽपि रणकौतुकम्? ॥ ३६ ॥ तथाप्येताननात्मज्ञान् । मे प्रवेभायतः प्रजाः ॥ त्रासयामि द्विकप्रायान् । कर्णौ प्रत्याहरामि च ॥ ३७ ॥ इति ध्यात्वा चमूं सज्जी-कर्तुं भेरीमवीवदत् ॥ तन्नादेन भटाः सर्वे । ससज्जू रणकर्मणे ॥ ३८ ॥

यावन्मत्तेभमारोढुं । पूर्वाद्रेः शृङ्गवद्रविः ॥ समुत्तस्थौ नृपस्ताव-न्मूर्द्धतो मुकुटोऽपतत् ॥ ३९ ॥ दन्ती च युगपच्चक्रे । नीतिद्वैतं भयादिव ॥ क्षुतं चाऽभिमुखं जज्ञे । पादो वस्त्रेण चाऽस्खलत् ॥ ४० ॥ तावच्चामरधारिण्याः । प्रापतच्चामरः करात् ॥ अकम्पताऽनिदानेऽपि । छत्रदण्डः पतन्नितः ॥ ४१ ॥ एतानि सचिवा वीक्ष्य । खेटराजं व्यजिज्ञपन् ॥ स्वामिन्नशकुनैरेभी-रणयात्रा न युज्यते ॥४२॥ अवधारय विज्ञप्ति-मध्यास्स्वाऽऽसनमेकशः ॥ खेटेन्द्रोऽपि तथा चक्रे । हितं को हि न मन्यते? ॥४३॥ जगदुः सचिवाः स्वामि-स्तव वीरगणाऽऽकुलं ॥ काऽप्यभग्नं पुरा सैन्यं । द्राग् ययाऽभाञ्जि लीलया ॥४४॥ सा कथं संभवेन्नारी । नारीणां धृतिकारिणी[1] ॥ भटायन्तेऽङ्गनाधाराः । परिवारेऽपि किं स्त्रियः? ॥ ४५ ॥ कथं पवनवेगाद्या । भोगरत्यादयश्च ते ॥ भटंमन्या महाभूपा । नारीमनुसरन्ति च ॥ ४६ ॥ ततोऽयं वज्रसुन्दर्याः । सुरीगेयगुणो वरः ॥ तवाऽभिभूतिवाक्क्रुद्धः । कुमारः

१ अरीणां अधृतिकारिणी

श्रीजयो ध्रुवम् ॥ ४७ ॥ स्त्रिया जित इति ख्यात्या । अदित्सुस्तव दुर्यशः ॥ विद्यया सपरीवारो । भूत्वा स्त्रीवपुराकृतिः ॥४८॥ इहाऽऽगेत्यति वीराहं । चेष्टते क्षत्रजो हि यः ॥ स कथं सहते तादृग्–मौलिकङ्कणवाहनम् ॥ ४९ ॥ त्रिभिर्विशेषकं ॥

अविचार्येति दर्पोक्तं । दुरुदर्कं वचोऽपि हि ॥ चिह्नैरेवं वयं राजन्! । जानीमश्च स्वबुद्धिभिः ॥ ५० ॥ अस्यैवमवदाताऽस्तु । श्रूयन्ते जनगीतिषु ॥ श्रीविशालजयोऽनेनाऽ–रक्षि धीविक्रमैर्नृपः ॥ ५१ ॥ अनेन गिरिमालिन्या–दयो देव्यो वशीकृताः ॥ गिरिचूडसुरः कोल–रूपो जिग्ये च लीलया ॥ ५२ ॥ जितो मलयमालश्च । क्षेत्रपालो बलीयसा ॥ यश्च कल्पौषधीदानै–र्देवतैरार्च्यनेकशः ॥ ५३ ॥ येन पद्मरथो विप्र–रूपेण भटकोटियुक् ॥ जित्वा कौलनृपो बद्धः । कपीकृत्य विडम्बितः ॥ ५४ ॥ क्रीडावामनरूपो यो । जित्वा राजकुमारकान् ॥ कनीः श्रीपतिराजस्य । परिणिन्ये कलाजिताः ॥ ५५ ॥ अक्षोभितो योगिनीभि–र्महाविद्यां प्रसाध्य यः ॥ ताभ्यः प्रसद्य वीरेन्द्रो । वज्रवेगममूमुचत् ॥५६॥ महाज्वाला सकामाक्षा । योगिन्यश्च परीक्षया ॥ यस्मै तुष्टा ददुर्दिव्याऽ–स्त्राणि शक्तीश्च भक्तितः ॥ ५७॥ वज्रकूटगिरिं भङ्क्त्वा । जित्वा वज्रमुखाऽमरं ॥ प्रत्याहार्षीत्प्रियां चन्द्र–गतेर्यः सात्त्विकाग्रणीः ॥ ॥ ५८ ॥ सोऽयं जगत्त्रयीमल्लो । नारीरूपोऽपि दुर्जयः ॥ इति विद्धि नराधीश! । प्रसाद्यं मा प्रकोपय ॥ ५९ ॥ सुताऽन्यस्याऽपि दातव्या । लभ्यो नेदृग्वरस्ततः ॥ मौलिकङ्कणवार्त्तां तां । विस्मार्याऽस्मै प्रदेहि ताम् ॥ ६० ॥ सोऽयं पवनवेगेनाऽऽनीतः स्वार्थाय सार्थनं ॥ परिणीय कनीं याता । स्वराज्ये स्नेहभाक् त्वयि ॥ ६१ ॥ एवं पवनवेगाद्याः । पुराऽपि तव सेवकाः ॥ विशिष्य च भविष्यन्ति । त्वय्येवैकान्तरागिणः ॥ ६२ ॥ भुङ्क्ष्व राज्यं निरातङ्कं । नीतिं चाऽवसरे भजन् ॥ राज्ञामेकान्ततः शौर्यं । श्वापदस्येव नो हितम् ॥ ६३ ॥

इति मन्त्रिगिरः श्रुत्वा । जगाद खचरेश्वरः ॥ अनिष्टाऽऽशङ्किनो यूयं । मयि स्नेहोऽत्र कारणम् ॥६४॥ परनार्या हठाऽऽदत्तां । सहे चेत्तनयां निजां ॥ तदा मे महिमा कः स्यात् । स्वाऽपत्यान्यप्यरक्षतः ॥ ६५ ॥ इयं पवनवेगस्य । सुता विद्याकलोन्मदा ॥ तुच्छेत्यचेष्टत स्त्रीणां । कुतो धीः पारिणामिकी ? ॥ ६६ ॥ स्त्रीरूपः श्रीजयो वाऽस्तु । तथाऽप्यस्मान्न मे भयं ॥ नृपाशाद्भिभ्यतः खेट-चक्रिता मम कीदृशी ? ॥ ६७ ॥ नृदेवाः कीटकप्राया । देव्यो वा कीटिकानिभाः ॥ यदि तेन जितास्तर्त्किं । स ममाऽस्त्राण्यकुण्ठयत् ? ॥ ६८ ॥ शिलाकुट्टाकवत्तेन । भग्नाश्चेत्कतिचिच्छिलाः ॥ नेयता मम दिव्यास्त्र-ततेः सोढाऽनुमीयते ॥ ६९ ॥ नृदेवाःसुरखेटेषु । भारतार्द्धनिवासिषु ॥ दृष्टः कोऽपि श्रुतो वा किं ? । [1]मदाज्ञालङ्घनोन्मदः ॥७०॥ न्यूनं दोष्णोर्बलं क्वाऽपि । विद्या-दिव्यास्त्रजं च मे ॥ अद्राष्टाऽभिभवं किंवा । यन्मां भापयथ द्विपः ॥ ७१ ॥ [2]पाकारिस्तारकारिर्वा । [3]विरंचिर्वा [4]विरोचनः ॥ मुरारिर्वा । [5]पुरारिर्वा चेज्जयामि तथापि तान् ॥ ७२ ॥ चिरं मत्सेवकीभूय । नारीमनुसृताश्च ये ॥ द्विपः पवनवेगाद्या । मच्चक्रं तान् कथं सहेत् ? ॥७३॥ त्रासयन् लीलयाऽप्येतान् निघ्नन् । वा हरिवन्मृगान् ॥ वीक्ष्यः साक्षादहं युक्तं । सतां वाग्डम्बरं न यत् ।७४।

सचिवाः प्रोचिवांसोऽथ । स्वामिंस्तत्त्वमिदं यदि ॥ आकारय तदा सर्वान् । ससैन्यान् खेचरान्निजान् ॥ ७५ ॥ तेजस्व्यप्यसहायो हि । द्विषद्भिरभिभूयते ॥ एक एव भ्रमन्नभ्रे । राहुणा ग्रस्यतेंऽशुमान् ॥ ७६ ॥ अथवा--राकायां ग्रस्यते चन्द्रो । राहुणाऽल्पपरिच्छदः ॥ न तु भूरिपरीवारो । द्वितीयादितिथिष्विह ॥ ७७ ॥ नृपो वक्रोष्टिकां कृत्वा । दोर्विद्याबलगर्वितः ॥ मान्यत्वात्तद्वचो मेने । निःसहायजयार्थ्यपि ॥ ७८ ॥ विधाय रणसामग्रीं । तृतीयेऽहनि योत्स्यते ॥ तावत् सज्जाः प्रतीक्षध्व-

१ मयाऽप्यविजितो द्विपन् इति प्रत्यन्तरे  २ इन्द्रः कार्तिकेयो वा  ३ ब्रह्मा  ४ सूर्यः  ५ ईश्वरः

भिति चाऽऽज्ञापयद् द्विपाय् ॥७९॥ ततोऽयं युगपद्दूतै–रुभयश्रेणिगान्नृपान् ॥ आजूहवत्ससैन्यांस्ते–ऽप्येयुः स्वाम्यर्थतत्पराः ।८०। प्रणम्य खेटराजं ते । शिक्षां संश्रुत्य तस्य च ॥ सत्कृतास्तेन साऽनीकाः । समनात्सुमुदा रणे ॥ ८१ ॥

अथो सङ्केतितदिने–ऽभिषेणयितुमुत्सुकः ॥ खेटेन्द्रः प्रातर्देवार्चा–भुक्त्याद्यं सुक्षणेऽकरोत् ॥ ८२ ॥ विधाय मङ्गलाचारां–स्ततोऽयं खेटचक्रभृत् ॥ युद्धार्हसर्वसामग्र्या । द्विपमारोहदुन्मदम् ॥ ८३ ॥ सच्छत्रश्चामरैर्वीज्य–मानोऽयं निरगाद्गृहात् ॥ सन्न-द्धस्यन्दनैर्युक्तो । विविधाऽऽयुधपूरितैः ॥ ८४ ॥ [१]चक्रवेग [२]महावेग [३]वीरांगद [४]महाबलाः ॥ [५]सुपर्ण [६]सुमुखा [७]नन्द [८]धीरसेन [९]दृढायुधाः ॥८५॥ [१०]चंद्रसेन [११]महासेन–[१२]वज्रानन [१३]महायुधाः ॥ [१४]सुधीर [१५]भानु [१६]भूवीर [१७]शूरवीर [१८]रविप्रभाः ।८६। [१९]वज्राक्षो [२०]वज्रमाली च । [२१]सिंह [२२]श्चंद्रमुखो [२३]ऽशनिः ॥ [२४]महाबाहु [२५]र्महावीर्य–[२६]श्चंद्राभ [२७]श्चंद्रकेतनः ॥ ८७ ॥ इत्यादिनामभिः ख्याता । जगदद्भुतविक्रमाः ॥ द्वादशाऽस्य सहस्राणि । कुमारा विविधाऽऽयुधाः ॥ ८८ ॥ गजाश्वरथशार्दूल–वराहाऽहिमृगादिषु ॥ वाहनेषु विचित्रेषु । मौढेष्वारोढुमुद्यताः ॥ ८९ ॥ आरांधकारसंहार–निभास्तेजस्विनोऽभितः ॥ परिवव्रुरिमं भूपं । भास्वन्तं किरणा इव ॥ ९० ॥ प्रलयाम्भोधरध्वान–तिरस्कारधुरन्धराः ॥ युगपद्भूरितूर्याणां । प्रसस्रुर्नभसि स्वनाः ॥९१॥ भटास्तत्पुरवास्तव्याः । सर्वे चाऽन्यपुरागताः ॥ निर्ययुर्हेलिकायेव । युद्धेऽहंपूर्विकायुजः ॥ ९२ ॥ मातरः प्रणयिन्यश्च । वीराणां जयहेतवे ॥ उपयाचितलक्षाश्च । देवेभ्यः प्रतिशुश्रुवुः ॥ ९३ ॥ मातरश्च स्वसारश्च । प्रियाश्च स्नेहला व्यधुः ॥ मङ्गलानि विचित्राणि । वीराणां विजयश्रिये ॥ ९४ ॥ अम्बा भालेषु शूराणां । माङ्गल्यतिलकान् व्यधुः ॥ इव भाग्यश्रियां रेखा । गाद्धिका वा जयश्रियाम् ॥ ९५ ॥ मङ्गलानि विधायाऽऽजौ । यियासुं स्वसुतंप्रति ॥ काप्यम्बा स्माह तत्पादौ । स्नपयन्ती मुदश्रुभिः ॥ ९६ ॥

वीरपुत्र्यस्म्यहं वीर–पत्नी वीरस्वसाऽपि च ॥ तथा युध्यस्व वत्स? त्वां । यथा वीरप्रसूरपि ॥ ९७ ॥ युग्मं ॥ काऽप्युवाचाऽसि वीरस्य । पुत्री पत्नी स्नुषा प्रभुः ॥ दिष्ट्या तु याऽद्य भूयासं । भ्रातर्वीरस्वसाऽप्यहम् ॥९८॥ रणाय गच्छता भर्त्रा । श्लिष्टाऽप्याहाऽथ तं प्रति ॥ प्राणेभ्योऽपि प्रियाऽसीति । यदवोचः सदाऽपि माम् ॥९९॥ भावि तत्सत्यमेवेश ! । प्राणत्यागेऽपि संगरे ॥ यतो वह्न्यध्वनाऽऽगत्य । द्राक् त्वां स्वर्गेऽप्यहं भजे ॥१००॥ युग्मं॥ काचित् स्माहाऽसपत्ना गे–ऽभवन् भोगाः प्रियाऽथ तु ॥ जयलक्ष्म्याप्सरोभिर्वा । भवित्री ससपत्नता ॥ १ ॥ काऽप्यवादीन्मम स्नेहा–न्मा भूः प्रिय रणेऽलसः ॥ जये प्राणक्षये वाऽह–मस्मि संनिहितैव यत् ॥ २ ॥ यामीत्युक्ते प्रियं काचि–दूचे किं भाषसेऽनृतं ॥ न निर्यातः कदाचिन्न । त्वं निर्यास्यासि मे हृदः ॥ ३ ॥ काऽप्यूचेऽप्सरसो मेश । भाक्षीर्मन्नाधिका हि ताः ॥ जयश्रीस्त्वधिका विश्व–स्तुत्या तत्त्वां [1]समां भजेः ॥४॥ [2]किं न मत्तोऽधिका नाथ । कीर्त्तिरप्सरसोऽथवा? ॥ रणे यासि तदर्थी मां । त्यक्त्वा यदिति काऽप्यवक् ॥५॥ पत्याऽऽश्लिष्टा जगौ काचित् । स्नेहं दर्शयसेऽधुना ॥ जयलक्ष्म्याऽप्सरोभिर्वा । वृतो मामुपलक्षयेः ॥ ६ ॥ कुंभिकुंभस्थलोद्भिन्न–मौक्तिकान्यानयेः प्रिय ! ॥ यथा तैः स्वस्तिकान् कुर्वे । जये ते काचिदित्यवक् ॥ ७ ॥ इत्यादिवादिनीर्वीराः । संस्थाप्य स्त्रीः कथञ्चन ॥ यश एव पुरस्कृत्य । सहोत्साहा विनिर्ययुः ॥ ८ ॥

सेनानीश्चण्डवेगोऽथ । भटकोटिसमन्वितः ॥ निरगात् सिंहयुक्तेन । रथेनाऽरिद्रुमानलः ॥ ९ ॥ [1]वज्रकंठ [2]स्तडिद्वेगो । [3]भानुकेतु [4]महाभुजः ॥ [5]नरवीरः [6]कलाचंद्रः । [7]कोशलः [8]पवनां [9]गदौ ॥ १० ॥ [10]हरिवीरो [11]महाकीर्त्तिः । [12]सुयशा [13]

१ मया सह   २ केन प्रत्यन्तरे

नंदनः [१४]पृथुः ॥ [१५]बलवीरः [१६]कृतांतास्यो । [१७]धूमकेतुः [१८]सुभीषणः ॥११॥ [१९]धूमाक्षाद्याश्च खेटेन्द्रा । गजयुक्तै रथैर्भटाः ॥
विनिर्ययुः परोलक्षा । दुर्लक्षाः कातरैर्नृपाः ॥ १२ ॥ त्रिभिर्विशेषकं ॥ [१]मदनः [२]कासरः [३]काम-केतु [४]र्भीमो [५]महायशाः ॥ [६]प्रताप
[७]स्तपनो [८]ऽक्षामो [९]रमणः [१०]कामनन्दनः ॥ १३ ॥ इत्यादयो नृपाः सिंह-युक्तैर्द्राग् निर्ययू रथैः ॥ कुर्वाणा लक्षशो वीर-गणा-
नामपि भापनम् ॥ १४ ॥ [१]प्रह्लाद [२]श्चपल [३]श्चण्ड-वेगः [४]शत्रुदमोऽ [५]कुशः ॥ [६]गदाधरो [७]महापाणिः । [८]सुवक्त्रो [९]वज्रकेतनः
॥ १४ ॥ एतेऽन्ये च परोलक्षा व्याघ्रयुक्तै रथैर्नृपाः ॥ निरीयुः प्रतिवीरेषु । तृणीयन्तो महौजसः ॥ १५ ॥ [१]सागरः [२]क्रोधनो
[३]भीष्मो । [४]वज्रायुध [५]शतायुधौ ॥ [६]रणचन्द्रो [७]महाशूरः । [८]सुतेजाः [९]कुलिशायुधः ॥१६॥ [१०]पूर्णचन्द्रः [११]महास्त्राद्या । वाजि-
युक्तैर्महारथैः ॥ निरगुर्लक्षसंख्याः प्राग् । रणोत्साहोच्छ्वसत्तनु ॥ १७ ॥ [१]बलः [२]कामाऽङ्कुरो [३]धूम-माली [४]सिंहः [५]शतायुधः ॥
[६]वज्रमाली [७]महाचक्रो । [८]विजय [९]श्चक्रधार्यपि ॥ १८ ॥ [१०]दुरन्त [११]दुर्धराद्याश्च । खेटेन्द्राः सपरिच्छदाः ॥ समारूढा विमानेषु ।
महामाना निरैयरुः ॥ १९ ॥ [१]गजसिंह [२]गजानन्द-[३]गजदेव [४]गजप्रभाः ॥ [५]गजवीर [६]गजप्रीति-[७]गजकेलि [८]गजध्वजाः ॥२०॥
[९]गजवेग [१०]गजाधार-[११]गजसेन [१२]गजाननाः ॥ [१३]गजविक्रममुख्याश्च । लक्षशो गजवाहनाः ॥ २१ ॥ [१]हयवेग [२]महावाजि
[३]महाऽश्व [४]हयवाहनाः ॥ [५]हयवीर [६]हयानन्द-[७]हयसार [८]हयोदयाः ॥ २२ ॥ [९]अश्ववीराऽ [१०]श्वसेनाह्व-[११]अश्वानन्दाऽ [१२]श्ववि-
क्रमाः ॥ [१३]हयसेन [१४]हयस्त्राद्या । हयारूढाश्च लक्षशः ॥ २३ ॥ [१]सिंहः [२]सिंहगतिः [३]सिंह-विक्रमः [४]सिंहवाहनः ॥ [५]सिंहवीरो
[६]महासिंह । [७]सिंहास्त्रः [८]सिंहकेसरी ॥ २४ ॥ [९]सिंहकेतुः [१०]सिंहमाली [११]नृसिंह [१२]सिंहकेतनः ॥ [१३]सिंहसेनादयश्चाजौ ।
प्राचलन् सिंहवाहनाः ॥ २५ ॥ युग्मं ॥ [१]व्याघ्रमाली [२]महाव्याघ्र-[३]व्याघ्रास [४]व्याघ्रविक्रमाः ॥ [५]व्याघ्रसेनादयश्चाऽऽशु । प्रचे-

लुव्यर्ाघ्रवाहनाः ॥ २७ ॥ [१]शार्दूलः [२]शार्दूलाख्यश्च । [३]शार्दूलानन्द [४]केतनौ ॥ [५]शार्दूलविक्रमाद्याश्च । चेलुः शार्दूलवाहनाः ।२८॥ वराहवाहनाः केचित् । केचित्पन्नगवाहनाः ॥ लुलायवाहनाः केचित् । केचिच्छरभवाहनाः ॥ २९ ॥ वाहनैर्विविधैरेव । विचित्रायुधकेतवः ॥ प्रचेलुः कोटिशः खेटाः । पत्तयश्च रणोत्सुकाः ॥ ३० ॥ एवं परिवृतः खेट–कोटिभिः खेचरेश्वरः ॥ अवजानन् मदावेशा–ज्ञातान्यशकुनानि सः ॥३१॥ सैन्यकोलाहलैराशा । वाद्यनादैश्च गर्जयन् ॥ प्रतिप्रत्यर्थिचक्रं नृ–चक्री चक्रायुधोऽचलत्।३२। ॥ युग्मं ॥ उत्साहाद् द्रुतमागत्य । सायं स्वपुरसीमनि ॥ कुमारकटकाऽदूराऽऽसन्ने ॥ तस्थौ स नीतिवित् ॥ ३३ ॥

चक्रायुधमथायातं । सचक्रं खेटचाक्रिणं ॥ निवुध्य श्रीजयस्याऽपि । खेचराः कटकेऽमिलन् ॥ ३४ ॥ अक्षौहिण्यः सहस्रश्च । कटके खेटचाक्रिणः ॥ सन्मिलिताः कुमारस्य । सैन्ये च शतमेव ताः ॥ ३५ ॥ अक्षौहिणीप्रमाणं चेदं—स्यात्सेनाक्षौहिणी नाम । खांगाष्टैकाद्विकैर्गजैः (२१८७०) ॥ रथैश्चैभ्यो हयैस्त्रिघ्नैः (६५६१०) । पञ्चघ्नैश्च पदातिभिः (१०९३५०) ॥ ३६ ॥ सेनाकलकलत्रस्त–यानयुग्यहयः किल ॥ अपतत्पश्चिमाऽम्भोधौ । भानुमान् गगनाऽध्वमुक् ॥३७॥ नारीरूपः कुमारोऽथाऽ–नुमत्या खेटभूभुजां ॥ सेनान्यं वज्रवेगाह्वं । न्यास्थत्पवनवेगजम् ॥ ३८ ॥ जजागरुरथो धीराः । सैन्ययुग्मेऽस्त्रजागरां ॥ शस्त्रपूजोत्सवाद्यैः प्राक् । शस्त्रिणां च कथादिभिः ॥ ३९ ॥ शस्त्राण्येव जयस्याजौ । साधनेपु प्रधानतां ॥ वरीभ्रतीति पट्टेषु । चक्रादीनि न्यवीविशन् ॥ ४० ॥ तथाहि—[१]चक्र [२]खड्गो [३]धनु [४]वज्रं । [५]त्रिशूलं [६]कुन्त [७]तोमरौ ॥ [८]मार्क्षिका [९]परशुः [१०]शक्ति–[११]भंडत्मालाह्व [१२]भल्लिके ॥ ४१ ॥ [१३]क्षुरिका [१४]मुशलं [१५]सीरं । [१६]तरवारि [१७]गदा [१८]घनाः ॥ [१९]मुष्टि [२०]पट्टिस [२१]दुस्फोट–[२२]मुद्गराश्च [२३]कखालिका ॥ ४२ ॥ [२४]कणपः [२५]कम्पनः [२६]पाश–[२७]गुलिका [२८]लुण्टि [२९]शङ्कवः ॥ [३०]ग्रह

[११]गोफण [१२]कुद्दालाः । [१३]कर्त्तरी [१४]करपत्रिके ॥ ४३ ॥ [१५]त्रूस [१६]यष्टी च षट्त्रिंश-दित्यस्त्राणि सगौरवं ॥ वारिभिर्देवतानीचा-ऽसिस्नपन् शुचिभिर्भटाः ॥ ४४ ॥ आलिप्य चंदनैश्चारु-पुष्पैश्चार्चंस्तदग्रतः ॥ धूपोत्क्षेपं नदद्वाद्यं । गीतनाट्यानि च व्यधुः ॥४५॥ कङ्कटास्त्रशिरस्त्राण-पत्तीभरथवाजिनां ॥ व्याघ्रादीनाञ्च यानानां । संस्काराद्यैरगान्निशा ॥ ४६ ॥ शूरान् शूराभिधो मित्रा-ण्दा-ऽऽजिकौतुकमिच्छतः ॥ द्रष्टुं प्रीणयितुं चैत-दुदयाऽद्रिशिरोऽभ्यगात् ॥ ४७ ॥ [१]भेरि [२]मर्द्दल [३]कंसाल-[४]मृदङ्ग [५]तलिमास्तथा ॥ [६]भम्भा [७]ढक्का [८]हुडुकश्च। [९]झल्लरी [१०]शङ्ख [११]काहलाः॥४८॥ [१२]पटहाः [१३]खरमुख्यश्च । [१४]भुङ्गला [१५]मरकान्यपि [डमरान्यपि]॥ [१६]करटाः [१७]पानका [१८]भान-कादिकान्यप्यनेकधा ॥ ४९ ॥ [१९]त्र्यम्बक [२०]दर्द्दरी [२१]निस्वा-नादिमान्यप्यनेकशः ॥ निनेदू रण-तूर्याणि । विरुथिन्योर्द्वयोरपि ॥ ५० ॥ मेरुक्षुब्धपयोधीनां । प्रलयाऽनिलवार्मुचां ॥ वज्राहतगिरीन्द्राणामिव नादेन तद्भुवा ॥५१॥ चक्षुभुवार्द्धयस्तस्य ध्वानैः प्रोच्छलदम्बवः हरित्करटिनस्त्रेसु महाशैला विवेपिरे ॥ ५२ ॥ भुवोभ्रंशभिया शेषः । चकम्पे नागरा-ऽपि॥कच्छपोऽपि दृढीकृत्य [नादैरिव च सैन्ययोः॥कृच्छ्रेण कम्पितः शेषो ॥ प्रत्यन्तरे] निजे पृष्टे बभार गाम्॥५३॥जगर्ज्जुर्हरितः सर्वा । निनेदुर्गिरिकन्दराः ॥ पुस्फोटेव नभः पृथ्वी । सर्वतोऽस्रंसतेव च ॥ ५४ ॥ दरीषु विविशुः क्रूराः । शार्दूलशरभादयः ॥ भीता-स्तथा जवाद्दूरं । पातालेषु महोरगाः ॥ ५५ ॥ अभांक्षुः सर्वतस्त्रस्ता । वनद्रून् वन्यसैरिभाः ॥ व्यन्तरादिसुराश्चागु-र्दूराद्रणदिदृ-क्षया ॥ ५६ ॥ स्फुर्जता तेन नादेनाऽ-नीकिन्योरुभयोरपि ॥ स्फीतोत्साहोच्छ्वसद्देहाः । ससज्जुः [१]समिते भटाः ॥ ५७ ॥ [२]शारीरारोपयन् वीरा । निक्वणत्किङ्किणीगणाः ॥ पीतमद्योन्मदेभेषु । पक्षानिव महाद्रिषु ॥ ५८ ॥ बबन्धुः सर्वतोधारान् । ख-

[१] संग्रामे [२] शारीः कुञ्जर्याणि इत्यनेकार्थः

ज्ञान् दन्तेषु दन्तिनां ॥ दन्तानेव च केषाश्चि–त्तेषां लोहैरशस्त्रयन् ॥ ५९ ॥ वज्रभास्वरसन्नाह–वृतैः करटिनां करैः ॥ मुद्गरान्
ग्राहयामासुः । कुन्तभल्लादिकानपि ॥६०॥ गजानां पार्श्वयोर्बद्ध–लोहपञ्जरमध्यगाः ॥ तस्थुर्धनुर्धृतो वीरा । वटशाखास्विवोरगाः ।६१।
सन्नद्धैः पृष्टगैर्वीरा–धोरणैः सिन्धुरा दधुः ॥ श्रियं सपक्षभूध्राणां । शीर्षासीनगरुत्मताम् ॥६२॥ स्फुरद्घण्टारणत्कारान् । रणच्चरण-
नूपुरान् ॥ गजानदंशयन्नेवं । [1]वीराहारेद्धनर्मभिः ॥ ६३ ॥ वाजिनः प्रक्षरोपेताः । सन्नद्धा रूढसादिनः ॥ क्वणत्किङ्किकिणयो
बभ्रुः । सगोविन्दसुपर्णताम् ॥ ६४ ॥ चपलाः प्रोच्छलन्तश्च । बभ्रुः प्रक्षरिता हयाः ॥ नलिनीदलसेवालाऽऽवृता वार्ध्यूर्मयः किल
॥ ६५ ॥ केऽप्यरोचकिनो नागान् । हयांश्च समनेहयन् ॥ भूपाः स्वैनैव वाञ्छन्तो । यानरक्षां स्वतोऽधिकाम् ॥ ६६ ॥ केचित्स-
न्नह्यमानांश्च । गजानूर्जस्विगर्जितान् ॥ वाजिनो हेपमाणांश्चा–नर्चुः शकुनमानिनः ॥ ६७ ॥ चर्मभिर्वर्मभिश्चाऽपि । दृढीचक्रू रथान्
भटाः ॥ क्रीडागेहानिवाऽऽयान्त्या । विलासाय जयश्रियाः ॥६८॥ सारथिभ्यो ददुः केचित् । सन्नाहान् स्वाधिकदृढान् ॥ भवन्ति
रथिनां युद्धे । जयप्रतिभुवो ह्यमीः ॥६९॥ शीर्षेषु न्यस्तशीर्षत्राणाः । सुभटाः कङ्कटोत्कटाः ॥ यमेनेव यथा वीराः । प्रहिताः स्वा
विरेजिरे ॥ ७० ॥ ममुर्वर्मसु वीराणां । मानेनैव कृतेष्वपि ॥ केषांचित्संगरोत्साहो–च्छ्वसितानि वपूंषि न ॥ ७१ ॥ रणोत्साहाद्
द्रुतं केचित् । सन्नद्धा वीरपुङ्गवाः ॥ प्रतीक्षमाणा मित्राणि । तावच्छस्त्रैरशिश्रमन् ॥ ७२ ॥ केचित् सिंहान् महाकायान् । सर्पांश्च
समनाहयन् ॥ तौ हि सप्रक्षरोत्पक्षा–विति सत्यापनाय नु ॥ ७३ ॥ अदंशयन् यथौचित्यं । वाहनान्यपराण्यपि ॥ शार्दूलकिरि-
भल्लूकाऽऽदीनि खेचरपुङ्गवाः ॥ ७४ ॥ विचित्राऽङ्कान् ध्वजस्तम्भान् । योधा यानेष्वदद्दढन् ॥ दूराद् ज्ञापयितुं स्वं यत् । स्फुटा

[1] संग्रामे

एव महाभटाः ॥७५॥ शस्त्रैरपूपुरन् वीरा । रथान् बहुविधैर्भटाः ॥ रणाऽध्वनि व्रजतां हि । तान्येवाऽक्षयशम्बलम् ॥७६॥ अथवा शस्त्रैरसज्जयन् पूर्णान् । रथकासरवेसरान् ॥ वीराणां दानवीरत्वे । शस्त्रदानं हि पुष्कलम् ॥७७॥ वीरा लातुं सामित्युष्ट्रान् । कङ्कटाद्यैरपूपुरन् ॥ दानवीरत्वमप्याप्तुं । तद्दानैः सन्नुस्तदा ॥ ७८ ॥ अनुगैरर्प्यमाणान-प्यजहुः केऽपि कङ्कटान् ॥ तैर्हि वीराधिवीरत्वं । स्वस्य रङ्गे कलङ्क्यते ॥ ७९ ॥ अस्त्राण्यहासिषुः केचि-च्छोभायै प्राग्धृतान्यपि ॥ पादमुष्टिनखैरेव । गर्वात्स्वस्यास्त्रिमानिनः ॥ ८० ॥ केऽप्यस्त्राणि ललुर्नैवा-ऽसमवीरव्रतोन्मदाः ॥ प्रतिवीरान् हानिष्याम-स्तेषामेवाऽऽयुधैरिति ॥८१॥ आरोहितान्महायोधा । गजवाजिरथादिकान् ॥ अनुचालयितुं सज्जी-चक्रिरे तान् बहूनपि ॥ ८२ ॥ प्राच्यश्रान्त्यादिना माऽभू-द्रणविघ्नोऽनया धिया ॥ महायुद्धरसस्तेषा-मेकैकेन हि पूर्यते ॥८३॥ युग्मं ॥ जलपूर्णा [1]लुलायास्ते । सज्जिता जङ्गमाः प्रपाः ॥ अत्रुटद्रणतृष्णानां । माभूत्तृष्णाऽन्तरं त्विति ॥ ८४ ॥ खाद्यस्वाद्यादिभिः शूराः । शकटादीनसज्जयन् ॥ स्वयमक्षुधिता मृत्योः । क्षुधं हन्तुं तु योद्धृभिः ॥ ८५ ॥ औषधीभूतगोणीका-नासिसज्जन् भटा वृषान् ॥ स्वपरोपकृतेः सन्तः । स्मरन्त्येवोत्सुका अपि ॥ ८६ ॥ न लभ्यते या विविधैस्तपोजपै-र्गतिर्न मुद्रासनयोगसाधनैः रणानले स्वामिहिताय ये जना-स्तनाय वा यान्ति हुतासवो क्षमी ॥८७॥ नटानामिव किं तेषां । विविधैरायुधश्रमैः ॥ ये रणे ददते पृष्टं । द्विषां वंशस्य चाऽयशः ॥ ८८ ॥ नास्ति [2]सङ्ख्यसमं तीर्थ-मुभयत्राऽपि सत्फलं ॥ श्रीर्यशो जीवतां यत्र । मृतानां स्वःसुखं द्रुतम् ॥ ८९ ॥ क्षणं विद्योतते दीपो । दिने भानुर्विधुर्निशि ॥ युगान्तस्थायिनी कीर्त्ति-र्दीप्यते त्वाजिशौर्यजा ॥ ९० ॥ एभिरुत्साहवीरत्व-स्वामिभक्तिप्रजाहितैः ॥ विघ्नान्निवारयिष्यन्ति । देवा

१ जलैः पूर्णा महिषाः   २ युद्ध

दास्यन्ति वो जयान् ॥ ९१ ॥ उपश्लोकयतो वीरा–निति वैतालिकानमी ॥ दानैरपिप्रिणन्निष्टैः । स्वाभीष्टार्थाभिधायिनः ॥९२॥ इति वैतालिकप्रोक्तैः । पूज्याशीःशकुनादिभिः ॥ योधा युध्यौत्सुकायन्त । द्विगुणोत्साहशक्तयः ॥९३॥ नामग्रहमथो कांश्चि न्नृपस्त्रीकटके भटान् ॥ कीर्त्तयामि महाकीर्त्तीन् । रणसंवर्मणोद्यतान् ॥ ९४ ॥ वज्रवेगबलेशाद्याः । सिंहयुक्तरथस्थिताः ॥ रणैक-रसिका वीराः । समन्तात्सुः सहस्रशः ॥ ९५ ॥ अखर्वबलगर्विष्ठाः । खेटाश्चन्द्रोदयादयः ॥ व्याघ्रयुक्तरथासीनाः । सन्नेहुः सङ्गरे मुदा ॥ ९६ ॥ खेटाः पवनवेगाद्या । गजयुक्ते रथैर्द्रुतं ॥ ससज्जू रणकृत्याय । तृणीयन्तो द्विषद्भटान् ॥ ९७ ॥ भोगरत्यादयो भूपा । वाजियुक्तरथेषु च ॥ आसीनाः शस्त्रपूर्णेषु । समभूवन् रणोत्सुकाः ॥ ९८ ॥ चन्द्रगत्यादयश्चाऽपि । भूभुजः सपरिच्छदाः ॥ साभिमाना विमानेषु । समारोहन् रणोत्सुकाः ॥९९॥ [1]श्रीधरः [2]श्रीपतिः [3]कान्तो [4]–ऽरिजयो [5]दत्त [6]विक्रमौ ॥ [7]नन्दा [8]नन्दौ [9]नरव्याघ्रो–[10]जयो [11]विजयसञ्ज्ञकः ॥३००॥ [12]मणिचूडा [13]ऽचलाद्याश्च । [14]सन्नद्धगजवाहनाः ॥ मुदा महोत्सवायेव । रणाय समवर्मयन् ॥ १ ॥ गजवाजिहरिव्याघ्र–शार्दूलमहिषादिकान् ॥ सन्नाहितान् यथौचित्यं । वाहनान्यपराण्यपि ॥ २ ॥ सहस्र-लक्षसङ्ख्याश्च । प्रत्येकं खेचरेश्वराः ॥ संवर्मिताः समारुक्षन् । श्रीकान्तश्रीधरादयः ॥३॥ श्रीजयोऽथ कुमारेन्द्रः । स्त्रीरूपो मोह-यन् द्विषः ॥ स्नात्वा श्रीजिनमभ्यर्च्य । स्तुत्वा नुत्वा च भक्तितः ॥ ४ ॥ परमेष्ठिनमस्कारं । स्मृत्वा च ध्यानलीनहृत् ॥ पर्यधा-द्वज्रसन्नाहं । सर्वतो मणिभास्वरम् ॥ ५ ॥ तस्याऽङ्गे सङ्गरोत्साहा–दुच्छ्वसिषु वर्म तत् ॥ शुशुभे गाढतां प्राप्तं । किल हैमत्व-गन्तरम् ॥ ६ ॥ लोहनद्धमणीदीप्रं । शिरस्त्रं च शिरस्यधात् ॥ मेरुशृङ्गमिवाऽभाच्च । सविद्युद्वारिदैर्वृतम् ॥७॥ अक्षय्यशरतूणीरा-ववध्नात्पार्श्वयोर्द्वयोः ॥ आददे वज्रपृष्टं च । धनुः सव्येन पाणिना ॥ ८ ॥ उक्तयुद्धार्हसामग्र्या । सज्जितं मत्तसिन्धुरं ॥ अञ्जना-

गिरिसङ्काश-मारोहद्राजकुञ्जरः ॥९॥ सन्नाहितगजारूढैः । सन्नद्धैः शूरपुङ्गवैः ॥ वव्रे पञ्चशतीसङ्ख्यैः । स्त्रीरूपैस्तैश्च शोभितः ॥१०॥ सज्जीभूतो युधेऽथाऽस्य । कटको भटकोटिभृत् ॥ समन्तात्सकलस्तस्था-वागत्य परिवृत्य तम् ॥ ११ ॥ विचित्रवाहनस्थेन । विविधायुधकेतुना ॥ वृतः सैन्येन तेनाऽयं । कुमारक्षितिपोऽशुभत् ॥ १२ ॥ सुराद्रिरिव संयुक्तो । गजदन्ताचलादिभिः ॥ वनेन भद्रशालेन । सर्वतः परिवेष्टितः ॥ १३ ॥

अथ चक्रायुधः खेट-चक्री चक्रेऽर्हदर्चनां ॥ नुतीः स्तुतीश्च विधिना-ऽस्मार्षीच परमेष्ठिनम् ॥ १४ ॥ मणिदीप्रसशीर्षण्य-सन्नाहावृतविग्रहः ॥ सोऽभात्ताराघृतो राहु-च्छायांऽतःस्थांऽशुमानिव ॥ १५ ॥ निषङ्गद्वयरोचिष्णु-पार्श्वः कोदण्डभृत्करः ॥ युद्धार्हं सज्जितं श्वेत-गजमारोहदिन्द्रवत् ॥ १६ ॥ परिवव्रुः कुमारास्तं । सन्नद्धा बहुवाहनाः ॥ महाजम्बूतरुं मध्यं । जम्ब्वो वलयगा इव ॥ १७ ॥ सहस्रैः स कुमाराणां । वृतो वीरैश्च लक्षशः ॥ सैन्येन वाजिसज्जेन । चतुरङ्गेण सर्वतः ॥ १८ ॥ बभ्राजे वेष्टितो जम्बू-द्वीपमध्यगमेरुवत् ॥ वार्द्धिनेवेभवाज्यादि-यादःकल्लोलमालिना ॥ १९ ॥ संनद्धौ नृपखेटेन्द्रौ । तौ स्वस्वानीकमध्यगौ ॥ रेजाते धातकीखण्ड-मेरू इव वनावृतौ ॥ २० ॥ अर्थिभ्यः प्रार्थितं दानं । ददतौ सुरशाखिवत् ॥ सर्वतेजस्विनां तेजो । विलुम्पन्तौ खरांऽशुवत् ॥ २१ ॥ दुरीक्ष्योग्रमहामूर्त्ती । कल्पान्तसमयार्कवत् ॥ पश्यन्तौ दूरतोऽपि स्वान् । स्निग्धदृष्ट्या निजान् भटान् ॥ २२ ॥ प्रतिवीरांस्तृणीयन्तौ । महौजस्कौ मृगेन्द्रवत् ॥ शत्रुपुल्कानिभा दृष्टीः । क्षिपन्तौ दारुणा रुचः ॥ २३ ॥ कुमारनृपखेटेन्द्रा-वन्योन्याभिमुखं ततः ॥ सच्छत्रचामरौ स्वस्व-सैन्यांऽतर्गौ प्रचेलतुः ॥ २४ ॥ अयुध्यमाने युक्तास्ते । दीने नश्यति पेतुपि ॥ प्रहर्त्तव्यं न चैवेति । तयोश्च समयोऽभवत् ॥ २५ ॥

समपङ्क्तिस्थितौ स्वस्व-स्वामिनोराज्ञयाऽथ तौ ॥ दुर्धरैर्वाद्यनिर्घोषैः । प्रेरितौ कटकावपि ॥२६॥ आहत्य स्फोटयन्तौ क्ष्मां । मुद्गराभैः करिक्रमैः ॥ दारयन्तौ शताङ्गानां । संक्रीडचक्रनेमिभिः ॥ २७ ॥ बाढं निर्घोषयन्तौ च । वाजिक्रमगदाहतैः ॥ तुदन्तौ भूरिभारेण । सहस्रं फणिराट्फणाः ॥ २८ ॥ कमठं पृष्ठकठिनं । नयन्तौ प्राणसंशयं ॥ दाढां बाढं वराहस्य । रुजन्तौ सुदृढामपि ॥ २९ ॥ कदाप्यप्राप्तमाप्तुं तौ । मिथः सङ्गमजं सुखं ॥ अन्यो न्यमभ्यधावेता-मिव पूर्वापरार्णवौ ॥ ३० ॥ अहंपूर्विकया युद्धौत्सुक्याद्विस्फुट्य तद्भटान् ॥ बहिर्भूत्वाग्रतो यातः । प्रतीहारा न्यवारयन् ॥ ३१ ॥ चेलुः सैन्योद्धताः पूर्व-रणौत्सुक्यादिवाग्रतः ॥ द्विषदान्ध्यप्रदाः प्रोच्चैः । सुभटा इव पांसवः ॥ ३२ ॥ वराहहरिशार्दूल-करिव्याघ्रमहादिभिः ॥ हयाहिकपिसारङ्ग-शिखिमेषद्रुमादिभिः ॥ ३३ ॥ विविधैरुपलक्ष्योप-लक्ष्य दूरेऽपि केतुभिः ॥ वृण्वन्तः सुभटा नाम-ग्राहं प्रतिभटान् स्फुटम् ॥ ३४ ॥ प्रोच्चैराह्वयमानांस्तां-श्चिरप्राप्तान् नु बान्धवान् ॥ सोत्कण्ठमुभये प्रोच्चै-रग्रसैन्या मिथोऽमिलन् ॥ ३५ ॥

परस्परमथो नागाः । सपक्षा इव पर्वताः ॥ [1]तार्क्ष्यास्तार्क्ष्या इव रथा । भूविमाना इवाऽङ्गिनः ॥३६॥ ते च युग्यैर्गजव्याघ्रतुरगाद्यैर्मिथः समाः ॥ तथैव सिंहशार्दूल-किरिव्याघ्रादिवाहनाः ॥ ३७ ॥ विमानाश्च महावासा । इव व्योमगमा द्रुतं ॥ द्वयोरपि वरूथिन्यो-र्मिथोर्मिमिलुराजये ॥ ३८ ॥ तदाभ्रस्फोटकैः पृथ्वी-कम्पनैर्दिक्प्रतिस्वनैः ॥ चलकैरचलादीनां । गिरिगह्वरनादिभिः ॥ ३९ ॥ दुर्द्धरैर्भैरवैर्ध्वानै-रणतूर्यगणोऽनदत् ॥ भम्भाभेरीमहाढका-हुडुककाहलादिकः ॥ ४० ॥ युग्मं ॥ ततो ढुढौकिरे योद्धुं । प्रवीरा विविधायुधैः ॥ औत्सुक्यात्क्षुधिताः प्रेता । इव मांसानि भक्षितुम् ॥ ४१ ॥ अस्माकं स्वामिनामेते । मा कार्पुर्विघ्नमाहवे ॥

[1] गरुडा अश्वाः

इतीवाऽऽच्छादयन् [1]पांशून् । महेभा मदवारिभिः ॥४२॥ भान्ति ध्वजा योधयाने-ष्वनिलौघैश्चलाचलाः ॥ नृत्यन्तीव निजस्वामि रणशौर्यप्रमोदिनः ॥ ४३ ॥ अन्योन्यं भटकोटीना-माह्वानैर्गर्जितोर्जितैः ॥ भुजास्फोटोत्कटैर्हासै-र्बूत्कारैर्हकनादिभिः ॥ ४४ ॥ युध्यमानैर्मिथः क्रोधाऽ-मर्षदुर्द्धर्षभीषणैः ॥ सिंहव्याघ्रादिभिर्मुक्तैः । सिंहनादादिभिः स्फुटैः ॥ ४५ ॥ कोटिशो गजगर्जाभि--र्दुर्द्धरै-र्हयहेषितैः ॥ चीत्कारै रथचक्राणां । खड्गाद्यायुधखात्कृतैः ॥ ४६ ॥ धनुरास्फालनस्वानै-र्जयसारारविणोच्चयैः ॥ द्रष्टॄणामट्टहासौघैः । सहर्षं करतालिकैः ॥ ४७ ॥ हरिद्गिरिदरीस्फुर्जत्प्रतिनादैः प्रसृत्वरैः ॥ त्रसद्वनपशुव्राता-क्रन्दरावैश्च भैरवैः ॥ ४८ ॥ [2]स्फायमा-नोऽतिनिर्घोषो । वाद्यलक्षोद्भवोऽभितः ॥ ब्रह्माण्डस्फोटसदृशो । रोदसोरुदरम्भरिः ॥ ४९ ॥ विदधे जगतां क्षोभं । सुराणामपि भैरवः ॥ आह्वानमिव कुर्वाणो । रणेक्षाकौतुकार्थिनाम् ॥५०॥ सप्तभिः कुलकं ॥ आगच्छाऽऽगच्छ रे तिष्ठ । तिष्ठ युध्यस्व वीर ! हे ॥ नश्य नश्याऽऽशु वा मूढ ! । तिष्ठन्नसि हतो हत ॥५१॥ त्यज त्यजाऽऽयुधं जीव-जीव वक्त्रे तृणं दधन् ॥ गिरा माद्यसि किं मूढ ! । पाणिभ्यां दर्शयोर्जितम् ॥ ५२ ॥ विशन् लज्जसे रे शत्रो । ध्रुवं रुष्टोऽद्य तेऽन्तकः ॥ इत्यादिदारुणाः शब्दाः । प्रावर्त्तन्त भटे भटे ॥५३॥ त्रिभिर्विशेषकं ॥ आयुधानि विचित्राणि । ववृषुः सुभटा मिथः ॥ उत्पातसमयाऽम्भोदाः करकानिव समन्ततः ॥५४॥ प्रासीसरन्महावीराः समन्ताद्बाणधोरणीः ॥ सर्वतः प्रसरद्धारा । नव्या धाराधराः किल ॥५५॥ अभ्रेऽस्त्राणि विचित्राणि । समुत्पे-तुश्चमूद्वयात् ॥ समन्तात्पक्षिवृन्दानि । वातोद्धूतवनादिव ॥ ५६ ॥ अभ्रे भ्रान्त्वा पुनस्तानि । प्रणेतुर्वीरवर्ष्मसु ॥ फलितेष्विव वृक्षेषु । सर्वतोऽपि पतत्रिणः ॥५७॥ क्वचिद्बाणमयः क्वाऽपि । खड्गकुन्तगदामयः ॥ चक्रश्रेणिमयः क्वाऽपि । शूलशक्तिमयः क्वचित् ।५८

1 धूलीन् 2 वर्द्धमानो

मुष्टिलुण्ठिमयः क्वाऽपि । मुद्गरौघमयः क्वचित् ॥ विविधैरायुधैरेवं । दारुणोऽसौ रणोऽभवत् ॥ ५९ ॥ युग्मं ॥ क्षणाच्च पत्तयः पेतु-स्ताडिताः शात्रवाऽऽयुधैः ॥ लुलन्तो भुव्यदृश्यन्त । वीराणां केलिकन्दुकाः ॥ ६० ॥ क्वचिदुःसञ्चरा जज्ञे । रणोर्वी पतितैर्गजैः ॥ पुञ्जीभूतैर्हयैश्चाऽपि । मरुभूमिरिव स्थलैः ॥६१॥ क्वचिच्छीर्षैः क्वचिद्धस्तैः । क्वचित्पादादिभिश्च भूः ॥ मनुष्यघाटशालेव । विधि-सत्रभृतोऽभवत् ॥६२॥ क्वचिद् दूरादरीन् हन्तु-मुपलक्ष्य ध्वजैर्भटाः ॥ स्फोटयन्तोऽविशन् सेनां । जलकान्ता इवाऽम्बुधिम् ॥६३॥ भग्नै रथ(रद) दलैः कृत-कुसुमप्रकरेव सा ॥ शुशुभे कुम्भिकुम्भोत्थ-मौक्तिकस्वस्तिकाऽङ्किता ॥६४॥ रणकौतुकवीक्षार्थं । मिलिता व्यन्तरादयः ॥ श्रेमुरभ्रेऽभितो वीर-संस्तवैर्मुखरा रणे ॥ ६५ ॥ लसड्डमरुकोद्दण्ड-डमत्कारैर्भृताऽम्बराः । उद्धर्वप्रचण्डदोर्दण्डा । ननृतुः क्षेत्रपालकाः ॥ ६६ ॥ शाकिनीडाकिनीकाकि-न्योऽपि प्रोल्लासिहासिकाः ॥ अनृत्यन् कौतुकोत्तालाः । केलीकिलकिलो-ल्वणाः ॥ ६७ ॥ योगिन्यश्चित्ररूपिण्यः । प्रोत्तालकरतालिकाः ॥ अददू रासकान् हर्षा-त्कौतुकोत्तानितेक्षणाः ॥ ६८ ॥ विकटैर-ट्टहासौघैः । स्फुटद्गिरिनभस्तटं ॥ भ्रेमुर्भक्ष्यासिहर्षेण । राक्षसा राक्षसीयुताः ॥ ६९ ॥ बभ्रमुः सर्वतो गृध्रा । रुधिरामिषगृध्नवः ॥ वीरान् प्रदक्षिणीकृत्य । सत्रागारनिभानिव ॥ ७० ॥ मुदा जयेषु वीराणां । पुष्पवर्षाणि देवताः ॥ कुर्वाणा विस्मयस्मेरा । नाना-वाद्यान्यवीवदन् ॥७१॥ [1]अपाकर्तुं च शस्त्रार्त्तिं । कुमारेन्द्रो दयाऽम्बुधिः ॥ यान् पुराप्यादिशत् खेटां-स्ते तदाजौ भ्रमम् भ्रमम् ॥७२॥ दर्शं दर्शं च सुभटान् । हयादींश्चाऽस्त्रशल्यितान् ॥ तदर्पितौषधीनीरै-र्द्वयोश्चम्वोरसज्जयन् ॥ ७३ ॥ युग्मं ॥ पतिता अपि ते वीरा-स्तिर्यञ्चोऽपि हि तैर्द्रुतं ॥ सज्जिता द्विगुणोत्साहाः । पुनर्युयुधिरे भृशम् ॥ ७४ ॥ दोषाः क्रोधाभिमानाद्या । अ स्ताः

१ संहर्तुं शस्त्रबह्वर्त्तिं । कुमारेन्द्रः कृपाम्बुधिः इति प्रत्यन्तरे ।

प्रतिजन्म ये ॥ प्राणाऽन्तेऽपि न ते प्रायो । [1]विरमन्तीति धिग्भवम् ॥ ७५ ॥ तेषां यत्साहसं युद्धे । सुलभं सर्वजन्तुषु ॥ अर्हद्धर्मे भवेत्तच्चेत् । कानि कर्माणि को भवः ॥ ७६ ॥ केचिदङ्गक्षयं केचि–न्मृतिं केचित्पराभवं ॥ प्रापुः पापाऽनुभावेन । हेतुः सर्वाशुभे हि सः ॥ ७७ ॥

घोरेऽप्येवं रणे केचि–दक्षताऽङ्गा हतद्विषः ॥ प्रापुः पुण्याज्जयं सैव । हेतुः सर्वशुभेषु हि ॥ ७८ ॥ यशांसि पूर्ववीराणां । लिप्सवो जयगृध्नवः ॥ स्वामिप्रासाऽनृणीभाव–कुलोद्योतान् विधित्सवः ॥ ७९ ॥ क्रोधाऽमर्षाऽभिमानादि–वशाद् वशितशात्रवाः ॥ ततो युयुधिरे वीरा । विविधाऽऽयुधदुर्द्धराः ॥ ८० ॥ युग्मं ॥ हत्वा ससारथीन् योधान् । मुक्त्वा च कृपया हयान् ॥ तद्रथैरेव केचित्तु । जघ्नुः प्रतिभटान् भटाः ॥ ८१ ॥ अनाचाऽस्त्रा मदात्केचि–त्कराभ्यां पादयोर्द्विषः ॥ गृहीत्वाऽन्योन्यमास्फाल्य । जेग्रीयाञ्चक्रिरे भटाः ॥ ८२ ॥ उत्पतन्तः पतन्तश्च । कुर्कुटा इव पत्तयः ॥ अन्योन्यं निहता बाणै–रुभयेऽप्यपतन् भुवि ॥ ८३ ॥ व्योम्न्युदस्ता भटैर्गर्वा–न्मदनिर्झरिणो गजाः ॥ इतस्ततो बभ्रुर्वार्दाः । कंसालकवहा इव ॥ ८४ ॥ रथान् भङ्क्त्वा गदाद्यस्त्रै–स्तच्चक्रैर्जघ्नतो द्विपः ॥ चक्रिणो बहुचक्रास्त्रा । इव बभ्राजिरे भटाः ॥ ८५ ॥ भुजगर्वोद्धुरैर्वीरै–र्नभस्युच्छालिता गजाः ॥ रथपत्त्यश्वादीन्यपिंषन् । पतन्तः शैलशृङ्गवत् ॥ ८६ ॥

एवं महारणे घोरे । कुमारनृपसैनिकाः ॥ अभाङ्क्षुरग्रसैन्यान् द्राग् । नभोगभूपचक्रिणः ॥ ८७ ॥ चटन्ती वार्द्धिवेलेव । सम्प्लाव्य कियतीं भुवं ॥ अपासरद्रिपूदस्ता । चमूः खेचरचक्रिणः ॥ ८८ ॥ जैत्रतूर्याण्यवाद्यन्त । कुमारकटकेऽभितः ॥ भटाः

[1] विरमन्ति-कर्मधिग्वा प्रत्यन्तरे

सांराविणं चक्रु-र्जयप्राप्तिप्रमोदिनः ॥ ८९ ॥ निजाह्वासुहृदां शूरः । शूराणां तु पराभवं ॥ अप्रभूष्णू रणे द्रष्टुं । न्यपतत्पश्चिमाऽ-म्बुधौ ॥ ९० ॥ ततो मुक्त्वाऽऽहवं वीराः । स्वस्वसेनाधिपाज्ञया ॥ स्वस्वानुत्तारकानीयु-र्नीडानिव विहङ्गमाः ॥९१॥ कृपयाऽथ कुमा-रेन्द्रः । स्वौषधीजलसेकतः ॥ अपि कण्ठगतप्राणान् । पत्तिदन्तिहयादिकान् ॥ ९२ ॥ पतिताऽपतितान् भूमौ । शस्त्रघातनिपीडि-तान् ॥ संशोध्य पुरुषैः सम्यग् । चिह्नैर्विज्ञाय जीवतः ॥९३॥ द्वयोरपि विरूथिन्योः । स्वपराऽप्रविभागतः ॥ सर्वानुज्जीवयां चक्रे। [1]दया हि महतामियम् ॥ ९४ ॥ रणोर्वीमिति संशोध्य । प्रेष्य खेचरचक्रिणे ॥ प्रचुरं स्वौषधीवारि । परोपकृतिकर्मठः ॥ ९५ ॥ कुमारेन्द्रोऽगमत्सौधो--त्तारके सपरिच्छदः ॥ पठ्यमानजयोत्कर्ष-गुणो हर्षितबन्दिभिः ॥९६॥ मङ्गलानि व्यधीयन्त । वृद्धस्त्रीभिः प्रमोदतः ॥ भटानां रणजैत्राणां । कटके नृपतिस्त्रियः ॥ ९७ ॥ चक्रायुधनरेन्द्रोऽपि । संशोध्य रणभूमिकां ॥ जगाम सपरीवारो । निजोत्तारकधामनि ॥ ९८ ॥ निजविद्याजलेनाऽयं । नृपदत्ताऽम्बुनाऽपि च ॥ सशल्यान् सज्जयामास । जीवतो निखिलान्निजान् ॥ ९९ ॥ अथो सैन्यद्वयेऽप्यापू-रणश्रान्ता भटा निशि ॥ सुखस्वापं गजाद्याश्च । कृताहारा यथोचितम् ॥ ४०० ॥

॥ इति श्रीजयानन्दचरित्रे चक्रायुधखेटचक्रवर्तियुद्धाधिकारे सामान्यतः प्रथमदिनयुद्धस्वरूपम् ॥

निद्रा भटान् समालिङ्ग्य । विलसन्ती सुखं ततः ॥ निशासीम्नि सपत्न्येव । [2]निरासे रणचिन्तया ॥ १ ॥ विभ्रमद्या-प्यसम्पूर्ण-रणकौतुकचेतसां ॥ कथं कुर्वे प्रवीराणा-मित्यक्षीयत यामिनी ॥२॥ के भग्नाः? के मृताः? के वा। नष्टाः? के वाऽध्यगु-र्जयं? ॥ इतीव वीक्षितुं भानु-रारोहदुदयाचलम् ॥ ३ ॥ पूर्ववद्रणतूर्याणि । नेदुश्चम्वोर्द्वयोरपि ॥ ससज्जतुश्च ते युद्धे । प्रौढोत्साहै-

१ चरित्रं महतां यदः, प्रत्यन्तरे  २ निष्काशिता

रूभे अपि ॥४॥ अग्रस्थितस्वसेनान्यौ। मध्यस्थात्मीयनायकौ ॥ प्राग्वचौ मिलितौ युद्ध–मकार्ष्टां कटकावुभौ ॥ ५ ॥ वीरमुक्ताः शरा रेजु–र्व्याप्नुवन्तो नभोऽभितः ॥ उत्पातसमयोत्पन्नाः। सपक्षा इव पन्नगाः ॥६॥ केषाञ्चिद्वीरधुर्याणां। रिपून् भित्वाऽपि पङ्क्तिगान् ॥ गच्छतोऽचिस्खलन् शैल–शृङ्गाण्येव शिलीमुखान् ॥ ७ ॥ व्योम्नि शुन्यभितो दिक्षु। वृक्षेष्वचलमूर्द्धसु ॥ भटबाणोत्करैः प्राप्ते–र्विश्वमासीत्तु तन्मयम् ॥८॥ बाणैरेवाऽऽच्छिदन् केचि–देकशस्त्रव्रता भटाः ॥ गदामुद्गरचक्रादी–न्यप्यस्त्राणि द्विषामहो! ॥९॥ बहुशस्त्रच्छिदोद्विग्नाः। शूराः केचिच्छरैर्द्विषां ॥ करानेवाऽऽच्छिदन् शस्त्रा–दानमोक्षक्षमान् क्रुधा ॥१०॥ केचिद्व्याकुलिता वीरा। बाणैः केचिदशाशकुः ॥ नास्त्रं मोक्तुं ग्रहीतुं वा। मुखैस्त्वलुस्तृणानि तु ॥ ११ ॥ केऽप्येकेनाऽपि बाणेन। समपङ्क्तिस्थितान् बहून् ॥ विविधुर्गजवाज्यादीन्। सप्ततालानिवाऽच्युतः ॥ १२ ॥ केचिन्मुञ्चत एवेषून्। न्यषेधन् विद्विषः शरैः ॥ छित्वा तत्कार्मुकाण्यासा–¹हत्येवोद्गृणतः खलान् ॥ १३ ॥ प्रवीराः प्रतिवीराणां। शरानागच्छतः शरैः ॥ चिच्छिदुर्वादिनस्तर्कै–स्तर्कान्नु प्रतिवादिनाम् ॥ १४ ॥ पृषत्कैः कलया मुक्तैः। कैश्चिद्वीरधुरन्धरैः ॥ द्विषो हत्वा गतैरग्रे। नेशुः क्रष्टाङ्घ्रिया सुराः ॥ १५ ॥ व्योम्नि वीरेषुभिश्छिन्नाः। प्रययुर्भटमौलयः ॥ मुखेन्दून् ग्रसितुं द्रष्टु–र्देवस्त्रीणां नु राहवः ॥१६॥ वीरबाणैर्वपुर्लग्नै–रुत्पतन्तो रणे भटाः ॥ कृतपक्षा इव स्वर्गं। सशरीरा पियासवः ॥ १७ ॥ बाणाः सन्नद्धवीराणां। वपुर्लग्ना विरेजिरे ॥ सम्भूय ग्रसितुं वैरात्। सर्पाराति मिवाऽहयः ॥ १८ ॥ वीरमुक्तैर्वपुर्लग्नैः। शरै रेजुर्महागजाः ॥ समन्तोद्गतदुर्वाकाः। शैला इव चलाचलाः ॥ १९ ॥ वीरबाणहताः पेतू। रुधिरश्राविणो गजाः ॥ निर्झरैर्गैरिकोन्मिश्रै–र्भ्राजमाना इवाऽद्रयः ॥ २० ॥ भुजालोच्छालिता खेऽगु–²स्ताक्ष्यास्ताक्ष्य-

१ मुद्गर  २ कृपणत्वं

ध्वजस्य किं ॥ बाणैर्देहगतार्द्धैस्तु । सपक्षाः सङ्गमाशया ॥ २१ ॥ वीरेषुभिर्विभिन्नानां । विमानानां दिवोऽपतन् ॥ दलानि कुसुमानीव । तुष्टैर्वृष्टानि दैवतैः ॥२२॥ पूर्वभङ्गभवामर्षा । योधाः खेचरचक्रिणः ॥ तथा डुढौकिरे योद्धुं । विविधायुधवर्षिणः ॥ २३ ॥ यथा नृपकुमारस्य । भग्नाः सैन्याः समन्ततः ॥ [1]अपासरन्नदीवारा । इवाब्धेर्वेलया हताः ॥२४॥ वीक्ष्याऽपसरतस्तांश्च । सुहृदोऽष्टौ क्रुधोद्धुराः उत्तस्थुर्भोगरत्याद्याः । ससैन्याः खेटपा युधे ॥ २५ ॥ अमर्षात्ते तथा वीराः । समन्तात् शरधोरणीः ॥ व्यमुञ्चन्त यथा चक्रु-राश्चर्यं महतामपि ॥२६॥ निरन्तरैः शरासारै-र्वीरमुक्तैर्द्विषां वलं ॥ तिरश्चक्रेऽभितो वार्दै- [2]र्गर्जाद्भिरिव पुष्करम् ॥२७॥ आयान्तो लञ्चिताः कैश्चि-न्नैपुण्यात्सुभटेषवः ॥ न्यघ्नन् पुङ्खैररीन् प्रत्या-वृत्ताः प्रास्फल्य भूभृति ॥ २८ ॥ द्विषां वर्मत्वचं भित्त्वाऽ-विशन् हृत्सु भटेषवः ॥ च्छित्वा मिथ्यात्वदुस्तन्द्रां । सतां गुरुगिरो यथा ॥ २९ ॥

केचिद्वीरेषवः पार्श्वे-दशां श्रुत्यैकयाऽविशन् ॥ निरीयुश्चाऽन्ययाऽरीणां । दुर्धियां वा गुरोर्गिरः ॥ ३० ॥ केचिदप्योजसा मुक्ता । वीराऽरीणां भटेषवः ॥ अभिन्दन्नैव रोमाऽपि । खलानामिव सद्गिरः ॥ ३१ ॥ दिदृक्षा तु दृशोः सङ्ख्यं । मनो भीत्या निनङ्क्षति ॥ वीरबाणैर्गतैर्व्योम्नि । विरोधोऽभूत्सुरेष्वपि ॥ ३२ ॥ भोगरत्यादयस्तेऽथाऽऽस्तृणन् शत्रून् दिशोऽपि च ॥ शरैः प्रसृत्वरैर्यद्व-द्रजोभिः प्रलयानिलाः ॥३३॥ युध्यमानेषु तेष्वासी-द्वीरधुर्येषु विद्विषां॥भङ्गो रथवरूथानां । केषाञ्चन मदैः सह ॥३४॥ केषाञ्चित्केतवोऽपप्तन् । सहैव प्रबलैर्भुजैः ॥ शिरांस्यपि च केषाञ्चित् । समं पितृमनोरथैः ॥ ३५ ॥ ध्वंसन्ते स्म समं सत्त्वैः । कार्मुकाणि दृढान्यपि ॥ केषाञ्चन पलायन्ते । सूताः प्राणैः सह द्विपाम् ॥ ३६ ॥ केषाञ्चिद्विक्रमैः साकमासन् शस्त्राणि खण्डशः॥

[1] नदीप्रवाहा [2] सविद्युद्भिरिवाऽम्बरम् इति प्र०

भियाऽन्येषां च पार्श्वानि । शून्यानि हृदयैः समम् ॥ ३७ ॥ करेभ्योऽस्रंसदस्त्रालिः । सहाऽन्येषां जिगीषया ॥ नेशुः केचित् समं व्रीडा–यशोवीरव्रतादिभिः ॥ ३८ ॥

एवं तैर्भोगरत्याद्यै–र्युध्यमानैरुपद्रुतं ॥ अभव्य इव धर्मेभ्यो–ऽपासरच्चक्रिणो बलम् ॥ ३९ ॥ समीक्ष्याऽपसरत्तच्च । चण्डवेगश्चमूपतिः ॥ अन्वितो भटकोटीभिः । सिंहयुक्तरथोद्धुरः ॥ अन्वितो भटकोटीभिः । सिंहयुक्तरथोद्धुरः ॥ ४० ॥ निजं सन्धीरयन् सैन्यं । रणभूमिमुपस्थितः ॥ अढौकत च युद्धाय । भोगरत्यादिभिः समम् ॥४१॥ मदन १ स्तपनो २ भीमः ३ । प्रतापाऽ ४ क्षोभ ५ कासराः ६ ॥ अलगन् रमणाद्याश्च ७ । सिंहयुग्यरथा युधे ॥ ४२ ॥ सेनान्यि सर्वगैर्वाणै–र्युध्यमाने च भूपतेः ॥ अकम्पत बलं चण्डे । वाते वाति वनं यथा ॥ ४३ ॥ हृदि केऽपि मुखे केऽपि । नाभौ केऽपि शितैः शरैः ॥ करयोः केऽपि केऽप्यंघ्र्योः । सेनान्या जघ्निरे द्विषः ॥ ४४ ॥ ततो भोगरतिर्वीरो–ऽरौत्सीत्सेनापतिं युधे ॥ चन्द्रबाहुमहाबाहू । मदनं तपनाऽन्वितम् ॥ ४५ ॥ चन्द्रवेगभटो भीमं । प्रतापं चन्द्रचूडराट् ॥ रत्नचूडनृपोऽक्षोभं । तडिद्वेगश्च कासरम् ॥ ४६ ॥ चन्द्राभश्चाहवौत्सुक्या–दाह्वास्त रमणं नृपं ॥ एवं परेऽप्यढौकन्त । मिथो वीरवरा रणे ॥ ४७ ॥ त्रिभिर्विशेषकं ॥ वीरप्राणानिलान् पीत्वा । भटबाणभुजङ्गमाः ॥ चक्रुः प्राप्तबला दंशं–दंशं निश्चेतनान् द्विपः ॥ ४८ ॥ सेनान्यश्चण्डवेगस्या–च्छिदद्भोगरतिः शरैः ॥ चापं मिथ्यात्ववत् रूप–देशी–र्भव्यस्य सद्गुरुः ॥ ४९ ॥ सोऽपि चापं नवं लात्वा–च्छेत्सीद्भोगरतेर्धनुः ॥ नव्येन धनुषा सोऽपि । तामसास्त्रममुञ्चत ॥ ५० ॥ तदन्धकारिताऽनीकं । सेनानाथोऽप्यनीनशत् ॥ स्फुरद्दिनकरास्त्रेणा–ऽस्तृणाद्बाणैश्च वैरिणम् ॥५१॥ तद्बाणैर्व्याकुलो भोग–रतिजलधरायुधं ॥ व्यमुचत्पवनास्त्रेणा–ऽमुमोघ तच्चमूपतिः ॥५२॥ अच्छिदच्च धनुस्तस्या–भैत्सीत्कङ्कटमप्ययं ॥ शरैर्जर्जरयित्वा त–

जयानन्द केवलि चरित्रम् ॥१६६॥

मबध्नाच्चाहिपाशकैः ॥ ५३ ॥ यावद् गृह्णाति तं सेना-नाथस्तावदमुं शरैः ॥ उरस्यताडयद्वज्र-वेगः क्ष्मापचमूपतिः ॥ ५४ ॥ तद्बाणव्यथितः सोऽपि । मुक्त्वा मोगरतिं क्रुधा ॥ वेगेन वज्रवेगेन । समं योध्धुमधावत ॥ ५५ ॥ द्वयोरप्यथ सेनान्योः । शराशरि वितन्वतोः ॥ जयश्रीरन्तरालेऽस्थात् । कं वृणोमीति संशयात् ॥ ५६ ॥

अथ छित्वा धनुरादि । चन्द्रबाहुं निरायुधं ॥ श्रान्तं च मदनश्चक्रे । नागपाशैर्बबन्ध च ॥ ५७ ॥ स रुद्धश्चन्द्रगतिना । चन्द्रबाहुग्रहोद्यतः ॥ सोऽपि तेन समं क्रोधा-दसङ्ग्रामयत द्रुतम् ॥ ५८ ॥ बबन्ध तपनोऽप्येवं । महाबाहुं शरार्दितं ॥ तं गृह्णानश्च सो-रोधि । चन्द्रोदयमहीभुजा ॥ ५९ ॥ तयोः प्रववृते घोरः । सङ्ग्रामश्च शराशरि ॥ विभ्युश्च प्रशशंसुश्च । यं पश्यन्तः सुरा अपि ॥६०॥ अबध्नाच्चन्द्रवेगं च । भीमो भीमपराक्रमः ॥ प्रतापोऽपि प्रतापार्क-चन्द्रचूडं तथैव च ॥ ६१ ॥ अरुत्सातां च तौ चूड-भीष्माभ्यां तद् ग्रहोद्यतौ ॥ प्रावर्त्तत रणश्चैषां शराशरि धनुर्भृताम् ॥ ६२ ॥ रत्नचूडतडिद्वेग-चन्द्राभानपि दैवतः ॥ क्रमादबध्नन्क्षोभः । कासरो रमणस्तथा ॥६३॥ गृह्णतोऽमून्न्यपेधंस्तान् । शरासारांश्चरिक्रतः ॥ चित्रवीर्यमहावीर्य-भद्रवीरास्तथैव च ॥६४

एवं कर्मवशादष्टा-वपि तान् सुहृदोऽरिभिः ॥ बद्धान् पवनवेगो द्राग् । लात्वा भूभर्त्तुरार्पयत् ॥ ६५ ॥ छित्वा सोऽप्यहिपाशान् द्राक् । तेषां गारुडविद्यया ॥ सज्जतामौषधीवार्भि-श्चक्रे सेवकवत्सलः ॥ ६६ ॥ नरनाथकरस्पर्शा-नुभावात्ते च लेभिरे पूर्वाधिकबलोत्साह-तेजोधैर्यादिसम्पदः ॥ ६७ ॥ ग्रावाणोऽपि न चण्डांशु-करस्पर्शाज्ज्वलन्ति किं ॥ प्राच्याभिभूतिजामर्षा-दधावन्त पुनर्युधे ॥ ६८ ॥ अथ युद्धपरौ दृष्ट्वा । सेनान्यौ सर्वसैन्यकाः ॥ प्रावर्त्तन्त विशिष्याऽऽजौ । पताकिन्योर्द्वयोरपि ॥६९॥ प्रससुर्व्योम्नि वीराणा-मिषवो दूरपातिनः ॥ गदितुं ज्योतिषां स्वस्व-स्वामिशौर्यगुणानिव ॥ ७० ॥ अमोघा वैरिदेहेषु । वीराणां

पत्रिणोऽपतन् ॥ न त्यजन्त्यल्पमप्याप्यं । कथं [1]लक्ष्यं तु [2]मार्गणा ! ॥७१॥ परबाणान्निराचक्रुः । केपाञ्चन शिलीमुखाः ॥ करान् हिमकरादीनां । भास्करस्य करा इव ॥७२॥ केपाञ्चिन्मोघतां आपुः । खेटकैः स्खलिताः शराः ॥ विघ्नैरिवाऽल्पसत्त्वानां । धर्मकर्ममनोरथाः ॥ ७३ ॥ पृषत्कैः केचिदच्छिन्दन् । द्विषां खेटककङ्कटान् ॥ तच्छेदे सुजयास्ते हि । भवन्तीति विचार्य नु ॥ ७४ ॥ यथा कर्मरिपून् जेतुं । विवेकादिमहायुधैः ॥ पूर्वं मिथ्यात्वलोभादीं–च्छिन्दन्त्यासन्नसिद्धिकाः ॥ ७५ ॥ अर्थतो युग्मं ॥

द्वयोर्युद्धेऽथ सेनान्यो–रभूद्बाणमयं नभः ॥ क्वचिदह्नीवांशुमयं । रवीन्द्वोरुदयास्तयोः ॥७६॥ वज्रवेगस्याऽथ चापं । चण्डवेगोऽच्छिदच्छरैः ॥ सोऽप्यादायाऽन्यदस्यैत–दभाङ्क्षीच्च शितैः शरैः ॥ ७७ ॥ ततो दर्पोद्धुरश्चण्ड–वेगो लात्वा नवं धनुः ॥ क्षुरप्रैरभिदद्वज्र–वेगस्य स्यन्दनं रयात् ॥७८॥ सूतं चापीपतद्युग्यौ । सिंहौ चाऽऽहत्य सायकैः ॥ वज्रवेगस्ततो यावद्–गृह्णात्यभिनवं रथम् ॥ ७९ ॥ उरस्यताडयत्तात्र–च्छलान्मर्माविधेपुणा ॥ क्रोधान्धश्चण्डवेगस्तं । स मूर्च्छाविह्वलोऽभवत् ॥ ८० ॥ जिघांसुश्चण्डवेगस्तं । यावद्धन्त्यपरेपुणा ॥ अकस्मात्तावदापत्य । तत्र भोगरतिर्नृपः ॥ ८१ ॥ प्राक्पराभववैरेण । भिन्दिपालेन मूर्ध्न्यहन् ॥ चण्डवेगं तथा गाढं । यथाऽसौ मूर्च्छितोऽपतत् ॥ ८२ ॥ युग्मं ॥ यावद्गृह्णाति तं भोग–रतिर्व्यन्त्याऽऽग्रहीष्ट तं ॥ मणिमाली तावदेत्य । सुतः खेचरचक्रिणः ॥८३॥ ततस्तेनाऽर्पितखेट–चक्रिविद्याम्बुसेकतः ॥ तं सज्जीकृतवान् वीर–चक्राग्रण्यं चमूपतिम् ।८४। ततो भोगरतिर्वज्र–वेगं भूभर्तुरार्पयत् ॥ स तं महौपध्यम्भोभि–र्भटाग्रण्यमपीपटत् ॥ ८५ ॥ उपकर्त्रपकर्त्रोश्चो–पकृत्यपकृती द्रुतं ॥ विधाय मुमुदे भोग–रतिर्मानफलं ह्यदः ॥ ८६ ॥ चन्द्रबाहुरपि प्राच्य–वन्धाभिभववैरतः ॥ भूत्वा चन्द्रगतेरग्रे–ऽयोधयन्मदनं

१ लक्ष्यं—वेध्यं—पक्षे संख्यापि   २ मार्गणाः—याचका बाणाश्च

द्विषम् ॥ ८७ ॥ विदधच्च शरासार-मजवृन्दमिवाऽम्बुदः ॥ वैरिणं व्याकुलीचक्रे । मदनं सपरिच्छदम् ॥ ८८ ॥ धनुश्छित्वा रथं भित्वा । रणश्रान्तं बबन्ध च ॥ मदनं चन्द्रबाहुर्य-त्ताद्धि सत्कर्मणः फलम् ॥ ८९ ॥ ग्रहीतुं मणिमाली त-मधावत्खेटचक्रिभूः ॥ कुर्वता स शरासारं । रुरुधे चन्द्रबाहुना ॥ ९० ॥ तावच्चन्द्रगतिर्निन्ये । मदनं शिबिरे निजे ॥ निपिध्याऽथ महाबाहुः । श्रान्तं चन्द्रोदयं रणात् ॥ ९१ ॥ तपनं योधयामास । प्राग्वैरेण तथैव च ॥ तावमर्पातिदुर्द्धर्पौ । भीपणं चक्रतू रणम् ॥ ९२ ॥ अहार्ष्टां विद्विषां प्राणान् । वीरोर्जितमदैः सह ॥ अकार्ष्टाञ्च यशःक्षीरैः । प्रक्षाल्य मोज्ज्वले कुले ॥ ९३ ॥ बबन्ध च महाबाहु-स्तपनं तापनं द्विषां ॥ तपनोऽपि पराभूत्यै । भवते भरणीभुवः ॥ ९४ ॥ बद्धं मोचयितुं तं चाऽधावच्चित्रायुधो भटः ॥ तमरौत्सीन्महाबाहु-र्नदीपूरमिवाऽचलः ॥ ९५ ॥ निन्येऽथ तपनश्चन्द्र-गतिना स्वबले मुदा ॥ महारम्भभरेणेव । दुर्गतिं दुर्गतो धिया ॥ ९६ ॥

वैरीषुताडितं चण्डं । चन्द्रवेगोऽथ वारयन् ॥ योधयित्वा पुनर्भीम-मबध्नादहिपाशकैः ॥९७॥ उपस्थितेन युद्धार्थं । चित्रवीरेण वैरिणा ॥ युयुधे च समं भीमं । निन्ये चन्द्रगतिर्बले ॥ ९८ ॥ युग्मं ॥ भीष्मं निरायुधीभूतं । चन्द्रचूडः समीक्ष्य च ॥ प्रतापं रुरुधे युद्धे । भवे मोह इवाऽङ्गिनम् ॥ ९९ ॥ योधयित्वा चिरं छिन्न-चापं भग्नरथं च तं ॥ अहिपाशैरबध्नात्स । लोभो मूढमिवाऽशुभैः ॥ ५०० ॥ तं जिघृक्षौ च चन्द्राङ्के । रुद्धे तेन दलेऽनयत् ॥ प्रतापं तं चन्द्रगति-र्गुप्तौ चौरं चरा यथा ॥ १ ॥ रत्नचूड १ तडिद्वेग २-चन्द्राभा ३ अपि भूभुजः ॥ चित्रवीर्य १ महावीर्य २-भद्रवीरान् ३ रणोद्यतान् ॥ २ ॥ निपिध्य छिन्नचापादीन् । स्वयं युध्ध्वा चिरं भृशं ॥ शत्रून् बबन्धुरक्षोभ-कासरौ रमणं क्रमात् ॥ ३ ॥ युग्मं ॥ तान् जिघृक्षूंश्च युद्धेन । न्यपेधन् भटसत्तमाः । चन्द्रप्रभ १ यशश्चन्द्र २-चन्द्रकीर्त्ति ३ नभश्चरान्॥४॥ प्राग्वचन्द्रगतिः सैन्ये-ऽनैपीद्बद्धांश्च भूभुजः ॥ ज्ञाना-

दिरहितान् जन्तून् । मिथ्यात्वं संसृताविव ॥ ५ ॥ विना भोगरतिं सप्ता–प्येवं ते सुहृदो नृपाः ॥ बध्ध्वा प्रतिद्विपः प्राच्याऽभि-
भवान्निरवासयन् ॥ ६ ॥ य एव प्राग् रणे बद्धा–स्तैरेव मदनादिषु ॥ यद्बन्धस्तत्र हेतुः स्या–द्रणश्रान्तः कुकर्म च ॥ ७ ॥
कर्मणा जीयते युद्धे । हन्यतेऽपि च कर्मणा ॥ जयोऽरेश्च श्रियो वाऽपि । कर्मणैव भवन्ति हि ॥ ८ ॥
एवं शुभाशुभं कर्म । शुभाशुभफलप्रदं ॥ विज्ञाय शुभमेवैत–दर्जनीयं सुबुद्धिभिः ॥ ९ ॥

चन्द्रवाह्लादयो वीरा-स्तथाऽयुध्यन्त भूयसा॥अभज्यत यथा खेट-चक्रिणः पृतना पृथुः।१०।वीराणामाहवश्रान्तिं।वीक्ष्य तत्सङ्क्रमा-
दिव॥चण्डांशुः पश्चिमाऽम्भोधौ। स्नात्वा श्रान्तिं किलाऽच्छिदत् ॥११॥ सेनान्योराज्ञया वीराः।कर्मलब्धजयाजयाः॥रणकर्म विमुच्याऽथ।
स्वं स्वं पदमुपागमन् ॥१२॥ किञ्चिन्मन्दयितोत्साहा । वीरसप्तकबन्धनात् ॥ अपासार्पीत्समिद्भूमे–श्चमूः खेचरचक्रिणः ॥ १३ ॥
गर्जद्वीरगणातोद्यं । स्तुतं मङ्गलपाठकैः ॥ अमोदत बलं राज्ञो । यथा कैरविणीवनम् ॥१४॥ औषधीवारिणा भूपो । भटान् सर्वान्
पशूनपि ॥ पूर्ववत्सज्जयामास । निजान् खेचरचक्र्यपि ॥ १५ ॥ भूपास्ते मदनाद्याश्चौ–षधीपानीयसज्जिताः ॥ क्षिप्ताः पवनवेगे-
न । पञ्जरेष्वायसादिषु ॥१६॥ आलिङ्गितान् रणश्रान्त्या ।वीरानीर्ष्यावशादिव ॥ आलिलिङ्ग प्रमीला द्राग् । सर्वाङ्गसुखकारिणी॥ १७ ॥
इति श्रीजयानन्दचरित्रे युद्धाधिकारे द्वितीयदिने भोगरत्यादिसुहृदष्टकादिजयनामा वाणैरेव युद्धाधिकारः ॥

अहो जयश्रियो भूपः । स्याद् युद्धं न विना च सा ॥ इति युद्धावकाशायाऽऽरोहत्पूर्वाऽचलं रविः ॥ १८ ॥ पराभववशा-
त्केचित् । केचिदर्द्धजयाद्भटाः ॥ केचिच्चमङ्गलातोद्यै–रयुध्यन्त रणोत्सुकाः ॥ १९ ॥ पूर्ववत्सज्जतां कृत्वा । पताकिन्योर्द्वयोर-
पि ॥ सेनान्योराज्ञया वीरा । रणार्थमुपतस्थिरे ॥ २० ॥ मद्यैः शौण्डा धनैर्भूपाः । परान्नैरिव वाडवाः ॥ न तृप्यन्ति

महावीरा। रणैर्भुजबलोन्मदाः ॥ २१ ॥ ध्वजाद्यैरुपलक्ष्योप-लक्ष्य प्रतिभटान् भटाः ॥ योद्धुं न्यमन्त्रयन् भोक्तुं । दानशौण्डा इवाऽर्थिनः ॥ २२ ॥ वदन्तः स्वकुलोत्कर्षं । निन्दन्तोऽन्यकुलानि च ॥ आक्षिपन्तो मिथो निन्दा-मर्मनर्मस्तवादिभिः॥२३॥ भुजास्फोटं प्रकुर्वाणा । मिलिताः कांस्यतालवत् ॥ सैन्ययोरुभयोः सैन्याः । क्रुधा युयुधिरेऽधिकम् ॥२४॥ वीरमुक्ता मिथो बाणाः प्रास्फलन्तो विरेजिरे ॥ युध्यमाना इव व्योम्नि । सपक्षाः पवनाशनाः ॥ २५ ॥ अभितो वीरमुक्तानि । चक्राणि भ्रेमुरम्बरे ॥ मार्गिणश्चक्रिणश्चाऽहो । बहुरूपानुभावतः ॥ २६ ॥ प्रेरिता योधृभिर्योद्धुं । मिथो वाहनसिन्धुराः ॥ स्वस्वामिशौर्यसङ्क्रान्त्या-धिकशौर्याद्दुढौकिरे ॥२७॥ आस्फलन्तो मिथो दन्त-घातोद्यदहनार्चिषः ॥ गर्जन्तो भ्रेजिरे ते च । तडित्वन्तः इवाऽम्बुदाः ॥२८॥ युध्यमाना दृढं पादा-घातैः क्षुण्णक्ष्मातलाः ॥ सनिर्झरा मदाऽम्भोभिः । स्रवदस्रैः सधातवः ॥ २९ ॥ दन्तैस्तद्बद्धखड्गाद्यैः । करैस्तन्मुद्गरादिभिः ॥ परस्परं दृढं घ्नन्तो । गर्जद्वदनकन्दराः ॥ ३० ॥ उत्पतन्तः पतन्तश्च । सपक्षा इव पर्वताः ॥ ससारयो गजाः कस्य । नाऽद्भुताय भयाय च ॥ ३१ ॥ विशेषकं ॥ [1]क्ष्वेडात्रसद्द्विपव्राताः । पुच्छाच्छोटै रसद्भुवः ॥ अयुध्यन्त मिथो दंष्ट्रा-नखैर्घ्नन्तो द्विपारयः ॥ ३२ ॥ मिथः कटुस्फटाच्छोट-प्रस्फुटन्मणिसन्धयः ॥ वितेनुः पन्नगा युद्धं । स्फारफूत्कारदुर्द्धराः ॥ ३३ ॥ तीक्ष्णदाढाभिराघ्नाना । घोरघुर्घुरदुर्द्धराः ॥ उच्छलन्तः स्फालयन्तः । किरयश्चक्रिरे कलिम् ॥३४॥ एवं शरभशार्दूल-सैरिभप्रमुखा अपि ॥ खेचराणां वाहनानि । पशवोऽपि परस्परम् ॥ ३५ ॥ अनादिभवजाऽभ्यासा-त्क्षीरसंसर्गतोऽनिशं ॥ उद्यत्क्रोधाभिमानाद्यैः । स्वामिप्रेरणयाऽपि च ॥ ३६ ॥ प्राणानपि तृणीयन्तः । प्रतिपक्षक्षयावधि ॥ अदत्तपृष्ठा वीरेन्द्रा । इवाऽचकलहांश्चिरम् ॥ ३७॥ विशेषकं ॥

1 सिंहनाद

दृष्ट्वा शौर्यं पशूनाम–प्यधिकाधिकगर्विताः ॥ वीराः संग्रामयामासु–रञ्जसा संकलौजसा ॥ ३८ ॥ युध्यमाना भटाः कोपा–
टोपात् खेचरचक्रिणः ॥ अभाङ्क्षुरथ भूपस्य । सैन्यं दैन्यं दधात्क्रियत् ॥ ३९ ॥ एतत्त्रस्यच्च पश्यन्तो । मत्तवारणचारिणः ॥
वीराङ्गदमहाबाहु–सुघोषसुमुखादयः ॥ ४० ॥ आच्छिद्य विश्ववीराणां । शक्तिभिः किल निर्मिताः ॥ भटाः पञ्चशतीसङ्ख्याः
सङ्ख्यायख्यातकीर्त्तयः ॥ ४१ ॥ युयुत्सुं स्त्रीतनुं भूपं । निवार्य स्वामिभक्तितः ॥ रिपूनाह्वन्त मायास्त्री–तनवोऽभिनवोर्जिताः
॥ ४२ ॥ न गृह्णतो न मुञ्चन्त–स्तेऽलक्ष्यन्त शिलीमुखान् ॥ ऐक्ष्यन्त तैर्हतास्तेषां । पतिता एव तु द्विषः ॥ ४३ ॥ शायितास्तै–
र्भटा भूमौ । साटोपैर्दीर्घनिद्रया ॥ शयिता मृतिभीत्याऽन्ये । तदन्तश्छद्मनिद्रया ॥ ४४ ॥ रथिनोऽप्यरथांश्चक्रु–रथानरथिनस्तथा ॥
सादिनोऽतुरगान् शस्त्रै–स्तुरगानप्यसादिनः ॥ ४५ ॥ निषादिनोऽकरेणूंस्ते । करेणूननिषादिनः ॥ योधनानविमानांश्च । विमाना–
नप्ययोधनान् ॥ ४६ ॥ छित्वा पादांस्तथापद्रा–नपद्रान् भूयसोऽपि च ॥ बलमित्यबलं चैवाऽ–खिलं खेचरचक्रिणः ॥ ४७ ॥ विशेषकं ॥
एवं भग्ने बले लग्ने । नष्टुं खेचरचक्रिणः ॥ दधावे गजसिंहोऽथ । समिते गजवाहनः ॥ ४८ ॥ निजामाश्वासयन् सेना–मेनां
भग्नरणोद्यमां अद्य मां निरुणद्धु द्राग् । यो योद्धोऽस्तीति च ब्रुवन् ॥ ४९ ॥ युग्मं ॥ अन्येऽपि च गजानन्द–गजदेवादयो भटाः ॥
सर्वे पञ्चशतान्याजौ । गजारूढा दधाविरे ॥ ५० ॥ सर्वे रुरुधिरे ते च । वीरैर्वीराङ्गदादिभिः ॥ मायास्त्रीतनुभिर्युध्य–मानैराह्वा–
नपूर्वकम् ॥ ५१ ॥ गजसिंहादयोऽचोचन् । रण्डा नाहंथ रे रणं ॥ वहताऽम्बुघटान् गत्वा । सूत्रं कर्त्तयताऽपि च ॥ ५२ ॥ नारीणां
कुर्महे हत्यां । नाऽरीणामपि यद्वयं ॥ मायानार्यः समाजख्युः । सितेन सुभगाननाः ॥ ५३ ॥ रण्डयामो वयं वैरि–नारी रण्डा–
स्ततः स्मृताः ॥ ततः सपदि युध्यध्वं । सान्वया यद्भवामहे ॥ ५४ ॥ हतेषु युधि युष्मासु । जलं दातुं जलाञ्जलिं ॥ सज्जीकृतं

पुराप्यस्ति । वहामोम्बुघटान्न तत् ॥ ५५ ॥ बन्धाय वैरिणां सूत्र । वहूनामपि वह्वपि ॥ अगुणं वर्त्ततेऽस्माकं । कर्त्तयामस्ततः कथम् ? ॥५६॥ स्वकीर्त्तिस्त्रीवधान्नूनं । स्त्रीहत्या वो भविष्यति ॥ वन्धे पलायने चाऽपि । जातेऽस्मत्तोऽधुना रणे ॥५७॥ मर्माविद्भिर्वचोवाणै–रेवं ते व्यथिता भटाः ॥ मायास्त्रीस्ताः शरासारान् । सारान् हन्तुं प्रणिन्यिरे ॥५८॥ ताश्च तानहरन् बाणो–त्करैर्वातोच्चयैरिव ॥ कुतः सिध्यन्त्यभाग्यानां । हता विघ्नैर्मनोरथाः ॥ ५९ ॥ स्त्रीभटा विद्विषां दर्पान् । सुप्रयुक्तैर्महायुधैः ॥ निजघ्नू रोगिणो रोगान् । भिषजो भेषजैरिव ॥६०॥ तेषां सहस्रसङ्ख्यानां । ससैन्यानां रणो महान् ॥ कृतान्तस्यैव पोषाय । तोषाय च तदाऽभवत् ॥६१॥महान् वीराङ्गदो वीरःस्त्रीरूपोऽपि तदाहवे ॥ [1]कुर्वन् वै वैरिसंहारं । कृतान्तोपमतां दधौ ॥६२॥ सायकैर्गजासिंहोऽपि।नायकैर्विद्विषां क्षयं ॥ [2]वीराङ्गदमनेनायी–द्व्याकुलत्वं चिरं युधा ॥ ६३ ॥ वीराङ्गदस्ततः शैलं । मुमुचे नागविद्यया ॥ गजसिंहोऽपि तं चूर्णी–चकाराऽशनिविद्यया ॥ ६४ ॥ गजसिंहस्ततो विद्या–सिंहं वीराङ्गदेऽमुचत् ॥ योधयानगजं चाऽत्ते । यावत्क्रोधोद्धुरः स च ॥ ६५ ॥ तावच्छरभाविद्यां सो–ऽस्मार्षीद्वीराङ्गदो द्रुतं ॥ प्रादुर्भूतस्तया निघ्नन् । शरभो रभसाद्रिपून् ॥६६॥ शरभंगजसिंहस्तं । हन्तुं बाणान् निरन्तरान् ॥ मुमुचेऽसिगदादीन्य–प्यायुधानि सहस्रशः ॥ ६७ ॥ उत्पतन् व्योम्नि गर्जन् स । भित्वा सर्वायुधोच्चयं ॥ नखैराहत्य दुर्द्धर्षो । गजसिंहमपीपतत् ॥ ६८ ॥ पतितं नागपाशैस्तं । बध्वा वीराङ्गदोऽग्रहीत् ॥ वारात्रिव गजं रज्जु–बद्धं गजनिबन्धकृत् ॥ ६९ ॥

स्त्रीरूपोऽथ महाबाहु–श्चिरं कृत्वा शराशरि ॥ गजानन्दाय मुमुचे । शक्तिं ज्वलनवर्षिणीम् ॥ ७० ॥ जघान प्रतिशक्त्या

१ अनेकशराणाम् ।     २ प्राप्याभास ।

तां । गजानन्दोऽपि लीलया ॥ भवतृष्णां यथा सर्वोऽनित्यभावनया सुधीः ॥७१॥ मोहनास्त्रं महाबाहु–रमुचद्वैरिणस्ततः ॥ तेनाऽऽ-
सादितमोहं च । बद्धं जग्राह तं पुनः ॥ ७२ ॥ एवं वीराः सुयोधाद्या । अपि स्वान् प्रतियोधनान् ॥ खेदयित्वा चिरं युद्धे–र्लोह-
दिव्यास्त्रभीषणैः ॥ ७३ ॥ नानास्त्रजर्जरान् श्रान्तान् । नागपाशादिभिर्जवात् ॥ निबध्य युगपद्देवा–ऽनिन्यिरे शिबिरे निजे ॥७४॥
॥ युग्मं ॥ बध्ध्वा शतानि पञ्चैवं । वीक्ष्य नीताभिजान् भटान् ॥ त्रस्तं व्यस्तं समस्तं द्राग् । विद्याभृच्चक्रिणो बलम् ॥ ७५ ॥
खेटचक्री च तद्वीक्ष्य । क्रोधमानाभिभूतिभिः ॥ युगपद्व्यथितो याव–दायाति समरावनीम् ॥७६॥ तृतीयस्तत्तनूजस्तं । सतृष्णः
समरे भटः ॥ भक्त्या व्यजिज्ञपत्ताव–न्मणिमाली कृताञ्जलिः ॥७७॥ तात! रण्डासु कोऽयं ते । कीटिकास्विव [1]काश्यपेः ॥ सङ्ग्रा-
मोपक्रमः स्फूर्ज–दोजसाऽरतविडौजसा ॥ ७८ ॥ स्त्रीत्वेनोपेक्षितास्ता हि । मयोच्छृङ्खलतामगुः ॥ समन्तान्निग्रहिष्येऽथ । ग्रहिष्ये
तद्गृहान्भटान् ॥ ७९ ॥ निषिध्य तातमित्युक्त्वा । कुम्भिकुम्भस्थलस्थितः ॥ मणिमाली द्विषन्मालां । दलन्नरिबलेऽविशत् ॥८०॥
गाहमाने बलं तस्मिन् । कासारमिव कासरे । योधैर्मुमुचिरे मार्गा । रवद्भिर्दर्दुरैरिव ॥८१॥ सोचे चायात रे रण्डाः ! करण्डाः ।
कपटश्रियां ॥ करोम्यनकतुण्डा वो । मुण्डमुण्डाः क्षुरप्रकैः ॥ ८२ ॥ स्वाधिक्षेपामिति श्रुत्वा । स्त्रीभटास्ते दधाविरे ॥ सहन्ते
वीरधिक्कारं । वीराश्च हरयश्च न ॥ ८३ ॥ तेषु वीराङ्गदो वीरो । रुरोध मणिमालिनं ॥ तस्मिन् वर्षन् शरश्रेणी–र्धाराश्रेणीर्नगेऽ-
म्बुदवत् ॥ ८४ ॥ वीरं वीराङ्गदं युध्य–मानं रूपेण योषितः ॥ मणिमाल्यप्युदग्रौजाः । प्रास्तृणोद्विशिखालिभिः ॥ ८५ ॥
अथो किरणमाल्याद्या । भ्रातरोऽस्य परेऽपि च ॥ पञ्चैकोनानि युद्धाय । शतानि प्रदधाविरे ॥८६॥ तेऽपि वीराङ्गदादन्यैः ।

[1] गरुडस्य

स्त्रीरूपैर्बलशालिभिः ॥ आहूयन्ताऽऽहवाय द्राग् । पत्रवाहौघवर्षिभिः ॥८७॥ न दिशो विदिशो नाऽपि । नाऽऽकाशं न च भूरपि ॥ सङ्ख्ये तेषामलक्ष्यन्त । शरा एव तु सर्वतः ॥८८॥ अथ ज्वालाकुला शक्ति-र्मुमुचे मणिमालिना ॥ अभेत्सीत्प्रतिशक्त्या तां । वीरो वीराङ्गदो रयात् ॥ ८९ ॥ ततो वीराङ्गदो धीरो । वैरिप्राणापहारिणः ॥ शूकरान् विद्यया मुञ्चद् । घोरघुर्घुरदुर्धरान् ॥ ९० ॥ इमाना-पततो दृष्ट्वा । मणिमाली महाभटः ॥ अमुचद्विद्यया सिंहं । सहसा तान् जघान सः ॥ ९१ ॥ तं वीक्ष्याऽभ्यापतन्तं च । सिंहं वीराङ्गदो द्रुतं ॥ शरभं प्रागिवाऽमुञ्चत् । स हर्यक्षमभक्षयत् ॥९२॥ शरभं रभसाऽऽयान्तं । मणिमाली विलोक्य तं ॥ विद्याऽवता-रिताऽब्देन । गर्जता मृतिमापिपत् ॥९३॥ मणिमाली गजं वीराङ्गदस्याऽपीपतच्छरैः ॥ रथं पवनवेगोऽस्य । सिंहयुक्तमथाऽर्पयत्॥९४॥ तमास्थाय मुदा वीराङ्गदोऽपि मणिमालिनः ॥ पृषत्कपङ्क्तिभिर्मत्तं । मतङ्गजमपीपतत् ॥ ९५ ॥ मणिमाल्यप्यथाऽऽस्थाय । नव्यं-विद्याकृतं रथं ॥ क्रुद्धो [1]व्याचुकुलद्वीरं । वपुष्याऽऽपतिपत्रिभिः ॥ ९६ ॥ वीराङ्गदस्य सोऽच्छैत्सीत् । क्रमात्सप्तधनूंषि च ॥ न ग्रहीतुं न मोक्तुं च । शशाकैष ततः शरान् ॥ ९७ ॥ ततः प्रस्वापनाऽस्त्रेण । मणिमाल्याशु संपुपत् ॥ वीराङ्गदं परांश्चाऽपि । स्त्री-भटान्निखिलानपि ॥ ९८ ॥ निद्राणं नागपाशैश्चाऽ-बध्नाद्वीराङ्गदं भटं ॥ मणिमाल्यङ्गिनं मूढ-मारम्भ इव कर्मभिः ॥ ९९ ॥

एवमेव महाबाहुं । चिरयुद्धश्रमाकुलं ॥ निद्राणान्मालिनोऽस्त्रेण । निबबन्धु पृथक् पृथक् ॥ ६०० ॥ मणिमाल्यपि तान् बद्ध्वा । विद्याकृतमहापटे ॥ यावद्गृह्णाति कैवर्त्त । इव जाले तिमिङ्गिलान् ॥१॥ तावत्पवनवेगाद्या-स्तमाहास्त संयते ॥ ढुढौके स्त्रीभटान्मुक्त्वा । स सङ्ग्रामयितुं पुनः ॥ २ ॥ वीराणामाहवाऽऽह्वानं । भुक्तयाऽऽह्वानं द्विजन्मनां ॥ सर्वेषामपि कार्याणा-मन्त-

[1] व्याकुली चकार

र्धानं हि गीयते ॥ ३ ॥ बहवो भोगरत्याद्याः । खेटवीराः परेऽपि च ॥ अयूयुधन् विचित्रास्त्रै–स्तं द्विपारिमिव द्विपाः ॥ ४ ॥
स नैकोऽप्यमदांश्चक्रे । वीरः शस्त्रैर्बहूनपि ॥ मितत्विषो ग्रहानेको–ऽप्यर्कः सृजति निस्त्विषः ॥ ५ ॥ भ्राता भृसग्ङ्गया नुन्नो ।
युध्यमानेन तेन च ॥ यावत्किरणमाल्येति । बद्धानादाय तान् भटान् ॥ ६ ॥ तावत्तद्ज्ञापनाचन्द्र–गतिना भूभुगाऽपतत् ॥ स्त-
म्भिन्या विद्यया द्राक् चाऽस्तम्नात्किरणमालिनम् ॥ ७ ॥ नष्टाहिबन्धनांश्चक्रे । तांश्च गारुडविद्यया ॥ प्राबूबुधत्प्रबोधिन्या ।
विद्यया च निजान् भटान् ॥ ८ ॥ ततः सज्ञाः पटं भित्वो–ड्डीय तेऽप्युपभूपति ॥ आययुः स्त्रीभटाच्छिन्न–जालतश्चटका इव ।९।
यानास्त्रादिप्रदानैश्च । सघक्रे तांश्च भूपतिः ॥ उदस्तम्नाच्च कारुण्या–त्ततः किरणमालिनम् ॥ १० ॥ स्वस्य स्तम्भाद्बन्धमोक्षात् ।
क्रुद्धः किरणमाल्यथ ॥ अनात्मज्ञो नृपं हन्तु–मुद्यम्यासिमधावत ॥ ११ ॥ यावत्प्रहरते भूपं । वीरमानी स चाऽसिना ॥ तावन्नृ-
पोऽसिमुद्दाल्य । तं मुष्टया मूर्द्धताडयत् ॥ १२ ॥ सोऽपतन्मूर्च्छितो भूमा–वहतोऽपि कृपालुना ॥ मूर्द्धीमपि चेपटां किं । मृगाऽरेः
सहते मृगः ? ॥ १३ ॥ तं च चन्द्रगतिर्बध्वौ–पधीनीरेण सज्जितं ॥ गृहीत्वा भूभुगादेशात् पूर्वबद्धेष्वमीमिलत् ॥ १४ ॥
अथ नामप्रतापाख्यां । समं किरणमालिनं ॥ बद्धं मत्वा निलिल्येऽर्कः । पश्चिमाऽब्धौ भयादिव ॥ १५ ॥ बन्धात्स्वनोर्भटानां
च । खेटचक्री चमूयुतः ॥ सूर्यकान्तकरश्चन्द्र । इव विच्छायतां ययौ ॥ १६ ॥ बहूनां वैरिणां बन्धाद् । भूपसैन्यममोदत ॥
काव्ये कविरिवार्थानां । बन्धाऽर्हाणां निबन्धनात् ॥ १७ ॥ इति श्रीजयानन्दराजर्षिचरित्रे खेचरचक्रिश्रीजयानन्दनृप-
युद्धाऽधिकारे तृतीयदिनयुद्धविस्तरः ॥

सम्भुज्य महरान् द्वित्रान् । भटैर्निद्राभिसारिकाः ॥ विसृष्टा द्राक् पलायन्त । भानुमत्युद्गमोन्मुखे ॥ १८ ॥ म्रियमाणैर्भटैः

सङ्ख्ये । पुत्रं तोषयितुं किल ॥ कृतान्तजनको युद्धा-रम्भवारणमुज्ज[1] हे ॥ १९ ॥ द्वयोरपि विरूथिन्यो-रदीपिष्ट भटोच्चयः ॥ रणोत्साहैस्तदोद्यद्भिः । करैरिव दिवाकरः ॥ २० ॥ अथो समग्रसामग्र्या । स्फुरितोदग्रतेजसी ॥ अनीके ते [2]समीकाय । डुढौ-काते दृढौजसी ॥२१॥ उद्भिडिरे सपत्रेभ्यो । दधद्भ्यः फलसंहतीः ॥ पत्रिणः शूरवर्गेभ्य-स्तरुभ्यश्च पतत्रिणः ॥२२॥ पत्रवाहैर्मिथो मुक्तै-र्व्रणिता रुधिरारुणाः ॥ प्रवीरास्तुलयाञ्चक्रुः । प्रफुल्लान् किंशुकद्रुमान ॥ २३ ॥ खेऽभितः पत्रिणो वीर-मुक्ताः सङ्घट्टिता मिथः ॥ पक्षोत्ताला इव व्याला-स्तुण्डातुण्डयचरीकरुः ॥ २४ ॥ असिभिर्युगपच्छिन्नाः । केषाञ्चिन्मौलयो मिथः ॥ व्योमन्यु-च्छलिता दन्ता-दन्ति चक्रुर्नु राहवः ॥ २५ ॥ एवं घोरे रणे चक्रि-सुभटैर्भूपसैनिकाः ॥ अपासार्यन्त कल्लोलै-रिवाब्धेः सरिदू-र्मयः ॥ २६ ॥ वीक्ष्याऽपसरतस्तांश्च । द्वेपिकक्षदवानलः ॥ सिंहयुग्यरथो वज्र-वेगः सङ्ग्राममास्थितः ॥ २७ ॥ योधून् यतो यतोऽद्राक्षीत् । स जघान ततस्ततः ॥ ततस्ततो हि दावाग्नि-र्देहेत्कक्षो यतो यतः ॥ २८ ॥

अथो पवनवेगोऽपि । रणपारयियासया ॥ विपक्षवाहिनीं क्षेप्तु-मुपास्थित रथस्थितः ॥ २९ ॥ तद्बाणैर्व्यथमानाश्च । वैर-मेवादितो भटाः ॥ दुर्भावैरिव धर्मज्ञा । निनिन्दुः कलिकारणम् ॥ ३० ॥ वीरश्चान्द्रगतिश्चाऽपि । स्पृहयालुर्यशःश्रियं ॥ प्रासरत् प्रहरन् वीरान् । रणे तैरस्खलद्गतिः ॥ ३१ ॥ भोगरत्यादयश्चाऽपि । रतिं यशसि बिभ्रतः ॥ क्षिपत्सर्वेकपं रोपै-र्युद्धे युयुधिरे भटाः ॥ ३२ ॥ सर्वे ते ऽतस्तरुश्चक्रि-सैन्यं दैन्यद्विपद्घटं ॥ बाणैर्निजचमूत्राणे-र्वैरिप्राणैककौणपैः ॥ ३३ ॥ युध्यमाना विचि-त्रास्त्रै-ररीणां प्रबलं बलं ॥ उपदुद्रुवुरेते च । कषाया इव संयमम् ॥ ३४ ॥ केषाञ्चित्तेऽच्छिदंश्चापान् । केषाञ्चिद्गुणसिञ्जिनीः ॥

१ उज्जाह ( सूर्य ) २ संग्रामाय ।

केषाञ्चन् शवान् बाणैः । केषाञ्चिन्मृत्युसंशयान् ॥ ३५ ॥ ततो युधोऽपसृत्यैते । खेटेन्द्रं शरणं ययुः ॥ मिथ्यात्वादिव सम्यक्त्वं । भविनो भवभीरवः ॥ ३६ ॥ भग्नां पवनवेगाद्यै-र्निजां वीक्ष्य वरूथिनीं ॥ भृशमुज्जागरक्रोध-श्चक्री विद्याभृतां जगौ ॥ ३७ ॥ बाल्यादपि भुजिष्या ये । ममैवाऽऽज्ञैकजीविनः ॥ तेऽपि भञ्जन्ति मे सैन्यं । बध्नन्ति च सुतादिकान ॥ ३८ ॥ तथाऽप्येवं पराभूतिं । हहा ! जीवन् सहाम्यहं ॥ वहामि खेटचक्रित्वाऽभिमानं तद्धिगस्तु माम् ॥ ३९ ॥ दुष्टाः पवनवेगाद्या । वध्यास्तद् द्रुतमेव मे ॥ इत्युक्त्वा स रथं याव-दारोहति युयुत्सया ॥४०॥ सुतानां प्रथमस्ताव-च्चक्रवेगः सभक्ति तं ॥ तृणीयितद्विपच्चक्रः । खेटशक्रं व्यजिज्ञपत् ॥ ४१ ॥ शेषः पातालमूले तव शरचकितः संस्थितो नाऽऽहवार्हो । भूताधारा धरित्री न विशिखनिकरैः स्फोटमर्हत्यसौ च ॥ क्रन्दन् भीत्या त्वदस्त्राज्जलनिधिरपि नो शोषयोग्यो विशेषात् । शक्रेण प्रागपीमेऽशनिकठिनतटैश्छिन्नपक्षाश्च शैलाः ॥ ४२ ॥ वह्निप्साना: सुरौकःस्थितिकृतरतयो देवताः किं विजेयाः ॥ क्षीणोहित्वादवध्यो जगदनभिमतोऽप्येष नूनं कृतान्तः ॥ स्थाता वीरश्च कश्चित्तव समिति पुरो वर्त्तते न त्रिलोक्यां । तत्कं जेयं विजेतुं रणरणकरकं तात ! शस्त्रं च धत्से ॥ ४३ ॥ निःसारा भटमानिनोऽपि न नरा गाढापराधेऽपि ते । वध्याः सम्प्रति कोऽपि नाऽस्ति च हरिश्चक्री च युद्धोद्यतः ॥ दैत्येन्द्रा विविशू रसातलबिले देवास्त्वनन्ते वने । कस्तत्ते रणकौतुकाय भविता पर्याप्तवीर्योऽधुना ॥४४॥ तत्तैर्भग्नेषु हीनेषु । कः खेदस्तात योद्धृषु ॥ काकोला अपि किं कीटान् । कृपणास्त्रासयन्ति न ॥ ४५ ॥ तत्किं संरभसे तेषु । रभसेन जयाम्यमून् ॥ पर्शुरेव लताच्छेत्तु-मर्हति त्वगभिद्भिदुः ॥४६॥ त्वयि विश्वत्रयीजैत्रे । सति नो सुलभो रणः ॥ स्वपुत्रस्याऽपि तच्छौर्यं । पश्याऽऽद्याऽवसराऽऽगतम् ॥ ४७ ॥ धात्रीं किं प्रविभिद्य पन्नगततीरुत्त्रासयामि द्रुतं ? । किं भूमौ परिपातयाम्युडुगणान् बाणैः प्रपक्वाऽऽम्रवत् ? ॥ किं शक्त्या परिशोष-

यामि जलधिं ? किं वा गिरींश्चूर्णया-म्येवं विद्धि समग्रशक्तिकलितं मां स्वाऽनुरूपं सुतम् ॥४८॥ इत्युक्त्याऽऽनन्दितं तातं । निषिध्या-ऽनुमतोऽमुना ॥ चक्रवेगो द्विषां चक्रं । निघ्नन्नाक्रामत क्रमात् ॥ ४९ ॥ न पादातैर्न रथ्याभि-र्नाश्वीयैर्न च हास्तिकैः ॥ इवा-प्गामहापूरः । सोऽस्खालि प्रसरन् रणे ॥५०॥ तद्बाणैः सर्वतो देह-प्रविष्टार्द्धैर्महाभटाः ॥ शल्या इव शरव्याप्त-तनवः सर्वतो बभुः ॥५१

अथो पवनवेगस्त-मह्वास्त त्रस्तशात्रवं ॥ रणार्थिनं तमालोक्य । चक्रवेगोऽप्यवम्भणीत् ॥ ५२ ॥ बुद्धिस्त्यजति दर्पान्धं । किं रे मूर्ख ! मुमूर्षसि ? ॥ मदस्यग्रे यदस्यग्रे-तनास्तिष्ठन् सुदुर्धिया ॥५३॥ आबाल्यान्मम तातस्य । मूढ भूत्वाऽपि सेवकः ॥ विप-क्षत्वं भजन् यस्या । बलान्नार्याः प्रगल्भसे ? ॥ ५४ ॥ हन्यमानं मयाऽद्य त्वां । न सा तु त्रास्यते ध्रुवं ॥ ग्रस्यमानं हि सिंहेन । मृगं रक्षति किं मृगी ? ॥५५॥ रक्षन्त्या च तयाऽऽत्मानं । क्षिप्तोऽसि त्वं रणे मम ॥ व्याधैर्व्याघ्रमुखे श्वान । एव प्राक् क्षिप्यते न किम् ? ॥ ५६ ॥ त्वां च तां च भटंमन्यां । निग्रहीष्यामि लीलया ॥ उष्णांशुर्वा शीतांशुर्वा । स्वर्भाणोर्भक्ष्यमेव हि ॥ ५७ ॥ जगौ पवनवेगोऽपि । त्वत्तातः प्रभुरेव मे ॥ परिणीतां वधूमिच्छ-न्नहास्युत्पथगः पुनः ॥५८॥ नासाहीनो न देवोऽर्च्यः । सेव्यो न नयमुक् प्रभुः ॥ अन्यायिनां च नैव श्रीः । स्थात्रीत्यनुभविष्यसि ॥ ५९ ॥ सैन्यस्याऽस्य प्रसिद्धा या । स्वामिनी भामिनी न सा ॥ अकाले क्षयकाला सा । परं दुर्दैवमेव वः ॥६०॥ त्वन्मे मत्तेऽथवा मृत्यु-र्युद्धेनैव हि भोत्स्यते ॥ तद् युध्यस्व विमुच्यैत-द्वचोडिण्डिमड-म्बरम् ॥६१॥ प्रज्ज्वलन्निति तद्वाचा । वात्ययेव दवानलः ॥ दग्धुं वैरिवनं चक्र-वेगोऽमुञ्चच्छरार्चिषः ॥६२॥ एताः पवनवेगोऽपि । गर्जन्नब्द इवोन्नतः ॥ शरधोरणिधाराभि-रायन्तीर्निरवारयत् ॥ ६३ ॥ ज्यायांसं भ्रातरं दृष्ट्वा । युध्यमानं महायुधैः ॥ महावेगो युधेऽधावद् । द्वितीयः खेटचक्रिभूः ॥ ६४ ॥ स चन्द्रगतिनाऽरोधि । विरोधिध्वान्तभास्वता ॥ शराशरि तयोश्चाऽऽसी-दसीमो-

त्साहशौर्ययोः ॥ ६५ ॥ मणिमाली तृतीयोऽपि । चक्रिभूः सुभटाग्रणीः ॥ द्राग् भोगरतिवीरेण । युधे धावन्नरुध्यत ॥ ६६ ॥ चण्डवेगं च सेनान्यं । धावन्तं धन्वधारिणं ॥ वज्रवेगचमूनाथः । स्थिरं योध्धुमुपास्थितः ॥ ६७ ॥ ततोऽष्टावपि ते काष्ठा-गजा इव महाहवे ॥ गर्जन्तो गर्वतो घोर-मजगर्जन्मरुत्पथम् ॥ ६८ ॥ उदडीयन्त तद्बाणा-स्तनुत्राणादिभेदिनः ॥ केषाश्चिच्च भयात्त्राणा । निस्त्राणाः पश्यतामपि ॥ ६९ ॥ अन्येऽपि सैनिकाः सैन्यै-रन्योऽन्यं सैन्ययोर्द्वयोः ॥ आह्वयग्राहमाह्वायि-पताऽऽहवमहाग्रहात् ॥ ७० ॥ सुभटाः कोटिशोऽप्येवं । [1]शरकार्मुकपाणयः ॥ मिथः कटकयुग्मस्थाः । समीकायोपतस्थिरे ॥ ७१ ॥ पवनेन समं चक्र-वेगस्याऽथ सुदुर्द्धरः ॥ अभूदभूमिर्विश्रान्तेः । समरोऽसमरोपतः ॥ ७२ ॥ चक्रवेगो द्विषो धन्वाऽभिदद् हृदिव मर्मवाग् ॥ तदादाय नवं सोऽपि । तस्यैतत्कमवत्तपः ॥ ७३ ॥ युगपद्भिन्दिपालेन । तावभङ्क्तां परस्परं ॥ स्यन्दनं दुर्धियो बन्धुस्नेहं दुर्वचसा यथा ॥ ७४ ॥ गदामुद्यम्य चक्रोऽथ । दधावे पवनं प्रति ॥ गदयैवाऽचुचूर्णत्तां । सोऽप्यश्मानमिवाऽश्मना ॥७५॥ ततो योधावयुध्येतां । मुद्गराभ्यामिभाविव ॥ आस्फल्यास्फल्य तावेवा-भज्येतां नत्विमौ भटौ ॥ ७६ ॥ चक्रवेगः शिलामेकां । व्योम्न्युत्प्लुत्य महीयसीं ॥ मुमुचे पवनाय द्राग् । मोहस्तृष्णामिवाऽङ्गिने ॥ ७७ ॥ आहत्य मुद्गरेणैतां । पवनोऽप्यपिनड् द्रुतं ॥ सुधीः सम्यक्त्वलाभेन । दीर्घामिव भवस्थितिम् ॥ ७८ ॥ आरुह्याऽथ रथौ विद्या-र्पितौ द्वावपि तौ भटौ ॥ चिरं व्यामुञ्चतां वीरमदज्वरहरान् शरान् ॥ ७९ ॥ शूलं जयश्रियो मूलं । चक्रवेगस्ततोऽमुचत् ॥ कदलीकाण्डवत्काण्डैः । पवनस्तदखण्डयत् ॥८०॥ यैस्तैरस्त्रैरजय्यं च । चक्रवेगोऽवगत्य तं ॥ भीष्मामर्चिष्मतां शक्ति-मस्मार्षीद्द्विषसरां द्विषाम् ॥८१॥ भ्रमयित्वा च तां प्रासां ।

१ धनुषोऽग्रगताया अटने जीवाः

त्रटत्कारकरीं करे ॥ वेगात्पवनवेगायाऽमुचत्प्राणापहारिणीम् ॥ ८२ ॥ पवनोऽन्येऽपि वीराश्च । तां भेत्तुं शस्त्रसंहतीः ॥ व्यमुञ्चन्न तु फेलुस्ताः । सत्क्रिया इव दुर्जने ॥ ८३ ॥ तया हृद्याहतः सद्यः । पवनः स्यन्दनेऽपतत् ॥ सा च मोक्तुः करेऽयासी–च्छ्येनीव चटकार्दिनी ॥ ८४ ॥ ज्ञात्वा पवनवेगं च । मूर्च्छालं नागपाशकैः ॥ अबध्नाच्चक्रवेगः स्त्री–मूढं डिम्भैरिव स्मरः ॥ ८५ ॥

अथेन्दुगतिना साकं । चिरं युद्ध्वाऽपि सायकैः ॥ नाऽजैषीत्तं महावेग । इव मिथ्याक्रियो भवम् ॥ ८६ ॥ आग्नेयास्त्रं ततोऽमुञ्च–न्महावेगोऽतिदारुणं ॥ वारुणास्त्रेण तच्चन्द्र–गतिर्द्राक् निरवीवपत् ॥ ८७ ॥ त्रिशूलं वैरिणां मौलिशूलकृद्दर्शनादपि ॥ महावेगोऽमुचत्तच्चाऽच्छिनच्चन्द्रगतिः शरैः ॥ ८८ ॥ अयोगोलं महावेगो । यन्त्रेण व्यमुचत्ततः ॥ शस्त्रैरस्खलता चन्द्र–गतिस्तेनाऽऽहतो हृदि ॥८९॥ मूर्च्छया स्यन्दनेऽपतत् । किम्पचान इवाऽर्थितः ॥ तं वेगेन महावेगः । सर्पपाशैर्बबन्ध च ॥९०॥ अयोविद्योद्भवाद् द्वै द्वैं–विविधैरायुधैश्चिरं ॥ युद्ध्वा भोगरतिं भूरि । मणिमाल्यप्यशिश्रमत् ॥ ९१ ॥ अहिपाशैस्ततोऽबध्नात् । स च भोगरतिं तथा ॥ न यथाऽशाशक् श्वास–प्रश्वासादिविधावपि ॥ ९२ ॥

चण्डवेगोऽथ सेनानीर्वज्रवेगं चमूपतिं ॥ चक्रवेग इवाऽबध्ना–च्छ्रान्तं सुचिरसङ्गरैः ॥ ९३ ॥ भूपस्येति भटा बद्धा–श्चत्वारश्चक्रिणो भटैः ॥ कषाया इव मोहस्य । धर्मस्योपशमादिभिः ॥ ९४ ॥ चक्रवेगादयश्चाऽमी । पवनादीन्नियन्त्रितान् ॥ यावत्कक्षासु निक्षिप्य । यान्ति स्वस्वरथस्थिताः ॥ ९५ ॥ तावद्वीराङ्गदेनाऽऽशु । तत्स्वरूपे निवेदिते ॥ आगत्य श्रीजयः क्ष्मापः । शरासारै रुरोध तान् ॥ ९६ ॥ तद्बाणैर्व्यथितास्ते च । समं सर्वेऽप्यरुन्तुदैः ॥ चक्रवेगादयो योद्धुं । बद्धान्मुक्त्वा डुढौकिरे ॥ ९७ ॥ युध्यमानः सहैतैश्चाऽऽकर्षिण्या विद्यया नृपः ॥ बद्धान् पवनवेगादी–नाऽऽकृष्य स्वरथेऽनयत् ॥९८॥ त्रोटयित्वाऽहिपाशांश्च । तेषां

गारुडविद्यया ।। वीराङ्गदेन चौपध्याः । पाथसा तानसज्जयत् ।। ९९ ।। आस्थाय स्वरथांस्ते चा–ऽधावन्त समिते पुनः ।। परा-
भवो हि वीराणां । वायुस्तेजोऽग्निवृद्धये ।। ७०० ।। वीक्ष्याऽथ पवनश्चण्ड–वेगं भूपेन योधिनं ।। पुत्राभिभूतिवैरेणाऽऽह्वास्त पिंषन्
रदान् क्रुधा ।। १ ।। सोऽपि सिंह इवाऽऽगत्य । क्रुधा पवनमूचिवान् ।। प्राणसन्देहमप्याऽऽप्या–न्यौजसा किं प्रगल्भसे ? ।। २ ।।
न नन्दति चिरं प्रायः । पराह्वन्यौजसां मदः ।। उष्णभानुकरात्तप्त्वा । कियत्तपति वालुका ? ।।३।। बध्वाऽहं त्वां न मोक्ष्यामि ।
शिथिलं चक्रवेगवत् ।। यदि वेत्सि न मे शक्तिं । तत्पृच्छ निजमङ्गजम् ।। ४ ।। तव मोचयिता कोऽपि । सोऽप्यद्य प्राणसंशयं ।।
नीतोऽस्ति चक्रवेगेन । यस्य वीर्यं त्वमन्वभूः ।। ५ ।। तथाहि त्वां विमुञ्चामि । चिरं स्वाम्यैकसौहृदात् ।। स्वयं शालभवत्सैतात् ।
स्वामिद्रोही प्रियस्य वा ।। ६ ।। पवनोऽप्यन्वभाषिष्ट । सकृदन्यकृतं जयं ।। स्वयं बालजयं वा किं । वदन् गर्वेण गर्जसि ? ।। ७ ।।
सकृन्मज्जयदर्पोऽन्यथात् । स्वयं शालभमार्गगं ।। जिघांसुरप्यहं वैरा–चक्रवेगमुपैक्षिषि ।। ८ ।। ततो बालार्दनेन त्वां । पापिनं हन्तु-
मागमं ।। पञ्चास्यः सहते किं वा ? । निजडिम्भार्दिनं किरिम् ।।९।। उक्तिप्रत्युक्तिभिः किं वा ? । शास्त्रवादे ह्यमूर्वरं ।। समरे त्वस्त्र-
मेवेति । तत्कुरुष्व भटोऽसि चेत् ।।१०।। इत्युक्त्वा कुपितश्चण्ड–वेगश्चण्डपराक्रमः ।। विशिखैस्तिरयामास । पवनं सोऽपि तं रयात्
।। ११ ।। शराशरि चिरं कृत्वा । चण्डवेगं श्रमातुरं ।। आजघान त्रिशूलेन । पवनो हृदि तं दृढम् ।। १२ ।। मूर्छया पापतिं नाग-
पाशैर्बध्वा च तं रयात् ।। [1]वैरनिर्यातनाहृष्टः । पवनः शिबिरेऽनयत् ।। १३ ।।

अथ श्रीश्रीजयानन्द–श्चक्रवेगादिभिः समं ।। युध्यमानोऽभनक् तेषां । बन्धूनां युगपद्रथान् ।। १४ ।। उत्प्लुत्योत्प्लुत्य

१ वैरस्य वालनात् हृष्ट

तान् [1]सर्वान् । धनुर्मुक्तशरार्दितान् ॥ भूपीठेऽलूलुठद्वाणैः । स्रवत्तद्विस्रपङ्किले ॥ १५ ॥ अतिशौर्यात्समास्थाय । पुनर्विद्याकृतान् रथान् ॥ युध्यमानांस्तथैवोर्व्यां । लीलयाऽलोठयन्नृपः ॥१६॥ अभूदित्यसकृद्भूपे कृपालौ ताननिघ्नति ॥ प्रशशंसुः सुरा राज्ञः । कृपां तेषां च साहसम् ॥१७॥ नागपाशैस्ततोऽबध्नात् । नृपस्त्रीरपि तान् समं ॥ निर्वहन्ति कियद्युद्धं । सुपर्णेन सहाऽहयः ॥१८॥ निन्ये चन्द्रगतिस्तांश्च । स्कन्धाऽऽवारे नृपाज्ञया ॥ दृष्ट्वा किरणमाली च । मुमुदे बन्धुसङ्गमात् ॥१९॥ आरास्त्रक्षतवीराङ्गो–च्छलितैः शोणितैरथ ॥ [2]आक्तो रक्तश्च सूर्योऽगात् । स्नातुं स्वपरवारिधौ ॥ २० ॥ स्वस्वस्वाम्याज्ञया जज्ञे–ऽवहारः सैन्ययोर्द्वयोः ॥ द्विधाऽपि मुक्तसङ्ख्याश्च । भटा जग्मुर्निजं पदम् ॥ २१ ॥ जयाऽजयभवानन्द–शोकाभ्यां दधतुर्बले ॥ दिनरात्र्युज्ज्वलश्याम–मेरुपार्श्वद्वयोपमाम् ॥ २२ ॥ शुशोच तनयान् बद्धान् । खेटचक्री भृशं निशि ॥ तद्रक्षायै युधे स्वस्य । मन्यमानः प्रमादिताम् ॥२३॥ सेनान्यं प्राक्तनं बद्धं । ज्ञात्वा चक्री निजात्मजं ॥ द्विधा महाबलं न्यास्थ–त्तत्पदे राजकाशयात् ॥२४॥ अपि कण्ठगतप्राणा । भटहस्त्यादयोऽखिलाः ॥ सज्जिता मज्जनं नद्यां । रणश्रान्तिच्छिदे व्यधुः ॥ २५ ॥ निद्रालिङ्गनसौख्येन । देवानपि तदुज्झितान् ॥ निनिन्दुः सुभटाः सौव–प्रियाणां च न सस्मरुः ॥ २६ ॥ इति श्रीजयानन्दराजर्षिचरित्रे श्रीजयानन्दखेचरचक्रिमहायुद्धाधिकारे चतुर्थदिनयुद्धविस्तरः ॥ ग्र० १०९ ।

दानादिशुभवस्तूनां । ज्ञात्वा सौप्तिककृत्तमः ॥ तत्त्रासायाऽरुणः क्रोधा–दिवाऽक्रामत भानुमान् ॥२७॥ सर्ववाहनशस्त्रादि । भटेभ्यो निखिलं तदा ॥ यथेष्टमददाद् भूभृ–च्चिन्तारत्नानुभावतः ॥२८॥ अथ सूर्यकरान् वीरा । वीक्ष्याऽन्धतमसं घ्नतः ॥ तैर्नु पा-

१ व्योम्नि युध्यमानान्° प्रत्यन्तरे   २ आर्द्रितः

स्पर्द्धतो हन्तु-मौत्सुकायन्त शात्रवम् ॥ २९ ॥ प्राग्वत्समग्रसामग्र्या । पृतनाद्वितयस्थिताः॥योधा डुढौकिरे योद्धुं । वोढुं स्वस्वपराः क्रमम् ॥ ३० ॥ शरैर्निरन्तरापातैः । पिहिते हि प्रभापतौ ॥ उद्योतोऽभून्मिथो वीर-शस्त्रसङ्घट्टजानलैः ॥ ३१ ॥ खेटचक्रिबले भग्ने । पवनादिभटैरथ ॥ महाबलः समुत्तस्थौ । वीरः शक्रपराक्रमः ॥३२॥ स युद्धे प्रतियोधृणां । सायकानां च वीरराट् ॥ पृष्टान्येव ददर्शाऽऽजौ । केषाञ्चिन्नाननानि तु ॥ ३३ ॥ शरैर्ध्वस्तभटं[1] तेन । भूपस्याऽतुतुलद्बलं ॥ लुलायगाहनम्लान-कमलावलिः[2]पल्वलम् ॥ ३४ ॥ तमन्यसुभटाऽजय्यं । ज्ञात्वोपास्थित भूपतिः ॥ द्विपद्ध्वान्तरवियोद्धुं । किरन् शरकरावलीः ॥ ३५ ॥ समरैकधूरो धीर-स्तमरौत्सीन्महाबलः ॥ प्रबलं धनुरास्फाल्य । सबलं तिरयन् शरैः ॥ ३६ ॥ काण्डान् भूपः[3] मकाण्डं च । [4]काण्डीराकाण्डघातिनः ॥ मुञ्चन् व्याकुलतां निन्ये । सेनान्यं सेनयाऽन्वितम् ॥ ३७ ॥ सायका दायका भीते-स्तस्य पेतुर्यतो यतः ॥ योद्धारः स्पर्द्धयेवैषा-मपतंश्च ततस्ततः ॥ ३८ ॥ तद्बाणघातभीतानां । वीराणां नश्यतां द्रुतं ॥ स्रस्तान्यस्त्राणि पाणिभ्यः । श्रेणिभ्यो वसनानि च ॥३९॥ निघ्नत्यस्मिन् द्विपत्सैन्यं । कुमारा युगपद् द्रुतं ॥ द्वादशाऽपि सहस्राणि । पञ्चोनानि परेऽपि च ॥४०॥ वीरवर्गाग्रणिम्मन्या । नानायानायुधाः क्रुधा ॥ अधावन्त मुधामाना-स्तमुपद्रोतुमुद्यताः ॥ ४१ ॥ युग्मं ॥ सर्वेऽपि युगपद्भूपं । स्त्रीरूपं चापधारिणः ॥ सत्वरं तिरयामासु-र्वर्षन्तः शरधोरणीः ॥ ४२ ॥ सोऽपि तान् सुबहून् दृष्ट्वा । मुमुदे रणकौतुकी ॥ नुनोद प्रति तान् बाणान् । वैरिप्राणान् जरीहृतः ॥ ४३ ॥ एकोऽपि विकिरन् विष्वग् । बहून् शरकरान् दधौ ॥ रवीन्द्वोर्युगपत्साम्यं । स्वान्यसैन्याब्जखण्डयोः ॥ ४४ ॥ जघानैकोऽप्ययं वीरान् । युध्यमानाननेकशः ॥ प्रयस्यति न पञ्चास्यो । मृगान्निघ्नन् बहुनपि

१ शरतप्रास्त भटं तेन प्रत्यन्तरे   २ पल्वणं-कर्म प्रत्यन्तरे   ३ प्रधानभूपं   ४ धनुर्धरा अकस्मात् घातिनः

॥४५॥ रथस्थो गगनस्थो वा । भूमिस्थो वा क्षणादपि ॥ धुरि मध्ये तथा चाऽन्ते । सेनाया नृपतिर्भ्रमन् ॥४६॥ कांश्चिद् दृढपदाघातैः । कांश्चित्करतलाहतैः ॥ वज्राभैर्मुष्टिभिः कांश्चित् । कांश्चित्कठिनकूर्परैः ॥ ४७ ॥ गदामुद्गरदण्डाऽसि-प्रभृतीनां पृथक् पृथक् ॥ अन्योन्यास्फालनैः कांश्चिद् । द्विपद्वीरानपीपतत् ॥ ४८ ॥ ततो जातकृपस्तेषु । रथ एव स्थितो नृपः ॥ स्वेनैव योधिनः सार्ध-मायुधैरप्यजर्जरत् ॥ ४९ ॥

विविधैरायुधैरेवं । योधयित्वा कियन्नृपान् ॥ निस्त्राणान्निस्तनुत्राणा-न्निरस्त्रांश्च व्यधादिमान् ॥ ५० ॥ पुरोगांस्तेषु सर्वेषु । रणश्रान्तान् कुमारकान् ॥ शतं महाबलादीन् स । नागपाशैर्बबन्ध च ॥ ५१ ॥ तांश्च वीरप्रधानानि । बद्धानि वशशादनात् ॥ वीक्ष्याऽशेषाऽपरे नेशुः । कुमाराश्चटका इव ॥ ५२ ॥ उपैक्षिष्ट नरेन्द्रस्तान् । कुमारान्नश्यतो भिया ॥ कणेष्वात्तेषु सर्वेषु । प्रोड्डा-यन्ते न किं तुषाः? ॥ ५३ ॥ बद्धान् पवनवेगोऽथ । राज्ञा भ्रूसंज्ञयेरितः ॥ कारागारे इव स्तेनान् । स्कन्धवारेऽनयद्रयात् ॥५४॥ भग्नान् वीक्ष्य तनूजान् स्वान् । मत्वा बद्धांश्च कांश्चन ॥ तान् विमोचयितुं चक्री । क्रुधाऽऽध्मातोऽभ्यधावत ॥५५॥ शीर्षच्छेद्या क्व सा रण्डा? । क्व ते बद्धाः कुमारकाः? ॥ इत्यादि प्रलपन् सोऽरि-सेनामस्खलितोऽविशत् ॥५६॥ स च धन्वी निषङ्गी च । संस्थितोऽतिरथी रथे ॥ मूर्त्यन्तरं कृतान्तस्या-तर्कि भीष्मक्रुधा भटैः ॥ ५७ ॥ वीक्ष्य तं संहितैकेषु-मनेशन् सर्वतो भटाः ॥ सञ्जातकरुणस्तान् स । शक्रजिद्विक्रमोऽवदत् ॥ ५८ ॥ मङ्गलानि दधतां भटवर्गाः । सुस्थिताश्च रिपवोऽपि भवन्तु ॥ एष यद्युधि निहन्मि न हीनान् । यो जगत्सु च समोऽस्त्याधिको वा ॥ ५९ ॥ उग्रोज्जाग्रदकालकालबलवद्वल्गद्भुजास्फालनो-त्तालव्यालकरालकालबहुलव्यालोलवालालयः ॥ ग्रावग्रन्थिभिदूर्जिगर्जितसृजः स्फूर्जद्भुजाला भटाः । सर्वे नः समरे सृजन्ति करुणाक्लिन्नं

मनश्चेष्टितैः ॥ ६० ॥ तन्निर्भीकाः स्थ रण्डां तु । तां मे दर्शयताऽधुना ॥ यदस्या गर्भतः पुत्रा–नाऽऽकर्षामि निजानहम् ॥६१॥
श्रुत्वेति सीतनुर्भूभृद् । द्रुतमेत्य जगाद तं ॥ साऽहं रण्डाऽसि भो! भो! या।रण्डयिष्यति ते प्रियाः ॥६२॥ चेत्सजिगंससे पुत्रै–
स्तद्रो युध्यस्व सत्वरं ॥ यत्त्वां संगमयाम्येष । तैर्नीत्वा तत्समां दशाम् ॥ ६३ ॥ इति मर्मवचोऽस्त्रेण । विद्धः खेचरचक्रयथ ॥
युधैवोत्तरयिष्यामि । निद्दत्यैतां नतूक्तिभिः ॥ ६४ ॥ चिन्तयित्वैवमास्फाल्य । धनुर्नन्याऽम्युदध्वनि ॥ चक्रे शिलीमुखान् वर्षन् ।
नभमभ्रमयं स तैः ॥ ६५ ॥ स्वबाणवात्यया भूपो–ऽप्येतद्बाणाऽब्दसंहृतेः ॥ दिग्मुखान्युज्ज्वलीचक्रे । मुदा वीराननान्यपि ॥६६॥
स्फूर्जत्येवं तयोर्युद्धे । युगपच्चक्रिसैनिकाः ॥ इव प्रदीपने लग्ने । सर्वेऽन्येऽपि दधाविरे ॥ ६७ ॥ सुधे पवनवेगाद्यै–श्चन्द्रगत्यादि–
भिश्च ते ॥आह्वायिषत खेटेन्द्र–सुताद्याः सुभटाऽग्रिमाः ॥६८॥ वीराऽस्त्रहतपत्त्य–श्व–गजौघरुधिरैर्दिवि ॥ विश्वगुच्छलितैः सन्ध्या–
रागोऽकाले व्यजृम्भत ॥ ६९ ॥

एवं सर्वाऽभिसारेण । समीकेऽनीकयोस्तयोः ॥ जायमाने चकम्पे भू–र्विष्वक् प्रलयशङ्किनी ॥७०॥ उद्वेलाः सागराश्चाऽऽ–
सन् । शैलाः कम्पात्पतापताः ॥ चलाचलानि विश्वानि । दिशश्चाऽस्त्रान्धकारिताः ॥७१॥ दम्भाद्घोराहवस्यैवं । जयाऽजयफलार्प–
णात् ॥ भटानदीदृशद्वेधाः । प्रव्यक्तिं पुण्यपापयोः ॥ ७२ विश्ववीरगणाग्रण्यो–रथो चक्रिमहीभुजोः ॥ रणोऽभूत्परमो यद्वत् ।
सुरेशदितिजेशयोः ॥७३॥ द्वयोरपि तयोरिष्टो । जयोऽनिष्टः पराजयः ॥ तौ चान्योऽन्याऽविनाभावौ । तदर्हं समधेग् विधिः॥७४॥
धन्वाऽमेघवज्रपृष्ठ–मक्षय्येषू च बाणधी ॥ कामाक्षा ददे यस्मै । स भूपः केन जीयताम्? ॥७५॥ यथेष्टं यस्य शस्त्राणि । चापे–
प्वायानि विघ्नयां ॥ भूयो नवनवानि स्यु–र्दुर्जयो हि स चक्र्यपि ॥ ७६ ॥

अथ काण्डैर्नृपश्चापं । चक्रिणः खण्डशोऽसृजत् ॥ विद्यया तन्नवं लात्वा । तथैव युयुधे स च ॥७७॥ भूपस्तदपि चिच्छेदाऽ[1]विच्छेदादिति चक्रिणः ॥ एवं नवनवांश्चापान् । सोऽच्छैत्सीद्विद्ययाऽर्पितान् ॥७८॥ रणसिंधोस्ततः कूलं । शूलं खेटेश्वरोऽमुचत् ॥ शूलेनैवाऽभिदद्भूप-स्तच्च दार्विव दारुणा ॥ ७९ ॥ अयोभारसहस्रीयं । गोलं चक्री द्विषेऽमुचत् ॥ सोऽभिनत्तं च तेनैव । मोदकेनेव मोदकम् ॥ ८० ॥ बभञ्जाऽथ रथं भूपो । गदया खेटचक्रिणः ॥ तथैव तस्य तं सोऽपि । यत्कृतं भुज्यते हि तत् ॥ ८१ ॥ सूर्यहासाऽसिमुद्यम्य । दधावे खेटचक्र्यपि ॥ चन्द्रहासं नरेन्द्रोऽपि । व्यधत्तां तौ ततोऽस्यसि ॥ ८२ ॥ विदधाते चिरं तौ च । दण्डादण्डि गदागदि ॥ मुद्गरामुद्गरि वीरौ । मुष्टामुष्टि पदापदि ॥ ८३ ॥ परमेतेषु युद्धेषु । नाऽजैषीत्कोऽपि कश्चन ॥ दुर्लभो हि जयः सद्यः । [2]सङ्ख्ये पञ्चास्ययोर्मिथः ॥८४॥ अस्थाद्धन्वी ततश्चक्री । पुनर्विद्याकृते रथे ॥ व्यमुञ्चच्च शरासारं । नरेन्द्रोऽपि तथैव च ॥ ८५ ॥ ततोऽमुञ्चत्तथा बाणान् । क्रुद्धः क्ष्माभृन्महौजसा । रथादुत्पाट्य तैश्चक्री । भूपीठे लोठितो यथा ॥ ८६ ॥ रथं चाऽस्याऽभनक् शौर्य-वदानेन गदाहतैः ॥चक्री प्राग्वद्रथे स्थित्वा । युयुधे विशिखैः पुनः ॥ ८७ ॥ भूयोऽपि भिन्नसन्नाहं । विशिखैर्व्रणितं च तं ॥ तथैव स्यन्दनं भित्त्वा । रक्ताक्तं भुव्यलूलुठत् ॥ ८८ ॥ ततो विद्याबलेनैष । वर्मधन्वरथान्नवान् ॥ निधाय युयुधे क्रोध-दुर्द्धर्षो दुर्द्धरं पुनः ॥ ८९ ॥ तथैव च धराधीशो-ऽप्याऽऽहत्याऽऽशु तमाशुगैः ॥ भङ्क्त्वा स्यन्दनस्योर्व्यां । स्रवदस्रमपीपतत् ॥ ९० ॥ एकविंशतिकृत्वश्च । कृतोऽप्येवं महीभुजा ॥ विरराम रणान्नायमहो वीरव्रताग्रहः ॥ ९१ ॥ अथ वीक्ष्य रथान् भग्नां-श्चक्रिणोऽपीति भूभुजा ॥ स्वतद्भङ्गभियेवाऽर्क-स्तिरोधादस्तभूभृति ॥ ९२ ॥ ततो विरेमतुः सैन्ये । स्वस्वेशादेशतो रणात् ॥

१ नैरन्तर्यात् २ युध्धे

स्कन्धावारगमास्थार्त-मज्जनादि च पूर्ववत् ॥ ९३ ॥

अथ चक्री निजं स्थान-मागतः स्वाङ्गजन्मनां ॥ बन्धाच्छोकाकुलोऽध्यासी-न्मोक्षोपायं स्वधीसखान् ॥ ९४ ॥ परिणाम-हितं तेऽपि । जगदुः रोदनाकिणं ॥ यद्वाऽयं श्रीजयो भूप-स्त्वत्पुत्राणां न चाऽऽज्ञ्या ॥ ९५ ॥ मुक्त्वा कदाग्रहं तादृग्-मौलिकंकणधारणे ॥ कन्यां दत्त्वाऽप्यदत्त्वाऽपि । दुरुक्तं क्षमयस्व तम् ॥ ९६ ॥ उत्तमत्वात्कृपालुत्वात् । सैवं मोक्ष्यति ते सुतान् ॥ तव राज्याऽस्पृहो याता । कृतार्थः स्वपदे पुनः ॥ ९७ ॥ श्रुत्वैवममुमुक्षुः स्वां । संन्धां मानी विसृज्य तान् ॥ चक्री सुशिक्षितं दूतं । प्राहैः पीतपवनाऽन्तिके ॥ ९८ ॥ [illegible] गत्वा तमभाषिष्ट । शिष्टाऽऽदिष्टोऽसि चक्रिणा ॥ त्वज्जामाता सुतानां मे । बद्धेत्यश्रास्यहं जनात् ॥ ९९ ॥ गतः सन्धेश तस्मात्त्वं । बद्धान् मोचय मे सुतान् ॥ दास्यामि स्वकनीं तस्मै । कन्यापञ्चशतीयुताम् ॥ ८०० ॥ प्रदास्ये चार्थयं ताद्‍दृक्‌ । मौलिं सप्ताहमेव च ॥ धत्तां स तादृशं प्रीति-रस्तु चाऽभयमावयोः ॥ १ ॥ पवनोऽपि निशम्यैत-द्गत्वाऽऽचख्यौ क्षमापतिं ॥ तदुक्तं च प्रतिश्रुत्याऽऽगत्य चोवाच दूतकम् ॥ २ ॥ याहि दूत ! वद स्वेशं । वक्ति त्वत्सुतबन्धकृत् ॥ नैवार्थस्तव कन्याभि-र्वैताढ्यार्द्धेन चाऽस्ति मे ॥ ३ ॥ त्वं तु तादृग्मदाज्ञाङ्कं । सप्ताहं मुकुटं वह ॥ दास्यामि भरतार्द्धं ते । सन्धिश्चाऽस्त्वावयोः सदा ॥ ४ ॥ दूतो गत्वेदमाचख्यौ । क्रुद्धश्चक्री त्वचिन्तयत् ॥ विधाता नाऽधुना सन्धिं । गर्वितो जितकाश्ययम् ॥ ५ ॥ अथवा चक्रभृन्नाऽयं । न शक्रो न [1]त्रिविक्रमः ॥ नृमात्रो मेऽग्रमुद्वीक्ष्या [2]ऽमन्दाक्षो मङ्क्षु नङ्क्ष्यति ॥ ६ ॥ शस्त्रान्तरैरजय्यं तत् प्रातर्विद्यायुधैरसुं ॥ हत्वा स्वान् मोचयिष्यामि । सुतान् भावि यशश्च मे ॥ ७ ॥ ततोऽयं सुभटाश्चापुः । स्वापशर्माऽखिला निशि ॥ निशाशेषेऽगमन्

१ विष्णुः   २ निर्लज्जन्

त्त्वाऽ-नित्यं विषयसौख्यवत् ॥ ८ ॥ इति श्रीजयानन्दराजर्षिकेवलिचरित्रे श्रीजयानन्दनृपविद्याधरचक्रियुद्धाऽ-धिकारे पञ्चमदिनयुद्धविस्तरः ग्र०—८१

कौशिकांस्त्रासयन्तं मां । वीक्ष्य वीराः स्वशात्रवान् ॥ सस्पर्द्धं त्रासयन्त्वेवं । ध्यात्वेवोदगमद्रविः ॥ ९ ॥ युगान्ताम्भोधरध्वान-तिरस्कारधुरन्धरः ॥ रणतूर्यप्रणादोऽभूत् । पृतनाद्वितये ततः ॥ १० ॥ तेन संवर्द्धितोत्साहाः । पृतनाद्वययोधनाः ॥ नटा नान्दीश्रुतेर्यद्व-द्रङ्गाङ्गणमुपागमन् ॥ ११ ॥ सामग्र्या कृतसामग्र्या । युध्यमाना भटा ययुः ॥ अल्पशोऽस्त्रैर्बहून् शत्रून् । घ्नन्तः कीनाशतां द्विधा[1] ॥ १२ ॥

भग्नेऽथ चक्रिणः सैन्ये । भूपवीरै रणोन्मदैः ॥ कुमारा युगपत्सर्वे-ऽप्यधावन्त क्रुधा युधे ॥ १३ ॥ वीरैः पवनवेगाद्यै । रुद्धा घ्नन्तो भटानिमे ॥ दुर्विकल्पाः शुभध्यानै-रिव धर्मान् जरिहृतः ॥ १४ ॥ वक्रीभूता इव क्रूर-ग्रहाः सर्वभयप्रदाः ॥ भुवीव वैरिसैन्ये ते-ऽभूवन् भूपभटास्तदा ॥ १५ ॥ तथा दृष्ट्वाऽथ तैश्चक्रि-कुमारैः स्फारविक्रमैः ॥ अक्रमं तैः समं योद्धुं । सक्रुद्धैरुपचक्रमे ॥१६॥ क्वचिदर्कमयं चक्रैः१ । क्वाऽपि चोल्कात्म शक्तिभिः१ ॥ मिथः सङ्घट्टिताऽनेक-शस्त्रैस्तथाऽग्निमयं क्वचित्१ ॥ १७ ॥ नीरन्ध्रमिलितासङ्ख्य-शरव्राताऽभ्रकृत्क्वचित्१ ॥ मुद्गराद्यैः क्वचिद्भ्राम्य-द्गृध्रपङ्क्त्यभवन्नभः ॥ १८ ॥ युग्मं ॥ विपक्षांश्चक्रि-वीरास्ते । व्यजयन्त युधाऽवनौ ॥ अनेकानुद्दिरन्तोऽस्त्र-व्रातान् धर्मानिवाऽर्हताः ॥१९॥ ततः स्वभटसंहार-शंकया श्रीजयो नृपः ॥ सिंहयुग्यरथारूढः । स्त्रीतनुः प्राऽविशद्रणे ॥२०॥ तस्य प्रतीपगामिन्योऽभूवन् वैरिभटालयः ॥ रणे प्रसरतः स्वैरं । तरुच्छाया

१ कृपणत्वं यमत्वं चेति द्विधा

रवेरिव ॥ २१ ॥ आह्वासत सुतास्ते तं । चक्रिणो रणकर्मणि ॥ हसन् सोऽपि जगौ बद्धान् । बन्धून् किं रे विसस्मरुः? ॥ २२ ॥
मुग्धा द्रुतं नश्यत नश्यताऽद्य रे?।सुरक्ष्यतां वीरजयाऽर्जितं यशः ॥ यतो न वीक्षे नृसुरासुरेषु तं । सकृच्चपेटामपि मे सहेत यः।२३।
मृत्पिण्डत्वमिभाः पुरो मम हयाः काष्टात्मतां चाऽखिला । योधा बिभ्रति लेप-पुत्रकतुलां लौहा रथाः पर्णतां ॥
शस्त्रौघास्तृणतां सुराऽसुरनराधीशास्त्वनुग्राह्यतां ।तत्कैः केन कदा क्व चाऽहह! कथं जेयोऽहमप्याऽऽहवे?॥२४॥
ये शूरा भटकोटिकुट्टनमदोत्ताला भिये स्वर्गिणां । ते नः संख्यरसार्थिनां खलु मुदे दिष्ट्या स्थिता हक्पथे ॥
स्फूर्जत्फूत्कृतिदुर्द्धरोत्फणगणा भेकोन्दुराणां दरं । ये दद्युः प्रमदं हि ते फणभृतस्तार्क्ष्यस्य भक्ष्यैषिणः ॥२५॥
अत्रस्तोमपरिश्रमश्रमभरैर्निर्विश्रमं क्राम्यथा-स्मादृग्युद्धजिगीषयाऽतिविकटैः किं रे! भटा दुर्घटैः॥ नाऽस्माकं प्रकटं चपेटमपि यत्सोढुं
सुरेन्द्रोऽप्यलं । तत्किं यूयमुपस्थिता मम रणे मूर्खा मुमूर्षावशात्? ॥ २६ ॥ इति तद्वचनैः क्रुद्धा । युद्धाऽतृप्ताश्च ते भटाः ॥ मुमु-
चुस्तृणितप्राणान् । बाणान् सर्वे सहस्रशः ॥ २७ ॥ अभाङ्क्षीत्क्षोणिपालश्च । केषाञ्चित्स्यन्दनान् रथात् ॥ कानप्यलूलुठद्भूमौ ।
कांश्चिद्व्योम्न्युदलालयत् ॥ २८ ॥ युध्यमानं नियुध्यैवं । तं खेचरचक्रभृत् ॥ स्वपुत्राणां वधाशङ्की दधावे योद्धुमुद्यतः ॥ २९ ॥
स च धावन् विदुद्राव । शैररिपताकिनीं ॥ सर्वतोऽदद्रवद्वीरान् पशूनिव दवानलः ॥ ३० ॥ तमाह्वास्त निजाऽनीकं । क्षितिरक्षी
रिरक्षिषुः ॥ मिथो विदधतुस्तौ च । रोषादिष्विपवि द्रुतम् ॥ ३१ ॥ सर्वे सर्वाभिसारेण । पृतनाद्वयगा मिथः ॥ योधा युयुधिरे
स्वामि-युद्धवृद्धक्रुधस्ततः ॥३२॥ धनुर्धनुषि दोर्दोषि । मुष्टामुष्टि गदागदि ॥ शक्ताशक्ति भटास्ते च । चक्राचक्रि चिरं व्यधुः ॥३३॥
अथ कौतुकोक्तिः—नीसाण घमघमइं, ढोल ढमढमइं, दमामा दमदमें,झल्लरि छमछमें, योगिणी डमरु डम-

डमें, दिसि गमगमें, वयरी कोपें धमधमें, झूझूवाटमटमटें, कायरकमकमइं, जिम जिम भट भीडे तिम तिम रस चडे, एके हण्या पडे, बीजा गाढे राजडे, काहला त्रडत्रडे, दर्दरी दडदडे, खाण्डां खडखडे, सन्नाह कडकडे, भडपडतां थडथडे, पडिआ फडफडें, एकें बडबडइं, भूमि धडहडे, गिरिशिखर खडहडे, शिला रडवडे, पाताले सुर भडहडें, भोगीओ दडवडे, प्रेततो हडहडे, गज गडगडे, वृक्ष कडकडे, त्र्यम्बक त्रहत्रहे, धीर गहगहे, तेहना जस महमहे, महाधज लहलहे, दिग्गिरि टलयले, सायर हलहले, नगर खलभले, वीरहाथ चलवले, पडिआ टलवले, भल्ल झलहले, रुधिर खलखले, लोक कलकले, नारी वलवले, जूझार घाय न चूके, नासतां बाण मूके, हाथी चाले हलके, पगे नेउर खलके, एकना अङ्ग लटके, एक तेजें झलके, रथ भाञ्जे, जयनाद वाजे, नीच नासत न लाजे, एक एक हुइ ताजें, बलिआ हरखे गाजे ॥

एतत्कौतुकमात्रा-ल्लिखितं वाच्यं न चैव सर्वत्र ॥ सभ्याऽपेक्षगिरो यत् । कवयो व्याख्यातृविज्ञाश्च ॥ ३४ ॥ ततो यानान्ययानानां । विचित्राख्राण्यशस्त्रिणां ॥ खाद्यानि क्षुधितानां च । तृषितानां जलानि च ॥ ३५ ॥ भ्रमम्भ्रमं चमूमध्ये । दीयन्तेऽधिकृतैर्नरैः ॥ श्रान्तानामवहाराश्च । तन्यन्ते सुहृदादिभिः ॥ ३६ ॥ युग्मं ॥ आयसैः सुचिरं शस्त्रै-रयुध्येतामथो मिथः ॥ कुर्वाणावद्भुतं चक्रि-भूभुजौ मरुतामपि ॥ ३७ ॥ अथो मिथो गदाघातै-स्तौ भग्नस्यन्दनौ भटौ ॥ बाहुबाहव्ययुध्येतां । मुष्टामुष्टि च रोपतः ॥ ३८ ॥ ततो महातरुं चक्री । व्यमुञ्चद्भूविडौजसि ॥ रोपात् पिंपन् रदान् सोऽपि । पिपेप तरुणैव तम् ॥३९॥ ततो महाशिलाभिस्ता-वयुध्येतां दृढाहति ॥ तत्पेपजरजोवृष्टि-मुत्पातं मेनिरे जनाः ॥४०॥ चक्री शैलं समुत्पाट्य । सांग्रिपं भूभु-

जेऽमुचत्.॥ स तं कामाक्षया दत्त-मुद्गरेणाऽश्वचूर्णयत् ॥४१॥ भूभुजा खण्डितस्याऽस्य । पतद्भिर्ग्रावखण्डकैः ॥ अकाले करकाणां च । वृष्टिर्लोकैरतर्क्यत ॥ ४२ ॥ पिष्टेभ्यश्च तरुभ्योऽस्य । पतन्तः कुसुमोत्कराः ॥ सुरैर्विनिर्मितां हृष्टै-र्वृष्टिं पौष्पीमबीभ्रधन् ॥४३॥ अर्थतो विशेषकं ॥ द्विषं रौद्ररणाऽजय्यं । ज्ञात्वा विद्याकृते रथे ॥ स्थितोऽमुञ्चन्महाशक्ति-मग्निज्वालाभयङ्करीम् ॥ ४४ ॥ विद्याऽर्पितरथस्थायी । प्रतिशक्त्या बिभेद तां ॥ भवतृष्णामिवाऽनित्य-चिन्तया मुनिवन्नृपः ॥ ४५ ॥ ततो ज्वालाऽऽकुलं चक्रं । व्यमुञ्चत्खेटचक्रभृत् ॥ यद् दृष्ट्वाऽपि भयात्सैन्याः । सर्वे नेत्रे न्यमीमिलन् ॥ ४६ ॥ दैवतं भूमिनेताऽपि । प्रतिचक्रं व्यमुञ्चत ॥ प्रलयाऽम्भोदनिर्घोषे । ते चास्फलतुर्मिथः ॥४७॥ यथा यथा च युध्येते । आस्फल्याऽऽस्फल्य ते मिथः ॥ तथातथाऽग्निकीलाभि-र्ज्वलतीव नभस्तयोः ॥ ४८ ॥ काशानवैः स्फुलिङ्गैश्च । तदुत्थैर्दाहमीरवः ॥ साराव देवता नेशु-र्विमुक्तरणकौतुकाः ॥ ४९ ॥ उत्पतन्तौ पतन्तौ च । गृध्राविव पुनः पुनः ॥ आस्फलन्तौ मिथश्चक्रौ । चक्राते कान्न विस्मितान् ? ॥ ५० ॥

एवं ते सुचिरं युध्वा । दलितारे गताऽर्चिषी ॥ विरम्याऽभजतामीशं । मिथः प्रतिहतौजसी ॥ ५१ ॥ तामसाऽस्त्रं ततश्चक्री । व्यसृजद्भूभुजो बले ॥ तेन जज्ञे कुहूरात्रि-र्मेघान्धतमसाश्रिता ॥५२॥ ततः स्वान्याऽविभागेन । युध्यमाना महाभटाः ॥ यावन्मिथो द्विपद्भिश्च । हन्यन्ते दुर्द्धरायुधैः ॥ ५३ ॥ आस्फल्याऽऽस्फल्य चाऽन्योन्यं । पतन्ति च महागजाः ॥ मर्द्यते चाऽश्वमाश्वेन । भज्यन्ते च रथा रथैः ॥ ५४ ॥ भानवीयेन शस्त्रेणो-द्योतं तावन्नृपोऽतनोत् ॥ सहस्रभानुरप्येष । यत्पुरः स्यात्त्रपाऽऽस्पदम् ॥५५॥ निजतन्त्रतिरस्कारात् । क्रुद्धो भूपस्ततो भृशं ॥ तथा चक्रे शरासारं । सर्वतोऽयं महौजसा ॥ ५६ ॥ यथा चक्री धनुर्लातुं । सन्धातुं वा शरान्न हि ॥ अशाशग् भिन्नसन्नाह-शिरस्त्राणत्रसन्महाः ॥ ५७ ॥ द्विषः सैन्येऽपि वीराणां । तच्छिन्ना मौ-

लयोऽपतन् ॥ क्षुधितस्य कृतान्तस्य । कवला इव सज्जिताः ॥ ५८ ॥ केषाञ्चिद्रथिनां सत्त्वाऽऽलम्ब्यात्तं प्रति धावतां ॥ तत्पातित-गजस्थल्यो । विघ्नं त्राणं च चक्रिरे ॥ ५९ ॥ पतिताः सुभटाः केचित् । मूर्छया तच्छराहताः ॥ उत्तस्थुर्वीजिता मांस-गृध्रगृध्र-च्छदाऽनिलैः ॥ ६० ॥ नीरन्ध्रे सर्वतोगामि-शरधोरणिनिर्मिते ॥ महाकारागृहेऽनीकं । तेन क्षिप्तमिव द्विषः ॥ ६१ ॥ न नृपो न च पत्तिर्वा । न वाजी न च सामजः ॥ खेटचक्रिबले सोऽभू-द्भूपवाणैर्न योऽङ्कितः ॥ ६२ ॥ निन्दन्तः स्वामिनं तेन । त्रलिना वैरकारिणं ॥ तं च मुक्त्वाऽनशन् सैन्याः । प्रियं सर्वस्य जीवितम् ॥ ६३ ॥ खेटेन्द्रोऽप्यतिशूरत्वा-च्छतशस्तेन पातितः ॥ उत्था-योत्थाय नानाऽस्त्रै-रयुध्यत पुनः पुनः ॥ ६४ ॥ चक्रेऽस्त्रेणाऽपि भूपोऽय-मुद्योतं मद्विजित्वरं ॥ इतीव सत्रपो भानु-र्निलिल्येऽस्तगिरौ क्वचित् ॥ ६५ ॥ यद्वा-मदुद्योतायं भूपः । प्रतापसुहृदं मम ॥ माऽवधीच्चक्रिणं भानु-र्ध्यात्वेवेत्यस्तमासदत् ॥ ६६ ॥ ततो रणविरामादि । शस्त्रार्त्तोज्जीवनादि च ॥ बभूव पूर्ववत्सर्वं । सैन्ययोर्मुच्छुगादि च ॥ ६७ ॥ अहिंसादीनि पुण्यानि । जयारोग्यसुखोच्चयान् दद्युर्हिंसाद्यधान्यन्या-नीति [1]न्याञ्जित्तदा रणः ॥ ६८ ॥ विद्याहेतीस्ततो रात्रा-वस्खलन्मुक्तयेऽखिलाः ॥ चक्री सस्मार तर्कोक्ति-युक्तीर्वादीव धीधनः ॥ ६९ ॥ निद्राश्लिष्टास्ततो वीराः । सुखदुःखादि नाऽविदुः ॥ कुरङ्गाक्षीवशाः कृत्याऽ-कृत्यादीव नराधमाः ॥ ७० ॥ इति श्रीजयानन्दराजर्षिकेवलिचरित्रे श्रीजयानन्दभूप[2]खेटचक्रियुद्धे षष्ठदिनयुद्धविस्तरः॥

[3]अरुणोऽथोदितः सुप्तान् । गोभिर्वीरानबूबुधत् ॥ गुरुर्धर्मोपदेष्टेव । शयितान् मोहनिद्रया ॥७१ ॥ किं कलिर्विश्वदुःखाकृत् ।

---

१ प्रकटीचकार २ श्रीचक्रायुधखेटचक्रिद्वययुद्ध-वर्णनो नाम षष्ठदिनान्तर्गतो—युद्धाधिकार षष्ठः ३ अरुणोऽथोदितः सुप्तान् । प्रवीरानुदताऽस्वपत्॥ इव जाङ्गुलिकः क्ष्वेड-मूर्च्छया पतितान् जनान् ॥ ७२ ॥ (इति वा पाठ)

शुद्दोरपि तत्त्वतः ॥ तत्तं शान्तिमिवाऽऽनेतुं । जगत्साऽभ्युदयं ययौ ॥ ७२ ॥ अहों जयश्रियो भूपः । स्याद्युद्धं च विना न सा ॥ इति युद्धावकाशायाऽऽरोहत्पूर्वाचलं रविः ॥ ७३ ॥ प्रणेदू रणतूर्याणि । ध्वजिनीद्वितये ततः ॥ मथ्यमानाम्बुधिध्वान-धिक्कारैकधुरध्वनि ॥ ७४ ॥ तन्नादः प्रधनोत्साहं । वीरान्निन्ये विशेषतः ॥ शुद्धधर्मोद्यमं भव्यान् । गुरूणामुपदेशवत् ॥ ७५॥ ऊरीचक्रू रणं शूरा । बहु युध्ध्वाऽप्यतृप्तितः ॥ १भुक्त्वाऽपि बहुशः श्राद्ध-भोजनं वाडवा इव ॥ ७६ ॥ आघ्नन्तः सुभटांश्चक्रि-कुमाराः प्रासरन् रणे ॥ बलाका इव कासारे । भक्षयन्तो झषाऽर्भकान् ॥ ७७ ॥ पवनेनाऽञ्जनारूप-वीरपञ्चशतीयुजा ॥ बहुधा योधयित्वा ते । विविधैरायुधैश्चिरम् ॥ ७८ ॥ नागपाशैरबध्यन्त । विंशतिर्योधिनोऽग्रिमाः ॥ जालिकेन दृढैर्जालै-स्तिमिङ्गिलगिला इव ॥७९॥युग्मं॥ चन्द्रगत्यादयश्चाऽपि भोगरत्यादयोऽपि च ॥ अभाङ्क्षुर्लक्षसङ्ख्यां च । शूराश्चक्रिवरूथिनीम् ॥ ८० ॥ क्रुद्धोऽधावत्ततश्चक्री । वैरिवीरान्निपातयन् ॥ मदान्ध इव मातङ्गः । केलिद्रून् कदलीवने ॥ ८१ ॥

कुमारभूभुजा सोऽथ । रुरुधे धन्वधारिणा ॥ तं वीक्ष्याऽतिक्रुधाक्रान्त-श्चक्रयभाषिष्ट दुष्टधीः ॥ ८२ ॥ रे रण्डे! न किमद्याऽपि । मत्तो यासि दवीयसी ॥ स्त्रीत्वेनोपेक्षिपि त्वां च । आन्येऽद्धीति प्रगल्भसे ? ॥ ८३ ॥ वैद्याः सन्ति पदे पदे गदगणान् हन्तुं क्षमा भेषजै-र्दानैर्दुर्गतदौःस्थ्यसन्ततिहृतोऽसङ्ख्याः २पुनर्लक्ष्मणाः ॥ न त्वेषोऽस्ति जगत्सु यो व्यपनयेद्दोर्दण्डकण्डूचयं । शस्त्रैर्मे स्थितवांश्च यो युधि यशो दत्तेऽथवा दुर्यशः ॥ ८४ ॥ मृगैर्मृगारिर्भुजगैर्गरुत्मान् । सुरेन्द्रस्तपनस्तमोभिः अग्निः पतङ्गैर्मुरजिच्च दैत्यै-र्यद्वत्तथाऽहं सुभटैर्न साध्यः ॥ ८५ ॥ जेतुं काचिद्रणे माम-प्यहो मुग्ध प्रगल्भसे ? ॥ न जानीपे तृणं

१ यथेष्टं जीरा भुक्त्वाऽपि । द्वितीयऽह्नीव भोजनं, इति वा पाठः ) २ पुनर्दातारः

शक्रो–ऽप्यग्रे नः के पुनः परे ॥ ८६ ॥ याहि मुक्ताऽसि नारीणां । वधान्मे दुष्यसे बलं ॥ यदि स्थास्यसि विद्यास्त्राऽनले त्वं शलभिष्यासि ॥ ८७ ॥ भूपोऽवक् त्वत्सुतावाचा । न हतो बहुशो भुवि ॥ लोठितोऽपीति वाक्षि त्वं । तत्ते वाक्शूरता न वा ?॥८८॥ नारीणां त्वं वधेऽशक्त–स्तत्किं च दुःप्यसे बलं ॥ याहि तन्मे प्रपद्याऽऽज्ञां । दयया मुच्यसे जरन्! ॥ ८९ ॥ भटानामथवैक्षिष्ठा । बलं तनुभुवामपि ॥ शस्त्राणां स्वभुजानां च । पूर्वयुद्धेषु षट्स्वपि ॥९०॥ यच्चाऽवशिष्यते विद्या–शस्त्राणामधुना बलं ॥ चक्रिन्! माद्यसि येनैवं । तदप्याशु विलोकय ॥ ९१ ॥ यतः–शूराः सन्ति सहस्रशो भुजबलप्रोत्सर्पिदर्पोध्धुराः । शस्त्राणि प्रतिवीरजीवितरमालुण्टाकवृत्तीन्यापि ॥ कोदण्डायितसायके मयि पुनर्निःशूरजन्मा मही–शस्त्राङ्कस्तृणमेकमेव च हितं वक्त्रे धृतं तद् द्विषाम् ॥ ९२ ॥

इति तस्य गिरा क्रुद्धो । भूभुजा सह खेटराट् ॥ शराशरि कियत्कृत्वाऽ–मुञ्चद्धाराधरायुधम् ॥९३॥ धारासारैर्गजेन्द्राश्व–पत्याद्यां पृतनामिदं ॥ उपद्रवज्जहाराऽऽशु । वायव्यास्त्रेण भूपतिः ॥ ९४ ॥ वायव्याऽस्त्रं ततश्चक्री । गिरिशृङ्गाणि पातयत् ॥ मुमुचे विद्विषां सैन्यं । । सहसा येन पात्यते ॥ ९५ ॥ विचक्रे लक्षशः सर्पान् । भूपस्ते पिप्यिरेऽनिलं ॥ चक्री मुमोच नागाऽस्त्रं । बभूवुः कोटिशोऽहयः ॥९६॥ स्वानुपद्रवतः सेनां । सुपर्णाऽस्त्रेण भूपतिः ॥ तानप्यनीनशच्चक्री । वृश्चिकाऽस्त्रं ततोऽमुचत् ॥९७॥ तत्कृतान् लक्षशः सेनां । दशतो वीक्ष्य वृश्चिकान् ॥ मयूरास्त्रोद्भवैर्भूपो । मयूरैस्तान् व्यनाशयत् ॥९८॥ ततः क्रोधोद्धतो भूप–विद्याशक्त्या चमत्कृतः ॥ चक्री विद्याभृतां सद्यो–ऽमुचत्प्रस्वापनाऽऽयुधम् ॥ ९९ ॥ तेनाऽप्रमुष्णुना भूभु–ज्यंगदाद्यनुभावतः ॥ निद्राणः कटको याव–द्धन्यते तस्य वैरिभिः ॥ १०० ॥ तावत्प्रबोधनाऽस्त्रेण । भूपस्तमजजागरत् ॥ युयुधे चक्रिचम्वा च । सह

रोपाद्विशिष्य सः ॥१॥ आग्नेय्याऽस्त्रं ततोऽमुञ्चत् । त्रटत्त्रटितिकारि सः ॥ तद्वयप्यापि दहत्सैन्यं । वारिदाऽस्त्रेण भूभुजा ॥२॥
नागपाशैस्ततोऽवध्ना-च्चक्री फूत्कारिभिर्द्विषं ॥ अत्रुत्रुटन्नृपस्तांश्च । द्रुतं कमलनालवत् ॥ ३ ॥ ते परे ये निबद्धास्तै-स्तिष्ठन्त्येव-
मवैन्न सः ॥ यथा जाले निबध्यन्ते । झषा नैव तथा गजाः ॥ ४ ॥ गारुडाऽस्त्रं ततोऽमुञ्च-द्यतोऽत्ति गरुडो रिपुं ॥ गोविन्दा-
ऽस्त्रेण भूपालः । सत्वरं तदनीनशत् ॥ ५ ॥ मुमोच मोहनाऽस्त्रं त-द्विद्यामृद्वासवस्ततः ॥ वीरा निजा निजैरेव । येनाऽयुध्यन्त
मोहिताः ॥ ६ ॥ न चास्त्रग्रहमोक्षादौ । विभागाऽज्ञामभूष्णवः ॥ तच्च व्यपीफलज्ज्वाला-मालिन्या विद्यया नृपः ॥ ७ ॥ विद्याऽ
स्त्राण्येवमन्याऽन्य-प्यमुञ्चत् खेचरेश्वरः ॥ नाऽमुचत्साहसं त्वेकं । तद्धि धीरस्य जीवितम् ॥८॥ फलग्राह्याणि नाऽभूवन् । विद्या-
ऽस्त्राणि तानि च ॥ नृपे भाग्यनिधौ बीजा-न्युप्तानीवाऽद्रिमूर्द्धनि ॥ ९ ॥ नृपः स्वभुजयोः शौर्यं । धत्ते यो जगदुत्तरं ॥ विद्या-
ऽऽदौषधीनां च । बलं जेयः कथं ह्ययम् ? ॥१०॥ विभाव्याऽविजितं भूप-मेवं विद्याऽऽयुधैरपि ॥ विषण्णः खेटराड् दध्यौ । जेयोऽ-
यं शात्रवः कथम् ? ॥११॥ दृश्यतेऽस्याऽङ्गनारूपं । शौर्यं शक्रादिजित्पुनः ॥ अलक्ष्यः कोऽप्ययं विश्वे-ऽजेयो जेताऽपि तं न तत्
॥ १२ ॥ राज्यमेतत्कृते वत्किं । चैताढ्यस्य मयाऽर्ज्यदः ॥ सञ्चितं कीटिकाभिः किं । धान्यं नैवाऽत्ति तित्तिरः ? ॥१३॥ निस्स-
त्त्वमथवा धिग्मा-मिति दुष्टविकल्पिनं ॥ दैवतो मुद्गरो ह्यस्ति । ममाऽसाध्यः पराऽऽयुधैः ॥ १४ ॥ ततो युद्धान्तरैरेतं । श्रमयित्वा
चिरं रिपुं ॥ द्रुतं तेन हनिष्यामि । विद्याऽस्त्रैः किं न सिध्यति ? ॥१५॥ ततश्चक्री रथाऽऽरूढो । निर्घोषध्वनिताऽम्बरं ॥ धन्वाऽऽ-
स्फाल्य शरासारं । व्यधत्त धरणीधवे ॥ १६ ॥ भूमिपालोऽपि दम्भोले-रपि बाणैर्भिदेलिमैः ॥ उपदुद्राव तं तस्य । सृजन्
सेनामनुव्रताम् ॥ १७ ॥

एवं चिरं युधा श्रान्तं । सर्वाङ्गव्राणितं शरैः ॥ भूशक्रश्चक्रिणं चक्रे । स्रवद्वर्द्धिष्णुशोणितम् ॥१८॥ ततश्चक्री क्रुधाऽऽक्रान्तो । द्रुतमुत्पाट्य मुद्गरं ॥ लब्धलक्षो ध्रवं धात्र्या । जघानाऽनेन मूर्द्धनि ॥ १९ ॥ तद्घातव्यथितः क्ष्मापः । क्षणं मुकुलितेक्षणः ॥ अचेतयत किञ्चिन्न । हाहारवपरे बले ॥ २० ॥ ततस्तं निहतं मन्य–श्चक्री यावदमोदत ॥ लब्धसंज्ञो नृपस्ताव–न्मुद्गरं समुपाददे ॥ २१ ॥ स च कामाऽक्षया दत्तो । वज्राऽऽत्मा सर्वशस्त्रभित् ॥ अध्वस्तं वीक्ष्य चक्री च । यावद्धन्ति पुनर्नृपम् ॥ २२ ॥ तावत्तेन जघानैष । तथा मूर्द्धनि चक्रिणं ॥ यथाऽसौ मूर्च्छितोऽपत–द्वज्रच्छिन्नच्छदाद्रिवत् ॥ २३ ॥ युग्मं ॥ सर्पपाशैस्ततोऽबध्ना–द्भूपतिस्तं तथा दृढं ॥ यथोच्छ्वसितुमप्येष । नाऽशाशकरुणास्पदम् ॥ २४ ॥ गृह्णतस्तं भटांस्तस्य । न्यपेधत् कोटिशः शरैः ॥ ज्वलनो ज्वलयन् ज्वाला–मालाभिः किं किलाऽऽप्यते? ॥२५॥ [1]बद्धं स्वेशं तथा दृष्ट्वा । तद्दुःखार्त्या मुमूर्षवः ॥ विरेमुर्न रणाद्वीरा–स्ते हि स्वाम्यनुकारिणः ॥२६॥ सैनिकांस्तानथो हन्य–मानांश्चाऽवेत्य भूपतिः ॥ विद्ययोभयरक्षार्थं । मोहिन्याऽमूनमूमुहत् ॥२७

तेऽथ स्वाऽन्यविभागाऽज्ञाः ॥ शस्त्राऽशस्त्राऽनवेदिनः ॥ मिथो गजरथाद्यैश्चाऽऽस्फल्याऽऽस्फल्याऽपतन् भुवि ॥ २८ ॥ न्यषेधत्स्वभटान् भूपो । मृतस्तांस्तु विसंस्थुलान् ॥ विध्याताऽर्चिषि वह्नौ किं । धूमः कैरपि कुट्यते? ॥ २९ ॥ मृत्वाऽऽसन्नांस्त्वरीन् वीक्ष्या–सस्रस्थत्कृपया नृपः ॥ तेऽनिनङ्क्षंस्ततः स्वस्था–स्तदवस्थाभिया पुनः ॥ ३० ॥ आकर्षिण्या तमाकृष्य । विद्यया खेटचक्रिणं ॥ नृपः पवनवेगाय । सानन्दायाऽर्पिपत्ततः ॥३१॥ इति श्रीमुनिसुन्दरसूरिविरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे खेचरेन्द्रश्रीजयानन्दभूपयुद्धाऽधिकारे सप्तमदिनयुद्धं समाप्तम् ॥

[1] तथा पाशं इति प्रत्यन्तरे

पुष्पवृष्टिरभूद्व्योम्नः । कुमारे च सुरैः कृता ॥ दिवि दुन्दुभयो नेदु-र्ननृतुश्च मुदा सुराः ॥ ३२ ॥ महातूर्याण्यवाद्यन्त । नदद्दिशि समन्ततः ॥ भटा जयजयाऽऽरावं । सर्वतो हर्षिता व्यधुः ॥ ३३ ॥ चक्राऽऽयुधनरेन्द्रस्य । सैन्यं निःस्वामिकं ततः ॥ अत्राणमभवद्भूरि-विषादभयविह्वलम् ॥ ३४ ॥ महारथ्यतिरथ्याऽऽद्या-स्तन्मध्ये कोटिशो भटाः ॥ आसन् सर्वे विना नाथं । परं खेदभयावृताः ॥३५॥ सिंहिकाङ्गजुना ग्रस्ते-ऽस्तमिते वा ग्रहाऽधिपे ॥ कर्तुं [1]ग्रासं प्रकाशं किं । प्रगल्भन्ते ग्रहाऽऽदयः?॥३६॥ ततः श्रीजयराजेन्द्राऽऽदेशात्पवनवेगराट् ॥ एवमाश्वासयामास । नश्यन्तीं खेटराट्चमूम् ॥ ३७॥ भैष्ट मा मा पलायध्वं । सैन्या! निःस्वामिका इति ॥ अस्माकं भवतां चैकः । स्वामी श्रीश्रीजयो नृपः ॥ ३८ ॥ तमेव प्रतिपद्यध्वं । भुङ्ग्ध्वं राज्यसुखानि च ॥ अयं मोक्ष्यति वो नाथ-मपि प्रणतवत्सलः ॥३९॥ एवं पवनवेगोक्त्याः । प्रपद्य श्रीजयं प्रभुं ॥ निर्भयं शर्मणा तस्थौ । सैन्यं खेचरचक्रिणः ॥ ४० ॥ सज्जयित्वौषधीनीरै-र्नागपाशान् विनीय च ॥ चक्रिणं श्रीजयो भूपो-ऽचिक्षिपद्वज्रपञ्जरे ॥ ४१ ॥

एवं परानपि भटान् । नृपो गारुडविद्यया ॥ निःसर्पबन्धनान् कृत्वौ-षध्यम्बुभिरसज्जयत् ॥ ४२ ॥ एवं स्वान्याऽविभागेन । सैन्यैः सर्वैः सुखाऽऽकृतैः ॥ प्रणतैः सेवकीभूतैः । समन्तात्परिवारितः ॥ ४३ ॥ पठ्यमानगुणः प्रोच्चैः । प्रणतैर्मार्गणव्रजैः ॥ पूर्द्धैर्जयजयाऽऽराव-मुखरैः स्तुत्यविक्रमः ॥ ४४ ॥ आसन्नसेवकैर्युक्तः । स्त्रीभटैः पञ्चभिः शतैः ॥ कुमारेन्द्रो महावाद्य-प्रणादैर्नादयन् दिशः ॥ ४५ ॥ गजारूढो रथस्थेन । सहितः खेटचक्रिणा । गायनैर्गीयमानोऽलं-चक्रे स्वोत्तारकाऽऽलयम् ॥४७॥ चतुर्भिः कलापकं ॥ परेऽपि खेटभूपाला । विसृष्टा भूपतिस्त्रिया ॥ तद्गुणस्तवपूताऽऽस्याः । स्वस्वमुत्तारकं ययुः ॥ ४८ ॥ भोजयित्वाऽथ

[1] दैवसिकम्

खेटेन्द्रं । सदाचारदयालयः ॥ कृतस्नानजिनाऽर्चादिः । ससैन्यो बुभुजे नृपः ॥ ४९ ॥ विविधैर्मङ्गलाचारै-र्महोत्सवमयैर्नृपः ॥ अतिचक्राम तं घस्रं । निशां च सुखनिद्रया ॥४९॥ प्रातर्मङ्गलतूर्याणां । नादैः सञ्जातजागरं ॥ नेमुः सिंहासनाऽऽसीनं । श्रीजयं पवनादयः ॥५१॥ चन्द्रसुन्दर्यथाऽऽगत्य । पितृदुःखाद्व्यजिज्ञपत् ॥ मुञ्च मे पितरं स्वामि-न्निधाय करुणां हृदि ॥५२॥ मोक्ष्या-मीति गदित्वा तं । वज्रपञ्जरसंस्थितं ॥ आनीनयत्कुमारेन्द्रः । खेचरैः खेचराऽधिपम् ॥५३॥ जगाद च महाभाग! । तं मौलिं तच्च कङ्कणं ॥ आनायत्रेष्टनामाङ्कं । समक्षं येन भूभुजाम् ॥ ५४ ॥ जामाता पवनस्यैवं । पुत्री च परिधाप्यते ॥ ततोऽतिमहिमा तेऽत्र । तिष्ठत्याऽऽजीवितं तयोः ॥ ५५ ॥ न स्यातां घटिते ते च । घटयस्वाऽधुनाऽपि यत् ॥ क्षमस्त्वं पञ्जरस्थोऽपि नचौत्सुक्यं भजाम्यहम् ॥ ५६ ॥ बन्धाद्वधे सुसाध्येऽपि । नरेश! न हतोऽसि यत् ॥ तत्ते पुत्र्यर्थनाहेतुः । शक्तस्याऽपि दया च मे ॥५७॥

इति भूपगिरा खेट-चक्री विद्धः स मर्मणि ॥ अरोदीद्युधि वज्रादि-पातेभ्योऽप्यतिदुःखभाक् ॥ ५८ ॥ रुदन्तं वीक्ष्य तं जात-कृपः पवनवेगराट् ॥ जगौ खेटेन्द्र मा रोदी-श्चिरत्नस्त्वं हि नः प्रभुः ॥ ५९ ॥ तत्त्वां द्राग् मोचयिष्यामि । कृपालोः प्रण-तेर्नृपात् ॥ जगाद खेटराजस्तं । नाऽर्थो मे मोचनेन भोः! ॥ ६० ॥ जगद्विजित्य भुक्त्वा च । सुचिरं खेटचक्रितां ॥ नरदेवसमक्षं चाऽऽप्नुवं बन्धपराभवम् ॥ ६१ ॥ वीराणां श्लाघ्यते मृत्यु-र्यशःस्वर्गप्रदानतः ॥ न तु दुर्जनधिक्कार-पदं बन्धविडम्बना ॥ ६२ ॥ सम्प्रत्यप्यर्पयाऽसिं तत् । स्वामिभक्तिं दधासि चेत् ॥ कुर्वे बन्धविमोक्षं स्वं । छित्वा तेन शिरो यतः ॥ ६३ ॥ मुमूर्षुमिति तं खेटाऽधीशं निश्चित्य वज्रसूः ॥ उवाच नाथ केयं ते । शास्त्रज्ञस्याऽपि मूढता ॥ ६४ ॥ बद्धोऽसि त्वं न भामिन्या । विद्याशौर्या-दयो गुणाः ॥ किमस्याः सम्भवन्त्येते । वेत्सि नेयदधीश! किम्? ॥६५॥ जेता भुवनवीराणां । योगिनीमानमर्दनः ॥ सर्वविद्या-

निर्थिर्देव-देवीदत्तमहावरः ॥६६॥ वज्रचक्राादिदेवानां । विजयी शक्रविक्रमः ॥ विद्याकृताङ्गनारूपो । भवद्ज्ञातेन हेतुना ॥ ६६ ॥
अबभाद् श्रीजयो यस्यां । तत्प्रमोदस्व भो नृप ! ॥ इन्द्रादिभ्योऽपि येन स्यु-र्बलाद्यैरुत्तरोत्तराः ॥ ६७ ॥ विशेषकं ॥

इति तद्गीःसुधासिक्तः । किञ्चित्खेटाऽधिपोऽभजत् ॥ शीतिमानं पराभूति-वह्नितापाऽर्दितोऽपि सः ॥ ६९ ॥ पुनः पवनवेगोऽवग् । राजन् ! कर्मैव दुष्यति ॥ तथाऽपि हृदि गर्वाऽग्नि-र्विवेकद्रुं यदोषति ॥ ७० ॥ जगत्ख्याताऽवदातोऽपि । ज्ञापितोऽपि स्वमन्त्रिभिः ॥ सुरीविद्याधरीगीय-मानोऽपि श्रीजयो नृपः ॥ ७१ ॥ स्त्रीरूपेणाऽपि लीलाभि-स्त्वच्चमूभङ्गतोऽप्यहो ! ॥ त्वयाऽवज्ञायि गर्वेण । प्राप्तोऽसीमां दशां ततः ॥ ७२ ॥ प्रागेव स्वामिभक्त्याऽहं । प्रधानैः सह पण्डितं ॥ [1]प्रेपिपमुपदेष्टारं । स्निग्धसेवकरीतिभिः ॥ ७३ ॥ तदोपदेशपीयूषै-रपि तस्याऽपि ते नृप ! ॥ व्यध्याप्यत न गर्वाग्नि-रसमञ्जसवादिनः ॥७४॥ सामान्योऽपि जनो नामाऽङ्कितां कस्याऽपि दासतां ॥ सहेत नेदृग्पत्न्याश्च । वीरोऽयं सहते कथम् ? ॥ ७५ ॥ ततोऽतिगर्वतो वीर-मेतमप्यचीभवः ॥ स्त्रिया भङ्गाऽयशो दातुं । त्वयीत्येपोऽप्यचेष्टत ॥ ७६ ॥ तत्क्रोधाऽमर्षगर्वाद्या । दोषा एव द्विषोऽङ्गिनां ॥ [2]मुक्त्वैतान् कुरु तस्याऽऽज्ञां । येन त्वां सोऽपि मोचयेत् ॥ ७७ ॥ खेटेन्द्रोऽपीदमाकर्ण्य । बन्धदुःखेन खेदितः ॥ अनन्यगतिकत्वेन । भूपाऽऽज्ञां प्रत्यपद्यत ॥ ७८ ॥

गत्वा पवनवेगोऽथ । कुमारेन्द्रं व्यजिज्ञपत् ॥ स्वशौर्यादिगुणाः स्वामिन् ! यथा प्रकटितास्त्वया ॥ ७९ ॥ तथा प्रकटय स्वामिन् ! । रूपं स्वाभाविकं निजं ॥ ताम्यन्ति विश्वनेत्राणि । तन्निभालयितुं यतः ॥ ८० ॥ कियद्याऽपि नः स्वामिन् ! । मोह-

१ प्रैषिषे सूपदेष्टारं । प्रैष्य मुष्टूपदेष्टारं । इति वा पाठौ । २ मुक्त्वैत्य तान् प्रपद्यस्वाऽस्याज्ञां यन्मोचयत्ययं ॥

यिष्यसि मायया ॥ खेटराजः परेऽप्येवं । विनयात्तं व्यजिज्ञपन् ॥ ८१ ॥ इत्यभ्यर्थनया तेषां । स्वस्य स्वाभाविकं नृपः ॥ भटानां पञ्चशत्याश्च । रूपं विद्याबलाद् व्यधात् ॥ ८२ ॥ अतिशक्रस्मरं तच्च । वीक्षितुं मिलिता द्रुतं ॥ प्रणेमुर्भटकोट्यस्तं हर्षाऽऽश्चर्यस्तब्धाकुलाः ॥ ८३ ॥ निनेदुर्मोदतूर्याणि । पेठुर्मङ्गलपाठकाः ॥ तत्त्वं निर्णीय सन्दिग्धं । मुमुदे चक्रसुन्दरी ॥ ८४ ॥ वायुवेगादिखेटेशाऽर्थनया दययाऽप्यथ ॥ विद्यया पञ्जरं भित्त्वा । छित्त्वा च निगडान्यपि ॥ ८५ ॥ महान् कृताऽपराधोऽपि । नाऽर्हत्यतिविडम्बनां ॥ इति सञ्चिन्त्य भूनेता । व्यमुञ्चत्खेटचाक्रिणम् ॥ ८६ ॥ सोऽपि भूपस्य तद्रूपं । वीक्ष्याऽऽश्चर्यं तदभ्यगात् ॥ व्यसस्मरत्पराभूति–दुःखं हर्षाऽद्वयेन यत् ॥ ८७ ॥ नृपेणाऽध्यासितं सिंहासने तं खेटचाक्रिणं ॥ नेमुः पवनवेगाद्याः । सर्वे [1]खेटेश्वरास्तदा ॥ ८८ ॥ दृष्ट्वा स्वं स्वामिनं मुक्त–माऽऽसीनं कनकाऽऽसने ॥ नदत्तूर्यगणं सर्व–सैन्यं तस्याऽत्यमोदत ॥ ८९ ॥ चक्रिणोऽथ सुतांश्चक्र–वेगादीनपरानपि ॥ बद्धान् परःसहस्रान् द्रा–गानाय्याऽऽशु तदा भटान् ॥ ९० ॥ त्रोटयित्वाऽहिपाशांश्च । तेषां गारुडविद्यया ॥ भूपोऽमुञ्चद् व्रणार्त्तांश्चाऽ–सञ्जयद्धारिणौषधैः ॥ ९१ ॥ युग्मं ॥ ततस्ते मुदिता नेमु–र्भूपं खेटेश्वराऽन्वितं ॥ तथा दृष्ट्वा च तांश्चक्री । सचक्रो मुमुदेतमाम् ॥ ९२ ॥ श्रीजयोऽथ समाहूय । नरेन्द्रश्चक्रसुन्दरीं ॥ आर्पिपत् खेटराजाय । बहुमानादुवाच च ॥ ९३ ॥ गृहाणेमां निजां पुत्रीं । देहि स्वैरं वराय च ॥ नैवाऽर्थो मेऽनया ह्येषा । धृता कौतुकमात्रतः ॥ ९४ ॥ पादयोः पतिता साऽपि । रुदन्ती पितरं जगौ ॥ तात! स्वैरं वरं वृत्वा । मया क्षिप्तोऽसि सङ्कटे ॥ ९५ ॥

एवं रणाद्यनर्थाना–मागामेष्यैव हेतुतां ॥ कदपत्यस्य पापस्ये–त्यागस्तन्मर्पयाऽखिलम् ॥ ९६ ॥ जगौ पिताऽपराधस्ते । न

1 खेटेश्वरा मुदा प्र०

मनागपि सुन्दरि! ॥ धेन्वेव प्रतिपच्चन्द्र-स्त्वयाऽयमुपलक्षितः ॥ ९७ ॥ विश्वोत्तमगुणो यश्च । संश्रितो युक्तमेव तत् ॥ कन्या
दक्षाः क्षितीशानां । वृण्वते हि वरं स्वयम् ॥ ९८ ॥ जगत्ख्याताऽवदातोऽपि । गोपेनेव मरुन्मणिः ॥ नोपालक्षि मया त्वेषो-ऽव-
श्रापि च यथातथा ॥ ९९ ॥ स्वस्यैव गर्वदोषेण । तदेवं विपदोऽभ्यगां ॥ महतां न ह्यवज्ञाति-गर्वश्चाऽऽयतिशर्मणे ॥१०००॥
तवैवाऽर्थनया युद्धे । नाऽवधीद्वयमुचश्च मां ॥ राजाऽयं द्राक् प्रमोदस्व । तद्वत्से! पितृरक्षणात् ॥१॥ प्रमाणीभवताच्चैतत् । त्वया
साधु वृतं प्रया ॥ को हि श्लाघेत नो योगं । कौमुदीकौमुदीशयोः ॥ २ ॥ इत्याद्युक्तिसुधासेकात् । खेदतापापनोदतः ॥ प्रमोद्य
तनयां प्रैषीत् । पिता दासीवृतां गृहे ॥ ३ ॥

अथाऽर्धवैशसाभाभि-भूत्या खेचरचक्रिणं ॥ सन्तापश्यामनम्राऽऽस्य-मुवाच श्रीजयो नृपः ॥४॥ मा विषीद नृपोत्तंस । यदनेन
जितोऽस्म्यहं ॥ जयोऽयं काकतालीय-न्यायतो मन्यते मया ॥५॥ त्वत्समः सुभटो नाऽस्ति । देवाऽसुरनरेष्वपि ॥ यो मां दिव्यबलो-
पेत-मियच्चिरमयोधयः ॥ ६ ॥ साधनादिविशेषेऽपि । कर्मणो नाऽधिकं भवेत् ॥ विद्याबलं क्वचित् किञ्चि-न्न च तेन जयोऽ-
जयः ॥ ६ ॥ किन्त्वसामान्यतपसा । ध्रुवं प्राग्जन्मजन्मना ॥ सर्वेष्टाऽर्थप्रतिभुवा । जयदाने प्रभूयते ॥७॥ जयाऽभ्युदयलाभादि-
भावाः सर्वे शुभावहाः ॥ प्रायः प्रकृष्टपुण्यस्य । व्यतिरेकाऽन्वयाऽऽश्रयाः ॥ ८ ॥ जयः पराजयो नाऽपि । शूर एव न कातरे ॥
न्यासो हेमनि वेधो वा । मणावेव न तूपले ॥ ९ ॥ सकृज्जितोऽपि वा वीरो । वीरतामुज्जहाति न ॥ एकशो व्यर्थफालोऽपि ।
सिंहो हन्त्येव हस्तिनः ॥१०॥ नाऽमरैर्मथितस्याऽपि । हीयते महिमाऽम्बुधेः ॥ मेरोर्मन्थानकत्वेऽपि । गरिमैवाऽखिलाऽद्रिषु ॥११
ग्रस्तमुक्तोऽपि नो भानुर्ज्योतिषां हन्ति नो रुचः ॥ कुहौ लुप्तकरोऽपीन्दुः । प्रीणात्येवाऽमृतैः सुरान् ॥ १२॥ धत्ते कणेषु गोधूमो ।

जातिराजिरपीशतां ॥ अन्तःप्रविष्टशल्याऽपि । शर्करा मधुराग्रणीः ॥ १३ ॥ न हि घृष्टोऽपि वैडूर्य-मणिः काचमणीयते ॥ कर्द-माऽक्तोऽपि नो हंसः । काकादिभिर्भवेत् समः ॥ १४ ॥ समं नाऽश्वैः परैर्गोत्रे । चक्रमप्रभविष्ण्वपि ॥ अप्रभुष्णुरपि क्षीरे । वह्नि-स्तेजस्विनां धुरि ॥ १५ ॥ किं सकृच्छिन्नलिङ्गोऽपि । शम्भुनाऽऽराध्यते जनैः ॥ सहस्रभगतां प्राप्तो-ऽपीन्द्र एव सुरेशिता॥१६॥ हरिर्दैत्यान्निहन्त्येव । नियुक्तोऽप्यृषिणा रथे ॥ हरेण छिन्नशीर्षोऽपि । सकृत् सृष्टिं सृजेद्विधिः ॥ १७॥ हरदग्धशरीरोऽपि । जग-ज्जैत्रो न किं स्मरः ॥ भ्रात्रा जितोऽपि चक्रित्वं । बुभुजे भरतो न किम्? ॥१८॥ खेदं तत्काकतालीय-न्यायाऽभिभवजं त्यज ॥ ससैन्यः स्वपुरं याहि । भुङ्क्ष्व राज्यश्रियं निजाम् ॥ १९ ॥ कर्मणा केनचिज्जज्ञे । रणारम्भोऽयमावयोः ॥ सुहृदीवेक्ष्यमाणे तु । त्वयि स्निह्यति मे मनः ॥ २० ॥ तन्मन्ये प्राग्भवस्याऽसि । कोऽपि त्वं मे भृशं सुहृत् ॥ तत् क्षमस्वाऽपराधं यत् । खेदितोऽसि रणादिभिः ॥ २१ ॥ अयस्कान्तोपमेनैवं । नरेन्द्रवचसा मुदा ॥ गताऽभिभवखेदायः-शल्यः खेटपतिर्जगौ ॥ २२ ॥ कुमारनृपते! मन्ये । सृष्टिं विदधतो विधेः ॥ त्वद्रूपाऽभवदेकैव । मूर्त्तिः सर्वगुणात्मिका ॥ २३ ॥ शूरत्वं तव सौजन्यं । नयधर्मविवेकिताः ॥ दयां परोपकारित्वं । स्तोतुं नेन्द्रोऽपि शक्तिमान् ॥ २४ ॥ क्रोधाऽज्ञानाऽभिमानादि-वशात्पण्डितमन्त्रिणां ॥ पवनप्रभृतीनाम-प्यवमन्यं गिरोऽङ्कुशान् ॥ २५ ॥ गजेनेव मदाऽन्धेन । निर्विवेकाऽऽत्मना मया ॥ सर्वशुद्धगुणात्मत्वा-न्मान्योऽप्यवमतोऽ-सि यत् ॥ २६ ॥ तत क्षमस्वाऽपराधं मे । न मन्तुस्ते मनागपि ॥ स्वयं हि शलभे दग्धे । नाऽपराध्यति दीपभृत् ॥ २७ ॥ नाऽवधीर्युधि यत्त्वं मां । क्षमोऽपि लघु चाऽमुचः ॥ तत्ते कृताऽपराधेऽपि । दयाधर्मो नृपाऽद्भुतः ॥ २८ ॥ तवैव मयि चित्तं तु । त्वयि स्निह्यति मेऽप्यलं ॥ निश्चितं चित्तसंवादा-त्तन्नौ प्राग्भवसौहृदम् ॥ २९ ॥ बन्धो! प्रसद्य तत् सद्यः । समागत्य पवि-

श्रय !! पुरं सौधं च मे राजन्! । प्राथ्र्यसे प्रार्थितप्रद! ॥३०॥ ततः कुमारभूपेनाऽ–नुमतः खेटचक्रिराट् ॥ ससैन्यः स्वपुरे गत्वा । तस्य शोभामचीकरत् ॥ ३१ ॥ अभ्रव्यापिमणिस्तम्भ–मणिकुम्भालिदीप्तिभिः ॥ दीपयन्ति नभोरत्नाऽ–भिरामाणि सहस्रशः ॥ ३२ ॥ पाञ्चालीचाल्यमानोद्य–चमरालीनि चक्रिरे ॥ चित्राणि चलकेतूनि । तोरणानि नभश्चरैः ॥३३॥ युग्मं ॥ अभितो राजरथ्यान्त–र्महामञ्चावलीर्न्यधुः ॥ सवाद्यध्वनिसङ्गीत–गानादिपरभृत्स्त्रियः ॥३४॥ बभू[1]क स्वचूलाश्च । मञ्चेपू[2]ल्लोचलम्बिनः ॥ नृपसौभाग्यवीक्षार्थ–मियाऽऽगत्य स्थिता ग्रहाः ॥ ३५ ॥ प्रतिवृक्षगृहाऽऽट्टादि–कणत्किङ्किणयो ध्वजाः ॥ रेजिरे व्योमवृक्षस्य । नदद्भृङ्गा नु पल्लवाः ॥ ३६ ॥ असिञ्चंश्चन्दनाम्भोभिः । सर्वान्मार्गान्नभश्चराः ॥ अस्मद्वद्भूधवेऽस्मिन् भू–रपि स्ताच्छीतलेति नु ॥ ३७ ॥ प्रतापविजिता भूप–स्याऽखिलद्वीपमानवाः ॥ उपास्त्यै त्वैयरू रत्ना–दर्शालीतोरणच्छलात् ॥ ३८ ॥ दुकूलस्वर्णमाणिक्य–मुक्तावल्लरिपङ्क्तिभिः ॥ प्रोच्चैः स्तम्भावलम्बाभि–र्हृदशोभां व्यधुर्जनाः ॥३९॥ रात्नोर्वीद्युमणिस्वर्ण–मौक्तिकैः स्वस्तिका व्यधुः ॥ रक्षायन्त्राणि भूपस्य । श्रेयःसुभगताश्रियः ॥ ४० ॥ प्रोच्चैः स्तम्भेषु सद्धूप–घट्यो धूमौघमसृणन् ॥ किल भूपयशःशुभ्रं । पूर्वं वर्णयितुं नभः ॥ ४१ ॥ रम्भास्तम्भावलम्बाभिः । पुष्पस्रग्भिः समन्ततः ॥ पुष्पेपो राजधानीव । पुरं सर्वं सुगन्ध्यभात् ॥ ४२ ॥ खेटेन्द्रः सपरीवारः । समागत्याऽथ भूपतिं ॥ विनयादाजुहाव स्व–नगरे सपरिच्छदम् ॥ ४३ ॥

कुमारनृपतिस्तस्य । गौरवाऽभ्यर्थनावशात् ॥ समं खेचरकोटीभि–र्विविक्षुस्तत्पुरेऽचलत् ॥ ४४ ॥ आरूढः श्वेतदन्तीन्द्रं । कैलासमिव शङ्करः ॥ शुभन् शुभ्राऽऽतपत्रेण । किल सेवागतेन्दुना ॥ ४५ ॥ वीज्यमानोऽभितश्चारु–चामरैः खेचरीगणैः ॥ यशो·

[1] द्युमणकादीनि   [2] चन्द्रोदयावलम्बिनः

विजितदुग्धाऽब्धि-ढौकितैरूर्मिभिः किल ॥ ४६ ॥ नदद्वादित्रकोटिभिः । किल सांराविणाऽऽकुले ॥ जगज्जैत्रो नृपो व्योम्नि । शब्दयन्नखिला दिशः ॥ ४७ ॥ व्याप्नुवद्भिर्नभः सर्वं । त्रिदशाभैर्नभश्चरैः ॥ कुर्वन्नैक्यामिव द्यावा-पृथिव्योः कीर्तिभिर्यथा ॥ ४८ ॥ स्तूयमानगुणः खेट-बन्दिगायनपङ्क्तिभिः ॥ खेटस्त्रीधवलैर्गीय-मानोऽश्रान्तं समन्ततः ॥ ४९ ॥ पश्यन्नविश्रमं नाट्य-श्रेणीः शृण्वन् जयध्वनीन् ॥ अर्थिभ्यो वितरन्नर्थान् । प्रार्थितान् सुरशाखिवत् ॥ ५० ॥ सच्छत्रचामरेणेभा-रूढखेचरचाक्रिणा ॥ आ-जितो युवराजेन । महानिव महीपतिः ॥ ५१ ॥ युतः पवनवेगाद्यैः । सुरैरिव सुरर्षभः ॥ प्रतीच्छन् पाणिना द्रष्टृ-जनकोटितति-स्तुतीः ॥ ५२ ॥ वर्द्धाप्यमानो विद्याभृ-द्वधूभिर्मणिमौक्तिकैः । अश्रान्तहेमवस्त्रादि-न्युञ्छनैरभिनन्दितः ॥ ५३ ॥ दिव्याऽलङ्का-रवासोभिः । श्रियं विश्वोत्तरां दधन् ॥ उल्लङ्घ्य श्रीपथान् प्राप । सौधं खेचरचक्रिणः ॥ ५४ ॥ गजादुत्तीर्य खेटेन्द्र-दत्तहस्ताव-लम्बनः ॥ अन्तस्सदं क्वचित् स्वच्छ-स्फटिकादृश्यभित्तिकम् ॥५५॥ क्वचिद्दूर्वाततिभ्रान्ति-कृद्वैडूर्यमणिकरं ॥ पद्मरागमणीबद्ध-कुट्टिमाऽग्निभ्रमं क्वचित् ? ॥ ५६ ॥ क्वचिन्मरकताबद्ध-भूप्रभाम्बुभ्रमावहं ॥ कुमारनृपतिः सार-परिवारोऽविशन्मुदा ॥ ५७ ॥ श्रिया विजितसौधर्म्यां । सभायामेत्य विस्मितः ॥ मणिसिंहासनेऽध्यास्त । स्निह्यन् खेटेश्वरे नृपः ॥ ५८ ॥ पार्श्वसिंहासने विद्या-धरचक्र्यपि गौरवात् ॥ आसितः शुशुभे भानोः । सविधे शीतगौरिव ॥ ५९ ॥ सर्वे स्वान्याऽविभागेन । मिलिताः खेचरामराः ॥ नेमुस्तौ सङ्गतौ कार्यात् । सौधर्मेशानपाविव ॥ ६० ॥ विमानगजपत्त्यश्वा-ऽऽदीनि विद्याधरा व्यधुः ॥ वैताढ्यसारवस्तूनि । प्राभृतानि महीभुजे ॥ ६१ ॥ सर्वे पौराऽन्विताः खेटा । वैताढ्यद्वीपशैलगाः ॥ भूपा राजेन्द्रमीक्षार्थ-मेत्य नेमुः कृतोपदाः ॥६२॥

अर्हाऽऽलापादिभिर्भूपो । विसृज्य प्रीणिताः प्रजाः ॥ क्रियाः स्नानादिकाश्चक्रे । [1]खेटचक्रियुतोऽखिलाः ॥ ६३ ॥ ततोऽत्यभ्यर्थनापूर्वं । खेटचक्रिसमर्पितां ॥ चक्रसुन्दरीकन्यां तां । श्रीजयः परिणीतवान् ॥ ६४ ॥ तस्मै तदा नृपायाऽथ । खेटभूपा मुदाऽऽकुलाः ॥ भोगरत्यादयस्तेऽपि । कन्या द्वात्रिंशतं स्वकाः ॥ ६५ ॥ तत्राऽऽनीयोपदीचक्रुः । स्मारयित्वा प्रसन्नतां ॥ तासां पाणिग्रहं ते चाऽ–ङ्गीकरन् भूभुजा सह ॥६६॥ विशेषकं ॥ अन्येऽपि खेटपाः स्वाः स्वाः । कन्याः सर्वोत्तमा गुणैः ॥ ददुरभ्यर्थ्य सिन्धूनां । लभ्यः क्वाऽब्धिसमः पतिः ॥ ६७ ॥ इत्यष्टाऽग्रं सहस्रं ता । अमिलन्नप्सरोनिभाः भवन्ति हि न भाराय । गिरेर्बह्व्योऽपि वीरुधः ॥ ६८ ॥ खेटचक्र्यादयस्तासां । पितरः सपरिच्छदाः ॥ प्रौढप्रौढतमाः सर्वे । प्रमोदाऽद्वैतसङ्गताः ॥६९॥ ज्योतिषोपनिषद्विज्ञान् । दैवज्ञान् ॥ ज्ञानिनो वरान् ॥ आकार्य कार्यमावेद्याऽऽ–पृच्छन् पूर्णकराः फलैः ॥ ७० ॥ तेऽप्यतुच्छाऽऽशयाः पृच्छाऽ–नुसारेण विचारिणः ॥ चारिमाणं मुहूर्त्तस्य । मुहुर्मुहुरचिन्तयन् ॥ ७१ ॥ निर्दूषणं दिनं कन्या–वरेन्द्वर्कादिगंबलैः ॥ सबलं सकलं शुक्लपक्षस्थं वीक्ष्य दास्यतः ॥७२॥ सर्वग्रहबलोपेतं । लग्नं दृष्ट्वाऽत्र निर्मलं ॥ निष्कलङ्कधियो वृद्धाः । प्रीत्यै प्राहुः प्रतीह तान् ॥७३॥ त्वरध्वं भोस्त्वरध्वं भोः । नभोगप्रभवोऽधुना ॥ आसन्नमिदमेवैकं । सर्वश्रेयस्करं परम् ॥ ७४ ॥ आद्रियध्वं कुरुध्वं च । सामग्रीमखिलामिह ॥ विवाहयत तास्तद् यत् । सर्वेषां वः सुखं चिरम् ॥ ७५ ॥ आकर्ण्याऽऽकर्ण्यमित्येतत् । प्रतिपद्य च ते नृपाः ॥ वस्त्राऽलङ्कारपुष्पाद्यै–स्तान् सत्कृत्य विसृज्य च ॥७६॥ स्वस्वाऽऽवासेषु तत्सर्व–सामग्रीं सङ्गमय्य च ॥ तस्मिन् पुण्यदिने चक्रु–

---

१ खेटेन्द्रस्य गिरा स तत् ॥६३॥ एवं खेचरचक्री तं । गौरवात् सेवतेऽन्वहं ॥ तमेवैकं पतीयन्तीं स्वसुतां चक्रसुन्दरीम् ॥ ६४ ॥ दत्ते कर्तुमथाऽभ्यर्थ्य राजेन्द्रः प्रत्यपीपदत् ॥ भोगरत्यादयस्तेऽपि कन्या द्वात्रिंशतं मुदा ॥ ६५ ॥ इति प्रत्यन्तरे

स्तद्विवाहमहोत्सवान् ॥ ७७ ॥ उपयेमे महैः प्रौढैः । खेटचक्र्यादिनिर्मितैः ॥ ताः कुमारनराऽधीशो । विद्याभृदुपरोधतः ॥ ७८ ॥ गजाऽश्वरथपत्त्यादि-महादानान्यनेकशः ॥ साराणि दर्दिरे तस्मै । खेटेन्द्राः करमोचने ॥ ७९ ॥ उपास्यः खेटचक्र्याद्यै-र्मणिसौधेषु भूपतिः ॥ रमते सह पत्नीभिः । सुरस्त्रीभिरिवेद्रराट् ॥ ८० ॥ एकाकी परदेशेऽपि । स प्रायोऽन्योपकारतः ॥ प्रापैवं सम्पदः प्रौढा -स्तद्धोः कुरुत तं बुधाः ॥ ८१ ॥

एवं नराः प्राक् सुकृताऽनुभावात् । सर्वत्र सर्वाऽरिजयश्रियाऽऽढ्याः ॥
स्वयं सदोपस्थितदैवताऽऽभ-सद्भोगसौख्या विलसन्त्यशङ्काः ॥ ८२ ॥

इति तपागच्छनायक-पूज्यश्रीदेवसुन्दरसूरि-श्रीज्ञानसागरसूरि-श्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनिसुन्दरसूरिभिर्विरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे जयश्र्यङ्के चक्रायुधविद्याधरचक्रवर्त्तिजयचक्रसुन्दर्यादिबहु-सहस्रकन्यापाणिग्रहणाऽऽदिपुण्यफलप्रकटाऽनुभावनादिव्यावर्णनो नाम त्रयोदशः सर्गः समाप्तः ॥ श्रीरस्तु ॥ ग्रं० श्लोक ११८५ ॥

## ॥ अथ चतुर्दशः सर्गः प्रारभ्यते ॥

श्रीमान् शान्तिः स्वर्णकायः प्रभुर्मे । श्रेयःश्रेणीमिष्टदायीं वितन्यात् ॥
यस्मिंश्चित्तवाससंस्थे समग्रा । नश्यन्ति द्राग् दूरमापद्भुजङ्ग्यः ॥ १ ॥

अन्यदा तं सभासीनं । खेटचक्रयादिभिर्युतं ॥ उद्यानपालकोऽभ्येत्य द्राक् सानन्दं व्यजिज्ञपत् ॥ २ ॥ स्वामिंश्चक्रबलो नाम्ना । जनकः खेटचाक्रिणः ॥ उद्याने समवासार्षी–द्गुरुर्भूरिपरिच्छदः ॥ ३ ॥ श्रुत्वैवं भूपखेटन्द्रौ । हर्षाऽद्वैतोच्छ्वसत्तनू ॥ दत्तेस्माऽस्मै महादानं । निदानं शासनोन्नतेः ॥ ४ ॥ खेटचक्री पुराऽप्याऽऽप्त–संवेगोऽभिभवादिभिः ॥ तदा गुर्वागमं मेने । घृतपूरेषु शर्कराम् ॥ ५ ॥

अथ भूपनभोगेन्द्रौ । गजाऽऽरूढौ महाद्युती ॥ सान्तःपुरपरीवारौ । विद्याभृत्कोटिभिर्वृतौ ॥ ६ ॥ उद्घोषणाऽमिलत्पौर–व्याप्यमानाऽम्बरावनी ॥ अगातां वन्दितुं सूरिं । वाद्यनादनदद्दिशौ ॥ ७ ॥ अवरुह्य गजाद् द्रष्टौ । पञ्चधाऽभिगमस्पृशौ ॥ तौ त्रिःप्रदक्षिणीकृत्याऽ–वन्दिषातां मुदा गुरुम् ॥ ८ ॥ धर्मलाभाऽऽशिषा प्राप्ता–नन्दौ खेटेन्द्रभूभुजौ ॥ तावुपाविक्षतां धर्म–श्रद्धालू च यथाविधि ॥ ९ ॥ सर्वे खेटाः परेऽप्येवं । नत्वा खेदोज्झितं गुरुं ॥ धर्मलाभाऽऽशिषा प्रीता । यथास्थानमुपाविशन् ॥ १० ॥ उपादिशत्ततो धर्मं । हेतुं निर्वृत्तिशर्मणः ॥ सभामनुजिघृक्षुस्तां । भिदुरं भवभूधरे ॥ ११ ॥ आधारभूतो जगतां त्रयस्य यो । नियोजकोऽर्केन्दुपयोधिवार्मुचां ॥ तनोति मर्त्याऽमरमुक्तिसम्पदो । बुधा भजध्वं जिनधर्ममेव तम् ॥ १२ ॥ स्पृहयालुतया सुखःश्रियां । सकलाः स्युर्भविनां प्रवृत्तयः ॥ परमेतरभेदतो द्विधा । सुखमाद्यं पुनरक्षराऽऽश्रयम् ॥ १३ ॥ तदनन्तममिश्रमव्ययं । निरुपाधि व्यपदेशवर्जितं ॥ इतरद् विपरीतवृत्तितो । विषयाद्यौपयिकं भवाऽऽश्रयम् ॥ १४ ॥ अधिगत्य जिनेन्द्रशासनं । प्रथमे स्युः स्पृहयालवो बुधाः ॥ अपरं च परित्यजन्त्यमी । सुखमेतत्खलु दुःखमेव यत् ॥ १५ ॥

तथाहि—विषयजसुखोपभोगा–च्चातुर्गतिके भवे च दुःखानि ॥ सहते जन्तुर्मूढो । विषयसुखं दुःखमेव

तत्त्वात् ॥ १६ ॥ तथाहि—दुर्गन्धतो यदणुतोऽपि पुरस्य मृत्यु-रायूंषि सागरमितान्यनुपक्रमाणि ॥ स्पर्शः
खरः क्रकचतोऽतितमो मतश्च । दुःखावनन्तगुणितौ भृशशैत्यतापजो ॥१७॥ तीव्रा व्यथाः सुरकृता विविधाश्च
यत्राऽऽक्रन्दारवैः सततमश्रुतोऽप्यमुष्मात् ॥ किं भाविनो न नरकात्कुमतिर्बिभेति । यन्मोदते क्षणसुखैर्विषयैः
कषायी ॥ १८ ॥ युग्मं ॥ बन्धोऽनिशं वाहनताडनानि । क्षुत्तृड्दुरन्ताऽऽतपशीतवाताः । निजान्यजातीयभयाऽ-
पमृत्यु-दुःखानि तिर्यक्ष्विति दुस्सहानि ॥ १९॥ मुधाऽन्यदाऽस्याऽभिभवाऽभ्यसूया । भियोऽन्तगर्भस्थितिदुर्ग-
तीनां ॥ एवं सुरेष्वप्यसुखानि नित्यं । किं तत्सुखैर्वा परिणामदुःखैः ? ॥२०॥ सप्तभीत्यभिभवेष्टविप्लवा-ऽनि-
ष्टयोगधनदुस्सुतादिभिः ॥ स्याद् ध्रुवं विरसता नृजन्मनः । पुण्यतः सरसता च धीमताम् ॥ २१ ॥ इति चतु-
र्गतिदुःखततीः कृतिन् । कृतभयास्ततमानमनेहसं ॥ हृदि विभाव्य जिनागमतस्तथा । प्रकुरु ते न यथा स्युरिमाः पुनः ॥ २२ ॥
पराऽभिभूतिः सुलभा रिपुभ्यो । मृतेश्च भीतिर्विविधा सदाऽपि ॥ विस्रब्धता नैव कलत्रपुत्रे-ष्वपीति दुःखार्त्तिरिहाऽपि यस्मिन् ।२३।
दण्डादिदण्डिप्रधनाऽऽदिघोराऽऽ-रम्भाऽतिदुर्ध्यानजकल्मषैश्च ॥ परत्र यस्मान्नरकादिदुःखाऽ- द्वयं सुधीः कोऽत्र रमेत राज्ये ॥ २४ ॥
॥ युग्मं ॥ उदीर्यन्ते कषायाश्च । यस्मिंस्तत्तन्निबन्धनाः ॥ ग्रसन्ते सततं ते च । प्राक्पुण्यं राक्षसा इव ॥ २५ ॥ मदोन्मत्तस्य
भूपस्य । वेताला विषयास्तथा ॥ विवेकं नाशयन्त्येत-द्राज्यं नरक एव हि ॥ २६ ॥ राज्यश्रिया माद्यति मूढचेता । न भावि
दुःखं नरके त्ववैति ॥ न चैहिकाऽऽमुष्मिकदुर्विपत्सु । निस्त्राणमात्मानमथैककं च ॥ २७ ॥ मृत्योः कोऽपि न रक्षितो न ज-
गतो दारिद्र्यमुत्त्रासितं । रोगस्तेन नृपादिजा न च भियो निर्णाशिताः षोडश ॥ विध्वस्ता नरका न नाऽपि

सुखिता धर्मैस्त्रिलोकी सदा । तत्को नाम गुणो मदश्च विभुता का राज्यलक्ष्मीभुजः? ॥२८॥ आरम्भैर्भरितो निमज्जति यतः प्राणी भवाम्भोनिधा–वीहन्ते कुनृपादयश्च पुरुषं येन च्छलाद्बाधितुं ॥ चिन्ताव्याकुलताकृ-तेश्च हरते यो धर्मकर्मस्थितिं । विज्ञा राज्यपरिग्रहं त्यजत तं भोग्यं परैः प्रायशः ॥ २९ ॥ समवेक्ष्य धनानि मुग्धधी–र्हरिणाक्षीस्तनयांस्तथात्मनः ॥ मुदमावहते न बुध्यते । निखिलं गत्वरमेव सत्वरम् ॥ ३० ॥ धना-न्यनिलानि भिदेलिमानि । वपूंषि सक्ताः स्वजना निजाऽर्थे ॥ राज्यश्रियो गत्वरपङ्क्तिधुर्याः । सुधीस्तदेभिः किमु मुह्यतीह ॥ ३१ ॥

तदेषु मोहं प्रविहाय धीमान् । सांसारिकं शर्म सुदुःखमेव ॥ जानन्नुपादेयतया च शैवं । तत्साधने साधु यतेत धर्मे ॥३२॥ स च द्विधा साधुतिगेहिधर्म–भेदादिहाद्यश्च भवेन तेन ॥ शिवं प्रदातेत्यपरश्च नाक–मुत्कर्षतो द्वादशमिद्धऋद्धिम् ॥ ३३ ॥ मुक्तिं च दत्ते स भवैः कियद्भि–र्जघन्यतो द्वावपि चाऽऽदिमं स्वः ॥ निदर्शनैः स्वर्गिरितोलनाद्यै–राद्योऽल्पसत्त्वैरतिदुर्द्धरः स्यात् ॥ ३४ ॥ तथाऽपि सद्यः शिवसौख्यदानात् । सत्त्वादिभाजो विभृयुस्तमेव ॥ विदन्नजय्यं कितवैः परैः स्वं । दधाति दायं हि महान्तमेव ॥ ३५ ॥ तथाचोक्तं—

जएअ पराजिए जहा । अक्खेहिं कुसलेहिं दीवयं ॥ कडमेव गहाय नो कली । नो तेअं नो चेव दावरम् ॥ ३६ ॥ एवं लोअम्मि नाइणा । बुइए जे धम्मे अणुत्तरे ॥ तं गिण्हहि अति उत्तमं मां । कडमिवासस्वहा-यपण्डिए ॥ ३७ ॥ इति सूत्रकृदङ्गे वैतालीयाऽध्ययने ॥

आद्याऽग्रभूष्णुस्त्वपरं विधत्ते । किञ्चित्सुसाध्यं विदितं हि विज्ञैः ॥ सद्दर्शनाऽर्हद्गुरुसंघपूजा–तपोव्रताऽऽवश्यकभावनाऽऽ-
ढ्यम् ॥ ३८ ॥ तयोरन्यतरस्मिंस्त–द्यथाशक्तिमनस्विनः ॥ यतध्वं सत्वरं धर्मे । मर्मोविधि भवाद्विपः ॥ ३९ ॥ भ्रान्त्वा भवेष्वन-
न्तेषु । सामग्रीं नृभवाऽऽदिकां ॥ दुरापां कथमप्याऽऽप्य । धर्मेऽस्मिन् कोऽलसः सुधीः ? ॥ ४० ॥ किं निर्जितं मरणमाधिगणाः
प्रणष्टाः । किं व्याधयोऽप्यपुनरागमनं निवृत्ताः ॥ दुःखानि दुर्गतिभवानि न सन्ति किंवा । धर्मेऽलसो यदसुमान् विषयाऽऽदि-
सक्तः ? ॥ ४१ ॥ इत्यादिविस्तरात् श्रुत्वा । श्रीगुरोर्धर्मदेशनां ॥ प्रबुद्धा बहवो भव्या । नानाधर्मान् प्रपेदिरे ॥ ४२ ॥

गुरुं नत्वा बभाणाऽथ । श्रीजयानन्दभूपतिः ॥ न शक्नोम्यधुना धर्तुं । यतिधर्मं सुदुर्धरम् ॥ ४३ ॥ पुराऽपि मेऽस्ति स-
म्यक्त्व–मणुव्रतचतुष्कयुक् ॥ साम्प्रतं राज्यभोगाऽर्हान् । प्रपद्ये नियमानिमान् ॥ ४४ ॥ तद्यथा––कृत्वैवाऽनुदिनं पूजा–मष्टधा
परमेष्ठिनः ॥ भोक्ष्ये योगे गुरून्नत्वा । सत्कृत्य च सधर्मणः ॥ ४५ ॥ महापर्वसु धास्यामि । ब्रह्मारम्भादि वर्जयन् ॥ अमारिं
वर्त्तयिष्यामि । चैत्रे चाऽष्टाऽह्निकासु च ॥ ४६ ॥ जिनप्रासादबिम्बानि । कारयिष्ये सहस्रशः ॥ लेखयिष्यामि चाऽऽप्तोक्ति–पु-
स्तकानि बहून्यपि ॥ ४७ ॥ योगे चतुर्विधं सङ्घ–मर्चिष्यामि यथाविधि ॥ सुमहाश्रावकेभ्यश्च । ग्रहीष्यामि करं न च ॥ ४८ ॥
दीनदानादिधर्माणि । करिष्याम्यपराण्यपि ॥ बहुधा परिधास्येऽर्ह–च्छासने च प्रभावनाम् ॥ ४९ ॥

गुरुः स्माऽऽह नरेन्द्र ! त्वं । पालयेर्नियमानिमान् ॥ किन्त्वेतेषु मदैर्माद्यन् । मा प्रमादीर्मुहश्च मा ॥ ५० ॥ यस्माद्विरति-
रूपास्ते । नियमाः कीर्त्तिता जिनैः ॥ रहस्यं धर्मतत्त्वस्य । बीजं चाऽऽद्यमिहाऽनघम् ॥ ५१ ॥ सम्यक् च पालिता एव । स्युः
कर्मक्षयकारणं ॥ पुण्याऽनुबन्धिपुण्यस्य । कार्यकारणतां गताः ॥ ५२ ॥ निःश्रेयसाऽव्धिश्रेयः- श्रीसम्पत्सुखदायिनः ॥ यत्नात्ता-

न् राजराजेन्द्रा–राधयेस्त्वं सुनिश्चलान् ॥ ५३ ॥ पुनः प्रणम्य पृथ्वीन्द्रः । प्रोचे तं सद्गुरुं प्रभो ! ॥ कर्मक्षयाऽलंकर्मीणां । दीक्षां लप्स्येऽत्र किं न वा ? ॥५४॥ ज्ञानाऽतिशयविज्ञात–तद्भवः सूरिरप्यवग् ॥ भुक्त्वा भोगफलं कर्म । यतिधर्मं चरिष्यसि ? ॥ ५५ ॥ श्रुत्वेति मुदितो भूप–स्तथेति प्रत्यपद्यत ॥ अथ विद्याभृतां चक्री । गुरुं नत्वा न्यजिज्ञपत् ॥ ५६ ॥ भगवंस्त्वद्गिरा बुद्धः । किञ्चित्प्राक् चाऽभिभूतितः ॥ उपत्वत् प्रव्राजिष्यामि । राज्यभोगविरक्तधीः ॥ ५७ ॥ युक्तिं विधाय राज्यस्य । यावदेमि त्वदन्तिके ॥ प्रतीक्षस्व ततस्ताव–न्मदनुग्रहकाम्यया ॥ ५८ ॥ इत्युक्त्वा स च भूपश्च । सभ्याः सर्वे परेऽपि च ॥ प्रणम्य गुरुमाजग्मुः । स्वं स्वं स्थानं प्रमोदिनः ॥ ५९ ॥

विमृश्य सह मन्त्र्याद्यै–श्चक्री विद्याभृतामथ ॥ भूपं श्रीश्रीजयानन्दाऽऽह्वयं सप्रश्रयं जगौ ॥६०॥ वैताढ्याद्रेस्त्वया क्रीतं । यद्राज्यं मज्जयौजसा ॥ तस्यैवाऽद्याऽनुवादाय । मपद्यस्वाऽभिषेचनम् ॥६१॥ नाऽर्थो वैताढ्यराज्येन । स्वराज्यश्रीतुपोऽस्ति मे ॥ तदेहीदं स्वयनुभ्य । इदमर्हा ह्यमी पितुः ॥ ६२ ॥ तेषां रक्षां करिष्यामि । दूरेऽपि त्वमिव त्वहं ॥ इति श्रीश्रीजयेनोक्ते । वभ्मणीत् खेचरेश्वरः ॥ ६३ ॥ तनयोऽपि त्वदुत्सङ्गे । सन्ति क्षिप्ता अमी मया ॥ राज्यं चैतत्त्वदायत्तं । दद्यास्तेभ्यो यथारुचि ॥६४ परं त्वं भरतार्द्धस । सवैताढ्यस्य नायकः ॥ ज्ञानिभिर्जगदे भावी–त्यपोऽश्रौपं कुतश्चन ॥ ६५ ॥ ततो राज्येऽभिषिच्य त्वां । विधित्साम्यर्थमात्मनः ॥ मा भाङ्क्षीः प्रार्थनां त्वं मे । धर्मविघ्नं च मा कृथाः ॥६६॥ ततो दध्यौ धराधीशो । जोषं तोषं च खेटराट् ॥ सामग्रीमभिषेकस्याऽचीकरच्चाऽधिकारिभिः ॥ ६७ ॥ ततः पवनवेगादि–विद्याभृत्कोटिभिर्वृतः ॥ मणिसिंहासनाऽऽसीनं । श्रीजयं खेटवासवः ॥ ६८ ॥ अभ्यषिचन्निजे राज्ये । चक्रीत्वं इव चक्रिणं ॥ महिम्ना जितशक्रश्री–विस्तारैः सुमहामहैः ॥ ६९ ॥

॥ युग्मं ॥ चक्रवेगं च राज्यार्हं । स्वस्याद्यं पुत्रमार्पिपत् ॥ परानपि सुतांस्तस्मै । कोशसेनादि चाखिलम् ॥ ७० ॥ प्रणतः खेटशक्रेण । विद्याभृद्भिः परैरपि ॥ श्रीश्रीजयस्तु सुत्राम्णो । मूर्त्यन्तरमिवाऽशुभत् ॥ ७१ ॥

अथ चक्रायुधश्चक्रे । चैत्येष्वष्टाऽहिकामहं ॥ चतुर्धा सङ्घमानर्च । दानैर्दीनानदीनयन् ॥ ७२ ॥ मासं चाऽमारिमुद्घोष्य । स प्रविव्रजिषून्सह ॥ व्यपास्त्या प्रतिबन्धानां । घोषणाद्यैरसज्जयत् ॥ ७३ ॥ सहस्राः सह तेनाष्ट । खेटराजा महर्द्धयः ॥ ते च षोडशखेचर्यो–ऽप्याऽऽदित्सांचक्रिरे व्रतम् ॥ ७४ ॥ प्रारेभे श्रीजयश्चाऽथ । चक्रवेगादिभिर्युतः ॥ शक्रस्तीर्थकरस्येव । भूपो दीक्षामहामहम् ॥ ७५ ॥ विधाय मङ्गलस्नान–मथ खेटपुरन्दरः ॥ वसानो देवदूष्याणि । सर्वाऽलङ्कारभासुरः ॥ ७६ ॥ महाविमानमारूढः । प्रविव्रजिषुभिः समं ॥ इन्दुबिम्बद्युतिच्छत्र–वरव्यजनराजितः ॥ ७७ ॥ पुरोगेण नरेन्द्रेण । सजुषा भटकोटिभिः ॥ विमानैर्गानकृत्खेटी–कोटीनामनुगामिभिः ॥ ७८ ॥ वन्दिभिर्नाटकैश्चाऽपि । विविधैः सुषमां वहन् ॥ सुरैर्जयजयेत्युच्य–मानः साहसहर्षितैः ॥ ७९ ॥ विमानैः सुरखेटानां । ज्योतिश्चक्रं नवं सृजन् ॥ दुन्दुभिप्रमुखैर्वाद्यै–र्नेदाद्भिर्वादयन् दिशः ॥ ८० ॥ पदे पदे ददद्दान–मुद्याने गुरुपाविते ॥ गत्वा विद्याभृतां चक्री । विमानादवरुह्य च ॥ ८१ ॥ कृत्वा दीक्षार्थिभिः सार्कं । लोचमालोचमुग्मुदा ॥ गुरुं व्यजिज्ञपन्नत्वा । भवाऽब्धेस्तारय प्रभो ! ॥ ८२ ॥ गुरुरप्युपबृंहंस्तान् । राजादीन् विधिनाऽतुपत् ॥ संविग्नांस्त्यक्तराज्यादि–ममत्वान् व्रतदानतः ॥ ८३ ॥ सुरा भूपादिसङ्घश्च । सुगन्धीकृतदिग्गणान् ॥ गुरुराजाऽर्पितान् वासां–स्तेषां मौलिषु चिक्षिपुः ॥ ८४ ॥ गुरुस्तान् सङ्घलोकं च । यथाऽर्हं हितशिक्षया ॥ अनुजग्राह तां ते च । नतशीर्षाः प्रपेदिरे ॥ ८५ ॥ धात्रीन्द्रोऽपि गुरुं नत्वाऽ–नंसीच्चक्रायुधं मुनिं ॥ स्वागश्चाऽचिक्षमद्भक्त्या । त्रियोगीशुद्धिजुट् सुधीः ॥ ८६ ॥ एवं शेषान्मुनींश्चाऽपि ।

प्रणम्य सपरिच्छदः ॥ भूपोऽगात्स्वपदं ते च । चक्रवेगादयोऽप्यगुः ॥८७॥ विजहाराऽन्यतः खेऽथ । गुरुर्भूरिपरिच्छदः ॥ शिक्षां ते चर्ययोऽप्यासु-र्द्वेधीं चक्रायुधादयः ॥ ८८ ॥

नृपोऽथ श्रीजयानन्दः । सेव्यो विद्याधराऽधिपैः ॥ तैश्चक्रवेगपवना-दिभिः प्रौढचमूवृतः ॥ ८९ ॥ वैताढ्येऽन्यनगाऽऽढ्येषु । द्वीपेषु च निवासिनः ॥ सेवार्थानागतान् गत्वा । खेटेशान् लीलयाऽजयत् ॥९०॥ एवं विद्याधरेष्वस्य । चक्रित्वं बिभ्रतोऽगमत् ॥ कियान् सुखमयः कालः । पुरे गगनवल्लभे ॥ ९१ ॥ अन्यदा शयितं कश्चि-त्तं निशीथे सुरोऽवदत् ॥ शेषे जागर्षि वा राजन्! । जागर्मीति नृपोऽवदत् ॥९२॥ सोऽभाणीद्गिरिचूडोऽस्मि । बोधितस्त्रिदशस्त्वया ॥ अत्राऽगां हेतुना येन । शृणु तं धरणीधव! ॥९३॥ प्रबोध्य श्राद्धधर्मं ये । ग्राहितास्तापसास्त्वया ॥ हेमप्रभगुरोस्तत्रे-युपस्ते शुश्रुवुर्गिरम् ॥ ९४ ॥ ततस्ते भृशसंविग्नाः । प्रविव्रजि-षवोऽभवन् ॥ तस्थौ तापससुन्दर्याः । प्रतिबन्धात्तु तत्प्रभुः ॥ ९५ ॥ शेकुः प्रव्रजितुं नाऽन्ये-ऽप्यस्य च प्रतिबन्धतः ॥ द्रुतमागत्य तद्राजन्! । स्वां प्रियां स्वान्तिके नय ॥ ९६ ॥ गतधर्मान्तरायाश्च । तापसाः प्रव्रजन्ति ते ॥ नाऽमन्तुं तादृशीं चैवं । वियोजयि-तुमर्हसि? ॥ ९७ ॥ प्रेषिप्याऽऽराध्य तैस्त्वामा-नेतुं त्र्यहमुपोषितैः ॥ अहं ज्ञानिगिरा चाऽत्र । ज्ञात्वा त्वामित्यजिज्ञपम् ॥ ९८ ॥ इत्युक्त्वाऽन्तर्हिते देवे । स्मृत्वा पत्न्या गुणादि तत् ॥ मिलनोत्कण्ठुलो जज्ञे । भूपः पित्रोरपि स्मरन् ॥ ९९ ॥ ततः खेटवरान् प्रातः । समाहूय विमृश्य च ॥ न्यास्थद्राज्ये चक्रवेगं । चक्रायुधसुतादिमम् ॥ १०० ॥ ददेऽस्मै चोत्तरश्रेणे-राधिपत्यं धवो भुवः ॥ परेभ्योऽप्यस्य बन्धुभ्यः । पुरादि च यथोचितम् ॥ १ ॥ चक्रे पवनवेगं च । दक्षिणश्रेणिनायकं ॥ सेवकाय ह्याऽऽ-न्तराय । तुष्यन्ति प्रभवोऽधिकम् ॥ २ ॥ स कांश्चित्प्राक्तनैर्ग्रासैः । कांश्चिचाऽभिनवैर्नृपः ॥ दत्तैः प्राऽमुमुदत् सर्वा-नौचित्यं हि

निधिर्मुदाम् ॥ ३ ॥ विरुद्धान् क्षमयित्वाऽऽर्हा–नापृच्छयाऽसङ्ख्यसैन्ययुक् ॥ विमानं प्रौढमारूढः । क्ष्मापः सर्वप्रियाऽन्वितः ॥४ विमानस्थैश्चक्रवेग–पवनादिकखेटपैः ॥ कोटिशः सहितोऽचालीत् । प्रति तांस्तापसाऽऽश्रमान् ॥ ५ ॥ यथाऽर्हप्रतिपत्त्याद्यै– र्नृपः सम्प्रीण्य तापसान् ॥ स्वां प्रियां रुदतीमाशि–श्वसत्तापससुन्दरीम् ॥ ६ ॥

अथो ज्ञानेन विज्ञाय । तापसानां व्रतक्षणं ॥ हेमप्रभगुरुस्तत्राऽ–गमत्तेपामनुग्रहात् ॥ ७ ॥ प्राव्रजंस्तापसास्तस्यो–पान्ते हेमजटादयः ॥ गिरिचूडाऽमरनृपौ । चक्रतुश्च व्रतोत्सवम् ॥ ८ ॥ नृपोऽपि तं गुरुं नत्वा । तापसर्षीन् प्रशस्य च ॥ युतस्तापस- सुन्दर्या–ऽगमल्लक्ष्मीपुरे द्रुतम् ॥ ९ ॥ वीक्ष्य छन्नाऽम्बरं चम्वा । तं द्विपत्सैन्यशङ्कया ॥ अभ्यागाद्युद्धसामग्र्यो–द्याने श्रीविजयो नृपः ॥१० ॥ कुमारप्रहितं ताव–दागत्य खेचरद्वयं ॥ भूपालमववर्द्धापत् । पुत्राऽऽगमनिवेदनात् ॥ ११ ॥ पुत्राऽऽगमसमृद्धिभ्यां । प्रमोदाऽऽश्चर्यसङ्कुलः ॥ भूपस्तस्योचितं दत्त्वाऽ–वरुह्य च मतङ्गजात् ॥ १२ ॥ यावदभ्येति तावत्तं । सोत्कण्ठः श्रीजयोऽनमत् ॥ अवतीर्य विमानाद् द्राक् । सप्रियः सह खेचरैः ॥ १३ ॥ तमालिलिङ्ग भूपोऽथा–ऽऽलापाद्यैः प्रीणितौ मिथः ॥ प्राविक्षतां पुरं शक्र–जयन्ताविव ताविपम् ॥ १४ ॥ नत्वाऽम्बां सप्रियोऽनैपी–द्यां कुमारनृपो मुदं ॥ सैव तां वेदयेत्स्त्रीणां । नेदृक्सूनोः समो महः ॥ १५ ॥ पत्नीराश्वासयामास । तत्र पूर्वाऽपराश्च सः ॥ स्निग्धाभिर्मोदयन् गोभिश्चन्द्रः कुमुदिनीरिव ॥ १६ ॥ क्षणे पवन- वेगः श्री–विजयेशादिपर्षदि ॥ वृत्तं कुमारराजस्य । सर्वमाख्यद्यथातथम् ॥ १७ ॥ तेन विश्वचमत्कार–कारिणा गुणहारिणा ॥ सर्वे तत्स्तवमौखर्यं । हर्षाऽऽश्चर्यमया दधुः ॥ १८ ॥

अथ साधितशेपान् स । मध्यखण्डगतान्नृपान् ॥ पार्श्वखण्डद्वयस्थांश्चाऽ–जयद्राजाऽधिपोऽखिलान् ॥ १९ ॥ पूर्वं च दिशि

पूर्वस्यां । सेनाभिर्बहुभिस्ततः ॥ गर्जन्तीभिः प्रतस्थे स । वेलाभिरिव वारिधिः ॥ २० ॥ क्रमात् क्रामन् स पन्थान-माक्रामंश्च क्रमादपि ॥ पौरस्त्यानखिलान् भूपान् । प्रापत्पूर्वाम्बुधेस्तटम् ॥ २१ ॥ [1]कालिङ्गवङ्गपाञ्चाल-प्रभृतिदेशभूमिपान् ॥ क्रमाज्जित्वा यशःस्तम्भान् । न्यासीचक्रे पदे पदे ॥ २२ ॥ पूर्वे महेन्द्रनाथाद्या-श्चाऽन्येऽपि ग्राहिता बलात् ॥ स्वाऽऽज्ञां तेऽप्यभजंश्चैतं । दत्त-द्रण्डोपदास्तदा ॥ २३ ॥ ताम्बूलीलाङ्गलीपूगा-द्यनेकद्रुमशालिना ॥ वार्द्धिवेलातटेनैत्या-गस्त्याऽऽशां सोऽगमन्नृपः ॥ २४ ॥ कावेरीसुखितानीकः । स पाण्ड्यादीन् जिगाय च ॥ ताम्रपर्ण्यब्धिसारश्री-र्मुक्ताद्यस्मै ददे मुदा ॥ २५ ॥ जात्याऽश्वान् लक्षशः किञ्च । गजान् जात्यान् सहस्रशः ॥ चन्दनैलामरिचादि-भोगं तत्सैन्यमप्यलात् ॥ २६ ॥ दर्दुरो मलयः सह्य-श्चेत्यद्रीन् स व्य-लङ्घयत् ॥ केरलादिनृपान् जित्वा । प्रतीचीं दिशमाययौ ॥२७॥ तत्राऽपि पारसीकादि-भूपान् साङ्ख्यादिजातिजान् ॥ स युध्ध्वा-ऽवशयत्तेऽपि । सर्वसारोपदां ददुः ॥ २८ ॥ प्राप्तप्रतीचीदिग्भास्वान् । मन्दतेजाः प्रजायते ॥ अयं पुनर्नवो भास्वान् । महा-तेजाः पदे पदे ॥ २९ ॥

साधयामास कौबेरी-मथ द्विट्मथनः क्रमात् ॥ हूणकाम्बोजादिभूपाः । प्राप्तयुद्धपराभवाः ॥ ३० ॥ सारानेवाऽथ हस्त्यश्व-द्रविणोपस्करांश्च, ते ॥ उपदीकृत्य तस्याऽग्रे । नत्वा सेवां प्रपेदिरे ॥ ३१ ॥ कैलासप्रभृतिभूपान् । जित्वा हिमाचलाऽवधि ॥ त्रिखण्डाऽधिपतिर्भूत्वा । सर्वशत्रुजयादिति ॥ ३२ ॥ जिताऽऽनतैः सर्वराज-सहस्रैः सह सैन्ययुक् ॥ पश्चादेत्य सुखं प्रौढो-त्सवैः स स्वपुरेऽविशत् ॥ ३३ ॥ त्रिखण्डीं साधयित्वैवं । स नृपैः स्वपुराऽऽगतः ॥ अभिषिक्तोऽर्द्धचक्रित्वे । खेटैश्चन्द्र इवाऽमरैः ॥३४॥

1- कालिङ्गसुम्हप्रमृतिनिवृतो नृपान् जित्वा यशः स्तंभान् प्र०   २ स्वर्गम्

अभिषेकोत्सवेष्वेवं । [1]सम्पूर्णेषु नृपाऽधिपः ॥ राज्यग्रासादि सर्वेभ्यः । प्रसन्नोऽदाद्यथोचितम् ॥ ३५ ॥ कन्याः परःसहस्राश्च । नृपैर्दत्ता गुणोत्तराः ॥ परिणिन्ये समुद्रो हि । सर्वासां सरितां पदम् ॥ ३६ ॥ तासु पाणौ कृताः साऽव-दातमग्रिमतां दधुः ॥ सर्वासां च परीवार-ग्रासाद्यर्हं नृपो ददौ ॥ ३७ ॥ चक्रवेगाऽऽदयः खेट-राजाः सत्कृत्य भूभुजा ॥ विसृष्टाः स्वस्वराज्येषु । जग्मु-स्तत्सेवकव्रताः ॥ ३८ ॥ अथ प्रियासहस्रैः स । सेव्यमानोऽपि भूमिराड् ॥ रतिं न रतिसुन्दर्याः । संस्मरन् लभते हृदि ॥ ३९ ॥ गणिकामातृकत्वेनाऽऽ-रेकमाणः सतीव्रतं ॥ बहुकालविमुक्तां तां । नाऽपरीक्ष्य निनीषति ॥४०॥ ततोऽयं रूपलावण्य-कलायौ-वनशालिनं ॥ सूरदत्ताभिधं मित्रं । विश्वासस्थानमान्तरम् ॥ ४१ ॥ सतीत्वं सुपरीक्ष्य त्व-मानये रतिसुन्दरीं ॥ इत्युक्त्वा बहु दत्वा स्वं । प्रैषीत्पल्यङ्कगं द्रुवा ॥ ४२ ॥

सोऽपि रत्नपुरे गत्वा । धनैः कृतपरिच्छदः ॥ रतिमालागृहाऽऽसन्ने । भाटकात्ते गृहेऽवसत् ॥ ४३ ॥ क्व शीलं गणिका-जाता-वहो रागोऽपदे प्रभोः ॥ क्षणेन भ्रंशयिष्यामि । सतीत्वाद्रतिसुन्दरीम् ॥ ४४ ॥ ध्यात्वेति रतिमालाया । दासीं दानवशी-कृतां ॥ अप्राक्षीद्गृहमस्याः किं । वीक्ष्यते नृगमादिमुक्? ॥ ४५ ॥ साऽप्यूचे श्रीविलासाख्यः । कुमारो रतिसुन्दरीं ॥ परिणीय ददे तस्यै । नृपदत्तं पुराऽष्टकम् ॥ ४६ ॥ भोगान् भुक्त्वा कियत्कालं । मिषात्तीर्थनमस्कृतेः ॥ जगाम क्वाऽपि नाऽऽयाति । प्रवृत्ति स्तस्य सोऽपि च ॥ ४७ ॥ तिष्ठन्ती रतिमालाया । मन्दिरे रतिसुन्दरी ॥ कलाः स्मरति नैवाऽत्र ॥ प्रवेशं लभते नरः ॥ ४८ ॥ अहो वेश्याकुले शील-मिति चित्ते चमत्कृतः ॥ निशि मोहनगीतानि । स्मरोद्दीप्त्यै स गायति ॥ ४९ ॥ अपूर्वं फलपत्रादि ।

[1] संपन्नेषु

संस्कृत्य प्रेषयत्ययं ॥ प्रीतये रतिसुन्दर्या । दासीहस्तेन नित्यशः ॥ ५० ॥

साऽपि गृह्णाति तत्सर्वं । संस्कारादिचमत्कृता ॥ प्रायशो बहुमन्यन्ते । कलाढ्या हि कलाविदः ॥५१॥ सोऽप्राक्षीदन्यदा दासीं । मद्गीतैस्तव नायिका ॥ रज्यते वा न वा साऽऽख्य–द्रज्यते न च शंसति ॥५२॥ देवगुर्वोर्विना गीतं । सा न स्तौति विशिष्य च ॥ शृङ्गारैकमयं स्तौति । सतीचूडामणिः कथम्? ॥५३॥ ततोऽवदत्नरदत्तः । शुभे कामिनीं भामिनीं ॥ त्वां स्वामिनीं मयि प्रेम–परां कुरु कथञ्चन ॥ ५४ ॥ दास्यभाणीदहो नाऽस्मिन् । भवेऽस्याः सम्भवेदिदं ॥ पराऽनुरागलेशोऽपि । न स्वप्नेषु सतीषु यत् ॥ ५५ ॥ तन्मां तत्र नयेत्युक्ते । तेन साऽप्याऽऽह तं प्रति ॥ सुसाधं नैतदप्यत्र । प्रवेशाऽलाभतो नृभिः ॥ ५६ ॥ ततः स जोषं जोषित्वा । तस्थौ सा च गताऽऽस्पदं ॥ तत्क्षणात्प्रभृति ध्याय–न्नुपायं स्मृतवांस्त्वयम् ॥ ५७ ॥ श्रीश्रीजयाऽर्पितौषध्या । स्वयं स्त्रीभूय सम्प्रति ॥ करोमि दर्शनं तस्या । उपायः स्फुटमेष मे ॥ ५८ ॥

ततोऽन्यदागदत्तां । यस्तीर्थेषु जिनेश्वरान् ॥ नन्तुं यास्यामि गगन–गामिन्या विद्ययाऽचिरात् ॥५९॥ मत्तुल्यकण्ठमाधुर्यां । सुरूपां सकलां प्रियां ॥ सस्नेहामप्यहं पश्चा–न्मोक्ष्याम्यत्र स्वसद्मनि ॥६०॥ सहाऽस्या ग्रहणे मा भूद् । विबन्धः कोऽपि मे पथि ॥ इत्यत्र मुक्तां मत्प्रीत्या । रमयेर्नित्यमेत्य ताम् ॥६१॥ दास्यप्योमित्युदित्वाऽगात् । स्वस्थानं स सुधीस्ततः ॥ नरेन्द्रदत्तयौषध्या । नारीरूपमकल्पयत् ॥६२॥ नारीरूपधरः स स्व–स्थाने तिष्ठन्नथो तया ॥ प्राक्दत्तवाक्तया दास्या । नित्यमेत्य विनोद्यते ॥६३॥ दिवा सह तयाऽऽलापैः । समयं गमयत्ययं ॥ रात्रौ रात्रौ पुनर्गायन् । जैनगीतानि सुस्वरम् ॥ ६४ ॥ तद्गीतानि निशाम्यन्ती । तत्सौस्वर्येण रञ्जिता ॥ प्रतिवेश्मगता केयं । गायंत्यस्तीति किङ्करीम् ॥६५॥ रतिसुन्दर्यपृच्छत्तां । मातः! प्रोषितभर्तृका ॥गीता-

द्यैर्मोदयन्ती स्वं । काऽप्येषाऽस्ति धनिप्रिया ॥ ६६ ॥ नाऽधिकं वेद्म्यहं किञ्चि–दित्याऽऽख्यत् साऽप्यथो ततः ॥ तां तयाऽजू-
हवद्राज्ञी–निजोपांते प्रमोदतः ॥६७॥ त्रिभिर्विशेषकं ॥ मायास्त्री साऽपि तत्राऽगाद् । द्रुतमन्तः प्रहर्षुला ॥ कृत्वा प्रणामं तद्दासी–
दत्ताऽऽसने निषेदुषी ॥ ६८ ॥ दुष्प्राप्यं प्राप्य तत्स्थानं । तद्रूपं वीक्ष्य चाऽद्भुतं ॥ मुदिता विस्मिता चोच्चैः । साऽग्रहीत् स्मरगृ-
ह्यताम् ॥ ६९ ॥ तथाऽपि चतुरत्वेन । सा स्वाऽऽकारं तथाविधं ॥ संवृत्य तत्क्षणादेव–[1]मस्थाच्च वशिनीव सा ॥ ७० ॥ युग्मं ॥
सन्मानयित्वा कल्याण–वार्त्ताप्रश्नादिनाऽथ तां ॥ रतिसुन्दर्यपृच्छत्त–त्स्वरूपमखिलं यथा ॥ ७१ ॥ का त्वं भगिनि! कुत्राऽसि ।
स्थिता कल्याणिनी चिरं ॥ केन वा परिणीताऽसी–त्यादि सर्वं निवेदय ॥७२॥ युग्मं ॥ ततः कृतकयोषाऽऽख्यत् । स्वरूपं शृणु
मे सखि! ॥ राजपुत्र्यासि खेटेन । परिणीता प्रमोदतः ॥७३॥ स चाऽत्र लीलया तिष्ठ–न्नर्थिनः प्रीणयन् धनैः ॥ मया समं रति-
सुख–मन्वभूदन्वहं बहु ॥ ७४ ॥ तीर्थेषु देवान् वन्दित्वाऽ–भ्यैमीत्युक्त्वाऽधुनाऽथ सः ॥ मां मुक्त्वा भूरिविभवा । गतोऽद्याऽपि
समैति न ॥७५॥ कोऽपि वैदेशिकश्चाऽस्मिन् । सद्मन्यासीत् पुरा वसन् ॥ गते तस्मिन् विदेशे च । तत्र पत्याऽस्मि वासिता ॥७६॥
भर्तृमुक्तधनेनाऽत्र । सुखिता सपरिच्छदा ॥ शुभंयुः शीलसौरभ्य–सुभगाऽसि स्थिता चिरात् ॥७७॥ श्रुत्वा तद्राजपत्न्याऽऽख्यत् ।
समानव्यसनत्वतः ॥ सधर्मिण्यसि मे भद्रे! । सखीत्वं तदिहाऽस्तु नौ ॥७८॥ अथाऽन्वहमिहाऽऽगम्यं । मम पार्श्वे सखि! त्वया ॥
स्थेयं विनोदनीयं च । मन्मनः सत्कथादिभिः ॥७९॥ मायास्त्र्यथो गिरा तस्या । यात्याऽऽयाति च तद्गृहे ॥ स्वगृहे च नृरूपेण ।
तिष्ठन्ती चेष्टतेऽखिलम् ॥८०॥ स्मारं स्मारं सुरूपां तां । दर्शं दर्शं च तत्क्षणे ॥ कन्दर्पपारतन्त्र्यं च । पुंस्त्वाद्धत्तेऽधिकाधिकम् ।८१।

[1] सुस्थाऽस्थाद् वशिनी वशा प्रत्यन्तरे

चिन्तयत्यथ चित्तेऽसौ । किमीदृगपि कर्म मे ॥ भवेद्यदेकशोऽप्यस्याः । सङ्गमात्सुखमाप्यते ? ॥ ८२ ॥ ततस्तदर्थिनी साऽपि । तत्रैव यद्गु तिष्ठति ॥ विविधाभिः कथाभिश्च । विनोदयति तन्मनः ॥ ८३ ॥ तथा धर्मकथाभिः सा । प्रथयन्ती परं रसं ॥ तास्ता कामकथाः कामं । कथयत्यन्तराऽन्तरा ॥ ८४ ॥ कदन्नांशस्पृशांक्षीरा-हाराणामिव तद्गिरां ॥ कामोक्तियुक्तपुण्यार्थ-जुषां साऽधात्क्रमाद्रुचिम् ॥ ८५ ॥ शनैः शनै रसै रम्यैः । प्रशस्तैर्धर्मसङ्गतैः ॥ रुचितैरुचितैरुक्तै-र्मायास्त्री तन्मनोऽधिनोत् ॥ ८६ ॥ राज्ञी जज्ञे हृदि प्रीता । तत्कथाभिर्यथा यथा ॥ अस्खलद्वाक्प्रवेशाऽऽसीत् । सा तन्मानात्तथा तथा ॥ ८७ ॥

प्रोचेऽन्यदा तां मायास्त्री । कामाङ्गीकृतयौवने ॥ वने वल्लीव किं भोगै-र्विना त्वं व्यर्थयेर्भवम् ॥ ८८ ॥ कामक्रीडावनं ताव-द्यौवनं युवनन्दनं ॥ जितविश्वयशारूपं । रूपं तव निरूप्यते ॥ ८९ ॥ त्वत्तनूर्दीपलेखेव । धत्ते तां काञ्चनश्रियं ॥ यस्यां यूनां मनांस्याऽऽशु । निपतन्ति पतङ्गवत् ॥ ९० ॥ भान्ति स्वभावरम्याण्य-प्यखिलाऽङ्गानि तेऽधिकं ॥ सौन्दर्येण नवानीव । दुग्धानीव सितादिभिः ॥ ९१ ॥ इत्येषा सर्वसामग्री । त्वया स्वाङ्गाऽनुगामिनी ॥ दुष्प्रापाऽपि यदि प्रापि । तन्न किं सा कृताऽर्थ्यते ? ॥ ९२ ॥ सा साऽर्था स्वपतेर्योगे । स च ते क्वाऽस्ति कामिनि ! ॥ किं जीवन् ! वा मृतो वेति । तत्तमिष्टं नवं कुरु ॥ ९३ ॥ यतः-

पत्यौ प्रव्रजिते क्लीवे । प्रणष्टे पतिते मृते ॥ पञ्चस्वापत्सु नारीणां । पतिरन्यो विधीयते ॥ ९४ ॥ इति शास्त्रोक्तितः

किञ्चि-न्नाऽयशो न च दूषणं ॥ कुलस्त्रीणामपि यत-स्तत्किमन्यमृगीदृशाम् ॥ ९५ ॥ साम्प्रतं साम्प्रतं त्वेत-द्गणिकादुहितुस्तव ॥ एवं च स्वार्थसिद्धिः स्या-न्निर्बाधेति तथाऽऽचर ॥ ९६ ॥ इत्थं भिपस्त्र्युक्तनव्य-पतीकरणवार्त्तया ॥ शल्येव व्यथिता चित्ते । सती सा धिक्चकार ताम् ॥ ९७ ॥ ततस्तां प्रत्यवग् मायानारी-नाऽरीभवामि ते ॥ परीक्षितुं सतीत्वं ते ।

सखीत्वादभ्यधां मुधा ॥ ९८ ॥ यदि त्वं दूयसे चित्ते । मदुक्तेनाऽधुनाऽमुनाधुनाऽसि त्वं सखीत्वं तत् । क्षमस्वेदं च सुन्दरि ! ॥ ९९ ॥ मायामहेलाहेलास्यो–दीरितानि हितानि सा ॥ सान्त्वनाऽर्थं प्रयुक्तानि । श्रुत्वा तामप्यचीक्षमत् ॥१००॥ प्रीत्या प्रत्यहमागत्य । प्राग्वत्तच्चित्ततुष्टये ॥ पुण्याऽऽढ्या विस्मयस्मेरा–ख्यानाः सारूयाति सादरः ॥ १ ॥ पुनर्गते बहौ काले । प्राग्वद् ब्रूतेऽन्तरान्तरा ॥ गिरः प्रकामं सा काम–केलीभिः कीलिता इव ॥ २ ॥ तथा स्थिता श्वसद्भ्रान्ता । पुरुपाऽऽकारधारिणी ॥ सा स्फुर्जदार्जवां राज्ञी–मावर्जयितुमुद्यता ॥ ३ ॥ सुसंस्काराद्भुताऽपूर्व–वस्तूनि प्रेपयत्यलं ॥ तस्यै मोहनगीतानि । गायत्यपि चिरं मुदे ॥ ४ ॥ युग्मं ॥ कामं कामार्दिता सान्तः–स्वान्तं मर्दितधर्मधीः ॥ राज्ञीं च नित्यं ध्यायन्ती । विध्याताऽङ्गानुगच्छविः ॥ ५ ॥ मुधाकृतक्षुधाक्षोभा । मृपाभूततृपागमा ॥ गतनिद्रा निजस्वामि–द्रोहाद्यप्यवजानती ॥ ६ ॥ राज्यां रतसुखोपायान् । निरपायान् यथायथं ॥ विमृशन्ती यथाप्रज्ञं । प्राज्ञंमन्या विचेष्टते ॥ ७ ॥ कथंकथमपि ज्ञात्वा । तथा तस्या विचेष्टितं ॥ अन्येद्युः शुद्धधीर्दध्यौ । सा सती रतिसुन्दरी ॥ ८ ॥ एपा स्त्री यादृशान्यत्र । सदा गीतानि गायति ॥ पुंमुखात्तानि तादृशि । श्रूयन्तेऽभ्यर्णवेश्मनि ॥ ९ ॥ समाया सा समालोक्य । मां सुभाङ्गीं मृगीदृशं ॥ कामाऽऽकुलितचेतस्का । तत्कालं जायते किल ॥ १० ॥ अन्यच्च स्वरगत्यङ्ग–लक्ष्मचेष्टादि च स्फुटं ॥ नृसाधारणमेवैपा । धरतीति न संशयः ॥११॥ योपित्त्वेनेक्ष्यमाणाऽपि । नैपा योपिद्विभाव्यते ॥ हेतोः कुतोऽपि मायास्त्री–भूतः कोऽपि पुमानसौ ॥ १२ ॥ परं स्मराऽऽतुरः कश्चिद्–दुराचारः पुमानयं ॥ ममाऽपि शीलविध्वंसं । कर्त्तुकाम इवेक्ष्यते ॥ १३ ॥ तदयं हृदयं स्वीयं । मलिनं दर्शयन्निति ॥ सर्वथा साऽपराधः सन् । निग्राह्यः समये मया ॥ १४ ॥ सत्यग्रणीरिति ध्यात्वा । तदायतिमवेक्षितुं ॥ प्राग्वद्विनोदवाग्भिः सा । प्रीतिं प्राऽवीवृतचिरम् ॥ १५ ॥

अन्यदान्योन्यमालापे । जायमाने तयोर्मुदा ॥ मदालसा लसन्माया-मयीस्त्री सा गतत्रपा ॥ १६ ॥ शृङ्गाररसशृङ्गार-तारुण्यतरुमञ्जरीं ॥ अपप्रथत्कामकथां । सत्पथप्रतिपन्थिनीम् ॥ १७ ॥ युग्मं ॥ तां तदुक्तामथाकर्ण्य । किञ्चिदन्तर्विचिन्त्य च ॥ नृपप्रियाऽऽख्यत् सख्यत्र । ममाऽपीदं तवोदितम् ॥ १८ ॥ अकृत्यमप्यहं कर्तुं । समीहे सखि! ते गिरा ॥ यथोच्छिष्टमपि स्निग्धः जग्धुमिहेहते ॥ १९ ॥ परं न दृश्यते तादृग् । युवा सर्वाऽद्भुताऽऽकृतिः ॥ सर्वाङ्गीणगुणः कश्चि-द्विपश्चित्सर्वकर्मसु ॥ २० ॥ यं प्रियं प्रेयसीकुर्वे । प्रियेव प्राणदानतः ॥ प्रापय्य प्रेमसर्वस्वं । स्वं येन च समं रमे ॥ २१ ॥ निशम्येदं मुदं धृत्वा । मायास्त्री प्राह साहसात् ॥ सकलाभिः कलाभिस्ते-ऽनुरूपः पतिरस्ति मे ॥ २२ ॥ प्रज्ञया सुन्दरः स्वीय-रूपेणाऽतिपुरन्दरः ॥ मोदयन् मेदिनीं दानै-रनुरक्तश्चिरं त्वयि ॥ २३ ॥ युग्मं ॥ तदद्य तस्याऽऽह्वानेन । स्पृहां पूरय सत्वरं ॥ पत्युर्मेऽत्युत्सुकस्येति । प्रीतिः पल्लविता भवेत् ॥ २४ ॥ यतः—पतिव्रताः पत्यु-रनुकूलस्थिराशयाः ॥ प्रियमेवाचरन्त्युच्चै-रुच्चरन्ते प्रियं वचः ॥ २५ ॥

ततः पतिव्रतात्वेन । मनाग् मम मनस्यपि ॥ सापत्नप्रत्यया काचि-दरुचिर्न च विद्यते ॥२६॥ तस्मात्प्रादुष्कुरु स्वाभिप्रायं प्रियसखि! द्रुतं ॥ येन तं स्वगृहे गत्वा । प्रेषयामि तवाऽन्तिके ॥ २७ ॥ इति प्रोक्तवतीं माया-स्त्रियं प्रत्याह सा सती ॥ धनलाभं विना सर्व-मेतन्मन्ये विडम्बनाम् ॥ २८ ॥ सखि! सत्यं ममाऽप्यस्य । पत्युर्धनमनर्गलं ॥ समग्रभोगसामग्री-साधनं सुखसेवधिः ॥ २९ ॥ यावद्विलोक्यते तावद् । ब्रूहि तत्प्रेषयामि यत् ॥ भोगलाभस्तथा सौख्य-लाभोऽप्येवं त्वयेक्ष्यते ॥ ३० ॥ परं दुरन्तकामाऽर्त्ति-दुःखानलजलप्रभां ॥ रतिभीतिफलां वेलां । हले पत्यै ममाऽऽदिश ॥ ३१ ॥ साऽप्यूचे तव पत्युश्चे-द्दानशक्तिर्भवेत्तदा ॥ स हि कोटिमितं वित्तं । दत्तां मह्यमशङ्कितः ॥ ३२ ॥ यदि न प्रत्ययस्तस्याऽप्येवं स्यात्स तदा मुदा ॥ कोट्यर्द्ध-

मेकं प्राग् दत्तां । तत्परं च परेद्यवि ॥ ३३ ॥ समादाय समायातु । समं तेन ममौकसि ॥ श्रुत्वेत्यन्तः प्रमुदिता । साऽप्यमन्यत तद्वचः ॥ ३४ ॥ ततः कामवशा माया–वशा वेश्म निजं गता ॥ स्वदास्या च करेण प्राक्–प्रपन्नं प्राहिणोद्धनम् ॥ ३५ ॥

प्रोक्तेऽह्न्यथ तयौषध्या । नररूपं विधाय सा ॥ कोट्यर्द्धरत्नान्यादाय । तद्वेश्मद्वारमागमत् ॥ ३६ ॥ जात्यकाञ्चनमाणिक्य–मयभूषाविभूषितं ॥ सर्वाऽत्यद्भुतशृङ्गार–पथ्यनेपथ्यडम्बरम् ॥ ३७ ॥ शाम्बराऽरिमिवाऽध्यक्षं । वीक्ष्य तं द्वारकिङ्करी ॥ राज्यै व्यजिज्ञपद् द्वारि । प्राप्तं सान्तरमूमुचत् ॥ ३८ ॥ सोऽपि तद्द्वारमध्यस्थ–चित्रशालामुपेयिवान् ॥ चेट्याऽभ्यास्यत रत्नानां कोट्यर्द्धं तत्करेऽकरोत् ॥ ३९ ॥ गिराऽस्य साऽपि तावत्स्वं । स्वस्वामिन्यै तदार्पयत् ॥ सा सर्वमेकीकर्तुं तत् । प्राच्यमानीनयत्तया ॥ ४० ॥ सर्वमेकत्र सम्मील्य । यावत्पश्यति तद्धनं ॥ सतेजस्कगतत्रास–रत्नान्येव हि केवलम् ॥ ४१ ॥ तावन्निरीक्षते तत्र । राज्ञी सा रतिसुन्दरी ॥ किञ्चित्प्रमुदिताऽत्यन्तं । विस्मिता च व्यचिन्तयत् ॥ ४२ ॥ युग्मं ॥ अहो! अदृष्टपूर्वाणि । प्राग्दृष्टानीव भान्ति मे ॥ रत्नान्यमून्यमूदृंशि । यदासन् पत्युरेव मे ॥ ४३ ॥ रक्तादिवर्णैर्वृत्ताद्या–कारैस्तैस्तेजसां भरैः ॥ सान्द्रैर्विस्तारिभिर्भानु–मण्डलादागतैरिव ॥ ४४ ॥ स्निग्धत्वाद्यैर्गुणैश्चाऽन्यै–रपि सङ्ख्यातिगैर्युतं ॥ अहं पत्युर्गृहे रत्न–राशिं यादृशमैक्षिषि ॥ ४५ ॥ युग्मं ॥ तन्मध्यादागतानीव । तद्वर्णादिगुणान्यहं ॥ रत्नान्यमूनि साराणि । सर्वाण्यपि विभावये ॥ ४६ ॥ तन्मन्ये मम पत्यैव । निश्चितं कोऽप्ययं निजः ॥ मामाकारयितुं प्रैषि । मात्रातीतैरमात्रतैः ॥ ४७ ॥ तदर्थं तान्यवाप्याऽऽगा–दत्र कोऽप्येष तद्भटः ॥ मां दृष्ट्वा क्षुब्धचित्तः सन् । लुब्धश्चैवं विचेष्टते ॥ ४८ ॥ तदयं दुर्मतिः स्वामि–द्रोही परमपातकी ॥ पातुकः पापभूमीषु । नरकेषु नराऽधमः ॥ ४९ ॥ किं नैष वेत्ति निःशेष–मूर्खशीर्षाऽग्रशेखरः ॥ लोकेऽप्यगम्याः सर्वेषा–मशेषाः परयो-

दन्योऽपि वा महान् ॥ ६४ ॥ किमु केसरिणः स्कन्धा-त्केसरान् फणिमस्तकात् ॥ मणिं वा क्रष्टुमीष्टेऽत्र । कश्चिज्जीवत्सु तेष्वहो ! ॥ ६५ ॥ शेषशीर्षमणिं किंवा । व्याघ्रीदुग्धमपीह वा ॥ चमर्याः पुच्छमथवा । लातुं शूरोऽपि किं क्षमः ॥ ६६ ॥ जीवन्तीषु सतीष्वेवं । जीवाऽलङ्करणं परं ॥ तासां कः शीलमाणिक्य-माच्छेत्तुं छेकतां भजेत् ॥६७॥ तथापि शीलसर्वस्वं । मदीयं ह्येष लम्पटः ॥ लुण्टितुं वाञ्छति च्छेक-स्तदेनं शिक्षयाम्यहम् ॥ ६८ ॥ [तथाऽपि शीलसर्वस्वं । मदीयमपहारकः ॥ तांस्तानुपायान् निरमाद् । यदेष पुरुषप्लुवः ॥ ६९ ॥ प्रत्यन्तरे ] न च शिक्षां विना दक्षः । शठो न च हठं विना ॥ न चपेटां विना मूर्खः प्रत्येत्येवमिहाऽप्ययम् ॥ ७० ॥ तदयं शिक्षणीयश्च प्रापणीयश्च सत्वरं ॥ दुर्ध्यानि फलमित्येषा । ध्यात्वा दासीरशिक्षयत् ॥७१॥ न सहे पाप्मनः स्वप्नेऽप्यस्य दुर्मनसो मनाक् ॥ प्रवेशमात्रमप्येवं द्वारस्याऽग्रे कदाप्यहम् ॥ ७२ ॥

इति ध्यात्वा स्वदासीनां । प्रोवाच रतिसुन्दरी ॥ सतीशिरोमणिः स्वीय-शीलरक्षणतत्परा ॥७३॥ यूयं च ब्रूत गत्वाऽमुं । त्वामुपाऽस्माकमीश्वरी ॥ स्नानाङ्गरागभोगादिपूर्वं शृङ्गारमद्भुतम् ॥ ७४ ॥ विधाय यावदभ्येति । तावदत्र मणीमये ॥ तदर्पितेऽस्मिन् पल्यङ्के । सुखमध्यास्व सुस्वर ! ॥ ७५ ॥ तदर्पितं च ताम्बूलं । सुरभिद्रव्यसंस्कृतं ॥ गृहाणाऽऽस्वादय स्वैर-मश्रान्तं मुखवासनम् ॥ ७६ ॥

इत्यादिवचनान्युक्त्वा । सोपचाराणि तं नरं ॥ सम्प्रीणयध्वं बाहीक-प्रीतिसम्प्रापणात्क्षणम् ॥७७॥ सर्वमेतद्विधायैवं । मह्यं ज्ञापयताद्दताः ॥ परं तद्योग्यताम्बूले । विशेषोऽयं विरच्यताम् ॥ ७८ ॥ भूरितृज्भूरिभूयिष्ट-सुरभिद्रव्यभावना ॥ तत्राऽतिप्रचुरा चारु-युक्त्या कार्या विशेषतः ॥ ७९ ॥ तस्मै न वाच्यं त्वेतत्ताः । शिक्षयित्वेति दक्षधीः ॥ स्वाऽऽवासे सुखमध्यास्ते । तल्पं

सा रतिसुन्दरी ॥ ८० ॥ तच्चेटीभिस्तदीयास्ताः शिक्षावाचः प्रपेदिरे ॥ अथ दाक्ष्याच्चथा कृत्वा । ताभिः स उपचर्यते ॥ ८१ ॥
तासामनेकशस्तैस्तै-रुपचारैर्मनोहरैः ॥ सप्रीतिविनयाऽऽलापैः । पादप्रक्षालनादिभिः ॥ ८२ ॥ मणिपर्यङ्कतत्तादृक्-तूलिकाशयना-
ऽऽदिभिः ॥ सर्वाद्भुतसुगन्धाऽऽढ्य-ताम्बूलैश्चोपढौकितैः ॥ ८३ ॥ सोऽप्यन्तः प्रीतिमान् स्वर्ग-सुखं न्यूनममन्यत ॥ स्ववधू-
भिरिवाऽध्यक्ष-वीक्षाभिस्ताभिरादरात् ॥ ८४ ॥ कथाप्रथाभिः प्रस्ताव-सदृग्भिर्वल्गुभिभृशं ॥ चित्रीयमाणोऽन्तश्चित्ते । रतिसर्व-
स्वसङ्गतः ॥८५॥ चतुर्भिः कलापकं ॥ अधरीकृतनिःशेष-स्वादस्वादुरसं परं ॥ ताम्बूलं सबलं दत्त-मास्वादयन् मुहुर्मुहुः ॥८६॥
विपयाऽऽर्त्या समं सोऽपि । तृपयान्तर्निपीडितः ॥ जलं पातुं ययाचे ता-श्चेटीः खेटीजितः श्रिया ॥ ८७ ॥ युग्मं ॥ मध्येसौधं
समेत्याऽऽशु । तदास्यो विनयानताः ॥ स्वस्वामिनीं प्रति प्रोचु-स्तत्स्वरूपं तृपादिकम् ॥ ८८ ॥ तयाऽपि ताः प्रति प्रोचे । हंहो
साधु निवेदितं ॥ अनुक्त्वैवाऽसवं स्वादु-रसं पूर्वकृतं गृहे ॥८९॥ तत्तादृग्मदकृच्चन्द-दनेकद्रव्यसंस्कृतं ॥ महारसं महावीर्य-महा-
र्घ्यगुणसञ्चयम् ॥ ९० ॥ सिताद्राक्षादिनीरेभ्यः । क्वथितेक्षुरसादपि ॥ परमाऽधिकमाधुर्य-बन्धुरं बुधरंजनम् ॥ ९१ ॥ शीतलं
विमलं तत्त-त्सुरभिद्रव्यपेशलं ॥ पानीयमिव पानीय-स्थाने सोऽपि निपाय्यताम् ॥९२॥ भवतीभिरिति स्वामि-न्याज्ञया ज्ञास्त-
मासवं ॥ जलभ्रमकरं स्वादु-तरं तास्तमपाययन् ॥ ९३ ॥ पञ्चभिः कुलकं ॥ प्रवर्द्धमानकामेच्छा-छायाच्छादितलोचनः ॥ तृपा-
क्रमणसङ्क्रान्त-खेदः सोऽपि तदा मुदा ॥ ९४ ॥ नीरासवान्तराऽवेदी । नेदीयः-स्वर्णपात्रगं ॥ अपिबदिममत्यन्त-स्वादुं ताभिः
समर्पितम् ॥ ९५ ॥ युग्मं ॥ तृप्तः सोऽपि निवृत्तस्त-त्पानात्पापमनास्ततः ॥ पुनः सुष्वाप पल्यङ्के । क्षणादाघूर्णितेक्षणः ॥९६॥
विसृष्टसर्वव्यापारः सोऽभूद् दुष्टाऽहिदष्टवत् ॥ विपेणेव मदोद्रेके-नैतदीयेन पीडितः ॥९७॥ मूर्च्छितश्चाऽचिरात् सोऽपि । पापप्रेत-

कटाक्षितः॥ भगिनी दीर्घनिद्राया। निद्रामुद्रामवाप्तवान् ॥ ९८ ॥
अथ तं तादृशं सुप्तं। मृतकल्पमवेक्ष्य ताः ॥ निःशङ्कवृत्त्या ताश्चैव्य-स्तत्सर्वाङ्गमशूशुधत् ॥ ९९ ॥ क्रमात्तदीयमूर्द्धाऽग्र-धम्मिल्लचिकुरान्तरे ॥ गोपितां तेन तां दिव्यौ-षधीं तास्तत्र लेभिरे ॥ १०० ॥ तां दृष्ट्वा हृष्टचित्तास्त-दास्यस्ता रतिसुन्दरीं ॥ स्वस्वामिनीमुपागत्य। सत्यभावाददर्शयन् ॥ १ ॥ न्यजिज्ञपंश्च तल्लाभो-पायं निमायमाशु ताः ॥ आर्पिपंस्तत्कराम्भोजे। साक्षा-ल्लक्ष्मीमिवाऽथ ताम् ॥ २ ॥ युग्मं ॥ ततस्तामात्मसात्कृत्य। क्षणं प्रेक्ष्योपलक्ष्य च ॥ विस्मयस्मेरवक्त्राऽब्जा। साऽप्यध्यासीद् हृदन्तरे ॥ ३ ॥ इयं महौषधीदिव्य-प्रभावभवनं हि सा ॥ मम पत्युः करक्रोड-क्रोडे प्राक् क्रीडतिस्म या ॥ ४ ॥ मदीयां जननीं मायां-जननीं शासितुं पुनः ॥ चकार शूकरीरूपां। यया मम पतिः पुरा ॥ ५ ॥ तादृक्स्वरूपा तद्वर्णा कीणाङ्गा तावती, तथा ॥ सेयं निरीक्ष्यते साक्षा-त्तदिमां निश्चिनोमि ताम् ॥ ६ ॥ यदि सैव भवेन्नैषा-ऽकार्षीदयं दुराशयः ॥ मुहुर्मुहुर्महेलाया। रूपमाशु कुतस्तदा ॥ ७ ॥ स्त्रीरूपेण विना चैष। निषिद्धपुरुषाऽऽगमे ॥ मम वासगृहे रम्ये-ऽलप्स्यताऽऽगमनं न हि ॥ ८ ॥ पर-मस्य करे प्रापत्। केनोपायेन सा ततः ॥ किं मे पत्याऽर्पिताऽस्मैस्या-दन्यथा वेति विस्मयः ॥ ९ ॥ किंवाऽनेन विमर्शेन। समये ज्ञास्यते स्वयं ॥ यथास्थितं हृदः सर्वं। वादितोऽयं वदिष्यति ॥ १० ॥ सम्प्रत्यस्याः प्रभावेन। कृत्वा तं मर्कटाकृतिं ॥ बिभीषि-कादिभिस्तत्त-दुपायैः शिक्षयामि तु ॥ ११ ॥ इत्याद्युचितमालोच्य। चिरं सा रतिसुन्दरी ॥ स्वदासीर्मुदिताः प्रत्यु-वाच श्लाघानघा गिरः ॥ १२ ॥ साधु साधु न्यधायीदं। भवतीभिः शुभंयुभिः ॥ चक्रे, यत्स्वोक्तनिर्वाह-स्तथौषध्यर्पणं मम ॥ १३ ॥ धन्याः पुण्याः कृतज्ञाश्च। प्रकृत्या मुदिताः स्थ यत् ॥ भक्ता विनीताः स्वामिन्या। भवतीनां सुजन्म तत् ॥ १४ ॥ इत्यादिबहुलस्नेहा। गिरः स्व-

स्वामिनीमुखात् ॥ श्रुत्योः सुखाकराः श्रुत्वा । ताः परां प्रीतिमाप्नुवन् ॥ १५ ॥ आनन्दितोपचरिता । ताभिर्वाक्यक्रमैरिः ॥ सुखस्वापादिना साऽपि । रात्रिं तामत्यवाहयत् ॥ १६ ॥

अथोत्थाय क्षणे ब्राह्मे । प्रातस्त्यसमयोचिता ॥ द्वेधाऽप्याऽऽवश्यकीः सर्वाः । क्रियाश्चेक्रीयतेस्म सा ॥ १७ ॥ ततः साऽपि प्रसुप्तं त-[1]च्चेट्याः जूहवज्जवात् । अन्तर्गेहं जवन्यंतर्हितालापैस्त्वमूमुदत् १८॥ कथंचन ततस्तस्य । कामांधस्य प्रमादिनः तामौषधिं शिरस्येषा । न्यस्य तं मर्कटं व्यधात् ॥ १९ ॥ अथाऽऽनाय्य स्वदासीभि–रायसीं शृङ्खलां क्षणात् ॥ तया न्यजगडच्च सा । परस्त्रीभोगलोलुपम् ॥ २० ॥ तन्मायां तादृशीं दृष्ट्वा । ततः प्रकुपिता सती ॥ सा तं संस्मार्य संस्मार्य–मुहुर्मुहुरताडयत् ॥ २१ ॥ अनीनृतच्च तं नित्यं । चुल्ल्यां क्षेप्स्याम्यरेऽधुना ॥ इत्युच्चैर्भापयन्ती च । सा चेटीभिरतीतपत् ॥ २२ ॥ चुल्लीक्षेपादिका एवं । दर्शयन्ती विभीषिकाः ॥ तस्मै ताडननृत्ये सा । कार[illegible]ती च तं सती ॥२३॥ निरन्तरमवादीच्च । रे दुराचारदुर्मद ! ॥ स्वामिद्रोहपरस्त्रीच्छा–फलं भुङ्क्ष्वाऽधुनांऽशशः ॥ २४ ॥ युग्मं ॥ द्रोहेष्वपि समग्रेषु । स्वामिद्रोहः सुदुस्तमः ॥ महापापमयस्तस्य । फलं को वक्तुमीश्वरः ॥ २५ ॥ परस्त्रीभोगकाङ्क्षायाः । सम्भूतमशुभं हि यत् ॥ तद्विपाकफलान्तं कः । आप्तुं शक्नोति शक्तिमान् ॥ २६ ॥ [2]परस्त्रीगमनाऽऽशा हि । विशां पाशायतेऽनिशं ॥ ययाऽतिपीडिता जीवा । म्रियन्तेऽनन्तजन्मसु ॥ २७ ॥ तदुक्तं— भोगे अ भुञ्जमाणावि । केइ० कुवि० जन्ता० ॥२८॥ तथा–विषयस्य विषयाणाञ्च । दूरमत्यन्तमन्तरं ॥ उपभुक्तं विषं हन्ति । विषयाः स्मरणादपि ॥ ३९ ॥

[1] मौषध्याऽथ विधाय द्राक् । कपिरूपं फशाभिश्र ॥ [2] विषयस्येपदप्याशा प्रत्यन्तरे

तत्परस्त्रीगतां वाञ्छां । सर्वथा त्वं परित्यज। अत्राऽमुत्र च रे! मूर्ख !। चेत्स्वस्मै शुभमीहसे ? ॥३०॥ इत्याद्युपदिशत्यस्मै । हितं सा बहुधा बहु ॥ एवं सन्ताप्यमानैषाऽप्युद्गिरन्तीक्षुवद्रसम् ॥ ३१ ॥ श्रुत्वा तदुपदेशं तं । ज्ञात्वा स्वं कर्म गर्हितं ॥ मुहुर्मुहुर्निजात्मानं । बहुधा सोऽपि शोचति ॥ ३२ ॥ बन्धाद्याभिभवं नित्यं । सहन् दीनाननश्चिरं ॥ मुञ्चंश्चाजस्रमश्रूणि । मुञ्च मुञ्चेति तां वदन् ॥ ३३ ॥ साऽपि तं पापिनं ब्रूते । मर्कटत्वमुपागतं ॥ भृशं दुःखोपतप्तः स–न्नेवं वदसि रेऽधुना ॥ ३४ ॥ न त्वेवं तव तत्पाप–फलमोक्षोऽस्ति किञ्चन ॥ पापाऽन्धानां फलं यस्मात् । परत्र नरकादिषु ॥ ३५ ॥ महादुःखसहस्राणां । सहनं बहुजन्मसु अनन्तसमयं याव–द्भवतो भावि दुस्तरम् ॥ ३६ ॥ युग्मं ॥ या च ते पापवाञ्छाऽभू–त्तस्याः पश्येति वर्णिकां ॥ [1]यद् यैर्बध्यते यादृग् । तत्तैस्तादृग् हि भुज्यते ॥ ३७ ॥ यैर्यदा यादृगुप्तं स्या–त्फलधान्यलतादिकं ॥ लूयते भुज्यते वाऽपि । तैस्तदा तादृगेव तत् ॥ ३८ ॥ कृताऽनुसारि सर्वं यत् । सुखदुःखादिकं नृणां ॥ भवेऽत्राऽमुत्र च त्वं त–न्मा विषीद मनागपि ॥ ३९ ॥ स्वरुच्यैव कृतस्याऽत्र । शुभस्याऽप्यशुभस्य वा ॥ न हि भोगं विना मोक्षः । कैश्चिदप्युच्यते क्वचित् ? ॥ ४० ॥

एवं तदुपदेशैस्तु । मुहुर्मुहुरुपश्रुतैः ॥ चिभीषिकावधाद्यैश्च । नित्यप्राप्तैर्विबोधितः ॥ ४१ ॥ दौर्मनस्यमपास्य द्राग् । प्रदीप्तवदनेक्षणः ॥ शोचंश्च स स्वचेष्टाभि–र्विनयादिपुरस्सरम् ॥४२॥ निपत्य पादयोस्तस्याः । क्षमयंस्तां पुनः पुनः॥ परस्त्रीनियमैकान्त–प्रतिपत्तिं व्यजिज्ञपत् ॥ ४३ ॥ त्रिभिर्विशेषकं ॥ तस्येङ्गितादिभिर्मत्वा । परस्त्रीविरतौ मनः ॥ स्वस्मिन्नम्रतयाऽत्यन्तं । दीनाननतयाऽपि च ॥४४॥ दयालुः सरला शील–व्रती साऽपि सतीमणिः ॥ दासीभिर्मोचयामास । शृङ्खलाद्युग्रबन्धनात् ॥ ४५ ॥ औषध्या

[1] यद् यैर्यादृग् गृहे राद्धं तत्तादृग् हि तैर्भुज्यते' प्रत्यन्तरे

जीवन्तमप्यजीवन्त-मिव चाऽल्पान्नदानतः ॥ ४६ ॥ त्रिभिर्विशेषकं ॥ कार्मिश्रितसमये सा तं ।
कारयामास । पूर्वरूपं च तं नरं ॥ श्रीजयानन्ददासेति । नाम नूनमलीलिखत् ॥ पुन-
र्बन्धयित्वा दृढं पुनः ॥ भाले तस्य स्वदासीभि-स्तप्ताऽऽयसशलाकया ॥ ४७ ॥ तत्तादृशाऽशुभानां तत् । फलं संश्राव्य निश्चलं ॥ ग्राहयित्वा परुष्यादि-
र्निर्भर्त्स्य चाऽश्रव्य-मनन्तं कटु दुस्सहम् ॥ ४८ ॥ तं मुक्तबन्धनं स्वस्थ-चित्तं प्रमुदितं च सा ॥ निषिद्धान्यनरालोका । नेपथ्यान्तरिता
नियमांस्तममूमुचत् ॥४९॥ त्रिभिर्विशेषकम् ॥ कस्त्वं? क्वाऽऽस्ते निवासस्ते । कुतः स्थानादिहाऽऽगतः ॥ किं प्रयोजनमुद्दिश्ये-त्येतत्प्रश्नोत्तरं वद ॥ ५१ ॥ स
जगौ ॥ ५० ॥ प्रश्नेभ्यः कृतार्थं स्वं । मन्यमानो यथास्थितं ॥ उवाच वाचं प्रत्येतां । शृणु स्वामिनि! तद्यथा ॥ ५२ ॥
विजयपुरनरपुरन्दर-राजश्रीविजयतनुजमाणिक्यं ॥ राजसहस्रनिषेव्यः । स्वामी श्रीश्रीजयानन्दः ॥ ५३ ॥ नृपतिः प्रत-
पति सम्प्रति। निष्प्रतिमश्रीर्द्वितीय इव तपनः ॥ विस्मेरितकमलाऽऽकर-निकरः सर्वत्र मृदुकरश्चित्रम् ॥ ५४ ॥ परमैश्वर्यभुजः किल ।
निजभुजधृतसकलभूभरस्याऽस्य ॥ सेवाहेवाकपरः । क्षत्रसुतः सूरदत्तोऽसि ॥ ५५ ॥ निजानुपमसर्वद्धर्या । पुराणपुरपुङ्गवान् ॥ सदा
यदाह्वयेऽताऽत्र । तस्मिन् लक्ष्मीपुरे पुरे ॥ ५६ ॥ वसामि स्वामिनः श्रीश्री-जयानन्दनरेशितुः ॥ राजधाने प्रधाने तत्सेवया सु-
खितः सदा ॥ ५७ ॥ खेटादीनां मुखेभ्यः श्री-जयवृत्तान्तमादितः ॥ ज्ञातपूर्व्यसि भृत्यो यत्तेनाऽहं प्रेषितोऽत्र वत् ॥ ५८ ॥
स्वकीयदिव्यपल्यङ्क-प्रयोगेण नभोगतिः ॥ नभोग इव मातस्त्वा-माकारयितुमादरात् ॥ ५९ ॥ युग्मं ॥ रत्नादिवित्तं तद्दत्तं ।
सहाऽऽदाय परीक्षितुं ॥ त्वां स्थितस्त्वद्गृहाऽसन्न-गृहे भुञ्जे यथेप्सितं ॥ ६० ॥ तदर्पितौषधीदिव्य-प्रभावात्स्त्रैणरूपभृत् ॥ पुण्य-
वत्या महासत्या-स्तव दर्शनमाप्नुवम् ॥ ६१ ॥ नवं तव शचीरूप-जैत्रं रूपं निरीक्षिपि ॥ केनाऽप्यभाग्ययोगेन । भ्रान्तस्तादियतीं

दशाम् ॥ ६२ ॥ मातः सम्प्राप्तवान् सम्प्र-त्युद्धृतश्च ततस्त्वया ॥ परस्त्रीनियमाद्युग्र-पुण्यमार्गप्रदर्शनात् ॥ ६३ ॥ युग्मं ॥ लक्ष्मी-पुरपुरेन्द्रः श्री-श्रीजयानन्दभूपतिः ॥ पतिस्ते त्वयि सोत्कण्ठ-श्चिरादिच्छेत्तवाऽऽगमम् ॥ ६४ ॥ तत्त्वं स्वामिनि! जामिमें । प्रयासं सफलं सृज ॥ पल्यङ्कमिममारोह । यावः स्वस्वामिनोऽन्तिके ॥ ६५ ॥ जवन्यन्तारिता साऽपि । प्राह ते साहसं महत् ॥ मया सह सहर्षः सन् । यदेवं गन्तुमीहसे ॥ ६६ ॥ परं परनरस्पर्शं । प्रक्षयेऽपि न कुर्वते ॥ सत्यः शीलोज्ज्वलाः सर्वा । अपि त्रैधविशुद्धितः ॥६७॥ यदपि प्रतिपन्नोऽसि । परस्त्रीनियमव्रतं॥ सम्प्रत्यतः परं चाऽपि। मा त्याक्षीर्दार्ढ्यमत्र तत् ॥६८॥ नाऽन्यपरस्त्रीत्यागादेः। सदाचारः सतां मतः ॥ अयमेव निधिस्तेषां । परमं च विभूषणम् ॥ ६९ ॥ प्रवासादनु मे पत्युः । श्रीजयानन्दभूपतेः ॥ कदाऽपि क्वाऽपि नाऽन्यस्य । नरस्य मुखमैक्षिषि ॥ ७० ॥ स्वजनैरपरैर्वाऽपि । परपुम्भिः समं पुनः ॥ नाऽऽलापं न प्रसङ्गं चाऽ-द्राक्षं कश्चित्कथश्चन ॥ ७१ ॥ शृङ्गाराद्यपि नाऽकार्षं । न स्निग्धाऽऽहारभोजनं ॥ न ताम्बूलाऽऽदिभोगं च । न नखादेश्च सत्क्रियाम् ॥ ७२ ॥ नाऽभ्यङ्गस्नानमाल्याङ्ग-रागसंलेपनादिभिः ॥ क्रियाभिर्नाङ्गसंस्कारं । कदाऽप्यकरवं नवम् ॥ ७३ ॥ नित्यात्मो-चितभोगाङ्गचीराऽऽहारादिभिर्विना ॥ प्रोषितप्रियसत्यर्हा-चारं सर्वमपि व्यधाम् ॥ ७४ ॥ तथोत्पन्नेष्वपि प्रायः । प्रयोजन-शतेष्वपि ॥ स्वयमङ्गेङ्गितज्ञाभि-र्भृत्याभिरुचितं कृतम् ॥ ७५ ॥ नाद्य यावत्प्रवेशोऽपि । विशां दत्ते मया गृहे ॥ तदभ्येमि त्वया सार्द्ध-मध्यास्यैकासनं कथम् ? ॥ ७६ ॥

अथ गत्वा निजं स्थानं । पत्युर्मे कथयेरिदं ॥ मुक्त्वा साक्षात्त्वदाह्वान-मन्यैः सार्द्धं समेति न ॥ ७७ ॥ सुभगेन त्वया पुण्यात् । स्थाने स्थाने पुनः पुनः ॥ मद्वत्सुरूपाः शतशो-ऽप्यन्याः कन्याः प्रियाः कृताः ॥ ७८ ॥ तत्प्रेमवेमसंसिद्ध-भक्तिचा-

तुर्यवन्तुजात् ॥ तत्प्रीतिपदतोन्तर्ध–र्नाथ मां नाऽवलोकसे? ॥७९॥ तथाऽपि प्रार्थये नाथ! । तव दर्शनसन्निधी ॥ चिरं परं दुर्घटे ते । दिव्यभोगाऽशने इव ॥ ८० ॥ ध्यायामि नित्यं त्वामेव । त्वं तु मे न स्मरस्यपि ॥ स्मरमूर्त्तिस्त्वं चाऽहं तु । रतिर्मा तेन माऽमुचः ॥ ८१ ॥ नाथ प्राणास्त्वदायत्ता । यत्प्रीतास्ते त्वयैव मे ॥ त्वत्प्रसादप्रतिदान–शून्याऽहं निर्वहे कथम्? ॥८२॥ त्वत्प्रसादस्तु दूरेऽस्तु । यच्चिन्ताद्यपि मेऽत्यजः ॥ तन्नाथ! मुक्त्वा त्वां नाथं । पुरः कस्य ब्रवीमि तत्? ॥८३॥ सर्वाऽक्षसारं सारङ्ग–नेत्र नेत्रर्नृणां मनः ॥ तदेव देव! मे नीत्वा । किं मां मुञ्चस्यथैकिकाम् ॥ ८४ ॥ त्वदेकभक्तेस्त्वदेक–शरणायाः कृपाम्बुधः ॥ मम नाथ त्वया चिन्ता । विधेया करुणानिधे! ॥ ८५ ॥ चन्द्रस्य चन्द्रिकेवाऽर्क–प्रभेव द्वादशात्मनः ॥ देहच्छायेव देहस्य । तवाऽस्मि सहचारिणी ॥ ८६ ॥ इति प्रसद्य मे स्वेना–ऽकारणाऽनुग्रहं क्रियाः ॥ इति मद्वचसा वाच्यः । पतिर्मे नृपतिः स तु ॥ ८७ ॥ अन्यच्च तत्र भूमर्त्तु–र्मद्भर्त्तुः कुशलादिकं ॥ यथा तं मम मन–स्तुष्ट्यै वद यथास्थितम् ॥ जगदे सादरं सोऽपि । तस्याः श्रुतिसुखाऽऽकरं ॥ तद्भर्त्तुर्भूपतेः सर्वं । सम्बन्धं सत्यमादितः ॥ ८८ ॥

तथाहि–लक्ष्मीपुरनृपतिश्री–श्रीपतिकन्यात्रयीकरग्रहणं ॥ श्रीपतिदीक्षा स्वरपति–राज्यं वैताढ्यगमनादि ॥८९॥ बहुबहुविधविद्यार्जन–विद्याभृदुपकृतितत्सुतोद्वाहः ॥ चक्रायुधखेचरजय–स्तदाद्यङ्गजा सहस्राणाम् ॥ ९० ॥ सोत्सवपाणिग्रहणं । स्वपुरागमसौवराज्यभोगादि ॥ रिपुनृपविजयैतत्–प्राग्जायाऽऽह्वानादिकं सर्वम् ॥ ९१ ॥ यद्यद्यथायथाऽभू–दाश्चर्यमयावदातशतकलिकं ॥ तत्पितृविरूपचन्द्रा–द्यत्तरसम्बन्धसम्बद्धम् ॥ ९२ ॥ तत्सर्वमचवेद्यत । स स्वदचो यथाश्रुतं जानन् ॥ स्वस्वामिप्रेयस्यै । तस्यै परितोपमाधातुम् ॥ ९३ ॥ पञ्चभिः कुलकं ॥ तस्मात् स्वभर्त्तुर्भूभर्त्तुः । सम्बन्धश्रवणादियं ॥ परमानन्दनिस्पन्द–ममन्दमुदवाह

सा ॥ ९४ ॥ अथो यथोचितं युक्त्या । स्वभृत्याभिरतोषयत् ॥ व्यसर्जयच्च तां प्राज्ञा । राज्ञी सा रतिसुन्दरी ॥ ९५ ॥ ततस्ततः
प्रस्थितः स । प्राप लक्ष्मीपुरं पुरं ॥ राजानं श्रीजयानन्द–नामानं प्रणनाम च ॥ ९६ ॥ तत्परीक्षादिकं सर्वं । भूतपूर्वं यथातथं ॥
आमूलचूलं स व्यक्त–मालपन्नृपतिं प्रति ॥ ९७ ॥ तथा तद्वाचिकं प्रोचे । स्वयमामन्त्रणादिकं ॥ तत् श्रुत्वा स्वप्रियायाः सत्–शी-
ललीलायितं परम् ॥ ९८ ॥ विदित्वा हृदि मोदित्वा । नृपस्तद्दर्शनोत्सुकः ॥ भृशभक्तिमतीं भार्यां । तामानेतुं ततः स्वयम् ।९९।
दिव्यं विमानमारुह्य । क्षणाद्रत्नपुरे गतः ॥ निजसौजस्कसाराऽल्प–परिवारपरिस्कृतः ॥१००॥ त्रिभिर्विशेषकं । सपौरं सपरीवारं ।
श्रीरत्नप्रभभूपतिं ॥ तत्प्रिया रत्नमालाद्या । राज्ञीश्च सपरिच्छदाः ॥ १ ॥ स्वदर्शनेन सन्तोष्य । स्वप्रियां रतिसुन्दरीं ॥ तच्चा-
दृशोचितालापै–श्चाभिनन्दितवान् क्षणम् ॥ २ ॥ युग्मं ॥ आकस्मिकसुधावृष्टि–मायं मत्वा तदागमं ॥ अभ्युत्थानाऽऽसनक्षेम–
प्रश्नाद्यौचित्यचिन्तया ॥ ३ ॥ मुदा भक्तिद्विगुणितो–ल्लासया प्रेरिताऽऽशयः ॥ श्रीरत्नप्रभभूमीन्द्र– स्तं महीन्द्रमुपाचरत् ॥ ४ ॥
॥ युग्मं ॥ सामन्ताऽमात्यपौराद्याः । सर्वेऽपि मुदिताः समं ॥ समन्ताद्विविधैरश्व–गजरत्नाद्युपायनैः ॥ ५ ॥ तमुपासिषताऽशेष–
विनयाऽऽनम्रमस्तकाः ॥ कियत् कालं स्थितस्तत्र । तेषां सन्तोषहेतवे ॥ ६ ॥ युग्मं ॥ ततश्चाऽऽपृच्छ्य सत्कृत्य । श्वसुरादीनदी-
नदृग् ॥ पितृभ्रात्राद्यनुमतां । सतीचूडामणिं नृपः ॥ ७ ॥ भृत्यचेट्यादिसर्वर्द्धि–मतीं तां रतिसुन्दरीं ॥ आकार्यारोह्य च प्रौढ–
विमानं माननीयधीः ॥ ८ ॥ सारेण परिवारेण । समं समभिरुह्य च ॥ मनोऽनुगामिना वायु–वेगजेत्रा स्वरंहसा ॥ ९ ॥ क्षणेन
व्योममार्गेण । ग्रामाकरपुरादिकान् ॥ अनेकानप्यतिक्रम्य । तद्बलात् स्वपुरेऽगमत् ॥ १० ॥ सोत्सवं च पुरस्यान्तः । प्रविश्यान्तः
पुरान्तरे ॥ आनीयाऽस्थापयद्रम्ये । हर्म्ये तां वल्लभां मुदा ॥११॥ पञ्चभिः कुलकं ॥ स्वप्रधानैर्निजनिज–स्थानाच्छेपा अपि प्रियाः ॥

सम्मेल्य दानसन्मानै-र्यथार्हः सोऽप्यतूतुपत् ॥१२॥ ताभिः समं समन्ताद्-प्युपास्यः सुखसागरे ॥ सुभगे भोगभङ्गीभिः । स्नाति राज्यश्रिया सह ॥१३॥ अनुशास्ति स राजेन्दुः । प्रजाः सर्वाः प्रजा इव ॥ [1]न्यायैकनिष्ठः शिष्टोऽयं । लोकम्पृणगुणोदधिः ॥१४॥

अथाऽन्येद्युर्मुखेन्दुद्युत्-द्योतिताशेषदिङ्मुखे । नम्राऽनेकनरेन्द्राऽलि-मौलिलालितशासने ॥ १५ ॥ श्रीश्रीजयनृपे पर्ष-न्मध्यमध्यर्जुनाऽऽसनं ॥ अध्यासिते सति ध्याता-र्हदादिपरमेष्ठिनि ॥ १६ ॥ यथोचितहितस्त्राऽन्य-त्तत्तत्कार्यपरायणे ॥ त्वरमाणः प्रतीहार-स्तमभ्येत्य प्रणत्य च ॥ १७ ॥ व्यजिज्ञपदिति स्वामिन् ! । विजयादिपुरात्पुरात् ॥ विज्ञप्तिहस्तास्तल्लोकाः । प्रतोलीद्वारमागताः ॥ १८ ॥ त्वां नन्तुं स्पृहयन्त्येते । यत्कृत्यं तदिहाऽऽदिश ॥ राजाऽप्याऽऽह प्रतीहार ! । तान् प्रवेशय सत्वरम् ॥ १९ ॥ ततः प्रवेशितास्तेन । ते सर्वेऽपि प्रमोदतः ॥ प्रणम्य तं च पूर्वोक्तां । विज्ञप्तिं तत्पुरोऽमुचन् ॥ २० ॥ तामादाय महाऽमात्य-प्रमुखाः पृथिवीपतेः न्यवेशयन् कराम्भोजे । हंसीमिव समुज्ज्वलाम् ॥ २१ ॥ प्रमोदयितुमात्मीय-मौलराज्याऽऽगतान् जनान् ॥ तामुन्मुद्रय नराऽधीशः । स्वयं वाचयति स्फुटम् ॥ २२ ॥ तथाहि—

स्वस्ति श्रीमति लक्ष्मी-पुरे पुरे सुरपुरोपमर्द्धियुजि ॥ भूपाऽऽलिपालिताऽऽज्ञं । राजेन्द्रं श्रीजयानन्दम् ॥ २३ ॥ जनकश्रीविजयनृप-प्रभृतिपरिच्छदपरिस्फुरच्छोभं ॥ नगराद्विजयपुराह्वाद् । राजन्याः परिजनाश्च सर्वे ॥ २४ ॥ प्रणिपत्य विनयपूर्वं । विज्ञपयन्त्यञ्जलीकृतकराब्जाः ॥ अवधार्यतामतःपर-मार्यहितं कार्यपदमखिलम् ॥ २५ ॥ तथाहि-त्वत्पूर्वपूर्वजनराऽधीशप्रतिपालितप्रबलराज्ये ॥ विजयपुरपत्तने य-ज्जातमिदानीं शृणु त्वं तत् ॥२६॥ तत्राऽस्ति सिंहसारः । पृथिवीपतिशब्दमात्रमुदितमनाः ॥

१ नयं विनयवत् सर्व इति प्रत्यन्तरे

सर्वव्यसनप्रसरप्रदः । प्रदर्शितकुमार्गमतिः ॥ २७ ॥ कपटपटुः कटुकर्मा । गतधर्मोऽसन्तताऽऽश्रयदशर्मा ॥ गुरुकर्मा मर्मावि-न्न-र्माऽधिकगीर्जगज्जूर्मा ॥ २८ ॥ वैरिष्विव लोकेष्वपि । विषमाक्षः खलु जितोऽक्षहर्यक्षैः ॥ निःशेषान्यायगृहं । केतुः सर्वर्द्धिवृद्धीनाम् ॥ २९ ॥ त्रिभिर्विशेषकं ॥ राजन्यायप्रवणा । राजन्याः पूर्वजक्रमायाताः ॥ मायातो विश्वासिताः सितास्तथा गुप्तिषु क्षिप्ताः ॥३०॥ विक्षिप्ताः स्वजनेभ्यः । कष्टदशां प्रापिता विनाऽप्यागः ॥ उद्वेजिताश्च केचिद् । भोज्यादि त्याजिताश्चैके ॥ ३१ ॥ दण्डेशाद्याः केचन । बहुधा बहुदण्डिताः पुनस्तेन ॥ इत्यादिभिः प्रकारै -र्दुःखान्यनुभाविताः शतशः ॥ ३२ ॥ स्वाहितविहिताऽऽज्ञाऽपि । तैस्तै-र्दुर्दोषघोषणैस्तेषां ॥ लोभान्धेन गजाऽश्व-प्रभृति तथाऽग्राहिपत तेन ॥ ३३ ॥ अन्यच्च—राजन्नाजन्म त्वत्पू-र्वज सुखिताः प्रजाः प्रजातमुदः ॥ स्वप्नेऽप्यनाप्तदुःखाः । प्राक् त्वत्पित्रादिलालिताः किल याः ॥ ३४ ॥ प्रजाः प्रजानन्नपि ताः पितामहा—द्यर्च्याः सुरुच्याक्षयवित्तसेवधिं ॥ धिनोति नो किन्तु दुनोति सर्वतः । स सिंहसारः खलु दुष्करैः करैः ॥३५॥ काराश्चामी—[1]दाण [2]पुन्छी [3]हल [4]मोभ [5]भाग [6]भेट [7]तलारक्ष [8]वद्धापन [9]मलवरक [10]वल [11]लञ्चा [12]चारिका [13]गढ [14]वाडी [15]छत्र [16]आलहण [17]घोटक [18]कुमारादिसुखभक्षिका ॥ श्री आवश्यकेऽप्युक्तं—

[1]गो [2]महिसु[1] [3] उट्ट [4]सूणं । [5]छगलीणं पि अ करा मुणेअव्वा॥ तत्तोअ [6]तण [7]पलाले । [8]भुस [9]-[10]कट्ठङ्गार करमेव ॥३६॥ [11]सीउं [12]वर जङ्गाए । बलि [13]-[14]वद्दकरे [15]घए अ [16]चम्मे अ ॥ [17]चुल्लगकरे [18]अ भाणिए । एए अट्ठारसमा करुप्पत्ती ॥ ३७ ॥ इत्यष्टादश कराः ॥ त्वन्मौलराज्यलाभा-ल्लोभान्धः सकलमपि जगत्तृणवत् ॥ गणयन्न मन्यते स हि । मान्यान्यपि सुप्रधानानि ॥ ३८ ॥ यस्य गृहे न हि मन्त्री । मित्रं वा हितकरः परः कश्चित् ॥ स्त्र्यादरापि कम-

कुशलः। प्रियंवदः पञ्चधीः स्थिरो धीरः॥ ३९॥ तस्य प्रतिष्ठते न हि। राज्यं न कुलं स्थितिर्न मर्यादा॥ न धनं न चाऽर्थ-सिद्धि-र्न यशो न सुखादि न च सुकृतम्॥ ४०॥ प्रधानेभ्यः प्रधानेभ्यः। सर्वेऽर्थाः सर्वभूभुजां॥ येन प्रायः प्रसिद्ध्यन्ति। तत्सङ्ख्याप्राणि तानि तैः॥ ४१॥

न प्रधानैर्विना राज्यं। न च दानैर्विना यशः॥ न विना च धनैर्दानं। न पुण्येन विना धनम्॥ ४२॥ प्रधानानाममान्यत्वाद्। दुर्धिया तेन दुर्यशः॥ स्वस्य कोशे कृतं सर्वानुपताप्य निजेतरान्॥ ४३॥ राज्यप्राप्तिदिनादेत-द्रास-रावधि तेन ये॥ दुर्नयाश्चक्रिरे कस्तान्। वक्तुमीष्टे वचस्यपि॥४४॥ यच्च श्रीविजयो राजा। त्वत्पिताऽप्यन्वभूत्फलं॥ तत्सर्वं तन्मुखाद् ज्ञातं। भावि भूमिपुरन्दर! ॥४५॥ जयराजा पितृव्यस्ते। त्वां नः स्वामिनमार्पिपत्॥ नागास्त्वं च तदाऽस्माक-मभा-ग्योदयतः प्रभो! ॥४६॥ स त्वद्बन्धुरिहाऽस्मद्दुर्दैवाऽऽकृष्ट इहाऽऽगतः॥ त्वत्पितृव्याऽऽदिदत्तं च। राज्यं प्राप्येत्यचेष्टत॥ ४७॥ वरं निवासोऽरण्यानां। प्रवासश्च वरं तपः॥ वरं मृतिर्वा तद्राज्य-च्छायेच्छाऽपि न नोऽशतः॥ ४८॥ तस्मात्त्वं राजराजेन्द्र!। दृशौ देहि दयाऽऽत्मिके॥ प्रसीद सीदतः सम्प्रत्यस्मान् स्वान् किमुपेक्षसे?॥ ४९॥ यशःकीर्त्युदधिः सर्व-गुणरत्नमहानिधिः॥ परोपकारिणामाद्यः। शरण्यः शरणार्थिनाम्॥ ५०॥ क्षत्रव्रतभृतां राज्ञां। पूर्वजः पर्वजस्तथा॥ भवन् भवान् ध्रुवं धत्ते। धुरि स्थाद्यादिनां स्थितिम्॥ ५१॥ पाप्मिनां प्रथमं दुष्टा-न्यायिनामाद्यमादरात्॥ नृपनामहरं तत्त्वं। निगृहाण नृपब्रुवम्॥ ५२॥ मा लुम्प पौर्वजीं कीर्तिं। मा मुञ्च पूर्वजप्रजाः॥ मूलराज्यं गृहाण त्वं-मनुगृह्णीष्व च प्रजाः॥ ५३॥

अथ बन्धौ कृपां कृत्वा। यद्येवं न करिष्यसि॥ उद्वसीभविता देश-स्तत्सर्वः सपुराकरः॥ ५४॥ राजेन्द्र! भवतश्चित्ते।

यदुक्तं प्रतिभासते ॥ पक्षयोरुभयोर्मध्ये । तन्मध्येत्योचितं कुरु ॥ ५५ ॥ इति श्रुत्वा गिरस्तेषां । स्वपितुश्च पराभवं ॥ स्मृत्वा विधृत्य च स्वीय-प्रजानां दुखितां हृदि ॥ ५६ ॥ भरतार्द्धपतिः श्रीश्री-जयानन्दनृपोऽनु तं ॥ अभिषेणयितुं वाञ्छन् । सद्यः सेनापतिं प्रति ॥ ५७ प्राह प्रयाणवाद्यानि । वादयस्व स्वकिङ्करैः ॥ चतुरङ्गचमूचक्र-मक्रमेणाऽपि सज्जय ॥ ५८ ॥ त्रिभिर्विशेषकं ॥ तज्जयप्रवणस्याऽऽत्म-प्रभोरादेशमित्यमुं ॥ मुदितेन समासाद्य । पृतनापतिना द्रुतम् ॥ ५९ ॥ तथा कृते ससैन्यः श्री-श्रीजयानन्दभूपतिः ॥ प्रतस्थे प्रति तं सिंह-सारं प्रत्यर्थिपार्थिवम् ॥ ६० ॥ स्वल्पैः प्रयाणैः प्राप्यैत-देशमादेशवर्त्तिनं ॥ दूतं प्रहित्य प्रस्तावो-चितं चेतयतिस्म तम् ॥ ६१ ॥ शतशोऽपि तवाऽन्यायाः । स्वाजन्यात् क्षमया मया ॥ उपेक्षिता इयत्कालं । भ्रातर्नोऽतःपरं क्षमे ॥ ६२ ॥ क्षमेश्वरशिरोमौलि-रित्यावेद्याग्रतोऽचलत् ॥ नीतिं हि नाऽतिक्रामन्ति । महीयांसो महीभुजः ॥ ६३ ॥ असङ्ख्यतमसैन्येन । समेतोऽपि समं व्रजन् ॥ महीमहीलयन्नैष । तल्लोकाऽनुपतापनात् ॥६४॥ सदाऽप्युदारचित्तानां । दयावित्ताद्वताऽऽत्मनां ॥ परोपकारिणां प्रायः । परं किमपि नाऽस्ति यत् ॥ ६५ ॥ स्वदेश इव तद्देशे-ऽप्याऽऽचरंस्तत्प्रजाहितं ॥ त्रिखण्डाऽधिपतिः सोऽपि । तत्पुरोपान्तमागमत् ॥ ६६ ॥ तत्राऽपि सर्वसामग्र्या-भ्यापतन्तं महाबलं ॥ तं नाम्ना सिंहसारं स । त्रासयन् व्याधवत् क्षणात् ॥ ६७ ॥ बलेन सह तं सिंहं । योधयित्वा चिरं बहु ॥ महाबलं इवाऽभाङ्क्षीद् । वृक्षं सोऽपि महाबलः ॥ ६८ ॥ लीलया च धृतस्तेन । सिंहः श्वेव जरन् जवात् ॥ नियम्य निगडय्याऽपि । निजपित्रे समर्पयत् ॥६९॥ तेनाऽपि स्थापितः कारागारे स्वकर्म शोचति ॥ पीडाद्यनुभवन् दुःखं । ह्यतत्पापतरोः फलम् ॥ ७० ॥ न पापव्यापजातपापः । सन्तापात्कोऽपि मुच्यते ॥

पापं हि पृष्ठगं काल-मनन्तमपि [1]दुःखदम् ॥ ७१ ॥ ततः संसारिभिर्जीवैः पश्यद्भिः पाप्मनः फलं ॥ तद्भिदे धर्मसारं हि । सङ्ग्राह्यं साग्रहं बुधैः ॥ ७२ ॥

तत श्रीश्रीजयानन्दः । पाणीकृतजयेन्दिरः ॥ पौरैरमात्यै राजन्यैः । कृतोत्सवपुरस्सरम् ॥ ७३ ॥ प्रविवेश पुरे तस्मिन् । विजयोपपदे पुरे ॥ सममात्मीयता तेन । सोत्कण्ठं सैन्यसङ्गतः ॥ ७४ ॥ राजवर्ग्यैर्नरैः पौरैः । परैरप्युपदाकरैः ॥ गजाऽश्वादिपुरस्कृत्य । प्रणेमे कृतमङ्गलैः ॥ ७५ ॥ तद्राज्यमान्यसामन्ता-ऽमात्यादीनपरानपि ॥ सर्वसीमालभूपालान् । पौरान् जानपदान् जनान् ॥ ७६ ॥ आलापदानमानाद्यै-र्यथौचित्यं यथाक्रमं ॥ प्रीणयामास राजेन्द्र-श्चकोरानिव चन्द्रमाः ॥ ७७ ॥ प्रणम्य सर्वैर्विज्ञप्तं । दुराप्यं तव दर्शनं ॥ भाग्यानुभावादस्माभिः । सम्प्राप्तं साम्प्रतं प्रभो ! ॥ ७८ ॥ तत्तादृग्दुःखदौराज्य-ध्वान्तविध्वंसिनि त्वयि ॥ तेजोनिधौ तपत्यत्र । सचक्रैर्मुदितं चिरात् ॥ ७९ ॥ कालरात्रिरिवैतावान् ॥ कालः सर्वभयङ्करः ॥ क्षयं निन्येऽथ पुण्याऽहो-दयश्चक्रे त्वयाऽर्कवत् ॥८०॥ तत्त्वं चिरं जय स्वामिन् ! । मौलराज्यं कृतार्थय ॥ पवित्रयाऽस्मान् पीयूष-वृष्टिदृष्टिप्रदानतः॥८१

इत्युक्त्वा विरतांस्तान् स । व्याहारैरुचि[2]ताश्चितैः ॥ प्रमोद्य विससर्जाऽथ । तेऽपि स्वं स्वं गृहं ययुः ॥ ८२ ॥ जनैर्जानपदैः सर्वै-स्तत्र प्रतिगृहं महाः ॥ देहलीघृतसेकादि-पूर्वं प्रीत्या प्रचक्रिरे ॥८३॥ राजाऽपि देवपूजादि-प्रस्तावोचितकृत्यकृत् ॥ दिनान् गमयते तत्र । कतिचिल्लोकतुष्टये ॥ ८४ ॥ राज्यस्यान्तःस्थितः सर्वा । तच्चिन्तां कुरुतेऽनिशं ॥ पित्रे तत्परिवाराय । परेभ्यश्च जिनोदितम् ॥ ८५ ॥ धर्मं सम्यग् समाख्याति । दयादिगुणदीक्षितं ॥ दानशीलतपोभाव-भास्वद्भेदचतुष्टयम् ॥ ८६ ॥ पुण्य-

१ दुन्, रुजेत् ° प्रत्यन्तरे २ ° तोचितैः प्रत्यन्तरे

पापफलव्यक्ति–हेतूक्तिमययुक्तिभिः ॥ मुक्ताभिरिव दीप्ताभिः । शुक्तिसम्पुटवद्भृशम् ॥ ८७ ॥ त्रिभिर्विशेषकं ॥ कार्यान्तराणामा-
पात–सन्तापेष्वप्यनेकशः ॥ नैपुण्यात्तत्कृते धर्मं । प्रत्यहं वक्ति तत्पुरः ॥८८॥ विविधानपि दृष्टान्तान् । सरसान् सारसङ्ग्रहान् ॥
आविर्भावितदेवादि–तत्त्वत्रितयनिर्णयान् ॥ ८९ ॥ धर्मस्थैर्यकरान् श्रोतृ–सुखकरान् हिताकरान् ॥ उपदिश्योपदिश्यैष । नित्यं
तानार्हतान् व्यधात् ॥ ९० ॥ तेऽपि पुत्रगिरं सारां । श्रुत्वा तत्त्वाऽमृतोर्मिभिः ॥ सिक्त्वा स्वान् प्रत्यपद्यन्त । गृहिधर्मं यथास्थि-
तम् ॥ ९१ ॥ जैनधर्मरतं कृत्वा । भूजानिं जनकं निजं ॥ सोऽस्थापयत् प्रजानाथ–स्तस्मिन् राज्ये क्रमाऽऽगते ॥ ९२ ॥ स्थ-
विरेणाऽपि तेनाऽथ । नाथताऽपि तपः परं ॥ अनुल्लङ्घ्यतया पुत्र–गिरां तद्राज्यमादृतम् ॥ ९३ ॥ पिताऽपि स ततः कामं ।
गन्तुकाममपि द्रुतं ॥ गाढाग्रहात्तं राजेन्द्रं । निजात्मजमतिष्ठिपत् ॥ ९४ ॥ दिनान् स कतिचित्तस्थौ । चित्तं तोषयितुं पितुः ॥
तस्य स्थित्याऽल्पयात्युच्चैः । प्रजा मुमुदिरे हृदि ॥ ९५ ॥

अथ श्रीविजयो राजा । रराजाऽनल्पसम्पदा ॥ राज्यश्रिया प्रजाः सर्वाः । सार्वधर्मे प्रवर्त्तयन् ॥ ९६ ॥ अन्येद्युर्विजयो-
र्वीशः । कारागारान्तरास्थितान् ॥ दययाल्पाऽपराधादीन् । बन्दिनोऽमोचयद् द्रुतम् ॥ ९७ ॥ तथा कालेन कियता । गुप्तिदुःख-
स्थितं पुरा ॥ विविधैर्वधबन्धाद्यै–र्दुःखैर्दुःखेदहेतुभिः ॥ ९८ ॥ मुहुर्मुहुः परं दुःख–मनुभाव्य सुदुःसहं ॥ भ्रातृव्यत्वादवध्यं तं ।
सिंहसारं दुराशयम् ॥ ९९ ॥ स्वदुःकर्माणि शोचन्तं । स्वदेशान्निरवासयत् ॥ [1]तदा तथा च कृत्वा स्व–राज्यलीलां तनोत्यलम्
॥१००॥ चतुर्भिः कलापकं ॥

१ तदा सोऽपि ततः स्थानात् निर्गत्य भ्रान्तवांश्चिरम्' इति प्रत्यन्तरे

अथ श्रीश्रीजयानन्दः । प्रस्तावे जनकं निजं ॥ विजयोर्वीपतिं भक्त्या । वन्दित्वाऽऽपृच्छय चाऽऽदरात् ॥ १ ॥ प्रणामादिभिरभ्यर्च्य । स्वप्रसूप्रभृतीनपि ॥ परान् गिरा दृशा चान्यान् । कांश्चिद्वात्सल्यतोऽपि च ॥ २ ॥ राज्यमान्यानमात्यादीन् । वृद्धान् पौरान् परानपि ॥ प्रजा जानपदीः सर्वा–श्चाऽभिनन्द्य हितोक्तिभिः ॥ ३ ॥ तैः सर्वैश्चान्तरप्रीति–भक्त्युल्लासपुरस्सरं ॥ भृशानुगम्यमानः स्व–जन्मभूमिपुरात्ततः ॥ ४ ॥ सार्द्धं द्वात्रिंशदर्द्धक्ष्मा–भृत्सहस्रैर्बलान्वितैः ॥ नभश्चरनराधीशै–रसंख्यैस्तत्क्षणाऽऽगतैः ॥ ५ ॥ चतुरङ्गचमूचक्रै–श्चतुरैः स्वैः स्वपार्श्वगैः ॥ अन्वीयमानः सानन्दं । प्रास्थित स्वपुरं प्रति ॥ ६ ॥ षड्भिः कुलकं ॥ [1]अन्यः कोऽपि पृथिव्यां न । नः प्रभोर्यस्तुलां भजेत् ॥ इतीव घोषयद्भिस्त–द्वाद्यैः सङ्ख्याऽतिगैः समम् ॥ ७ ॥ क्ष्माकुक्षिम्भरिभिर्भूरि–निर्घोषैः पूरयन् दिशः ॥ त्रासयन् शत्रुवृन्दानि । मित्राण्याश्वासयन्निव ॥ ८ ॥ प्रयाणानि प्रयच्छन् सन् । क्वाऽप्यरण्ये सरित्तटे ॥ भुक्त्याद्यर्थं भुवामीशः । स्कन्धावारं न्यवेशयत् ॥ ९ ॥ त्रिभिर्विशेषकं ॥ देवाऽर्चाद्यखिलं कृत्वा । कारयित्वा च तत्र सः ॥ व्यावर्त्तयत्ततस्तात–राज्यमान्यान् बलादपि ॥१०॥ उद्वसं वासयन् सैन्यैः । सैरशून्यं च शून्ययन् ॥ ततः स्वल्पैः प्रयाणैः स । प्राप लक्ष्मीपुरं पुरम् ॥११॥ महद्धिरुत्सवैर्मध्ये । राज्यं प्राप्तः प्रभुर्भुवां ॥ स सम्राट् पालयन् राज्यं । भोगान् भुङ्क्ते यथासुखम् ॥१२॥ नत्वा नरेश्वरं सर्वे । भूचराश्च नभश्चराः ॥ सैनिकाश्च यथा स्वस्वाऽऽवासं गत्वाऽभजन् सुखम् ॥ १३ ॥ अस्मिन् प्रशासति भुवं भुवनैकवीरे । नीरेऽपि नाऽम्बुचरजीवहरोऽस्ति कश्चित् ॥ प्रीतिं दधुः स्थलचराः खचराश्च सर्वे–ऽप्यन्योन्यमुज्झितपरोत्थभयाऽतिरेकाः ॥ १४ ॥ नाऽकालजन्ममरणे न क्षणे रणे वा । कान्वित्कथाऽपि वितथाऽपि कदाऽपि चाऽऽसीत् ॥ ग्रामे पुरे

१ मनः प्रभोः कोऽपि भुवि प्रतिमल्लः समोऽपि वा प्रत्यंतरे

जनपदेऽन्यपदेऽपि यत्र । तत्राऽऽश्रमप्रभृतिनि प्रति सर्वलोकम् ॥ १५ ॥ करः प्रचण्डः- करीणां रणेषु । निरीक्ष्यते नाऽत्र नृणां गणेषु ॥ दण्डस्तु दाण्डाजनिकादिशब्द-व्युत्पत्तिहेतोः परमार्थतो न ॥१६॥ सदूपणत्वं हिमवालुकौघे । सरोगताऽप्यम्बुरुहादिकौघे ॥ सकण्टकत्वं च मृणालनाले । बब्बूलमुख्येषु न यत्र लोके ॥ १७ ॥ कौटिल्यवृत्तिस्तटिनीप्रवाहाऽऽदिष्वेव कोदण्डकुलेषु चाऽर्त्तिः ॥ कलङ्कभृत्त्वं सकले कलाभृद्-विम्बेऽपि नो यत्र कदाऽपि लोके ॥१८॥ तथा गावो महिष्यश्च । घटाद्यधिकदुग्धदाः ॥ वसुन्धरा धान्यतृणैः । स्थाने स्थानेऽतिपूरिताः ॥ १९ ॥ अम्भोधरा यथाकामं । पृथिव्यां पृथुवर्षिणः ॥ षडर्त्तुपादपाश्चाऽपि । सदा पुष्पफलैर्भृताः ॥ २० ॥ रत्नस्वर्णाद्याकराश्च शतशोऽपि गिरौ गिरौ ॥ भूम्यां च प्रादुरासन् द्राक् । तद्भाग्याद्दत्तदर्शनाः ॥ २१ ॥ निधयश्चाऽपि सुप्रापाः । प्रजानां च पुरातनाः ॥ नार्यः सुशीलाः सुगुणाः । सुखानि च पदे पदे ॥२२॥ न द्यूत-मद्य-वेश्यान्य-स्त्री-चौर्यमृगयामिषैः ॥ व्यसनैर्नैव सम्बन्धः । केषाञ्चित्किञ्चिदीक्ष्यते ॥ २३ ॥ न भयं स्वाऽन्यचक्राणां । नोपसर्गभयं तथा ॥ नाऽतिवृष्टेरवृष्टेर्वा । कलेर्वा डमरस्य च ॥ २४ ॥ न दंशमशकादीनां । शलभोन्दिरसंहतेः । भयं स्वप्नेऽपि नैवाऽऽसी-दसीमनृपभाग्यतः ॥ २५ ॥ तिसृभिः शक्तिभिर्न्यायै-रुपायैर्विविधैरपि ॥ बलैः प्रधानैर्मन्त्र्याद्यै-राष्ट्रैः कोशादिकैरपि ॥ २६ ॥ सम्पूर्णं सर्वतः सर्वं । राज्यं दीप्त्यादिभिर्गुणैः ॥ दिव्यर्द्धिः पालयत्येष । यथा श्रीभरतेश्वरः ॥ २७ ॥ युग्मं ॥

अथ श्रीविजयः पृथ्वी-पतिर्लक्षाऽधिकाः समाः ॥ समाचरंश्चतुर्भेदं । सुकृतं सुकृतज्ञहृत् ॥ २८ ॥ सर्वतो धर्मसाम्राज्यं । पोषयंस्तोषयन् प्रजाः ॥ अजातशत्रुस्तद्राज्यं । निःस्पृहोऽपि ह्यपालयत् ॥ २९ ॥ युग्मं ॥ प्रजासु वत्सलः सर्वाः । स्वप्रजाः स सुखाकरोत् ॥ जीर्णोद्धारादिभिः पुण्यैः । स्ववित्तं च कृतार्थयन् ॥ ३० ॥ स्वपुत्रश्रीजयानन्द-नरेन्द्रस्याप्यनुज्ञया ॥ तस्याऽनुजं

निजे राज्ये-ऽतिष्ठिपत् स शुभे दिने ॥ ३१ ॥ सोत्सवं सर्वसामन्ता-ऽमात्याऽद्येकान्तसम्मतं ॥ गुणैरनुत्तरं धीरं । गम्भीरं योग्य-
मुत्तमम् ॥ ३२ ॥ महातेजस्विनामाद्यं । माद्यद्धर्मगुणं स्थिरं ॥ प्रजाहितं विनीतं च । शतानन्दाह्वयं सुतम् ॥ ३३ ॥ नियोज्य
राज्यभारेऽस्मिन् । निश्चिन्तो धर्मनिश्चलः ॥ स्वान् स्वप्रजाश्च प्रज्ञाप्या-ऽनुज्ञाप्य च महोत्सवैः ॥ ३४ ॥ स्वपुत्रभूपप्रार्थितैः । पार्थि
वैः सह सङ्गतैः ॥ निःसङ्गताऽर्थिनैकार्थिनामर्थितप्रदायिभिः ॥ ३५ ॥ योग्यैः परिवृतः प्रौढ-मारूढः सुखवाहनं ॥ गीतसङ्गीत-
वादित्र-नादैरामोदयन् महीम् ॥ ३६ ॥ पुराऽन्तः सञ्चरन् सर्वाः । प्रजा दृग्भिः प्रमोदयन् ॥ प्रभावयन् जिनमतं । नमतः परि-
तोषयन् ॥ ३७ ॥ भाग्यात्तत्कालसम्प्राप्ताऽऽगमसागरसद्गुरोः ॥ समीपे समुपेत्याऽऽशु । स तपस्यामुपात्तवान् ॥ ३८ ॥ जज्ञे
विजयराजर्षि-र्धर्पिताऽन्तरशात्रवः ॥ न्यक्षशिक्षाद्वयीदक्षः । क्रमात् श्रीगुरुसेवया ॥ ३९ ॥ अधीताऽशेषसिद्धान्त-स्तत्त्वज्ञः सत्व-
वान्मुनिः ॥ जितेन्द्रियः प्रशान्तश्च । निपुणो विनयी नयी ॥ ४० ॥ अनगारगुणैराढ्य-स्तपःकर्मणि कर्मठः ॥ कर्माऽष्टकजयायो-
द्यों । व्यहरद्गुरुभिः समम् ॥ ४१ ॥ पितृदीक्षाक्षणोत्पन्न-खेदहर्षद्वयस्ततः ॥ वन्दित्वा पितृराजर्षि-प्रभृतीनखिलान्मुनीन् ४२।
प्रत्यावृत्य गृहं प्राप्तः । ससैन्यः सपरिच्छदः ॥ श्रीशतानन्दभूपोऽर्ह-द्धर्ममाराधयत्यलम् ॥ ४३ ॥ दिनान् कतिपयान् राज्ये । निजे
स्थित्वा स पार्थिवः ॥ धीमान् विनीतः स्निग्धश्च । भक्त्या स्वाग्रजभूभुजम् ॥ ४४ ॥ श्रीजयानन्दनामानं । सेवितुं स्पृहयन्मुदा ॥
निक्षिप्य राज्यचिन्तादि । स्वप्रत्ययिकमन्त्रिषु ॥ ४५ ॥ सारसैन्यः प्रतस्थे स । पुरं लक्ष्मीपुरं प्रति ॥ माषदल्पैः प्रयाणैश्च । तं
सम्राजं ननाम च ॥ ४६ ॥ नरेन्द्रचक्रवर्त्ती स । स्वाऽनुजं भक्तिवर्त्तिनं बहुभिर्मानसन्मानैः । सत्कारैश्चाप्यपिप्रिणत् ॥ ४७ ॥ श्री
शतानन्दभूपाल-प्रमुखैर्निजबान्धवैः ॥ परःसहस्रैरपरै-र्भूचरैः खेचरैर्नृपैः ॥ ४८ ॥ विश्वैर्विश्वम्भराधीशैः । शिरोभिः कुसुमैरिव ॥

पूज्यमानक्रमाम्भोजः । स सम्राट् जयति क्षितौ ॥ ४९ ॥

राजाऽधिराजः श्रीमान् श्री–जयानन्दोऽन्यदा मुदा ॥ यान् राजपाटिकायां श्री–शतानन्दादिभिः समम् ॥ ५० ॥ पुराद्ब- हिर्ययौ याव–त्तावदन्याऽध्वना जनान् ॥ दृष्ट्वैकतः परोलक्षान्[1] । यातो विस्मितमानसः ॥ ५१ ॥ तेभ्यश्चाऽऽकार्य कमपि । जन निजपदातिना ॥ अपृच्छद्भद्र ! ह्येतेषां । कुतः पुंसां गमाऽऽगमौ ॥ ५२ ॥ नत्वाऽऽख्यत्तं नृपं सोऽपि । पूर्वोद्याने मनोरमे ॥ जय- नामा समायातो राजर्षिस्तापसाऽग्रणीः ॥ ५३ ॥ सुदुस्तपं च पञ्चाऽग्नि–तपस्तत्र स तप्यते ॥ शमी दमी यमी चेति । तं नन्तुं यान्त्यमी जनाः ॥ ५४ ॥ तेषु [2]भावपरा ह्येनं । पूजोपस्करभृत्कराः ॥ तत्र गत्वाऽर्चयन्त्येके । विवेकेन पुरस्कृताः ॥५५॥ स्वर्णा- ऽऽदिकुसुमैश्चाऽऽन्ये । वस्त्राद्यैरपरे पुनः ॥ अङ्गसंवाहनाद्यैश्च । केचित्सत्कुर्वते मुदा ॥५६॥ युग्मं ॥ परमेष निरीहाणा मवधिस्तपसां निधिः ॥ न हि तुष्यति सत्कारै–र्न च रुष्यति तैर्विना ॥ ५७ ॥ तथा चाऽस्य निरीहस्य । शत्रौ मित्रे तृणे स्त्रियां ॥ मणौ मृदि तुल्यान्तः–करणस्य महात्मनः ॥ ५८ ॥ दुरन्तदुःखतोदीर्ण–दुःखध्वान्तविवस्वतः ॥ स्वतः पुण्यभराद्विश्वं–भरावैचि–त्र्यकारिणः ॥ ५९ ॥ त्रिर्नित्यस्नाननिर्मातु–र्जटामुकुटधारिणः ॥ त्वग्वासांसि वसानस्य । कन्दमूलफलाशिनः ॥ ६० ॥ मृगचर्मभृतः सन्ध्या विधिं नित्यं विधायिनः ॥ त्यक्तनिद्रस्य भद्रस्य । सुखं देहेऽप्यनिच्छतः ॥६१॥ वनवासकृतः सर्व–शास्त्रा–भ्यासवतः सदा ॥ लेशेनाऽपि गुणान् वक्तुं । कः शक्तः पटुवागपि ॥ ६२ ॥ पञ्चभिः कुलकं ॥ तदस्य भक्तितो भद्रं । भवन्ति भवभीरवः ॥ अतः पुरान्ता– देते । यान्त्याऽऽयान्ति च पूर्जनाः ॥ ६३ ॥

१ नेहिरे याहिरा परान्' इति प्रत्यन्तरे २ ते केऽपि तं पूज्यं' प्रत्यन्तरे

धराधिराजधुर्यः श्री-जयानन्दः सुदर्शनः ॥ तत् श्रुत्वाऽचिन्तयच्चित्ते । विचित्रेयं भवस्थितिः ॥ ६४ ॥ तथाह्यहो! दुरु-
च्छेद-मज्ञानं प्राणिनां ध्रुवं ॥ अनन्तवदनन्तं तत् । सुघनं च घनाऽभवत् ॥ ६५ ॥ महाभयप्रदं काल-रात्रिरूपमिवाङ्गिनां ॥
सर्वसौख्यहरं मूर्त्तं । पापं व्यापद्विपाकभूः ॥ ६६ ॥ सर्वसन्मार्गवृत्तीनामावृत्तेः कारणं परं ॥ निदानं दुर्दशानां हि । तिर्यग्नरक-
वर्त्तिनाम् ॥ ६७ ॥ प्रसवः सर्वदुःखानां । सर्वाघःकदलीगृहं ॥ आद्यः कन्दः समग्राणां । मिथ्यात्वाऽतत्त्ववीरुधाम् ॥ ६८ ॥ क-
षायविषयाऽशेषो-ल्लासकूलङ्कषागिरिः ॥ सर्वकर्माग्रणीः पाट-चरः पटुसुसंविदाम् ॥ ६९ ॥ यत् सूत्रयति वैचित्र्यं । भवनाटकगो-
चरं ॥ चेतनोऽपि दृषत्कल्पः । सुचिरं जायते ततः ॥ ७० ॥ पञ्चेन्द्रियाणां व्यापारे-ऽप्यपारेऽपि न पारयेत् । सम्यग् निर्वेदितुं
जीवः । किञ्चिद्येन च्युताऽक्षवत् ॥ ७१ ॥ तदज्ञानमिदं साक्षा-दबाधनमसंवरं ॥ प्राणिनां तत्त्वदृग्हर्तृ । दूरापास्यतमं सताम् ।७२
तदनेन हृतज्ञानः । पितृव्यः स्तव्यधीरपि ॥ कथं ही भ्राम्यते हीन-नेत्रवन्मार्गमन्तरा ॥ ७३ ॥ तन्मया मत्पितृव्योऽयं । विधेयः
स्यात्सुदर्शनः ॥ ज्ञानामृताञ्जनस्याऽऽशु प्रयोगादज्ञताहरात् ॥ ७४ ॥ स्वचित्तान्तर्विचिन्त्येति । श्रीजयानन्दभूधवः ॥ स्वपितृ-
व्यप्रबोधाय । तत्कालोत्पन्नधीः सुधीः ॥ ७५ ॥ महाविद्यादिसान्निध्याऽध्यासिताऽतिशयोदधिः ॥ तदुपायं स पप्रच्छ । स्मृत्वा
प्रज्ञप्तिदेवताम् ॥७६॥ विद्यादेव्यपि सा साक्षा-द्भूता तं भूपमुत्तमं ॥ प्रत्याचचक्ष इत्यक्षेण । तद्बोधोपायमायतौ ॥७७॥ तथाहि-
सैष तापसराजर्षि-र्यत्र पञ्चाग्निसाधनं ॥ विधत्ते तत्र पूर्वस्यां । ज्योतिःस्थाने महत्तमे ॥ ७८ ॥ शुष्कातिशुषिरस्थूल-प्रल-
म्बपृथुदारुणि ॥ भुजगो भुजगीयुक्तो । दारुणाऽभोगभोगभृत् ॥ ७९ ॥ युग्मं ॥ दक्षिणस्यां पुनस्तत्र । वित्रस्यन् सरटः सरुट् ॥
बृहदिन्धनमध्येऽस्ति । ज्वालामालातपाऽऽकुलः ॥ ८० ॥ पश्चिमायां दिशि पुन-रग्निस्थाने ज्वलत्यलं ॥ तापाकुलस्तयात्यन्तं ।

तरला [1]उपदेहिकाः ॥ ८१ ॥ उत्तरस्यां बृहद्भानु-स्थाने पुनरनर्गलाः ॥ काष्ठान्तः सन्ति मण्डूक्यः । प्रायस्तापार्दिता मृताः॥८२॥ इत्येतान् देहिनः पञ्चेन्द्रियानग्निभयद्रुतान् [2]एधान् द्विधा विधायान्त-र्दर्शयित्वाऽऽशु तं तदा ॥ ८३ ॥ मृदूक्तिभिर्दयाधर्मं । प्ररूप्य प्रतिपाद्य च ॥ पितृव्यं तापसेन्द्रं तं । नरेन्द्र प्रतिबोधयेः ॥ ८४ ॥ युग्मं ॥ इत्युक्त्वा सा तिरोधात्तं । पितृव्यं वाधिताऽध्वतः ॥ जिनप्रवचने नेतु-मनाश्च नरनायकः ॥ ८५ ॥ त्यक्त्वा तं मार्गमादाय । परं परमतत्त्वधीः ॥ धीरः स प्राप्तवांस्तत्र । दूरे कृत्वाऽखिलान् जनान् ॥८६॥ निजं पितृव्यं निजगाद सादरं । दरं परित्यज्य नमन् मनाग् मुनिं ॥ धर्मस्वरूपं श्रृणु रूपवद्दया । सम्यग् समग्रैव हि धर्मजीवितम् ॥ ८७ ॥ सर्वत्र सर्वेष्वपि दर्शनेषु । पुरस्कृता सैव पुरा पुराणैः ॥ सर्वस्य धर्मस्य रहस्यभूता । प्रभूतसम्पत्सुखसिद्धिहेतुः ॥८८॥ विधीयते सा यदि तात कल्पै-र्गुणैकतल्पैः सुकृताऽर्थशिल्पैः ॥ विना विकल्पैः स्फुटफल्गुजल्पै-स्तपस्तदा स्यात्सफलं समग्रम् ॥ ८९ ॥ तदुक्तं

ददातु दानं विदधातु मौनं । वेदादिकं वाऽपि विदाङ्करोतु ॥ देवाऽऽदिकं ध्यायतु सन्ततं वा । न चेद्दया निष्फलमेव सर्वम् ॥ ९० ॥ न सा दीक्षा न सा भिक्षा । न तद्दानं न तत्तपः ॥ न तद्ध्यानं न तन्मौनं । दया यत्र न विद्यते ॥९१॥ इत्यादि॥ धर्मं सर्वं दयामूल-मेव बुध्यस्व बुद्धिमन्!॥ तात! नाऽतःपरं श्रेयः-सुखसर्वस्वसाधनम्॥९२॥ दयाऽभ्युदयते यस्य । देहिनो हृदयोदरे ॥ दरेण सप्तभेदेनाऽ-प्येष नैवाऽभिभूयते ॥ ९३ ॥ दया च सर्वजीवाना-मजीवानां च सर्वथा ॥ स्वरूपस्य परिज्ञाने । पालने च स्फुटीभवेत् ॥ ९४ ॥ तदुक्तं—

---

१ कीटविशेषाः  २ काष्ठानि

[1]जो जीवेवि विआणाइ । अजीवेवि वियाणाइ ॥ जीवाऽजीवे विआणंतो । सो हु नाहिइ संजमम् ॥ ९५ ॥
जीवाऽजीवस्वरूपं च । सम्यग् न ज्ञायतेऽथ यैः ॥ सूक्ष्मत्वाऽऽर्हततत्वादेः । कथं तैः पाल्यते दया ॥ ९६ ॥ तथोक्तं—
[2]जो जीवेवि न याणेइ । अजीवेवि न याणइ ॥ जीवाजीवे अयाणन्तो । कहं सो नाहिइ संजमम् ॥ ९७ ॥
'नाहिइत्ति ज्ञास्यतीत्यर्थः'
सम्यग् जिनागमाऽभ्यासं । तथा तदुपदेशकान् ॥ सद्गुरूंश्च विना नैव । दयांशोऽप्यवगम्यते ॥ ९८ ॥ निध्यौपधीमणी-सन्यो । यद्यप्युर्व्यां पदे पदे ॥ तद्देशकं सिद्धनरं । विनाऽऽप्यन्ते न कैरपि ॥ ९९ ॥ दयामूलस्य धर्मस्याऽ—र्हदागमगुरून् विना प्रायश्चिन्त्यैवमप्राप्तिः । सतामप्यल्पकर्मणाम् ॥१००॥ दयाप्रकाशकं सम्यक् । शास्त्रमाप्तोदितं हि यत् ॥ तच्चार्हन्मते एवाप्यं । सद्भि-र्नान्यमतेष्वपि ॥ १ ॥ तच्चाऽऽधेयं विनाधारं । न तिष्ठति ततो गुरुः ॥ योगोत्कृष्टश्रुताधार—तया क्रियादिभाग् ध्रुवम् ॥ २ ॥ जिनप्रवचनात् सारं । परं नाऽस्ति जगत्त्रये ॥ देवत्रिकं च ज्ञानादि-त्रिकं चाऽत्रैव नाऽन्यतः ॥ ३ ॥ भावादेव हि देवादि-त्रिकस्याऽऽज्ञात्रिकस्य वा ॥ लाभे हि लभते जीवः । केवलज्ञानसम्पदम् ॥ ४ ॥ दयात्मकं दयासारं । दयामार्गप्रकाशकं ॥ तदेव योगरूपं हि । तत्त्वज्ञैश्च प्रकाश्यते ॥ ५ ॥ न मौण्ड्येन न मौनेन । न नाग्न्येन न वल्कलैः ॥ न जटाभिर्न [3]भस्माङ्कै-र्नोऽग्निहोत्रादिभिः परैः ॥ ६ ॥ कन्दमूलफलाहारै-र्न च नानशनैरपि ॥ न मृगाद्यजिनैश्चण्डैः । पाखण्डैरपि नाऽपरैः ॥ ७ ॥ पञ्चाऽग्निम-

१ यो जीवान् विजानाति अजीवानपि विजानाति । जीवाऽजीवान् विजानन् स खलु ज्ञास्यति संयमम् ॥
२ यो जीवानपि न जानाति अजीवानपि न जानाति । जीवाऽजीवान् अजानन्, कथं स ज्ञास्यति संयमम् ? ३ च स्नानै

मुखैः कष्टै-र्न च चान्द्रायणादिभिः ॥ तपोभिश्च न च ध्यानैर्न जपैर्नियमैर्न वा ॥ ८ ॥ न वेदैर्नागमैर्नेज्यादिभिर्देवाऽर्चनैर्न च ॥ नाऽऽतापनाऽऽदिभिः क्लेशै-र्नैकादश्यादिभिर्व्रतैः ॥ ९ ॥ नाऽत्युत्कटाभिर्विद्याभि-र्न भूमिशयनादिभिः ॥ न सांन्यासिकभावेन । श्रमणत्वेन नाऽपि च ॥१०॥ बौद्धादिदीक्षया नैव । भिक्षया नाऽपि नाऽऽसनैः ॥ स्वस्य प्रसाध्यते सिद्धि-रेकां सम्यग्दयां विना ॥११॥ षड्भिः कुलकं ॥ तदुक्तं परसमयेऽपि—

दयामहानदीतीरे । सर्वे धर्मास्तृणाङ्कुराः ॥ तस्यां शोषमुपेतायां । कियन्नन्दन्ति ते भुवि? ॥ १२ ॥

तस्मात्तात! समीचीना । दयैवैकत्र पाल्यतां ॥ न पञ्चाऽग्नितपस्याऽस्मिन् । दयालेशोऽपि दृश्यते ॥ १३ ॥ तथाहि

प्रथमे ज्योतिः—स्थाने बृहति दारुणि ॥ अन्तः फणी ज्वलन्नास्ति । तात! तं प्राग् निरूपय ॥ १४ ॥ द्वितीयादिष्वपि ह्यग्नि-स्थानेषु क्रमतः स्थितान् ॥ काष्ठान्तःस्थान् सरटौप-देहिकौघांश्च मण्डूकीः ॥ १५ ॥ दर्शयित्वा क्रमेणैता-नग्नितापाऽतिदुःखितान् ॥ सोऽङ्गिपीडाऽऽस्पदं हिंसां । तपस्यस्मिन्नसाधयत् ॥ १६ ॥ पृथ्वीजलाऽग्निवायूनां । बीजादीनामपि स्फुटं ॥ प्रसाध्य हेतुदृष्टान्त-युक्त्यागमैः सजीवताम् ॥ १७ ॥ तद्धिंसाऽप्यत्र जायेत । तात [1]हिंसा हिता न सा ॥ भवादृशानां पूज्यानां । तत्त्वाऽतत्त्वविवेचिनाम् ॥ १८ ॥

इत्यादिकं वचः श्रीश्री-जयानन्दमहीपतेः ॥ श्रुत्वा तापसराजर्षिः । श्रीजयः प्रत्यबुध्यत ॥१९॥ आदेयं हि वचः प्रायो । महतां न हि निष्फलं ॥ सुधाजीमूतधाराः किं । कदापि काऽपि निष्फलाः ॥ २० ॥ तद्गिरा शुद्धधर्मद्रु-मूलं सम्यक्त्वमादित ॥

१ तन्मोचिता हि सा प्रत्यन्तरे

आदितः स भवोद्वेग–भाग्जयस्तापसाऽग्रणीः ॥ २१ ॥ निःस्पृहत्वाच्च सत्त्वाऽऽढ्य–स्तत्कालं कलयन् स्पृहां ॥ यतित्वं प्रतिपत्तुं द्राक् । तपस्यां तापसीं त्यजन् ॥२२॥ यावता श्रीजयानन्द–नरेन्द्रं प्रति जल्पति ॥ श्रीगुर्वागमनं कश्चि–त्तावत्तत्र न्यवेदयत् ।२३। ॥ त्रिभिर्विशेषकं ॥ कस्मिन् स्थाने गुरुः कोऽय–मिति राज्ञोदिते पुनः ॥ जगौ सगौरवं सोऽपि । धराधीशाऽवधारय ॥ २४ ॥ पुरस्यैतस्य पूर्वस्या–मुद्याने चम्पकाऽभिधे ॥ नाम्नाऽर्थेन च विख्यातः । सूरिरागमसागरः ॥ २५ ॥ मुनिपञ्चशतीसार–परिवार–स्तपोनिधिः ॥ समागमत्समं तेन । राजर्षिर्विजयोऽपि च ॥ २६ ॥ युग्मं ॥ इति तद्वचसा तुष्टः । श्रीजयानन्दभूविभुः ॥ पारितोषिकदानेन । द्राक् सन्तोष्य विशिष्य तम् ॥ २७ ॥ पुरान्तः सर्वतः सर्व–जनांश्च प्रत्यजिज्ञपत् ॥ स्वान्तःपुरपुरन्ध्र्यादीन् । श्रीगुर्वागमनं मुदा ॥ २८ ॥ पुरस्कृत्य पितृव्यं स्वं । प्रबुद्धं जयतापसं ॥ ततः स्थानात्सहायाते–स्तैः सर्वैः समन्वितः ॥ २९ ॥ समग्रबलसर्वर्द्धि–शोभाभरविभासुरः ॥ सुरराज इवोर्वीन्द्रः । स तद्वनमभूषयत् ॥ ३० ॥ दूरादपि गुरुस्थाने–विधिना दत्तवन्दनः ॥ पश्चाऽभिगमभेदाद्यं । सर्वं सत्यापयन्मुदा ॥ ३१ ॥ दत्वा प्रदक्षिणास्तिस्र–स्तमस्ताघमवन्दत ॥ श्रीगुरुं तत्परीवार–मुनींश्च विजयाऽऽदिकान् ॥ ३२ ॥ स्तुतिं कृत्वा भवापार–पापपारप्रदायिनीं ॥ पृथ्वीन्द्रोऽथ यथास्थान–मुपाविशदपाशनः ॥ ३३ ॥ सपितृव्यं तमुर्वीश–वासवं सपरिच्छदं ॥ धर्मलाभाशिषा सूरि–विधिनानन्दयद् हृदि ॥ ३४ ॥ स्वदेशनागवां सारैः । सुधासारैः पुरःस्थितान् ॥ द्रूनिवोन्निंद्रयामास । सोद्भवत्पुण्यपल्लवैः ॥ ३५ ॥ तत्र तद्देशनां कान्तां । शान्तां सर्वरसाऽन्वितां ॥ हृदाऽऽलिङ्ग्य महानन्द–सुखं नाऽऽलम्भि कैर्नृभिः ? ॥३६॥ श्रुत्वा तद्देशनां भव्याः । प्रबुद्धा बहवो बहु ॥ तत्र केऽपि ससम्यक्त्व–व्रतान्याददिरे मुदा ॥ ३७ ॥ महाव्रतानि केचिच्च । केचित्सम्यक्त्वमेव तु ॥ प्रपेदिरे यथा कर्म–लाघवास्ताघवासनाः ॥ ३८ ॥ तद्देशनावशा॰

त्तत्र । जयराजतपोधनः ॥ प्राक् प्रबुद्धोऽप्यभूदर्ह-दीक्षामादातुमुद्यतः ॥ ३९ ॥ दृढवैराग्यरङ्गेण । भ्रातृव्योर्वीड्कृतोत्सवः ॥ भवाऽ-
[रण्यभय] ध्वसाध्वसध्वंसि । सर्वचारित्रमाददे॥४०॥स जज्ञे जयराजर्षि-विजयेन महर्षिणा ॥ समं हि च द्विधां शिक्षां।शिक्षते च गुरो-
र्गिरा ॥ ४१ ॥ गुरून् पितापितृव्यौ च । राजर्षीन् गुणसेवधीन् ॥ मुनींश्च तत्परीवार-स्थितानन्यानपि क्रमात् ॥ ४२ ॥ प्रणम्य
परमानन्दा-दाऽऽपृच्छय च महीपतिः ॥ अन्तःप्रमुदितः प्राप्तः । स्वसौधं सपरिच्छदः ॥ ४३ ॥ त्रिखण्डाऽखण्डसाम्राज्यं । स्वात्मन-
मिव पालयन् ॥ लालयंश्च प्रजाः साव-जन्योपायैः प्रजा इव ॥ ४४ ॥ रुजा इव रुजन् न्यक्षा-ननयाननयाऽध्वना ॥ न्यायांश्च
सर्वतः सर्वा-नेधयन्निव वीरुधः ॥ ४५ ॥ चरितं चारु राजर्षेः । पितृव्यस्य पितुस्तथा ॥ स्मारं स्मारमुदारात्मा । स पुण्योद्यमतोऽ-
द्युतत् ॥४६॥ त्रिभिर्विशेषकं ॥ त्रिषु धर्मार्थकामेषु । स्वस्वयामेष्ववर्त्तत ॥ प्रधानतत्त्ववित् सत्त्व-रजस्तमोगुणत्रये ॥४७॥ यतः—

धर्माऽर्थकामेषु मिथो । व्याबाधां परिहृत्य यः ॥ प्रवर्त्तते कृती शश्वत् । तस्य लोकद्वयं शुभम् ॥ ४८ ॥

तत्प्रभावाद्बभूवाऽऽस्य । सौख्यांघ्रिपफलोदयः ॥ पुत्रपौत्राद्यपत्यादि-सन्तत्यात्मा परः पुनः ॥४९॥ दक्षा लक्षमिताः पुत्राः । पवित्रा नवयौवनाः ॥ सत्यसन्धा भृशाऽधीत-सर्वशास्त्रा कलाविदः ॥५०॥ धीरश्रेष्ठा धनुष्मन्तो । मतिमन्तो महाशयाः ॥ सुगुणाः प्रगुणाचाराः । स्फाराकारा निरामयाः ॥ ५१ ॥ लोकप्रियाः प्रियायत्त-कामभोगप्रवृत्तयः ॥ पित्रादेशवशादेव । पुरग्रामाऽऽसवृ-त्तयः ॥ ५२ ॥ प्रौढराजकुलोत्पन्न-कन्यापाणिगृहीतयः ॥ गृहीतयत्नाः श्रीजैन-धर्मकर्मसु सर्वतः ॥ ५३ ॥ महस्विनामर्हणीया । गर्हणीयाऽनघक्रियाः ॥ विनयावनमत्काया । महोत्साहा महौजसः ॥ ५४ ॥ पितृभक्ताः शुभासक्ताः । सदाचारयुतप्रियाः ॥ चिरं प्रसक्ताः पूजासु । गुरुदेवसधर्मणाम् ॥ ५५ ॥ गजाऽश्वादिबलोपेताः । समवेता भुजाबलैः ॥ कोशाद्यमितसम्पद्भिः । सुभगं

मायुका भृशम् ॥ ५६ ॥ औदार्यानृणितोर्वीका । धैर्याऽधरितभूधराः ॥ गाम्भीर्याऽऽवर्जिताऽब्धीन्द्राः । सौन्दर्यजितमन्मथाः ॥५७॥ कौमुदीशप्रभोच्छेदि-कीर्तिधवलीकृताचलाः ॥ स्वस्वामिभक्तिनिष्णाताः । सर्वसेवकवत्सलाः ॥ ५८ ॥ कृतज्ञाः सहजप्रज्ञा-वज्ञाताङ्गिरसप्रभाः ॥ प्रभावन्तः सदा शूराः । क्रूराः शत्रुषु सङ्गरे ॥ ५९ ॥ आज्ञावन्तः प्रतापाऽऽढ्याः । परिपक्वमहाधियः ॥ वीराधिधीराः श्रीमन्तः । सुसंस्थानाः सुलक्षणाः ॥ ६० ॥ कुमाराः सपरीवाराः । कुमाराः किमिवापरे ॥ विश्वेश्वरस्य तस्याऽऽसन् । परमैश्वर्यशालिनः ॥ ६१ ॥ द्वादशभिः कुलकं ॥

पदव्याः पितृपादस्यो-पजीवितैः सुतैर्वृतः ॥ सहस्रैश्च नृपाणां स । सहस्रांशुरिवोदितः ॥ ६२ ॥ सदा शुचिर्जगत्कर्म-साक्षी प्रक्षीणकश्मलः ॥ अताढ्यजाड्यविध्वंसी । सर्वदोषापहस्थितिः ॥ ६३ ॥ राजत्समग्रश्रीराज-ज्योतिश्चक्रात्विषां विभुः ॥ दैत्यदैन्यप्रदमलः । प्रबलः पारिपार्श्वकैः ॥६४॥ परं क्रूरतमोग्रासि-दासीकृतसुरासुरः ॥ अनस्तमि तेजस्कः । सौजस्कः सर्वदा शुभः ॥६५ अदैत्योपप्लवः सर्व-सुखाकरकरः स्थिरः ॥ अग्रस्तमण्डलः क्रूरा-ऽपराभूतस्तमोहरः ॥ ६६ ॥ स्मेरीकुर्वन् कुवलयं । कमलावलिभिः समं ॥ समन्तात्प्रसृतप्रोग्रप्रतापोऽप्यतिशीतलः ॥ ६७ ॥ धनुःशतोच्छ्रयः स्वर्ण-सवर्णतनुवर्णभृत् ॥ पूर्वलक्षद्वयायुष्कः । सदानन्दो निरामयः ॥ ६८ ॥ न्यायमाणिक्यभृद्राज्य-स्वर्णमुद्राविभूषणः ॥ प्राक्पुण्यद्युसदादुघ-स्तत्कल्याणसुरद्रुमः ॥ ६९ ॥ श्रीमत्सुविधितीर्थेश-शासनोद्योतभानुमान् ॥ श्रीजयानन्दराजाऽधि-राजः शास्ति महीं मुदा ॥ ७० ॥ दुःस्थिताऽनाथदीनेभ्यो । दानार्थं दानमण्डपान् ॥ सत्रागाराऽभिरामान् स । प्रतिस्थानममण्डयत् ॥ ७१ ॥ दीयन्ते तत्र दानानि । स्थानानि शयनाय च ॥ वैदेशिकानेकलोकाः । सन्तोष्यन्ते च कोटिशः ॥ ७२ ॥ भक्त्या जिनेन्द्रप्रासादाः । प्रत्यक्षाः पुण्यराशयः ॥ अर्हद्भक्त्या प्रतिग्राम-

पुरं तेन वितेनिरे ॥ ७३ ॥ प्रतिमाः प्रतिमातुं स । स्वांहःसंहतिमार्हतीः कोटिशोऽपि विनिर्माप्य । तेषु न्यास्थत्प्रतिष्ठिताः ॥७४॥ तासां पूजाविधिं नित्यं । विधातुं विविधान् स च ॥ दायानारामवाप्यादि-ग्रामग्रासादिकान् ददे ॥ ७५ ॥ दुःखाऽऽसनानि व्यसनानि सप्त-प्यास्थत्तमांसीव स [1]सप्तसप्तिः ॥ तेजःश्रितो योऽदित राजकायेन्दुवत्परस्मै च विरश्मिकत्वम् ॥७६॥ महीमहेलां महिलामिवाऽऽढ्यां । सदानवद्यां नवयौवनां च ॥ प्रौढां वशीकृत्य कृतज्ञमौलि-र्भुक्त्वा नितान्तं सुखितामतानीत् ॥ ७७ ॥

अन्येद्युरुद्यानवनाऽधिकारी । स्फारीभवच्चित्तरुचिः प्रमोदात् ॥ समेत्य राजन्यसहस्रजन्य-शोभां सभां श्रीजयभूमिभर्तुः ॥ ७८ ॥ तं राजराजं प्रणिपत्य सत्य-भक्त्या स्वभाले तिलकायमानं ॥ कराम्बुजन्माञ्जलिमारचय्य । विज्ञापनामातत सर्वसाक्षात् ॥७९॥ स्वामिन्! महीपालसहस्रसेव्य!। दिव्यर्द्धिभृत्त्वं शृणु वर्द्धसेऽद्य ॥ कल्याणमालाकरणेन विश्व-प्रमोदिगुर्वागमनोत्सवेन ।८०। अपृच्छयत्स्वच्छमति[2]र्गवेन्द्रः सान्द्रान्तरानन्दसमुद्रचन्द्र! ॥ पवित्रयामास वनं कदाऽत्र । कः श्रीगुरुर्विश्वगुरुर्गुणाब्धिः ॥ ८१ ॥

अथाऽऽचचक्षे वनरक्षकस्तं । महीनभश्चन्द्रमपारकीर्त्ति ॥ शृणु प्रभो निःप्रतिमप्रभावः । श्लाघ्यां भुवं ते समवासयत् सः ॥ ८२ ॥ यं प्रीतिपात्रं वसुवर्षिगात्रं । नाम्नाऽपि वित्रासितदुःखमात्रं ॥ [1]उदाहरेऽहं गुणलक्ष्मीगेहं । राजर्षिचक्रायुधसूरिराजम् ॥ ८३ ॥ उत्पन्नलोकाऽवधिकाऽधिकाऽवधि-ज्ञानं प्रधानश्रमणैरुपासितं ॥ माद्यत्पृथूद्यानगतानवद्य-च्छायप्रदेशं प्रतिपद्य संस्थितम् ॥८४॥ आलोक्य लोकोत्तरचारुचर्य-माचार्यवर्यं सुचरित्रधुर्यं ॥ उत्सार्य मात्सर्यमहार्यविश्वाऽऽश्चर्यं जगत्यर्यमजित्प्रतापम्।८५ सुधासुधाकारिवचःप्रपञ्च-मनेकसल्लब्धिनिधिं मुनीन्द्रं ॥ निरीक्ष्य दीक्षादिषु दत्तचित्ताः । पुण्यैकवित्ताः प्रभवन्ति भव्याः ॥ ८६ ॥

१ सूर्यः २ पृथ्वी चन्द्रः

अर्वतः कृलकं ॥ प्राग् पुण्यानामगण्याना-मुदयादेव जायते ॥ अवश्यं भाविभद्राणां । सतां सद्गुरुदर्शनम् ॥८७॥ सत्वरं सत्व-रङ्गद्भिः । पुण्यरङ्गैस्तरङ्गितः ॥ तदुपेत्य महद्धर्या त्वं । वने वन्दस्व सद्गुरुम् ॥ ८८ ॥

इति तस्य गिरा गात्रे । पुलकाङ्कुरपूरभृत् ॥ स्वाङ्गाऽऽभरणवस्त्राणि । मुदा तस्मै ददे नृपः ॥ ८९ ॥ ततः समग्रसामग्रीं । पटहोद्घोषणादिभिः ॥ कृत्वा च कारयित्वा च । तूर्यनादभृताम्बरम् ॥ ९० ॥ स सैन्यसैन्यपाऽमात्य-सामन्तादिपरिच्छदः ॥ प्रजातप्रमदः प्रमदाः । पुरस्कृत्य [1]परादरात् ॥९१॥ आरुह्य पट्टहस्तीन्द्रं । चलचामरमालिकः ॥ पूर्णेन्दुजैत्रप्रौढात-पत्रविन्नासिता-ऽऽतपः ॥ ९२ ॥ महाद्युतिः स राजन्यै-र्द्युतिमद्भिः सहस्रशः ॥ सहस्रांशुरिवोर्वीस्थः । प्रतस्थे वन्दितुं गुरुम् ॥ ९३ ॥ चतुर्भिः कलापकं ॥ राज्योऽपि रतिसुन्दर्या-दिकाः सर्वाः सहस्रशः ॥ तं सस्वस्वपरीवारा । नन्तुमन्वचलन्नृपम् ॥ ९४ ॥ महद्धर्या मोह-यन् सर्वां । महीं महिमवारिधिः ॥ मोहद्रोहे दृढमते-र्महितस्य सुराऽसुरैः ॥ ९५ ॥ सद्गुरोर्दर्शने राज-कुञ्जरः कुञ्जरोत्तमात् ॥ अवरुह्य द्विधा पञ्च-विधाऽभिगमतत्परः ॥ ९६ ॥ परःसहस्रभूपालि-पालिताऽनुगमक्रमः ॥ विवेकी विनयाऽऽनम्रो । दत्वा तिस्रः प्रदक्षिणाः ॥ ९७ ॥ विधिनाऽवन्दतामन्द-तारतेजाः शुभौजसं ॥ सूरिं चक्रायुधं विद्या-चारणश्रमणाग्रिमम् ॥ ९८ ॥ सोऽपि पापाऽर्गलाभस्य । धर्मलाभस्य दानतः ॥ प्रमुदानतमूर्द्धानं । श्रीश्रीजयममोदयत् ॥ ९९ ॥ राजा श्रीश्रीजयानन्दो-ऽप्यानन्दो छ्रासदानतः ॥ तं विद्याचारणाऽऽचार्यं । पर्यपौद्रचिताञ्जलिः ॥ १०० ॥ क्रमेणान्येऽपि राजानो-ऽप्यन्तःपुरपुरन्ध्रयः ॥ पौरा-द्याश्च परेऽप्येनं । वन्दित्वाऽस्ताविषुर्मुदा ॥ १ ॥ ततः श्रीश्रीजयानन्दा-दिषु तस्य गुरोः पुरः ॥ यथास्थानक्रमं सर्वे-ष्वासीनेषु

[1] पुरान्तरात्

यथाविधि ॥ २ ॥ सुरासुरनराकीर्ण–पर्षदां हर्षदायिनीं ॥ देशनां तत्प्रबोधाय । प्रारेभे सोऽपि सद्गुरुः ॥ ३ ॥ अक्खयनिही-सुहाणं० सम० इत्यादि ॥ सर्वसाधारणीं धर्म–देशनां भवनाशिनीं ॥ दिशन्नपि गुरुः क्षीरा–ऽऽश्रवलब्ध्या तदन्तरा ॥४॥ व्यक्त्या श्रीश्रीजयानन्दादीन् प्रबोधयितुं तदा ॥ तदीयप्राग्भवानाख्य–न्निजप्राग्भवसङ्गतान् ॥ ५ ॥

तथाह्यारामिकभवे । देवपूजा महाफला ॥ सप्रेयसीद्वयस्यासी–त्तव राजप्रसादतः ॥ ६ ॥ मतिसुन्दरमन्त्रीश–भवस्तदनु तेऽभवत् ॥ तत्राऽप्यभूतां भवतः । प्राक्भवस्यैव ते प्रिये ॥ ७ ॥ तत्रातिबलराजर्षे–र्लब्ध्वार्हद्धर्ममुत्तमं ॥ शुद्धमाराद्धवान् सार्द्धं । प्रेयसीभ्यां भवांस्ततः ॥ ८ ॥ त्वं ते पत्न्यौ च देवत्वं । प्राप्य शुक्रे सुराऽऽलये ॥ ततश्च्युत्वा त्रिखण्डोर्वी–मुर्वीं भोक्ता भवानभूत् ॥ ९ ॥ द्वे प्राग्भवे अजायेतां । राज्ञ्यौ राजकुलोद्भवे ॥ त्वन्मान्ये रतिविजया–ग्रसुन्दर्यौ सतीमणी ॥ १० ॥ नरवीरसुराजात–न्मन्त्री त्वं मतिसुन्दरः ॥ त्वया स ग्राहितश्चाऽत्र । जिनधर्मं महोद्यमात् ॥ ११ ॥ तमाराध्याऽऽभवं देवो–ऽभवद्भवनिरासधीः ततश्च्युतश्चक्रबलो । राजा चक्रायुधस्त्वहम् ॥ १२ ॥ वैताढ्यक्षोणिभृत्श्रेणि–द्वयसाम्राज्यभुक् सुखी ॥ त्वज्जयाज्जातवैराग्य–श्चतुर्ज्ञानी मुनित्वतः ॥ १३ ॥ मया त्वं स्त्रीकृते बध्ध्वा । चारकेऽक्षेपि यत्पुरा ॥ तत्त्वयाऽप्यधुना बध्ध्वा । क्षिप्तोऽहं काष्ठपञ्जरे ॥ १४ ॥ मयाऽपि त्वं ततः शीघ्रं । मुक्त्वा प्राग्बहुमानितः ॥ धर्मोपकारतः शिघ्रं । प्रीतिश्चाऽऽसीद् दृढाऽऽवयोः ॥१५॥ तेनाऽत्राऽपि भवेऽमोचि । त्वयाऽहं सत्वरं ततः ॥ कन्याराज्यादि च प्रीति–पूर्वं तुभ्यं मया ददे ॥१६॥ विशिष्य वते धर्मो–पकारं कर्त्तुमिच्छता ॥ मयाऽत्राऽऽगमनं चक्रे–ऽन्यच्च त्वं प्रस्तुतं शृणु ॥ १७ ॥ त्वया मया च यः श्राद्ध–धर्मः कल्पद्रुमोपमः ॥ मन्त्र्यूर्वीशोभवे लब्ध–स्तन्महिम्नाऽद्भुताऽऽवयोः ॥१८॥ राज्यसम्पदखण्डाऽभू–द्भोगसौख्यसमन्विता ॥ श्रद्धाऽऽधिक्यात्परं धर्मे । विशिष्य च तवाऽधिका

॥ १९ ॥ नेत्र गते ते नो शुद्धय-तीत्याद्युक्त्या मुनेस्त्वया ॥ भवेऽमात्यसाऽथ पत्न्या-ध्यया तत्कुलनिन्दया ॥ २० ॥ भिक्षुभ्यो दीयतामन्ध! । इत्याद्युक्त्यानया पुनः॥ यदर्ज्याशातनाकर्म । भवमूलं त्रिभिः क्रमात् ॥२१॥ तत्कर्मणोऽनुतापाद्यैः-क्षेपेऽप्यंशस्य रुसंचित् ॥ शेषस्यात्रोदयाजात-स्त्वं गताऽक्षः-कियत्क्षणम् ।२२। आद्या पत्न्यभवद्राज-गृह्या तु गणिकान्वुता ॥ पितृदापितभु-त्तयन्त-विपयोगात्पराऽन्ध्यभूत् ॥ २३ ॥ तत्कर्मक्षपणादासीत् । पुनः पुण्योदयादपि ॥ दिव्यौषधेश्च संयोगा-त्त्वमिवैषा सुसज्जदृग् ॥ २४ ॥ तद्भिक्षोक्तथाऽनिषेधा-देकाऽहं भिक्षुरूपता ॥ तस्यां ते तद्धियाऽदायि । पित्रा विजयसुन्दरी ॥ २५॥ पतीयतःस्म ते च द्वे । प्राक् प्रेम्णा त्वां नरेश्वरं ॥ प्राग्भवानथ सिंहस्य । शृणु सम्प्रति भूपते! ॥ २६ ॥ वसुसारपुरोधास्तु । नरवीरनरेशितुः ॥ कौलत्वेन त्वया सर्व-साक्षाद्दत्ततिरस्कृतिः ॥२७॥ राज्ञा दत्तप्रवासश्च । भूरि भ्रान्त्वा भवं चिरं ॥ पारिव्राज्यं क्वचिज्जन्म-न्याप्य ज्यौतिःसुरोऽभवत् ॥ २८ ॥ ततश्च्युत्वा भवद्भ्राता । त्वत्पितृव्यजयाङ्गजः ॥ सिंहसारोऽभवत्पापाऽ-नुबन्धिसुकृतोदयात् ॥ २९ ॥ चण्डालेनाऽमुना कस्ते । सङ्ग इत्युदितं त्वया ॥ प्राग्भवे यत्ततस्तेन । तद्दोपस्त्वय्यपि ददे ॥३०॥ सत्कर्मोदयतः प्राच्या-दथाऽप्राच्यादिहाऽपि ते ॥ श्वपाकताकलङ्कोऽपि । व्यलीकत्वाद्व्यलीयत ॥ ३१ ॥ कौलादिप्राग्भवाऽभ्यस्ता-ऽप्रशस्ताचरणोद्यतः ॥ स क्रूरप्रकृतिर्गाढ-निःकृतिः सर्वदोषभृत् ॥ ३२ ॥ निर्गुणो निर्घृणः कोपी । चाऽऽत्मक्लेशी पदे पदे ॥ अन्यायी दुर्भगः पाप-मतिर्लोभी निरङ्कुशः ॥ ३३ ॥ धर्मद्वेषी विशिष्यार्ह-द्धर्मनाम्नाऽप्यमर्षभृत् ॥ अधर्मपक्षपाते तु । प्रमोदी तत्समर्थकः ॥ ३४ ॥ उपकुर्वत्यपि परं । स्थाने स्थानेऽप्ययं त्वयि ॥ सिंहसारो वहत्यन्त-र्द्वेषं प्राग्भववैरतः ॥ ३५ ॥ हेतुना तेन ते दृष्टि-ग्रहणाद्यपि पापकं ॥ कर्माकरोदुरात्माऽसौ । तत्र तत्र च सम्प्रति ॥ ३६ ॥ पुण्यपापफलव्यक्ति-सम्बद्धान् प्राग्भानितः श्रुत्वा च हृदि धृत्वा च ।

धर्मे कार्यः सदोद्यमः ॥ ३७ ॥ सश्रद्धं शुद्धतमार्ह-द्धर्मं प्राग्भवे समाराध्य ॥ यूयं वयं च पुण्या-नुबन्धिपुण्यास्तदभवाम ॥ ३८ ॥

इति कर्णातिथीकृत्य । यावत्तिष्ठन्ति ते क्षणं ॥ सतूष्णीका मनोमध्ये । धर्त्तुं पूर्वभवस्थितिम् ॥ ३९ ॥ तावत् श्रीश्रीजया-नन्द-राजेन्द्राद्याः समेऽप्यमी ॥ लघुकर्मतया शीघ्रं । स्वजातीरस्मरंस्तदा ॥ ४० ॥ प्राहुश्च भगवन्तं तं । सत्यमेव भवद्वचः ॥ जातजातिस्मराः सर्वे । संविग्नः सर्वमप्यदः ॥ ४१ ॥ प्राग्भवेषु यथाऽस्माभि-रनुभूता भवस्थितिः ॥ जातिस्मृत्याद्य दृष्टा च । यथादिष्टा प्रभो! त्वया ॥ ४२ ॥ पुनर्नम्रशिराः श्रीश्रीजयानन्दधराऽधिपः ॥ पप्रच्छ स्वच्छचित्तस्तं । श्रीगुरुं भगवन्निति ॥४३॥ पूर्वं मदीयस्य पितुः । पितृव्यस्य च सद्गुरो ॥ दीक्षादानदिनादग्रे । यः सम्बन्धस्तमादिश ॥ ४४ ॥ पुरो गतिं तयोर्मोक्षाऽवधि च सुविधेऽधुना ॥ इति राज्ञोदिते प्रश्ने । सस्नेहं तं गुरुर्जगौ ॥४५॥ शृणु राजन्! यदासीत्ते । पुनः पितृपितृव्ययोः॥ पश्चाद्दीक्षादि-नात्सार्द्धं । गुरुभिस्तौ विजहतुः ॥ ४६ ॥ तौ च द्वादशवत्सर्या । शिक्षाद्वितयनिष्ठितौ ॥ श्रुतपाठात्मत्युपेक्षाऽऽदिक्रियाभ्यश्च कात्स्‍र्न्यतः ॥ ४७ ॥ ततः श्रुतार्थग्रहणात् । कुशलौ जिनशासने ॥ अजायेतां जयर्षिश्च । विजयर्षिश्च सुव्रतौ ॥ ४८ ॥ निरतीचार-चारित्रा-चरणप्रवणौ चिरं ॥ चिरन्तनमहर्षी तौ । बोधयन्तौ वसुन्धराम् ॥ ४९ ॥ गुर्वाज्ञानिरतौ शुद्ध-क्रियाविधिरतौ सदा ॥ गुरुभक्तिपरौ गाढं । क्षुल्लसाधुषु वत्सलौ ॥ ५० ॥ विनीतौ वृद्धमुनिषु । सप्रेमाणौ महर्षिषु ॥ वैयावृत्त्योद्यतौ नित्य-तपस्करणत-त्परौ ॥ ५१ ॥ अनगारगुणैः सप्त-विंशत्या कलितौ सदा ॥ शमिनौ दमिनौ राग-द्वेषमुक्तौ महाशयौ ॥ ५२ ॥ निःस्पृहौ निर्म-मावेतौ । ग्रामाद्यप्रतिबन्धिनौ ॥ स्वाङ्गेऽप्यप्रतिकर्माणौ । निर्मायौ मानवर्जितौ ॥ ५३ ॥ परीषहोपसर्गाद्यैरक्षोभ्यौ निर्भयौ भुवि ॥ निर्मोहौ निष्कषायौ च । तपःसंयमभावितौ ॥५४॥ सदा स्वात्महितोद्युक्तौ । विहृत्य सुचिरं भुवि ॥ स्वायुः प्रपूर्य पर्यन्ते-ऽनश-

नाद्यैः समाहितौ ॥ ५५ ॥ सनत्कुमारे महेन्द्रे । महेन्द्रौ तौ बभूवतुः ॥ सामानिकेन्द्रदेवाऽर्च्यौ । महर्द्धिकौ महाद्युती ॥ ५६ ॥ सुखितौ दिव्यभोगैश्च । सप्तसागरसम्मित ॥ क्रमात्तदधिकं किञ्चित् । प्रपाल्य स्वायुरुत्तमम् ॥ ५७ ॥ ततश्च्युतौ विदेहेषु । पृथग्देशेषु भूपती ॥ भूत्वा तौ द्वावपि प्रौढौ । सद्राज्यं पालयिष्यतः ॥ ५८ ॥ तत्राऽर्हतः करेणैतौ । प्रतिपद्य सुसंयमं ॥ चिरं प्रपाल्य लप्स्येते । कृतकर्मक्षयौ शिवम् ॥ ९५ ॥

श्रुत्वेति चरितं सूरे-र्मुखात्पितृपितृव्ययोः ॥ हृदि प्रमुदितः क्ष्माभृत् । नत्वा पप्रच्छ तं पुनः ॥ ६० ॥ मदादीनां च सर्वेषां । स्वस्य सिंहस्य चाऽग्रतः ॥ भवस्वरूपं सम्यग्मां । प्रसादय मुदेऽधुना ॥ ६१ ॥ अहं भव्योऽस्म्यभव्यो वा । भव्यश्चेत्तद्भवेऽत्र किं ॥ अन्यस्मिन् वा शिवं गन्ताऽस्मीति मह्यं मुदे वद ॥ ६२ ॥ अन्येऽपि मम पत्न्याद्याः । कदा प्राप्स्यन्ति निर्वृत्तिं ॥ यदिवा न हि यास्यन्ती-त्यादि चाऽऽदिश मेऽखिलम् ॥ ६३ ॥ सिंहसारः कथम्भूतः । कथंभावी पुनः पुरः ॥ इदं स्वस्य शिवाप्तिं च । प्रभो! प्रथय मेऽग्रतः ॥ ६४ ॥ इमान् राज्ञोदितान् प्रश्ना-नवधार्य मुनीश्वरः ॥ सूरिश्चक्रायुधो राज-न्नपिरेवमभाषत ॥ ६५ ॥

राजन्! शृणु त्वं त्वत्पत्न्या-दयः श्रेयोऽर्थिनोऽत्र ये ॥ आसन्नसिद्धिकाः प्राय-स्ते भव्या एव निश्चितं ॥ ६६ ॥ तत्राऽपि त्वं त्वदीये च । प्राग्भवीये उभे प्रिये ॥ अहं चाऽऽराध्य चारित्रं । गन्तारोऽस्मिन् भवे शिवम् ॥ ६७ ॥ केवलं केवलज्ञानो-द्योता दुद्योतयन् जगत् ॥ संहृत्य सर्वमज्ञान-ध्वान्तमध्वान्तकारिणम् ॥ ३८ ॥ भवान् भवान्तकृद्भास्वा-निव नव्यः सदोदयः ॥ प्रदर्श्य जीवाऽजीवादीन् । सत्पदार्थान् बोधयिष्यति ॥ ६९ ॥ पवित्रीकृत्य सुचिरं । धरित्रीं स्वैः पदाम्बुजैः ॥ किञ्चिन्न्यूनशरल्लक्षं । केवलित्वं प्रपाल्य च ॥ ७० ॥ पूर्णं च लक्षं सम्पूर्य । यतिपर्यायमुत्तमं ॥ लक्षाश्चतुरशीतिं तु । सर्वायुः शरदां मुदा ॥ ७१ ॥ सर्वा-

मयादिव्याबाधा-विधुरां गमनङ्गजित् ॥ विजित्याऽखिलदुष्कर्म । क्षयमानीयमुत्तमाम् ॥ ७२ ॥ लप्स्यसे श्रीजयानन्द! । त्वं महानन्दसम्पदं ॥ अहं चाऽप्याऽऽप्तपर्यन्त-केवलः कियतीः समाः ॥ ७३ ॥ सिंहस्तु गुरुकर्मत्वात् । प्रजापीडादिहेतुभिः ॥ राज्यभ्रंशादिदुःखान्य-न्वभूद् यत्तत्तथा शृणु ॥ ७४ ॥

यदाऽथ भवतः पित्रा । सिंहो निष्कासितः पुरात् ॥ ततः सोऽपि ततः स्थाना-न्निर्गत्य भ्रान्तवांश्चिरम् ॥ ७५ ॥ यत्र यत्र पुरे ग्रामे । देशे वा दिशि वाऽसकौ॥ सकौतुकं स्वनिर्वाहा--द्यर्थं वाऽपि गतः स्थितः ॥ ७६ ॥ तत्र तत्राऽपतत्प्रायः । श्रेयःश्रेणीसुभिक्षहृत् ॥ दुर्भिक्षं भीषणं लोके । प्रादुरासंस्तथेतयः ॥ ७७ ॥ निमित्तैः शकुनैर्ज्ञानि--गिरा वाऽस्य [illegible] ॥ दुर्भिक्षादिनिदानं च । बुध्वा निर्भर्त्स्य ते भृशम् ॥ ७८॥ तथा निर्वास्यते लोकैः । कुपितैः सोऽपि दासवत् ॥ यं यं भूपं भजेद्भक्त्या । प्रायः स म्रियते तदा ॥ ७९ ॥ स्वकीयशरणस्वामि-मरणं तदुपास्तितः ॥ कुतश्चिदपि निर्णीय । तज्जनैः सोऽपि ताड्यते ॥ ८० ॥ विडम्ब्यते च तद्भक्तैः । कर्ष्यते च सदाऽऽपदात् ॥ एवं पापफलं घोरं । स्थाने स्थाने स लब्धवान् ॥८१॥ युग्मं ॥ तथा पापोदयाद् दुर्ग-सर्वव्यसनसेवनात् ॥ क्वचिच्चौर्ये रतः पापी । पञ्चत्वं प्राप तत्फलम् ॥ ८२ ॥ सप्तमे नरके सोऽपि । समुत्पद्याऽऽपदां पदे ॥ अन्वभूद्भूरिदुःखौघं । द्वात्रिंशत्सागरावधि ॥ ८३ ॥ तत उद्धृत्य दुर्वृत्त--मत्स्यादिकभवान्तरैः ॥ सप्ताऽपि नरकानेप । समासददनन्तशः ॥ ८४ ॥ सर्वातयक्षु दुर्दैव--दुर्नृजातिष्वनन्तशः ॥ पुनः पुनः सृजन् पापं । प्रत्येक स भ्रामण्यति ॥ ८५ ॥ इत्युग्रदुर्गतदुरन्तविपाकपाप--पापद्धर्यनन्तभवदुःखनिदर्शनं तत् ॥ सिंहस्य वृत्तमवगम्य निशम्य भव्याः । पुण्याऽध्वनि ह्यघभिदि प्रयतध्वमुच्चैः ॥ ८६ ॥ त्वया सह प्रव्राजिता । जितोभयरिपुव्रजाः । सुचारित्रातिप्रियास्तेऽन्ये । भक्ता भूपभटादयः ॥ ८७ ॥ ये चाऽन्ये ते च

गमेष्यति । मदीयैर्गुरुभिः ॥ गमिष्यामि विदेहेषु । गत्वा स्वर्गादिषु क्रमात् ॥ ८८ ॥ युग्मं ॥ निवेदितमिदं सर्व । स्वगन्तापि-
क्ता न हि ॥ किन्तु गतं विदेहेषु । नन्तुं विहरतो जिनान् ॥ ८९ ॥ प्राप्तेन पुण्डरीकिण्यां । मुखाद्विहरतोऽर्हतः ॥ व्याख्यान्तर्भ
स्वर्गाभावं । मोक्षं मार्गणनाशिनः ॥ ९० ॥ कारुण्येनाऽऽकर्ण्य तूर्णं तत् । त्वत्प्रबोधार्थमेयुषा ॥ मया महाऽवधिज्ञाना-दपि तद्
ज्ञातं हितेना ॥ ९१ ॥ त्रिभिर्विशेषकं ॥ त्वया तु प्राग्भवे मम-मत्यन्तोपकृतिः कृता ॥ जिनधर्मस्य शुद्धस्य । प्रदानेन ततोऽप्य
हम् ॥ ९२ ॥ कर्तुं प्रत्युपकारं । विहरज्जिनसन्निधौ ॥ सर्वं त्वदादिवृत्तान्तं ॥ पृष्ट्वाऽत्राऽऽगत्य सम्प्रति ॥ ९३ ॥ प्रतिबोधं
विधास्यामि । नाकसम्पत्कारणैः ॥ भवतो वितरामि स्वं । तारयामि भवोदधेः ॥ ९४ ॥ तत् त्वं बुध्यस्व बुध्यस्व । मा प्रमादं कुरुष्व
भोः ॥ मुह्यन्ति विषयैर्मूढाः । सन्तस्तु न कथञ्चन ॥ ९५ ॥ यतः—

भिन्नमार्गानुसारिणा-मिदमेव महात्मनां ॥ यन्न रज्यन्ति विषये-र्यतन्ते स्वहिताय ते ॥ ९६ ॥

स्वहितं च यदेवात्र । यदेव स्वार्थसाधकं ॥ स्वार्थश्च सुखहेतुर्यो । जन्मन्यत्र परत्र च ॥ ९७ ॥ व्यवहारविशुद्ध्यर्ह-द्गुरु-
भक्तिरत्यागमाः ॥ दानशीलतपोभावाः । सत्क्रियाऽऽराधनादि च ॥ ९८ ॥ इत्येतानि शिवाङ्गत्वा-द्धर्मरूपत्वतस्तथा ॥ सम्यक्
सुखनिदानानि । जिनैः स्वहितमूचिरे ॥ ९९ ॥ कामार्थयोर्विना बाधं । विहितानि हिताऽर्थिभिः ॥ फलन्त्येव फलैरिष्टै-स्तेभ्य-
स्तानि सुखप्रदाः ॥ १०० ॥ कामोऽपि विषयात्मैव । दुस्त्यजोऽतिभयङ्करः ॥ विषयेष्वप्यशेषेषु । स्त्रियश्चातिसुदुस्त्यजाः ॥ १ ॥ यदुक्तं-

मुक्खाभिकङ्खिस्स वि माणवस्स । संसारभीरुस्स ठिअस्स धम्मे ॥ न तारिसं उत्तरमत्थि लोए । जहि-
त्थिओ बाल मणोहराओ ॥ २ ॥ एए असङ्गे समइक्कमित्ता । सुदुत्तरा चेव हवन्ति सेसा ॥ जहा महासागर-

मुत्तरित्ता । नई भवे सव्वि दुहुत्तरा नो ॥ ३ ॥

कामः पञ्चविधोऽप्येष । तत्त्याज्यः स्वहितार्थिभिः यस्मादसौ स्मरन्तिस्म । शल्याद्युपमितीर्बुधाः ॥ ४ ॥

सल्लं कामा विसं कामा । कामा आसीविसोवमा ॥ कामे य पत्थमाणा हु । अकामा जन्ति दुग्गइम् ॥५॥

यत्कामप्रार्थनाऽप्येवं । महादुर्गतिदुःखदा ॥ सिद्धान्ते कीर्त्तिता यस्मा-त्तत्कामस्त्यज्यतां बुधाः ॥ ६ ॥ कामसेवापरीहारा-द्धर्मो यैः सेव्यते बुधैः ॥ न चाऽर्थेषु स्पृहा येषां । धन्यास्ते जगतीतले ॥ ७ ॥ सेवन्ते गृहिणः काम-मनासक्त्यैव तात्त्विकाः ॥ पुत्रादिलिप्सया पर्व-दिनादौ ब्रह्मचारिणः ॥ ८ ॥ तदुक्तं—

पञ्चविहविसयसुक्खं । उवभुंजइ परिमिएसु दिवसेसु ॥ तिव्वाभिलासविरओ । बम्भरओ पञ्चसु तिहीसु ॥९॥

ननु दिने मैथुनस्याऽतिगर्हितत्वात् कथं दिवसेष्विति ? नैवं, दिवसशब्देनाऽहोरात्रं गम्यते; यथा पर्यूषणाकल्पे छट्ठीदिवसेणंति तीर्थकराणां च्यवनजन्मनी अर्द्धरात्र एव सम्भविनी, इतिवत्समञ्जसं इति व्याख्येयं ॥इत्याद्यागमतत्त्वाऽर्थं । निश्चित्य हृदि कृत्यवित् ॥ शुद्धमेव परं शीलं । सेवते जन्मकालतः ॥ १० ॥ तदशक्तौ च स्वदार-सन्तोषव्रतमाचरेत् ॥ पुमान् स्त्री चेत्तदात्मीय-भर्तृसन्तोषिणी भवेत् ॥ ११ ॥

श्रीचक्राऽऽयुधराजर्षे-रिति वागविषयीकृतं ॥ सुकृतं प्राग्भवोपात्त-मतिथीकृत्य कर्णयोः ॥ १२ ॥ सम्राट् श्रीश्रीजयानन्दः परमानन्दमेदुरः ॥ वैराग्यं परमं प्राप्य । चारित्रग्रहणोत्सुकः ॥ १३ ॥ निवेदयितुमात्माऽभि-सन्धिं विज्ञप्तिमाननोत् ॥ तस्मै श्री गुरवे धर्मा--चार्याय हितदेशिने ॥ १४ ॥ स्वामिन् ! मयि प्रसीद त्वं । प्रतीक्षस्व क्षणं यतः ॥ गृहं गत्वा निजे पुत्रे । राज्यं दत्वा

यथामतम् ॥ १५ ॥ ततः सोत्सवमत्रैत्य । तपस्यामि तवाऽन्तिके ॥ भवोद्विग्नस्य मे चित्तं । राज्येऽपीपन्न रज्यते ॥ १६ ॥ इति
विज्ञाप्याऽसौ चान्तः-करणाभिमतं हितं ॥ राजेन्द्रस्तैरनुज्ञात-स्तपस्यायै समुद्यतः ॥ १७ ॥ महेन महता गेहे । गत्वा दत्त्वा स्व-
सूनवे ॥ नवीनप्राभवप्राज्यं । राज्यं सप्ताङ्गसङ्गतम् ॥ १८ ॥ व्यतरत्तरसा न्यक्षां । सुशिक्षामिति तं प्रति ॥ स्वसहोदर तसर्वाः ।
प्रजास्त्वं वत्स! पालयेः ॥ १९ ॥ पालिताः सुखिताश्चैताः । सर्वकामफलप्रदाः ॥ मुदा सदाऽपि स्युरेताः । सौरभेय्य इवाऽखिलाः
॥ २० ॥ प्रजा एव प्रजापानां जंगमः कोश उच्यते ॥ अक्षयार्थस्ततस्ताः । पालनीयाः प्रयत्नतः ॥२१॥ तासां भाग्यैरनिर्विण्णै-
राशीर्भिश्च लालिताः ॥ प्रवर्द्धन्ते नृपाः प्रायो । लताव्राता इवाऽम्बुभिः ॥ २२ ॥ नैव व्यभिचरन्त्यत्र । प्रजात्वं जातुचित्प्रजाः ॥
सुखेऽपि वत्स! दुःखेऽपि । शयाने जागरेऽपि वा ॥ २३ ॥ प्रजानामुत्सवैर्दानाद्यवदातैरनेकशः ॥ लक्ष्मीभिः सुखसन्तान-कुडु
म्बप्रेमवृद्धिभिः ॥ २४ ॥ समृद्धिभिर्यशोभिश्चाऽपैररपि परैर्गुणैः ॥ मेदिनीशदिनेशा ये । मोदन्ते ते जगत्प्रियाः ॥ २५ ॥ धन्या
मान्याः सुकृतिनः । कृतार्थाश्चिरजीविनः ॥ चिराऽवस्थायिराज्याः स्यु-र्नयावित्ता यशस्विनः ॥ २६ ॥ त्रिभिर्विशेषकं ॥ प्राप्तेऽ-
पि वत्स! साम्राज्ये । यथा धर्मो न सीदति ॥ नयेषु वित्तयेषु द्राग् । वर्त्तितव्यं तथा त्वया ॥ २७ ॥ धर्मेष्वप्यार्हतो धर्म-श्चिन्ता-
मणिरिवाऽद्भुतः ॥ उत्तमः सारसम्पत्त्वः । सर्वेप्सितफलप्रदः ॥२८॥ स एवाऽतः कृतज्ञेन । न्यग्रोधतरुबीजवत् ॥ यत्नतः प्राप-
णीयोऽयं । त्वयाऽत्र शतशाखताम् २९ ॥ दुर्वात्या इव दुस्तीर्थे । प्रार्थ्यशास्त्रगिरो यथा ॥ न दूषयन्ति तं किञ्चि-द्भूयास्त्वं प्रय-
तस्तथा ॥ ३० ॥ सप्ताऽपि व्यसनानीह । निवार्याणि प्रयत्नतः ॥ प्रागसन्त्यपि यत्तानि । पर्युयन्तेऽत्र वृक्षवत् ॥ ३१ ॥ स्वजना-
ऽभिजनाऽभिज्ञाऽधिकारिनृपसेवकान् ॥ पत्नीपुत्रप्रजादींश्च । प्रति प्रीतिरती क्रियाः ॥ ३२ ॥ तथ्यं पथ्यमुदित्वेति मोदयित्वा

तदादिकान् ॥ प्रत्यर्हच्चैत्यमानन्दा–न्निर्माप्याऽष्टाहिकामहान् ॥ ३३ ॥ वस्त्राहारादिदानैश्च । विविधैर्विधिना मुदा ॥ साधर्मिकाणां वात्सल्य–प्रतिपत्तीर्विधाप्य च ॥ ३४ ॥ अमारिं सर्वजीवानां । सदाऽपि प्राग् प्रवर्त्तितां ॥ स्वराज्य इव सर्वाऽन्य–राज्येष्वपि यशस्करीम् ॥ ३५ ॥ विशिष्य च सदोद्घोष्य । पटहोद्घोषणादिभिः ॥ भृत्यादिविहितैरत्राऽमुत्राऽप्येतां हितावहाम् ॥३६॥ अन्यान्यपि प्रवचन–प्रौढिद्रढिमदान्यलं ॥ प्रभावनाङ्गकार्याणि । विरचय्य विशेषतः ॥ ३७ ॥ स्वपुत्रश्रीकुलानन्द–नरेन्द्ररचितां मुदा ॥ दीक्षाभिषेकसामग्री–मपूर्वामुत्सवोच्छ्रिताम् ॥ ३८ ॥ कृतार्थयित्वा विधिवत् । तदनन्तरकर्मभिः ॥ समं समङ्गलध्वानोल्लासैर्वासैः सुखश्रियाम् ॥ ३९ ॥ वासोऽलङ्कारमाल्यादि–परिकर्मपुरस्सरं ॥ आरुह्य शिबिकां दिव्यां । सिंहासनमधिष्ठितः ॥४०॥ धृतापत्रस्त्वभितः प्रचलच्चारुचामरः ॥ सर्वाडम्बरसर्वर्द्धि–सर्वातोद्यादिदीप्तिभिः ॥ ४१ ॥ गीतगानैर्महादानैः काम्यैर्धवलमङ्गलैः ॥ पात्रैर्विचित्रैर्नाट्यैश्चा–सङ्ख्यैर्मङ्गलपाठकैः ॥४२॥ छत्रचामरहस्त्यश्व–ध्वजकुम्भाऽष्टमङ्गलैः ॥ पुरश्चरद्भिश्चतुरैः । पादातैश्च प्रमाऽतिगैः ॥४३॥ चतुरङ्गचमूचक्रैः । सर्वतोऽपि प्रसृत्वरैः ॥ कोटिसंख्यैः सुरैर्विद्या–धरैश्च परिवारितः ॥४४॥ तदा मुदाऽऽगताऽऽसन्नसुरकिन्नरनिर्मितैः ॥ पुष्पवृष्टिगीतनाट्य–सङ्गीतप्रमुखैः शुभैः ॥ ४५ ॥ दुन्दुभिप्रमुखैर्वाद्यै–र्दिव्यैर्ध्वनिभृताम्बरैः ॥ पौरादिसमुदायैश्च । जाते शोभाभरे भृशम् ॥ ४६ ॥ सर्वोत्सवैर्नवैः सर्व–सुषमामहिमावहैः ॥ राजधान्या विनिर्गत्य । मनोरमवनं गतः ॥४७॥ आगत्य गुरुपादान्तेऽवरुह्य शिबिकान्तरात् ॥ विधिना नामयश्च । वन्दित्वा तान् गुरून्मुदा ॥ ४८ ॥ आपृच्छय स्वजनान् सर्वान् वैराग्येण तरङ्गितः ॥ नृपः श्रीश्रीजयानन्द–सम्राट् साहसिकाग्रणीः ॥ ४९ ॥ वस्त्रालङ्कारमुक् पञ्च–मुष्टिलोचपरः सुधीः ॥ आत्तवान् सत्तमां दीक्षां । श्रीगुरोर्मुनिसत्तमात् ॥ ५० ॥ सप्तदशवृत्तैः कुलकं ॥

त्रिखण्डमेदिनीभर्त्तु-र्धुवं तस्य तपस्यतः ॥ सार्थेशस्येव सार्थेन । लक्षशः प्राव्रजन् जनाः ॥ ५१ ॥ अन्तःपुरपुरन्ध्र्योऽपि ।
सार्द्धं स्वस्वपरिच्छदैः ॥ महिष्यो रतिसुन्दर्या-दिकाश्चाऽऽददिरे व्रतम् ॥५२ ॥ पुत्रपौत्रादयोऽप्यस्य । सह तेन सहस्रशः ॥ सहस्रं
च नरेन्द्राणां । सान्तःपुरपरिच्छदम् ॥ ५३ ॥ जने जनपदे राज-कुले च प्रमदोदयः ॥ प्रससार स संसार-समुच्छेदपरः परः ।५४
उपात्तसंयमसाम्राज्य-साम्राज्यं जनकं निजं ॥ श्रीमन्तं श्रीजयानन्द-राजर्षि तद्गुरूनपि ॥५५॥ वन्दित्वाऽऽनन्दतः पश्चा-द्रमनाऽ-
वसरं स्मरन् ॥ शेषबन्धुसुताऽमात्य-सामन्तपरिवारितः ॥ ५६ ॥ प्रजाभिश्चाऽन्वितः सर्व-चतुरङ्गचमूवृतः ॥ प्रविश्य स्वपुरे राज्यं
कुलानन्दनृपो व्यधात् ॥ ५७ ॥ आराधयन् जैनधर्मं । प्रजास्तत्र प्रवर्त्तयन् ॥ पदे पदे पितुः श्रीश्री-जयानन्दऋषेः स्मरन् ॥५८॥
अथ श्रीश्रीजयानन्द-राजर्षिः सूरिभिः सह ॥ प्रस्थायाऽऽशु ततः स्थानात् । संयमाऽऽराधनोद्यतः ॥ ५९ ॥ विनयेन गुरोः
पार्श्वात् । सामाचारीं यथास्थितां ॥ शिक्षित्वा विधिवत् कुर्व-न्नगर्वः सर्वसम्मतः ॥६०॥ सर्वोद्यमेन सर्वं च । श्रुतमाद्यादिनादपि ॥
गृह्णन्नल्पेन कालेन । द्वादशाङ्गधरोऽभवत् ॥ ६१ ॥ त्रिभिर्विशेषकं ॥ निःसङ्गचित्तः पञ्चापि । समितीः समुदीरयन् ॥ तिसृभिर्गु-
प्तिभिर्गुप्त-श्चाऽप्रमत्तः प्रतिक्षणम् ॥६२॥ निर्ममो निष्कषायश्च । साधुसद्गुणसङ्गतः ॥ अशठस्तपसां पात्र-ममात्रयतनापरः॥६३॥
योग्यत्वाद्गुरुभिः सूरि-पदे न्यस्तः प्रशस्तधीः ॥ नानाऽतिशयसम्पन्नः । षट्त्रिंशत्सद्गुणाऽऽकरः ॥ ६४ ॥ निरतीचारचारित्रः ।
पाठयन् शमिनां श्रुतं ॥ श्रीगुर्वादेशतः पृथ्वी-तलं पावितवांश्चिरम् ॥ ६५ ॥
अन्यदा वन्दितुं प्राप्त-श्रीजयानन्दसूरिभिः ॥ समं समाहमाजग्मुः । श्रीचक्रायुधसूरयः ॥ ६६ ॥ लक्ष्मीपुरपुराद्राऽऽसन्न-
शाखापुरे कश्चित् ॥ चतुर्ज्ञानधरा ज्ञात्वा । प्रान्तकालं निजायुषः ॥ ६७ ॥ श्रीजयानन्दराजर्षेः । सूरिराजस्य तत्क्षणात् ॥ गच्छ-

भारप्रदानेन । गणेशपदवीं ददुः ॥ ६८ ॥ त्रिभिर्विशेषकं ॥ स्थित्वा तीर्थे क्वचिन्मुक्त–शिष्योपधिपरिग्रहाः ॥ पादपोपगमं युक्त्या ऽनशनं ते प्रपेदिरे ॥ ६९ ॥ त्रिंशता च दिनैः क्षीण–सकलक्लेशबन्धनाः ॥ उत्पाद्य केवलज्ञानं । क्षणात्ते मुक्तिमाप्नुवन् ॥ ७० ॥ तन्निर्वाणोत्सवश्चक्रे । देवैरासन्नसंस्थितैः ॥ दिव्यातोद्यलक्षनादै–र्गीतसङ्गीतसङ्गतैः ॥७१॥ तदाकर्णनसञ्जात–वैराग्यादप्रपातुकात् ॥ क्षणेन क्षपकश्रेणि–मारोहन् गिरिदुर्गवत् ॥ ७२ ॥ विजित्य विश्वजैत्राणि । कर्माण्यष्टाऽपि सत्वरं ॥ सैन्यानीव रिपूणां श्री–श्रीजयानन्दसद्गुरुः ॥ ७३ ॥ राजर्षिषु महेन्द्रोऽसौ । केवलज्ञानमुज्ज्वलं ॥ लोकाऽलोकाऽग्रगं सार–मिवाऽनन्तमवाप्तवान् ॥ ७४ ॥

तदा तन्महिमाकृष्टैः । सुरैर्वैमानिकैरपि ॥ सम्भूय बहुभिश्चक्रे । ज्ञानोत्पत्तिमहोत्सवः ॥ ७५ ॥ तत्र च प्रथमं दिव्यं । विकुर्वित्वाऽम्बुजं महत् ॥ सहस्रपत्रं सौवर्णं । तस्याऽग्रेऽध्यास्य तं मुदा ॥ ७६ ॥ नत्वा तेषु यथास्थान–मासीनेषु परेष्वपि ॥ पौरादिपु पुरश्चाऽयं । केवलज्ञानवान् गुरुः ॥७७॥ धर्मं चतुर्विधं भव्याऽनुग्रहार्थमुपादिशत् ॥ सारं सरसदृष्टान्त–हेतुयुक्तिकदम्बकैः । ७८ । कुलानन्दश्च विज्ञात–पितृज्ञानोद्गमोत्सवः ॥ ससैन्यपरिवारस्तं । नन्तुं तत्राऽगमज्जवात् ॥ ७९ ॥ तं च केवलिनं दृष्ट्वा । पितरं विश्ववन्दितं ॥ पूज्यं प्रदक्षिणय्य त्रि–र्विधिपूर्वमवन्दत ॥८०॥ स्तुत्वा चोपाविशत् स्थाने । विनयेन कृताञ्जलिः ॥ तस्मै तं पुनराख्यत् श्री–श्रीजयानन्दकेवली ॥ ८१ ॥ द्वादशव्रतरूपं च । श्राद्धधर्मं सविस्तरं ॥ सम्यक्त्वपाठबन्धेन । तमाजिग्रहदादरात् ॥८२

कांश्चित्तं मुनिधर्मं च । कांश्चिन्नैकानभिग्रहान् ॥ प्रतिपाद्य जनानाशु । व्यहरत्स ततोऽन्यतः ॥ ८३ ॥ ग्रामाऽऽरामाकरपुर–प्रभृतिस्थानकोटिपु ॥ चिरं विहृत्य तज्जन्तून् । समन्तूनपि दुःकृतैः ॥८४॥आलोचनाप्रदानादि–सुकृतौघैर्निरागसः ॥ कृत्वा कृतार्थमन्यांस्तान् । व्यधाद्राजर्षिकेवली ॥ ८५ ॥ पद्महृद इव व्याख्या–वने हंसा इवोत्तमाः ॥ तस्य धर्मामृते स्वैरं । क्रीडाभिः सम-

तृतुपन् ॥ ८६ ॥ तद्धर्मदेशनानद्यां । मज्जनोन्मज्जनादिभिः ॥ चिरं भव्यमनोमीनाः । कुर्वतेस्म रतिसुखम् ॥८७॥ तत्पुण्यदेश-नागङ्गा-प्रवाहसरसीकृताः ॥ भव्यास्तरुतृणौषध्या-द्याभाः स्युर्भास्वराः फलैः ॥८८॥ श्रीधर्मपत्तनस्थाना-न्नानाश्रेयःक्रयाणकैः ॥ वितीर्णैर्बहुभिर्भव्य-लोकान् यः सुखितान् व्यधात् ॥ ८९ ॥ महासार्थेशसङ्काशः । कारुण्याब्धिरनन्तवित् ॥ तत्प्रसादादवापुर्ज्ञाः । केचित्सर्वार्थसम्पदम् ॥९०॥ वैमानिकश्रियं केचित् । परेऽनुत्तरसम्पदं ॥ सार्वभौमादिकर्द्धींश्च । केऽपि केऽपि च निर्वृत्तिम् ॥९१॥ तद्भवे केवलज्ञान-मुज्ज्वलं केऽप्युपार्जयन् ॥ इत्याद्यैर्बहुभिः पुण्य-लाभैः सामैर्निरन्तरैः ॥ ९२ ॥ चिरं सुखमयं पुण्य-मयं हर्षमयं तथा ॥ विश्वत्रयमयं चक्रे । श्रीजयानन्दकेवली ॥ ९३ ॥ बलीयोऽतिशयश्रेणि-सम्प्रीणितजगत्त्रयः निर्वाणसमये प्राप्ते । श्रीशत्रुंजयमभ्यगात् ॥ ९४ ॥ तत्र षड्भिरभक्तार्थैः । पादपोपगमाह्वयं ॥ सम्पूर्याऽनशनं श्रीश्री-जयानन्दः स केवली ॥९५॥ वेदनीय-नामगोत्रा-युश्चतुष्टयसङ्क्षयात् ॥ महानन्दपदं प्रापा-नन्तज्ञानो निरञ्जनः ॥ ९६ ॥ बुद्ध सिद्धः समृद्धश्चाऽनन्तैर्सुद्वीर्यदर्शनैः ॥ परमाऽऽत्मा परज्योतिः । परं ब्रह्म ततः स्मृतः ॥९७॥ तत्कालमिलिता देवाः । कोटिशोऽपि चतुर्विधाः ॥ सशोकाऽपि सम्भूय । तन्निर्वाणोत्सवं व्यधुः ॥ ९८ ॥ तद्विस्तारश्च तस्याऽपि । तीर्थेशादेरिवाऽखिलः ॥ प्रायो व्यधायि सर्वोऽपि । मुदितैस्तैश्च तद्गुणैः ॥ ९९ ॥ यथागतमगुस्तेऽपि । स्वस्वस्थानेषु निर्जराः ॥ अष्टाऽहिकामहं कृत्वा । तीर्थे नन्दीश्वरादिके ॥ १०० ॥ इत्थं समग्रैः सुगुणैर्गरिष्ठः श्रीश्रीजयानन्दगुरोः परो न ॥ क्ष्मामोक्षसाम्राज्ययुगं द्विधा द्विट्-जयश्रिया प्राप सुवृत्तवान् यः ॥ ९९ ॥ एवं नरा धर्मपरा दुरापाः । प्रौढा गुणाऽऽढ्याः सुयशःप्रतापाः ॥ सौभाग्यभाग्यैकधनाः सनाथाः । साम्राज्यलक्ष्म्या त्रिजगत्यपापाः ॥९२॥ प्रकृष्टसौन्दर्यभृतः सदाऽपि । दानैकशौण्डाः परमोदिताश्च ॥ परैरजय्याः किल केऽप्यवाप्याः । श्रीश्रीजयानन्दवदत्र केचित् ॥ ३ ॥

अर्हन्मतौन्नत्यकराश्च भाव-द्विषज्जयश्चार्जितकेवलायाः ॥ सिद्धयन्ति धन्यास्तादिह प्रयत्नः । कार्योऽत्र धर्मेऽस्य निदर्शनेन ॥ ४ ॥ त्रिभिर्विशेषकं॥यत्तच्चरितं सुगुणाऽनुविद्ध-प्रसिद्धतत्त्वाद्विशदाऽवदातैः ॥मुक्ताफलौघैरिव शोभमान-हारायमाणं न मुदेऽत्र केषाम् ॥५॥

इति तपागच्छनायक-पूज्यश्रीदेवेन्द्रसूरिश्रीज्ञानसागरसूरिशिष्यैः श्रीसोमसुन्दरसूरिपट्टप्रतिष्ठितैः श्री मुनिसुन्दरसूरिभिर्विरचिते श्रीजयानन्दराजर्षिकेवलिचरित्रे श्रीजयानन्दराजेन्द्रदीक्षा-केवलज्ञानादिव्यावर्णनो नाम चतुर्दशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

जैन पुस्तकालय

## ॥ सम्पूर्णमभूत् श्रीजयानन्दचरित्रम् ॥

[1]अथ प्रशस्तिः—

चन्द्रकुले तपागच्छे ख्याताः श्रीसोमसुन्दरगुरूणां॥पट्टप्रतिष्ठिताः श्रीमुनिसुन्दरसूरिराजेन्द्राः॥१॥[मार्याद्युपद्रव]मारीत्यवमनिवारण-शान्तिस्तवसङ्करक्षणप्रमुखैर्ये । गीयन्ते स्वगणैः-प्रगणैः प्रति भद्रबाहुगुरोः ॥ २ ॥ मरुदेशादिषु देशेष्वमारिपटहप्रघोषणैः प्रथिताः श्रीहेमचन्द्रसूरीन् स्मारितवन्तः स्वशक्त्या ये ॥ ३ ॥ तेषां गुरूत्तमानां । शिष्यवरैश्चन्द्ररत्नगणिविबुधैः ॥ शोधं शोधं स्वधिया । व्यधायि शुद्धं गुरुभक्त्या ॥४॥

॥ इति श्री जयानन्दचरित्रप्रशस्तिः ॥ ग्रन्थाग्रं ७५००

१ प्रत्यन्तरे प्रशस्तिरेव नास्ति अत्र तु या दृश्यते सा अतिलघ्वी

